कुद० .... कुदरादयश्चेतिसाधुः ॥

कतू० .... कतूयकादिद्वाच्चान्नाट्ठ-
क् ॥

कसा० .... कसादिभ्योवुन् ॥

खं० .... खण्डिकादिभ्योदञ् ॥

खु० .... खलोदित्वात् उरः ॥

खर्० .... खर्लेभिज्ञादिभ्य उरोच-
चौ ॥

खला० .... खलादिभ्यइनिर्वक्तव्यः ॥

ग० .... गर्गादिभ्योयञ् ॥

गम्० .... गम्भीरादयश्चेति ईरन् ॥

गहा० .... गहादिभ्यश्चेतिछः ॥

गु० .... गुणादिभ्यः किदितिइलच्

गुडा० .... गुडादिभ्यष्ठञ् ॥

गौ० .... गौरादिः ॥

गौ० भा० गौडभाषा ॥

गृषु० .... गृष्ट्यादिभ्यश्चेतिढञ् ॥

ग्रहि० .... नन्दिग्रहिपचादिभ्योल्यु-
णिन्यचइतिणिनिः ॥

चतु० .... चतुर्वर्णादीनांस्वार्थे उप
संख्यानम् । ष्यञ् ॥

चु० .... चुरादिः ॥

छ० .... छत्रादिभ्योणः ॥

छान्० .... छान्दसः ॥

छा०भा० .. छान्दोग्यभाष्यम् ॥

छे० .... छेदादिभ्यो नित्यमिति-
ठञ् ॥

ज० .... जत्वादयश्चेतिसाधुः ॥

जु० .... जुहोत्यादिः ॥

ज्व० .... ज्वलादित्वाणः ॥

ज्यो० .... ज्योत्स्नादिभ्योऽण् ॥

त० .... तथाच ॥

त०छ०प० .. तदुक्तं छन्दोगपरिशिष्टे ॥

तडा० .... तडागादयश्चेतिनिपातः ॥

त० प० .. तत् पञ्चविधम् ॥

तर० .... तरत्यादिभ्यश्चेत्यङ्कच्

ता० .... तारकादित्वादितच् ॥

ति० .... तिकादिभ्यःफिञ्

तुन्० .... तुन्दादिभ्यइलच्चेतिइनिश्च

तु० .... तुदादिः

तुषा० .. तुषारादयश्चेत्यारन् ॥

दं० ...... दण्डादित्वात् यत् ॥

दाम० .... दामन्यादित्रिगर्तषष्ठा-
च्छः ॥

दि० ...... दिगादिभ्योयदिति यत् ।
दिवादिः ॥

दी० ...... दीपिका ॥

दृ० ...... दृढादिः । वर्णदृढादिभ्यः
ष्यञ्च । इमनिच्च ॥

नं० ...... नन्द्यादित्वाल्ल्युः । नन्दिग्र
हिपचादिभ्योल्युणिन्यचः ॥

नडा० .... नडादित्वात् फक् । नडा
दीनांकुक्चेतिच ॥

नद्या० .... नद्यादिभ्योढगितिढक् ॥

न्यङ्० .... न्यङ्कादित्वात् कुत्वम् ॥

न्या० ...... न्यायसूत्रम् ॥

ना० ...... नारदः ॥
नि० ...... निपातः ॥
नि० ...... दिदानम् ॥
नै० ...... नैषधः ॥
प० ...... पचाद्यच् । पलाशाद्यञ् ॥
प० ...... नन्दिग्रहिपचादिभ्यो ल्यु-
णिन्यचः ॥
प०प० ...... पराशरपद्धतिः ॥
पर्प० ...... पर्पटिकादयश्चेती कन् ॥
प०भा० ...... पर्वतभाषा ॥
पर्द० ...... पर्पादिभ्यःछन् ॥
पश्वा० ...... पश्वादिर्योधेयादिभ्यो ऽण्
ञौ ॥
प०सं० ...... पराशरसंहिता ॥
पा० ...... पामादित्वात् नः ॥
पा०पा० ...... पाद्मे पातालखण्डः ॥
पात्रा० ...... पात्रादयस्तस्यैनेति स्त्रीत्वं-
न ॥
पारस० ...... पारस्करादित्वात् सुट् ॥
पाश० ...... पाशादिभ्योयः ॥
पि० ...... पिच्छादित्वात् इलच् ॥
पिञ्ज० ...... खर्जपिञ्जादिभ्यऊ रोलच्
चावित्यूलच् ॥
पिना० ...... पिनाकादयश्चेत्याकः ॥
पु० ...... पुष्करादिभ्योदेशेइति इ-
निः । पुराणम् ॥
पुरो० ...... मत्यन्तपुरोहितादिभ्योयक्
पृ० ...... पृषोदरादीनि यथोपदि-
ष्टम् ॥
पृथ्० ...... पृथ्वादिभ्य इमनिज्वा ॥
प्र० ...... प्रसिद्धः । प्रज्ञादिभ्यश्चेति
स्वार्थे ऽण् प्रत्ययः ॥
प्रति० ...... प्रतिजनादिभ्यःखञ् ॥
प्रा०वि० ...... प्रायश्चित्त विवेकः ॥
फ० ...... फलम् ॥
व० ...... बलादिभ्योमतुप् ॥ वसिष्ठः
बहुलमन्यत्रापीतियुच् ॥
बङ्० ...... बङ्क्यादयश्चेति क्विन् ॥
बला० ...... बलाकादयश्चेत्याकः ॥
वसं० ...... बसन्तादिभ्यष्ठक् ॥
वह्वा० ...... वह्वादिभ्यश्चेति ङीष् ॥
व०वृ० ...... वर्णवृत्तप्रभेदः ॥
बा० ...... बाहुलकात् । बाह्वादि-
भ्यादित्वात् ॥
वा०पु० ...... वायुपुराणम् ॥
वाहि० ...... वाहिताग्न्यादिषु ॥
वि० ...... विशेषः । विल्वाद्यण् ॥
विडा० ...... विडादिभ्यःकिदित्यञ्च् ॥
विदा० ...... अनृष्यानन्तर्ये विदादिभ्यो
ऽञ् ॥
वि०ध० ...... विष्णुधर्मोत्तरम् ॥
विन० ...... विनयादिभ्यष्ठक् इति स्वा
र्थेठक् ॥
वि०पु० ...... विष्णुपुराणम् ॥
वी० ...... वीरमित्रोदयः ॥
वे०भा० ...... वेदभाष्यम् ॥

नयद्भ यथायोग्यम् ॥ १३ ॥ सोऽयं प्रसन्नहृदयो महाशयाहैतुकीभक्त्या ॥
अर्पितरणभद्राख्यं तत्पुत्रं पाठयन् न्यवसत् ॥ १४ ॥ निश्चिन्तो विरले समन्तत
उपेतेष्टार्थसिद्धि स्सत श्चिन्तां तत्र समासदद् द्विजकुले दृष्ट्वा कलेरापदा ॥ मौ
र्ख्यं तस्य तु शान्तये निखिलशास्त्रार्थाञ्जिहीर्षु मुदा व्यास्यत् कोशकलाधरं
कलिहरं शब्दार्थचिन्तामणिम् ॥ १५ ॥ गङ्गातीरे रुद्रपाले शिवेन शिवतां
गते ॥ ज्ञात्वा नैमित्तिकाभावं निमित्ताभावसङ्गतौ ॥ १६ ॥ इन्द्रप्रस्थं पुनःप्र
त्यागत्य मनसि चिन्तयन् ॥ कथमेतस्य कोशस्य स्यात् प्रवृत्ति निरन्तरा
॥ १७ ॥ प्रस्तुतश्रीनन्दलालदौहित्रौ श्रेयआश्रयौ ॥ कोविदौ व्यवहाराणां
प्राय.स्तुम्ननिवासिनौ ॥ १८ ॥ चुन्नीलालाग्रजो घासीरामनामा प्रतापवान् ॥
धनिमान्यो राजमान्यः स्वभुजार्जितसद्यशाः ॥ १९ ॥ बालप्रवासिनं दैवनोदि
तो दूरदर्शिनम् ॥ स मातुलमनुप्राप्य कृत्वालापं मनोगतम् ॥ २० ॥ कोशप्र
शंसां प्रस्तावे श्रुत्वा तस्योत्सुकं मनः ॥ तन्मुद्रीकरणायाशु यदाश्चर्यं महो
भवेत् ॥ २१ ॥ परेश्वरकराङ्कैकमिते १९२१ विक्रमहायने ॥ तदैव मुद्रितो भा
गःप्रथमः साङ्ग इत्यभूत् ॥ २२ ॥ उत्तमश्लोकशिष्येण श्रीपादाम्बुजसेविना ॥
धर्मीसारस्वतेनेभिरिन्द्रप्रस्थनिवासिना ॥ २३ ॥ जगदानन्दनाथेन पारम्प
र्यानुवर्तिना ॥ जगदीशोपनाम्नैषा श्लोकैरुद्घाटिता कृतिः ॥ २४ ॥ * ॥ * ॥

---

अथ शब्दार्थचिन्तामणेः संकेताक्षराणां विवरणम् ॥

---

अ॰ ..... अर्द्धर्चाः पुंसि च ॥ अश्वादिभ्यःफञ् ॥

अघ॰ ... अघरादिभ्यश्चेति यक् ॥

अङ्गु॰ ... अङ्गुल्यादिभ्यष्ठक् ॥

अजा॰ .... अजादित्वात् टाप् ॥

अध्या॰ ... अध्यात्मादित्वात् ठञ् ॥

अनु॰ उ॰ । अनुशतिकादित्वादुभयपदवृद्धिः ॥

अन्य॰ .... अन्यत्रापीतिडः ॥

अन्ये॰ .... अन्येषामपीति दीर्घ ॥ अन्येभ्योपीति डः ॥ अन्येभ्योपि दृश्यतेइतिवः । वलः ॥

अन्येभ्योऽपि दृश्यते क्विप् ॥
अन्येभ्योऽपि दृश्यतेइति षप्
॥ अन्येभ्योऽपि दृश्यन्ते ॥ मनि
न्क्वनिप्वनिप् विच एते ॥
अन्येष्व° ... अन्येष्वपि दृश्यतेइतिडः ॥
अब्द° ... अब्दादयश्चेतिसाधुः ॥
अर्ध° ... अर्धआदिभ्योऽच् ॥
अली° ... अलीकादय श्चेति की-
कन् ॥
अभ्र° ... अभ्रादयश्चेतिसाधुः ॥
अम्ब° .... अम्बपत्यादिभ्यश्चेत्यण् ॥
आ° ... आकर्षादिभ्यः कन् ॥
आद्या° ... आद्यादिभ्य उपसङ्ख्यान
मिति तसिः ॥
इ° ... इति ॥
इ॰वि॰ति॰ . इतिविष्णुपुराणतिलके
इ॰रा° ... इतराभ्योऽपि दृश्यन्ते तसि
लादयः ॥
इष्° ... इष्टादिभ्यश्चेति इनिः ॥
उ° ...... उक्थादित्वात् ठक् ॥
उत्° .... उत्सादित्वाद्ञ् ॥
उद्° .... प्राणभृज्जातिवयोवचनो
द्गात्रादिभ्योऽञ् ॥
उदा° . उदाहरणम् ॥
उर्° उरःप्रभृतिभ्यः कप् ॥
उल्° ... उल्लादयश्चेति वचनात्-
साधुः ॥
उलू° ... उलूकादयश्चेत्यूकः ॥

ऋ° ... ऋल्वादिभ्यः क्तिन्निष्ठाव
द्वाच्यः ॥
ए॰वि° .... एतद्विवरणम् ॥
क° ..... कण्ड्वादिभ्यो यक् ॥
क° ..... कर्ममीमांसायाम् ॥
कश्° ... कश्चित् ॥
कच्° .... कच्छादिभ्यश्चेत्यण् ॥
कत्° .... कत्र्यादिभ्योढकञ् ॥
कपि° ... कपिलकादित्वाल्लत्वम् ॥
कम° ... कमलादिभ्यः खण्डः ॥
कल्या° ... कल्याण्यादित्वाट्ढक्
इनङादेशश्च ॥
का° ... काश्यपः । काश्यादित्वात्
ञिठः ॥
का॰पु° .... कालीपुराणम् ॥
कालि° ... कालिदासः ॥
का° .... कादिभ्यः किदितिडः ॥
काशी° .. काशीखण्डम् ॥
का॰सू° .. कापिलसूत्रम् ॥
कि° .... किसरादिभ्यःष्ठन् ॥
किशो° .. किशोरादयश्चेत्योरन् ॥
कु° .. कुर्वादिभ्योण्यः ॥
कु° .... कुटादिः ॥
कुला° .... कुलालादिभ्योवुञ् ॥ कुला
र्णवः ॥
कू° .... कूर्मपुराणम् ॥
के° .... केचित् ॥
कृ° ... कृन्नादिभ्यः संज्ञायांवुन् ॥

वेत० ...... वेतनादिभ्यो जीवतीति- ठञ् ॥
वै० ...... वैदिकप्रयोगः ॥
वै०प० ...... वैद्यकपरिभाषा ॥
वै०म० ...... वैद्यकमतम् ॥
वृ० ...... वृत्ते ॥
वृत्ता० ...... वृत्तादिभ्यःखण्डः ॥
वृषा० ...... वृषादिभ्यश्चिदितिकत्तः ॥
वृह० ...... वृहद्धर्मपुराणम् ॥
व्यु० ...... व्युत्पत्त्या ॥
भा० ...... भावप्रकाशः ॥
ब्र० ...... ब्रह्मवैवर्त्तपुराणम् ॥
ब्र०पु० ...... ब्रह्मपुराणम् ॥
ब्र०वै०ब्र० ...... ब्रह्मवैवर्त्ते ब्रह्मखण्डम् ॥
ब्रा० ...... गुणवचनब्राह्मणादिभ्यः कर्मणिचेतिष्यञ् ॥
व्री० ...... व्रीह्यादिभ्यश्चेतिइनिः ॥
व्या०व० ...... व्यासवचनम् ॥
भा० ...... भागवतम् ॥
भा०प० ...... भाषापरिच्छेद. ॥
भा०प्र० ...... भावप्रकाशः ॥
भार० ...... भारतः ॥
भि० ...... पिच्छिदादिभ्योऽङ् ॥
भिक्षा० ...... भिक्षादिभ्योऽण् ॥
भी० ...... भीमादयोऽपादाने ॥
भू० ...... भूम्नि ॥
भ्वा० ...... भ्वादिः ॥
म० ...... मत्वर्थीयः ॥

मद्गु० ...... मद्गुरादयश्चेति उरच् ॥
मनो० ...... द्वन्द्वमनोज्ञादिभ्यश्चेति वुञ् ॥
म०भा० ...... महाभारतम् ॥
मयू० ...... मयूरव्यंसकादित्वात् ॥
मावृ० ...... माषावृत्तम् ॥
महा० ...... महाभारते ॥ महाभारतम् ॥
मा०तं० ...... मायातन्त्रम् ॥
मि० ...... मिथिलादयश्चेति इलच् ॥
मित० ...... मितद्र्वादित्वात् डुः ॥
मुं०तं० ...... मुण्डमालातन्त्रम् ॥
मू० ...... कर्मकरणे मूलविभुजादिभ्य उपसंख्यानमितिकः ॥
मूले० ...... मूलेरादयश्चेत्येरक् ॥
सृ० ...... सृगव्वदयश्चेतिकः ॥
मो० ...... मोक्षधर्मः ॥
य० ...... यजादित्वात् । यथा ॥
या० ...... यावत् । यावादिभ्यःकन् ॥
याज्ञ० ...... याज्ञवल्क्यः ॥
यु० ...... हायनान्तयुवादिभ्योऽण् ॥
यौ० ...... पर्श्वादियौधेयादिभ्योऽणञौ ॥
र० ...... रसादिभ्यश्चेति मतुप् ॥
रा० ...... रामायणम् ॥
राज० ...... राजदन्तादिषु परम् ॥
रानि० ...... राजनिर्घण्टः ॥
रेव० ...... रेवत्यादिभ्यष्ठक् ॥

लक्ष० …… लक्षणम् ॥
ली० …. लीलावती ॥
लो० …. लोमादिभ्यः शः
ल्वा० …. ल्वादिभ्यश्चेतिनत्वम् ॥
श० …… शकन्ध्वादिः ॥
शकटा० …. शकटादिभ्योऽटन् ॥
शम्० …. शमादिभ्योऽथच् ॥
शर्० …. शर्करादिभ्योऽण् ॥
शा० … शाकपार्थिवादिः । शाखादिभ्योयः ॥
शार्ङ्ग० .. शार्ङ्गरवाद्यञो ङीन् ॥
शि० …. शिवादिभ्योऽण् ॥
शु० …. शुभ्रादिभ्यश्चेतिढक् ॥
शुण्डि० .. शुण्डिकादिभ्योऽण् ॥
श्री० …. श्रीभागवतम् ॥
स० … समासः ॥
स०कं० .. सरस्वतीकण्ठाभरणम् ॥
सं० …. सम्पदादिभ्यात् क्विप् ॥
सङ्का० …. सङ्काशादिभ्योण्यः ॥
संज्ञा० .. संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥
सम्० … सम्प्रसारणम् ॥
सर्० …. सर्वधातुभ्यो मनिन् ॥
सर्व० …. सर्वधातुभ्यष्ट्रन् । सर्वधातुभ्यः ष्ट्रन् । सर्वधातुभ्योऽसुन्
साद: .. साहित्यदर्पणः ॥
सि० .. सिध्मादिभ्यश्चेतिलच् ॥
सिन्० .. सिन्ध्वादिभ्यादण् ॥
सिमु० …. सिद्धान्तमुक्तावली ॥
सिशि० .. सिद्धान्तशिरोमणि. ॥
स्त्रि० .. स्त्रियाङ्क्तिन् ॥
सु० … सुषामादिषु चेति षत्वम् ॥
सुवा० . . सुवास्त्वादिभ्योऽण् ॥
स्थूला० .. स्थूलादिभ्यःप्रकारवचने कन् ॥
स्म० .. स्मरणम् । स्मृतिः ॥
स्वा० . . स्वार्थे ॥
ह० …. हरिवंशः ॥
हरि० …. हरितादिभ्योऽञ् ॥
हरी० हरीतक्यादिभ्यश्चेतिफलप्रत्ययस्य लुप् ॥
हे० … हेमचन्द्रः ॥

---

इक्० ‘. इक्कृष्यादिभ्यः ॥
इञ्० … इञ्वपादिभ्यः ॥
इण्० …. इणजादिभ्यः ॥
ण्वुल्० … धात्वर्थनिर्देशे ण्वुल्वक्तव्य. । संज्ञायाम् ॥
कः० … अज्ञाते । कुत्सिते । अल्पे । ह्रस्वे ॥
कन्० . . संज्ञायाम् । अनुकम्पायाम् । अवक्षेपेकन् । इवेप्रतिकृतौ । संज्ञायांच ॥
क्षुभ्० …. क्षुभ्नादिषु चेतिणत्वाभावः ॥

तत् सत्

श्री गणेशाय नमः

# अथ शब्दार्थचिन्तामणौमंगलम्

तत्रादौ मङ्गलाचरण मभिधेयादिकञ्च

नमः श्रीसद्गुरवे ॥ ॥ श्रीमद्धरिहरानन्दनाथाभिख्य स्वदेशिकम् । नारायणमहं वन्दे सच्छास्त्रज्ञान भास्करम् ॥ १ ॥ लम्बोदरं महाकाय मेकदन्त गजाननम् । गौरीप्रिय मुदा वन्दे सर्वविघ्नविनाशनम् ॥ २ ॥ नमो देवि महाविद्ये भजामि चरणौतव । देहिज्ञानप्रकाशं मेनिखिलार्थ प्रसिद्धये ॥ ३ ॥ श्रीशारदां शारद चन्द्रकान्ति हृदम्बुजे ऽभीतिवरं दधानाम् । पुस्त विपञ्ची सुकरैः प्रसन्नां ध्याये ऽनिश जाड्यहरां त्रिनेत्राम् ॥ ४ ॥ वेद्य ब्रह्मादिभि र्ध्येय योगीन्द्रै र्यन्महत्पदम् । तत् तत्त्व तत्त्व मस्यादिवाक्यै रिष्ट भवाम्यहम् ॥ ॥ ५ ॥ यद् ज्ञानादिद जातं यज्ज्ञाने विलयव्रजेत । तन्निर्गुणं निर्विशेष ब्रह्मात्मान समाश्रये ॥ ६ ॥ कोशाननेकानवलोक्य यत्नाच्छास्त्राणि भूयः प्रविचार्य तेभ्यः । बालावबोधाय लिखामि शब्दान् सार्थान् सुसङ्गृह्यमुदे बुधानाम् ॥ ७ ॥

अल्पायुषो ऽल्पबुद्धीं श्च द्विजान् दृष्ट्वा कला वध । सुखानन्दोलिलेखैतत् कोषं सुखसुबोधदम् ॥ ८ ॥ सलिङ्गालिङ्गशब्दानां ज्ञानायतु पुरः पुरः । तत्तदार्थालेखोहि समासार्थो विधीयते ॥ ९ ॥ जिज्ञासा यत्र क्वापि शास्त्रीये शब्द उद्भवेत् । तदैवैतत् पश्यता ऽनुभूयते कृतकृत्यता ॥ १० ॥ तावद्भ्रमति शब्दार्थचिन्ताव्याकुलमानसः । सुश्रद्धधानः स्थिरधीर्यावदेनं न पश्यति ॥ ११ ॥ चतुर्दशसुविद्यासु प्रायः शब्दो न तादृशः । मातृकानुक्रमे ना ऽत्र सपर्यायो निवेशितः ॥ १२ ॥ निदर्शनेषु शब्दानां तत्तच्छास्त्रसमुद्धृता । गद्यपद्यमयी वाणी वर्णितास्मिन् क्वचित् क्वचित् ॥ १३ ॥ कोषाब्धि देशभाषापि गुप्तबोधाय दर्शिता । अतः परोपकृतये कोन्यो भवितु मर्हति ॥ १४ ॥ शब्दार्थचिन्तामणि नामकृतं कोशेषु सर्वेषु च रत्नभूतम् । श्रीमत्सुखानन्दबुधेन कृतं द्विजोपकारार्थ मिदं प्रभूतम् ॥ १५ ॥ मण्डितै राजधनिनां कृता ग्रन्था ह्यनेकशः । धनाढ्ये तुष्टया देतत् सर्वान्तर्यामितुष्टये ॥ १६ ॥ १९२० ॥ खनेत्रग्रहभूयुक्ते वैक्रमे वत्सरे शुभे । मार्गस्यासितपञ्चम्या मारब्धो मुद्रितुं ह्ययं ॥ १७ ॥

---

# अथ शब्दार्थचिन्तामणिः

---

**अः**

अ । ा । अभावे ॥ स्वल्पार्थे ॥ मतिषेधे ॥ अनुकम्पायाम् ॥ सम्बोधने ॥ अधिक्षेपे ॥ स्वराणामादिमेवर्णे ॥ अः । पुं॰ । वासुदेवे ॥ महेश्वरे नञो-

**अंशः**

यमकारः ॥ यद्वा । अततिसर्वंव्याप्नोति । अततेर्डः । न । परब्रह्मणि ॥ अंशः । पुं॰ । वण्टके । भागे ॥ स्कन्धे ॥ वस्तुन एक देशे ॥ नवांशे ॥ अंसयते ।

अंशविभाजने । अदन्तः । कर्म्मणि घञ् ॥

अंशकः । पुं । दायादे ॥ अंशंहारीत्यर्थ ष्यमंशंहरतीत्यर्थः । अंशंहारीतिक न् ॥ अल्पांशे ॥ अल्पार्थेकन् ॥ न । वासरे । दिने ॥

अंशी । त्रि । भागाधिकारिणि । भागिनि ॥ अंशोऽस्यास्ति । इनिः ॥

अंशुः । पुं । प्रभायाम् ॥ सूत्रादिसूक्ष्मांशे ॥ किरणे ॥ सूर्य्ये ॥ अंशयति । अंशविभाजने । चुरादिः । मृगय्वादित्वात्कुः ॥ लेशे ॥ वेशे ॥

अंशुकम् । न । सूक्ष्मवस्त्रे ॥ वस्त्रमात्रे ॥ उत्तरीये ॥ परिधानीये । अधोवस्त्रे ॥ अंशून् कायति । कैशब्दे । आत इतिकः ॥ यद्वा । अंशुभिः काशते । काशृदीप्तौ । अन्येष्वपीतिडः । तेजपत्राख्या पत्रे ॥ त्रि । अल्पांशे । अल्पे इतिकन् ॥

अंशुजालम् । न । प्रभापटले ॥ अंशूनां जालमिव ॥

अंशुधरः । पुं । सूर्य्ये ॥ धरति । धृञ्० । अच् । अंशूनांधरः ॥ त्रि । प्रभाविशिष्टे ॥

अंशुपट्टः । पुं । पट्टशाटके ॥

अंशुमान् । पुं । सूर्य्ये ॥ विश्वव्यापिप्रकाशे परमात्मनि ॥ सूर्य्यवंशीयनृपान्तरे ॥ त्रि । अंशुविशिष्टे ॥ अंशवो विद्यन्तेऽस्य । तदस्या स्तीतिमतुप् ॥

अंशुमती । स्त्री । परदेवतायाम् ॥ अंशवः सन्त्यऽस्याः । मतुब्ङीपौ ॥ शालपर्ण्याम् ॥ अंशुमत्त्याः फलं मूलञ्चांशुमती । अनुदात्तादेश्चेत्यञः फलपाकमूलेष्वितिलुपि युक्तवद्भावः ॥

अंशुमत्फला । स्त्री । कदल्याम् ॥ अंशुमन्ति सूक्ष्मावयववन्ति फलान्यस्याः । अंशुमानिव वा फलान्यस्याः । अजादित्वाट्टाप् ॥

अंशुमाली । पुं । राजभेदे ॥ भास्करे ॥ अंशूनां माला । साऽस्ति अस्य । व्रीह्यादित्वा दिनिः ॥

अंशुलः । पुं । चाणक्यमुनौ । द्रौमिणे ॥ इति त्रिकाण्डशेषः ॥

अंशुहस्तः । पुं । सूर्य्ये ॥

अंशूदकम् । न । हंसोदके ॥ यथा । दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः । ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ॥ अंशूनामुदकम् ॥

अंसः । पुं । न । भुजशिरसि । स्कन्धे ॥ अंस्यतेसमाहन्यते । अंससमाघाते । घञ् ॥ यद्वा । अमति अम्यते वा

भारादिना । अमगतौ । अमेः सन् ॥ पुं । विभागे ॥

अंसकूटः । पुं । ककुदि । वृषाङ्गे । चूडो ढाठ इति भाषाप्रसिद्धे ॥ अंसेकूटः ॥

अंसलः । त्रि । मांसले । पुष्टे । बलवति ॥ अंसोस्यास्ति । वत्सांसाभ्यां काम बले इति लच् ॥

अंहतिः । स्त्री । त्यागे । दाने ॥ हन्ति दुरितमनया । हन्तेरंहचे- त्यतिः । रोगे ॥

अंहती । स्त्री । अंहतौ । बह्वादित्वात् पक्षेङीप् ॥

अंहः । न । दुःखे । स्वधर्मत्यागे । दुरिते ॥ अमति गच्छति प्रायश्चि- त्तादिना । अमगत्यादिषु । अमे- र्हुक्चेत्यसुन् हुगागमश्च ॥ अम न्ति गच्छन्त्यधोनेनवा ॥ अहेरसुना सिद्धे अघेरसुनि अङ्घ इतिमा भू- दिति अमेर्हुक्चेतिसूत्रम् । तथा च । स्यान्मध्योमचतुर्थत्व मंहसोर पसस्तथेति द्विरूपकोशः । एवञ्च । दत्तार्थाः सिद्ध सङ्घैर्विदधतु घृणयः शीघ्रमङ्घो विघात मितिपाठोऽनु प्रास रसिकानांप्रामादिक इति व दन्ति ॥

अकम् । न । पापे । दुःखे । नकम् । कं



सुखं तद्विरुद्धंवा ॥ नलोपोनञः ॥

अकचः । पुं । केतुग्रहे ॥ त्रि । केश- हीने ॥

अकनिष्ठगः । पुं । बुद्धमुनौ ॥

अकम्पनः । पुं । राक्षसान्तरे ॥

अकम्पितः । पुं । बौद्धगणाधिपवि- शेषे ॥ त्रि । कम्पशून्ये ॥

अकरणिः । स्त्री । शापे । आक्रोशने ॥ यथा । अकरणि रिह भूयादप्रश- स्तस्यधातु रिति ॥ अकरणम् । आ- क्रोशेनऽ्यनिः ॥

अकरा । स्त्री । आमलक्याम् ॥ त्रि । करशून्ये ॥ अकरः । अकरम् ॥

अकरुणः । त्रि । निर्दये ॥ नकरुणः ॥

अकर्कशः । त्रि । कोमले ॥

अकर्णः । त्रि । बधिरे ॥

अकर्त्ता । त्रि । अक्रिये । अव्यापारे । कर्तृत्व रहिते ॥ नकर्त्ता । नलोपो नञः ॥

अकर्मण्यः । त्रि । क्रियासुमन्दे । निक म्मा इति भाषा ॥

अकर्म । न । तूष्णीम्भावे ॥ मोक्षे ॥ न विद्यते कर्मयस्मिन् तत् ॥ त्रि । का र्याक्षमे ॥

अकर्मी । त्रि । ब्रह्मविदि ॥ अकर्मअस्ति अस्य । व्रीह्यादित्वादिनिः । नकर्मी वा ॥ कर्मा नुष्ठा नरहिते अवधूते ॥

यथा । अनुतिष्ठन्तु कर्माणि परलो कयियासवः। सर्वं लोकात्मकः क- स्मा दनुतिष्ठामिकिं कथमिति ॥

अकल्कनः । चि । } वीतदम्भे ॥
अकल्मषः । चि । }

अकस्मात् । ।। सहसार्थे । अतर्कित निमित्तके ॥ यथा । अकस्माद्युवती वृद्धं केशेष्वाकृष्यचुम्बति । पतिंनिर्द् यमा लिङ्ग्य हेतुरत्नभविष्यतीति ॥

अकामः । चि । वाञ्छाविषयकामना शून्ये ॥ नविद्यतेकामोऽस्य ॥ यथा॥ दृष्टानुश्रविकावाञ्छाः कामायस्यन सन्त्यसौ । अकामस्ताद्दृशस्त्वन्तुनिष्कामत्वेनसिध्यतीति ॥

अकामकारः । पुं । यथेष्टानाचरणे ॥ नकामकारः ॥

अकामहतः । चि । आब्रह्मलोकानन्दादर्वाचीनेष्वानन्देषु वितृष्णे ॥ कामेनहतः कामहतः । नकामहतः ॥

अकायः । चि । अशरीरे ॥ लिङ्गशरीरवर्जिते ॥ नविद्यते कायोयस्यसः ॥

अकारः । पुं । अ अक्षरे । वर्णानां मध्ये भगवद्विभूतौ ॥ अ वर्णनिर्देशे ॥ वर्णाकारः ॥

अकालः । पुं । कालाशुद्धौ ॥ यथा । अनुराधर्क्षमारभ्यषोडशर्क्षेषु भास्करः । यावच्चरतिवैतावद्कालं मुनयो विदुरिति ॥ असमये ॥ चि । तद्विशिष्टे ॥

अकालवृष्टिः । स्त्री । सहस्यादिषुवर्षणे ॥ यथा । पौषादिचतुरो मासान् मोक्ता वृष्टिरकालजा । वृत याचादिकं तत्रवर्जयेत्सप्तवासरानिति ॥

अकिञ्चनः । चि । दीने ॥ नास्ति किञ्चन यस्य । मयूरव्यंसकादित्वात्समासः ॥ निष्कामे ॥

अकिञ्चनिमा । पुं । आकिञ्चन्ये ॥ अकिञ्चनस्य भावः इमनिच् ॥

अकीर्त्तिकरम् । चि । कीर्त्त्यभावकरे । अपकीर्त्तिकरे ॥ नकीर्त्तिकरम् ॥

अकुप्यम् । न । स्वर्णरजतात्मकेधने ॥ कुप्यादन्यत् ॥

अकुलसञ्ज्ञः । चि । तिथि वारर्क्ष विशेषे ॥ यथा । स्वात्यन्तकाश्विवसु पौष्णाकरानुराधा दित्यध्रुवाणि विषमास्तिथयोऽकुला स्युः । सूर्येन्दुमन्दगुरवश्चेति ॥

अकुशलम् । चि । अशोभने ॥ नकुशलम् ॥

अकूपारः । पुं । कूर्मराजे ॥ महोदधौ ॥ कुं पृथ्वी पिपर्त्ति । पृपालनपूरणयोः । कर्मण्यण् । अन्येषा

नपीति दीर्घः। नञ् समासः। उप लादेः। कमठे।

अकूर्चः। पुं। बुद्धे। त्रि। कैतवहीने।

अकूपारः। पुं। समुद्रे।

अकृतम्। त्रि। निस्ये। मोचे। अविहिते। कार्ये। प्रमाणाविषये। स्वयमजनिते। नञ्कृतम्। अनिष्पादिते। यथा। कालातीतन्तु यत्कुर्यादकृतन्तद्विनिर्दिशेदितिस्मृतिः। स्त्री। प्रकृतिविशेषे। यथा। ऽपीनिर्देशगमनादिलचणा प्रकृतिः सानकेन चितकृता।

अकृतकः। त्रि। स्वाभाविके। नञ्कृतकः।

अकृतज्ञः। त्रि। उपकारामानिनि। कृतघ्ने।

अकृतबुद्धिः। त्रि। शास्त्राचार्योपदेशन्यायैरनुपजनितविवेकबुद्धौ। अकृतायुद्धिर्यस्य येनवा।

अकृतात्मा। त्रि। यज्ञादिभिरशोधितान्तःकरणे। शास्त्रेणासंस्कृतान्तःकरणे।

अकृताभ्यागमः। पुं। दोषविशेषे। अकृतयोः पुण्यपापयोरकस्मात्फलदातृत्वे।

अकृत्रिमः। त्रि। अकरणजे। अजन्ये। सिद्धे।

अकृपिमानन्दः। पुं। स्वरूपभूतानन्दाभिव्यञ्जके निदिध्यासने। अकृत्रिमश्चासावानन्दश्च। त्रि। कृत्रिमानन्दविरहिणि। अविद्यमानः कृत्रिमानन्दो यस्य।



अकृत्स्नवित्। त्रि। अनात्माभिमानिनि। अकृतस्नं वेत्ति। विद् ज्ञाने। क्विप्।

अकृष्णकर्मा। त्रि। शिखिदाने। अपापकर्मणि। अकृष्णं निष्पापत्वात् शुद्धं कर्मास्य।

अकोटः। पुं। गुवाकवृचे। छटाफले।

अकौशलम्। न। आकौशले।

अक्का। स्त्री। मातरि। जनन्याम्। अम्बायाम्।

अक्तः। त्रि। व्याप्ते। युक्ते। परिच्छिन्ने। अक्तेर्गतौतः। अक्तपरिमाणस्य वाचका इति भाष्यस्थकैयटेन तथा व्याख्यातत्वात्। अनक्ति अज्यते-वा। अंजूव्यक्त्यादौ। क्तिष्टविभ्यः क्तः।

अक्रतुः। त्रि। अकामे। दृष्टादृष्टवाह्यविषयोपरतबुद्धौ।

अक्रान्ता। स्त्री। वृहत्याम्। त्रि। अनाक्रान्ते।

अक्रियः। त्रि। श्रौतस्मार्तक्रियारत्यागिनि। व्यापारे। अकर्त्तरि। कुकर्मविशिष्टे।

अक्रूरः । पुं । श्वफल्कतनये । गान्दिनीसुते । त्रि । अकठिने । अनिष्ठुरे । नक्रूरः । क्रौर्यवान् क्रूरः सनेत्यक्रूरः । यद्वाक्रूरे इतिभावप्रधानो निर्देशः । नविद्यते क्रौर्यमस्येत्यक्रूरः ॥

अक्रोधः । पुं । परैराक्रोशे ताडनेवा कृते सति प्राप्तो यः क्रोधस्तस्य तत्कालोपशमने । त्रि । क्रोधरहिते ॥

अक्रोधनः । त्रि । क्रोधरहिते ॥

अक्रमः । त्रि । सततव्यापारेप्यश्रान्ते ॥ अविद्यमानः क्रमोयस्यसः ॥

अक्षः । पुं । रथावयवे । चक्रे ॥ चक्रधारणदारुभेदे । नभ्ये । ज्ञातार्थे । व्यवहारे । आयव्ययचिन्तायाम् । पाशके । येन द्यूतविद्यायामेजति । रुद्राक्षे । इन्द्राक्षे । विभीतकतरौ । ज्ञाने । आत्मनि । रावणौ । सर्पे । शकटे । षोडशमाषेषु । कर्षे । जात्यन्धे । गरुडे । पलभायाम् । यथा । चन्द्राग्निनिघ्नापलभार्द्धिताचक्षाव्धिः स्यादिह्दक्षिणोच इति । न । सौवर्चले लवणे । तुत्थे । हृषीके । अक्ष्णोति अक्षति वा अक्ष्यतेवा ऽनेनाक्षवा अक्षू व्याप्तौ । पचाद्यच् घञ्वा । अश्नुते ऽध्वर्थम् । अशूव्याप्तौ । अशेर्देवने इति सोक्षा ॥

अक्षकः । पुं । तिनिशे । इतिरत्नमाला ॥

अक्षगणः । पुं । श्रोत्रादीन्द्रियसङ्घाते । अक्षाणांगणः ॥

अक्षचरणः । पुं । अक्षपादे ॥

अक्षतम् । न । षण्डे । पुं ० भू ० लाजेषु । क्षणनम् । क्षणुहिंसायाम् । नपुंसकेभावेक्तः । अनुदात्तोपदेशेत्यादिनाणलोपः । नक्षत येयांते । मुकुटस्वरव्याख्यावसरे लाजाः पुंभूम्नि ऽक्षतमितिपठित्वा कर्मणिक्तः । क्षतखण्डितम् । नक्षतमक्षतमितिविगृह्य नित्यपुल्लिंगानित्यबहुवचनान्तास्त्व लाजा अक्षतमितिव्याचख्यौ । केचित्तु अखण्डतण्डुला अक्षतमित्याहुः । पुं । यवे । त्रि । अहिंसिते । अक्षते । अखण्डिते ॥

अक्षता । स्त्री । कर्कटशृङ्ग्याम् । पुरुषसंसर्गरहितायां स्त्रियाम् । नक्षता ॥

अक्षदर्शक । पुं । प्राड्विवाके । धर्माध्यक्षे । अक्षबोधके । पश्यति । दृशिर्प्रेक्षणे । ण्वुल् । अक्षाणां व्यवहाराणांदर्शक ॥

अक्षदृक् । पुं । व्यवहारस्यज्ञातरि । अक्षदर्शके ॥

अक्षदेवी । त्रि । द्यूतकृति । धूर्ते ॥ अक्षैर्दीव्यति । दिवुक्रीडादौ । सुपीतिणिनिः ॥

अक्षद्यू । पुं । अक्षदेविनि ॥ अक्षैर्दीव्यति । दिवु० क्विप् । च्छोरिच्यूठ् ॥

अक्षधूर्त्तः । पुं । द्यूतकारे । कितवे ॥ अक्षेषुधूर्त्तः । सप्तमीशौण्डैरिति समास ॥

अक्षधूर्त्तिल । पुं । वृषे ॥ इति हारावली ॥

अक्षपादः । पुं । गौतमे । नैयायिके ॥

अक्षपीडा । स्त्री । यवतिक्ताख्यलतायाम् ॥

अक्षम. । त्रि । क्षमताशून्ये ॥ क्षमारहिते ॥

अक्षमा । स्त्री । ईर्ष्यायाम् । अक्षान्तौ ॥

अक्षमाला । स्त्री । अक्षसूत्रे । अकारादिक्षकारान्त वर्णमालायाम् ॥ अरुन्धत्याम् ॥ अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजेतिवचनात् ॥ रुद्राक्षमालायाम् ॥

अक्षय । पुं । अनन्ते । अक्षयकालाभिमानिनि ॥ त्रि । क्षयाभावे । क्षयरहिते । अव्यये ॥ ब्रह्मनिष्ठे ॥ अ वासुदेव तस्मिन क्षयोनिवासो



ऽस्य ॥

अक्षयकालः । पुं । अक्षयकालाभिमानिनि परमेश्वराख्यकाले ॥ अक्षयश्चासौकालश्च ॥

अक्षयतृतीया । स्त्री । वैशाखशुक्लतृतीयायाम् ॥ यथा । वैशाखे मासि राजेन्द्र शुक्लपक्षे तृतीयिका । अक्षयासातिथिः प्रोक्ता कृत्तिकारोहिणीयुता ॥ तस्यांदानादिकं पुण्यमक्षयं समुदाहृतमिति ॥ इयंसत्ययुगाद्या ॥

अक्षया । स्त्री । रव्यादिवारैः सप्तम्यादितिथिषु ॥ यथा आमावे सोमवारेण रविवारेण सप्तमी । चतुर्थी भौमवारेण अक्षयादपिचाक्षया इतिभविष्यपुराणम् ॥ क्षयरहितायाम् । नास्तिक्षयोयस्या सा ॥

अक्षरम् । न । नक्षरतीतिव्युत्पत्त्या अविनाशिनि निर्विशेषे प्रणवाख्ये ब्रह्मणि कूटस्थेनित्ये आत्मनि ॥ यथा । घटादिकुद्धर्मत्वादक्षर ब्रह्मभण्यते । कार्यकारणरूपन्तु नश्वरंक्षरमुच्यते ॥ यत्किञ्चिद्वस्तुलोकेस्मिन् वाचोगोचरतांगतम् । प्रमाणस्य चतत्सर्वमक्षरे प्रतिपिध्यते ॥ यदप्रबोधात्कार्यगत्राह्मणएवक्षबोधत ॥ तद्-

क्षरं प्रवोद्धव्यं यथोक्तेश्वरवर्त्मनेति । ईश्वरवर्त्मनेतिशासितृत्वादि तटस्थलक्षणद्वारेत्यर्थः ॥ अकारादिक्षकारान्तवर्णे ॥ यथा । षाण्मासिके तु समये भ्रान्तिः संजायते यतः । धात्राक्षराणि सृष्टानि पत्रारूढा न्यतः पुरेति । तत् पञ्चविधं लिपिशब्दे द्रष्टव्यम् ॥ अपामार्गे ॥ गगने ॥ मोक्षे । अपवर्गे । धर्मे । तपसि ॥ अध्वरे ॥ अव्याकृताख्ये मूलकारणे ॥ पुं । शङ्करे ॥ अजे । विष्णौ । जीवे । नक्षरति । क्षरसञ्चलने । पचाद्यच् ॥ यद्वा । अश्नुते । अशूव्याप्तौ । अशेः सरः । त्रि । अक्षरणीये । अच्युते ॥

अक्षरचणः । पुं । लेखकोत्तमे । अक्षरैर्वित्तः । तेनवित्तश्चुञ्चुप्चणाविति चणप् ॥

अक्षरचुञ्चुः । पुं । लेखकोत्तमे । अक्षरैर्वित्तः । तेनवित्तइतिचुञ्चुप् ॥

अक्षरजननी । स्त्री । लेखन्याम् । प्रकृतौ । अक्षराणां मक्षरस्य वा जननी ॥

अक्षरजीवकः । पुं । लेखके । लेखकेऽक्षरपूर्वाः स्युःपुंसि जीवकजीवकौ इति हेमचन्द्रः ।

अक्षरजीविकः । पुं । कायस्थादौ । अक्षरैर्जीविकायस्यसः । लेखकः स्याल्लिपिकरः कायस्थोऽक्षरजीविक इतिहलायुधः । त्रि । अक्षरजीविनि ॥

अक्षरतूलिका । स्त्री । लेखन्याम् । अक्षराणां तूलिका । इतिजटाधरः ॥

अक्षरधीः । स्त्री । अक्षरेब्रह्मणिधीर्यस्याः इतिव्युत्पत्त्या श्रुतिषु । त्रि । ब्रह्मनिष्ठे ॥

अक्षरपङ्क्तिः । स्त्री । छन्दोभेदे । यथा । चेद्भगणान्तेगद्वययोगः । दृष्टिरिहोक्तासाऽक्षरपङ्क्तिरिति ।

अक्षरमुष्टः । त्रि । कालाक्षरिके । शिक्षिताक्षरे । इतित्रिकाण्डशेषः ॥

अक्षरविन्यासः । पुं । लिपौ । अक्षराणांविन्यासः ॥

अक्षरसमुद्भवः । पुं । अपौरुषेयत्वेन निरस्तसमस्ताशङ्केवेदे । अक्षरात्परमात्मनः समुद्भव आविर्भावोयस्यसः ।

अक्षवती । स्त्री । द्यूतक्रीडाविशेषे । चौपड इतिभाषा । अक्षाः पाशकाः सन्त्यस्याम् । मतुप् । लोकात्स्त्रीत्वम् ।

अक्षवाटः । पुं । मल्लभूमौ । नियुद्धभुवि । अखाडा इतिभाषा ।

अक्षवित् । त्रि । व्यवहारज्ञे । द्यूतज्ञे ।

अक्षदेवी । त्रि । द्यूतकृति । धूर्त्ते ॥ अक्षैर्दीव्यति । दिवुक्रीडादौ । सुपीतिणिनिः ॥

अक्षद्यूः । पुं । अक्षदेविनि ॥ अक्षैर्दीव्यति । दिव० क्विप् । च्छ्वोरिति ऊठ् ॥

अक्षधूर्त्तः । पुं । द्यूतकारे । कितवे ॥ अक्षेषुधूर्त्तः । सप्तमीशौण्डैरिति समासः ॥

अक्षधूर्त्तिलः । पुं । वृषे ॥ इति हारावली ॥

अक्षपादः । पुं । गौतमे । नैयायिके ॥

अक्षपीडा । स्त्री । यवतिक्तालतायाम् ॥

अक्षमः । त्रि । क्षमताशून्ये । क्षमारहिते ॥

अक्षमा । स्त्री । ईर्ष्यायाम् । अक्षान्तौ ॥

अक्षमाला । स्त्री । अक्षसूत्रे । अकारादिक्षकारान्त वर्णमालायाम् ॥ अरुन्धत्याम् । अक्षमाला वशिष्ठेन संयुक्ताधमयोनिजेतिवचनात् ॥ रुद्राक्षमालायाम् ॥

अक्षयः । पुं । अनन्ते । अक्षयकालाभिमानिनि ॥ त्रि । क्षयाभावे । क्षयरहिते । अव्यये । ब्रह्मनिष्ठः । वासुदेवः तस्मिन् क्षयोनिवासोऽस्य ॥

अक्षयकालः । पुं । अक्षयकालाभिमानिनि परमेश्वराख्यकाले । अक्षयश्चासौकालश्च ॥

अक्षयतृतीया । स्त्री । वैशाखशुक्लतृतीयायाम् । यथा । वैशाखे मासि राजेन्द्र शुक्लपक्षे तृतीयिका । अक्षयासातिथिः प्रोक्ता कृत्तिकारोहिणीयुता । तस्यांदानादिकं पुण्यमक्षयं समुदाहृतमिति । इयंसत्ययुगाद्या ॥

अक्षया । स्त्री । रव्यादिवारैः सप्तम्यादितिथिषु । यथा आमावै सोमवारेण रविवारेण सप्तमी । चतुर्थी भौमवारेण अक्षयादपिचाक्षया इति भविष्यपुराणम् । क्षयरहितायाम् । नास्तिक्षयोयस्याः सा ॥

अक्षरम् । न । नक्षरतीतिव्युत्पत्त्या अविनाशिनि । निर्विशेषे प्रणवाख्ये ब्रह्मणि कूटस्थेनित्ये आत्मनि । यथा । क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्मभण्यते । कार्यकारणरूपन्तु नश्वरंक्षरमुच्यते ॥ यत्किञ्चिद्वस्तुलोकेस्मिन् वाचोगोचरतांगतम् । प्रमाणस्य चतत्सर्वमक्षरे प्रतिषिध्यते ॥ यदप्रबोधात्परमंगाह्मणंयत्प्रबोधतः । तद-

, चर मिवोद्धव्य यथोक्तेश्वरवर्त्मनेति ॥ ईश्वरवर्त्मनेतिशासितृत्वादि तटस्थ लक्षणादारेत्यर्थः । अंकारादिच कारान्तवर्णे ॥ यथा । पाण्मासिके तुसम्प्राप्ते भ्रान्तिः सञ्जायतेयतः । धात्राक्षराणि सृष्टानिपत्ररूढा न्यत पुरेति । तत पञ्चविध लिपिश ब्दे द्रष्टव्यम् ॥ अपामार्गे । गगने ॥ मोचे । अपवर्गे । धर्मे । तपसि ॥ अध्वरे । अव्याकृताख्ये मूलका रणे । पुं । शङ्करे ॥ अजे । विष्णौ । जीवे । नचरति । चरसञ्च लने । पचाद्यच् ॥ यद्वा । अश्नुते । यत्यूश्यासौ । अशे सरः ॥ वि । अचरणीये । अच्युते ।

अक्षरचण । पुं । लेखकोत्तमे ॥ अक्षरैर्वित्तः । तेनवित्तश्चुञ्चुप्च णपावितिचणप ॥

अक्षरचुञ्चु । पुं । लेखकोत्तमे । अक्षरैर्वित्त । तेनवित्तइतिचुञ्चुप् ॥

अक्षरजननी । स्त्री । लेखन्याम् । प्रकृतौ । अक्षराणा मक्षरस्यवा जननी ॥

अक्षरजीवक । पुं । लेखके । लेखको ऽक्षरपूर्वा स्युस्सुवणजीवकचुञ्चव इति हेमचन्द्र ।

अक्षरजीविक । पुं । कायस्थजातौ । अक्षरैर्जीविकायस्यस. ॥ लेखक स्याल्लिपिकर, कायस्थो ऽक्षरजीवि कइतिहलायुध. । वि । अक्षरजी- विनि ॥

अक्षरतूलिका । स्त्री । लेखन्याम् ॥ अ क्षराणां तूलिका ॥ इतिजटाधरः ॥

अक्षरधीः । स्त्री । अक्षरेब्रह्मणिधीर्या भ्य इतिव्युत्पत्त्या श्रुतिषु ॥ वि । ब्रह्मनिष्ठे ।

अक्षरपङ्क्ति । स्त्री । छन्दोभेदे ॥ यथा । चेद्गणान्तेगद्वययोगः । इति रिंद्रोक्तासाऽक्षरपङ्क्तिरिति ॥

अक्षरमुख । वि । कालाक्षरिके । शिक्षिताक्षरे । इतित्रिकाण्डशेष. ।

अक्षरविन्यास । पुं । लिपौ । अक्ष राणांविन्यासः ॥

अक्षरसमुद्भव । पुं । अपौरुषेयत्वेन निरस्तसमस्ताशङ्कवेदे । अक्षरात्प- रमात्मन समुद्भव आविर्भावोय स्यस ॥

अक्षवती । स्त्री । द्यूतक्रीडाविशेषे । चौपडइतिभाषा । अक्षा. पाशकाः सन्त्यस्याम् । मतुप् । लोकात्स्त्री त्वम् ॥

अक्षवाट । पुं । मल्लभूमौ । नियुद्ध- भुवि । अखाडा इतिभाषा ।

अक्षवित् । वि । व्यवहारज्ञे । द्यूतज्ञे ।

अक्षविवर्त्तः । पुं । द्यूतप्रभेदे ॥

अक्षसूत्रम् । न । जपमालायाम् ॥

अक्षाग्रकीलकः । पुं । अणौ । रथच क्राग्रस्थितकीले । अणी इति भाषा । अक्षस्य नाभिक्षेप्यकोऽग्रस्यान्ते बन्धार्थं कीलकः ॥

अक्षान्तिः । स्त्री । परोत्कर्षासहने । ईर्ष्यायाम् । नञ्समासः । क्षमूष सहने । दिवादिः । अस्यापित्वात् क्तिन् । अनुनासिकस्येति दीर्घे नञ् समासः ॥

अक्षारलवणम् । न । अकृत्रिमे सैन्धवादौ ॥ यथा । गोक्षीरं गोघृतञ्चैव धान्यमुद्गास्तिलायवाः । सामुद्रं सैन्धवञ्चैव अक्षारलवणस्मृतमिति स्मृतिर्ह्यारलतायाम् ॥

अक्षि । न । चक्षुषि ॥ अश्नुतेऽनेनवा ॥ अशू व्याप्तौ संघातेच । अशेर्निदितिक्सि । यद्वा । अक्षति । अक्षू व्याप्तौ । इन् ।

अक्षिकूटः । पुं । ईषिकायाम् । गजाक्षिपुटके ॥

अक्षिगतः । त्रि । द्वेष्ये ॥ इत्यमरः ॥ अक्षिगतस्वखेदकृत् ॥

अक्षिभेषजम् । न । लोध्रे ॥

अक्षिविकूणितम् । न । अपाङ्गदृष्टौ । कटाक्षे ॥

अक्षीणः । त्रि । पूर्णे । अदीने ॥ नक्षीणः । यथा । अलब्ध्वानविषीदेत कालेकाले ऽशनंक्वचित् । लब्ध्वान हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥ इतिमत्वानदीनोयोनधूतोऽक्षीणउच्यतइति ॥

अक्षीवम् । न । वशिरे । सामुद्रलवणे ॥ पुं । शिग्रौ ॥ त्रि । अमत्ते ॥ नक्षीवति अनेनवा अक्षीवयतिवा । क्षीवृमदे । पचाद्यच् ॥ अक्ष्णः ईः । अक्षींवातिवायति वा । वागतिगन्धनयोः औवैशोषणेवा । आतोनुपेतिकः ॥

अक्षेशः । पुं । मनसि ॥ अक्षाणामीशः ॥

अक्षोटः । पुं । शैलोत्थपीलौ । कर्पराले । अखरोटइतिख्याते ॥ अक्ष्णोति । अक्षूव्याप्तौ संघातेच । बाहुलकादोट ॥ अक्षस्येवछटा पर्णान्यस्येतिवा ॥

अक्षोटकः । पुं । कर्परालवृक्षे । पर्वतपीलौ ॥ यथा । अक्षोटकोपिवातादस्तद्वत्कफपित्तकृदिति ॥ अक्षोटात्स्वार्थेकः ॥

अक्षोपकरणम् । न । द्यूतसाधने ॥

अक्षोभः । पुं । आलाने । शङ्कौ । हस्तिबन्धनस्तम्भे । त्रि । क्षोभरहिते ॥

अक्षोभ्यः । पुं । शिवे ॥ रागद्वेषादि

भिः शब्दादिविषयैरसुरैश्च नश्यो भ्यते चोभयविधैर्वा व्यर्थानमाप्यते । चुभिर्हेतुभिर्भयाख्यन्ता इचोयदितिय तमत्ययः । त्रि । अप्रधृष्ये ।

अक्षौहिणी । स्त्री । सेनाविशेषे । दशानीकिन्याम् । सायथा ॥ इभाः २१८७० । रथाः २१८७० । अश्वाः ६५६१० । पदातयः १०९३५० । उक्तञ्च । अक्षौहिण्यामित्यधिकैः सप्तत्याह्यष्टभिःशतैः । संयुतानि सहस्राणि गजानामेकविंशतिः ॥ एवमेव रथानान्तु संख्यानं कीर्तितं बुधैः । पञ्चषष्टिसहस्राणि षट्शतानि दशैव तु । संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरंगमैः । तथा शतसहस्रं तु सहस्राणि नवैव तु । शतानि त्रीणि चान्यानि पंचाशच्च पदातयः इति ॥ समस्तसंख्यया तु । खद्वयस्वरवस्विंदुनेत्रै रक्षौहिणीमतेति । २१८७०० । ऊढ़ समूहोऽस्यास्ति । इनिः । अक्षाणामूहिनो । पूर्वपदादिति णत्वम् । अक्षादूहि न्यामिति वृद्धिः ।

अखण्डम् । त्रि । अखण्डे । अक्षते अभग्नयासौ सघातेच । कृत्स्नपूर्णयोः । न । काले ।

अखट्टः । पुं । पियालवृक्षे । इतिराजनिर्घण्टः ॥

अखेट्टिः । पुं । असंद्व्यवहारे । इति त्रिकाण्डशेषः ॥

अखण्डम् । त्रि । पूर्णे । खण्डशून्ये । अनन्ते । नखण्ड्यते । खडिभेदने । घञ् । नास्तिखण्डोऽस्यवा ॥

अखण्डनः । पुं । काले । इति शब्दचन्द्रिका ॥

अखण्डपरशुः । पुं । परशुरामे । न खण्डः अखण्डः केनाप्यखण्डितः परशुः कुठारोऽस्य ।

अखातम् । पुं । न । देवखाते । अकृत्रिमजलाशये । खाताद्भिन्नम् ॥

अखिलम् । त्रि । विश्वस्मिन् । कृत्स्ने । नखिलमस्य ॥

अखिलाधारम् । त्रि । ब्रह्मणि । अखिलस्याकाशादिप्रपञ्चस्याधारमाश्रयस्तदितिविग्रहः । आश्रयशब्दः सृष्टिप्रलययोरप्युपलक्षणार्थः ॥

अगः । पुं । पर्वते । वृक्षे । सरीसृपे । भानौ । नगच्छति । गम्लृ गतौ । अन्येभ्योपीति अन्येष्वपीतिवाडः । नगोऽप्राणिष्विति पाक्षिकोऽप्रकृतिभावः ।

अगजः । त्रि । गिरिसम्भवे । न । शिलाजतुनि ।

अगतिः । पुं । अनवबोधे । अपरिज्ञा-

ने ॥

अगदः । पुं । औषधे ॥ त्रि । नीरुजि ॥ गदविरुद्धः । नगदो ऽस्मादितिवा ॥

अगदङ्कारः । त्रि । चिकित्सके ॥ अगदमरोगंजन्तुंकरोति । कर्मण्यण् । कारेसत्यागदस्येतिमुम् ॥

अगदतन्त्रम् । न । वैद्यविद्याङ्गविशेषे ॥ यथा । अगदतन्त्रंनामसर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थंविविधविषसंयोगविषोपहृतोपशमनार्थमितिसुश्रुतः ॥

अगमः । पुं । वृक्षे ॥ नगच्छति । गम्लृगतौ । पचाद्यच् ॥

अगम्यः । त्रि । अज्ञेये ॥ गमनायोग्ये ॥ नगम्यः ॥

अगस्तिः । पुं । मुनिविशेषे ॥ विन्ध्याख्यम् अगमस्यतीत्यगस्तिः । अस्यतेः क्तिच्क्तौचेतिक्तिच् । बाहुलकात्तिर्वा । शकन्ध्वादिः ॥ वकद्रौ ॥ अगस्तिः पित्तकफजिच्चतुर्थकहरो हिमः । रूक्षोवातकरस्तिक्तः प्रतिश्यायनिवारणः ॥

अगस्तिद्रुः । पुं । वकपुष्पवृक्षे । मुनिद्रुमे ॥ इतित्रिकाण्डशेषः ॥

अगस्त्यः । पुं । वकद्रौ ॥ मुनिभेदे । पुलस्त्यतनये ॥ अगंविन्ध्यंस्त्यायतिस्तभ्नाति । स्त्यैसङ्घाते । आतोनुपसर्गेकः ॥

अगस्त्याश्रमः । पुं । अगस्त्यकुण्डइतिनाम्नाकाश्यांप्रसिद्धेस्थाने ॥ मलयाचलेवर्त्तमाने मुनिवासस्थाने ॥

अगस्तिकुसुमम् । न । मुनिद्रुमपुष्पे ॥ अगस्तिपुष्पशाके ॥ अस्यगुणायथा । अगस्तिकुसुमं शीतंचतुर्थकनिवारणम् । नक्तान्ध्यनाशनंतिक्तंकषायंकटुपाकिच ॥ पीनसश्लेष्मपित्तघ्नंवातघ्नंमुनिभिर्मतम् ॥ आगस्त्यंकुसुमं तथा मृदुफलकेनाहृतंजन्तुनाधन्यंचाद्यदिनं यदद्यमिलितंकस्यास्यमालोकितम् । स्विन्नंतैलयुतंसहिंगुलवणंतप्तेष्टतेपाचितंभोक्ता संततभाषितंप्रियतमेनाद्यापिसम्प्राप्तमिति ॥

अगाधम् । त्रि । अतलस्पर्शे । अतिगम्भीरे ॥ दुर्बोधाशये ॥ न । श्वभ्रे ॥ नास्तिगाधः स्थितिरत्र । नञोऽस्त्यर्थानामितिबहुव्रीहिः ॥

अगाधजलः । पुं । ह्रदे ॥ त्रि । अतलस्पर्श जलविशिष्टे ॥ अगाधंजलंयत्र ॥

अगारम् । न । गृहे ॥ अगान्वृक्षान्ऋच्छति । ऋगतौ । कर्मण्यण् ॥

अगारदाही । त्रि । गृहदाहके ॥

अगुः । पुं । राहुग्रहे ॥ त्रि । किरणरहिते ॥

अगुरु । न । जोङ्गके । सुगन्धिकाष्ठ

भेदे। अगर इति भाषा॥ अगुरु स्वं कटुत्वे व्यतिक्तं तीक्ष्णं च पित्तल म। लघुकर्णाक्षिरोगघ्नं शीत वातकफप्रणुत्॥ अगुरुर्वा पुंसीति चोपालितः। शिंशपायाम्॥ का लागुरुणि॥ त्रि। लघुनि॥ नगुरु स्मात्॥

अगूढगन्धम्। न। हिङ्गुनि॥ इतिरा जनिर्घण्टः॥

अगोचरम्। त्रि। इन्द्रियजन्यप्रत्य क्षाविषये॥

अगौकाः। पुं। शरभे। खगे॥ सिंहे॥ त्रि। अद्रिवासिनि। अद्रिगे॥ अ गः ओको यस्य सः॥

अग्नायी। स्त्री। वह्निपत्न्याम्॥ अग्नेः स्त्रीत्यस्मिन्नर्थे वृषाक प्यग्निकुसितेत्यादिसूत्रेणाग्निशब्द स्यैकारादेशो ङीप् च॥ त्रेतायुगे॥

अग्निः। पुं। अङ्गयन्ति अर्ध्वंजन्मप्रा पयन्तीति व्युत्पत्त्या हविःप्रचेपाधि करणेषु गार्हपत्याहवनीयदक्षिणा ग्निसभ्यावसथ्यौपासनाख्येषु षड ग्निषु॥ पावके॥ वैश्वानरे॥ अस्य गुणा यथा। स्तम्भनेन्द्रियपाकास न्तापस्तीक्ष्णतास्मृता। वर्णोस्माग्नि प्णुतामर्षः शौर्यमस्मेर्गुणाश्रमीति॥ पटसुधूमागन्यादिषु। यथा। अर्क



निष्कासनार्थायक्षमामात्रेयाः षडग्न यः। धूमाग्निश्चैवदीप्ताग्निर्मन्दाग्नि र्मध्यमस्तथा॥ खराग्निश्चभडाग्नि श्चतेषांवक्ष्यामि लक्षणम्। वि ज्वालोयोधूमशिखोधूमाग्निरुदा हृतः। ससारमतिशुष्कं यन्मुष्टिम ध्येसमेष्यति। तत्काष्ठं काष्ठमित्या हुः खदिरादिसमुद्भवम्॥ ताभ्यां तस्यचतुर्थांशो योग्निर्दीप्ताग्निरुच्य ते। चतुरंशेन तेनैवमन्दाग्निः परिकीर्त्तितः॥ अर्द्धीकृताभ्यांता भ्यांतुमध्यमाग्निरुदाहृतः। अर्द्धै स्तैः पञ्चभिः प्रोक्तःखराग्नि सर्वक र्मसु। मस्तकावधिपात्रस्य चतुर्दि क्षुक्रमेणच। प्रसरंतियदाज्वालाः सभडाग्निरुदीरितः॥ सार्द्धयामश्च यामश्चयाममेकंमुहूर्त्तकम्। मुहूर्त्त मात्रमित्येवमर्कोथैवन्हयःस्मृताः इ ति। चित्रकाख्यौषधौ॥ तृतीये॥ चतुष्कले॥ आदिगुरौ संज्ञायाम्॥ कृत्तिकानक्षत्रे॥ अङ्गति ऊर्ध्वं गच्छ ति। अगिगतौ। अङ्गेर्नलोपश्चे तिनिर्नलोपश्च॥ रक्तचित्रके॥ भल्ला तके॥ निम्बूके॥ पित्ते॥ स्वर्णे॥

अग्निकः। पुं। इन्द्रगोपकीटे॥ इति हेमचन्द्रः॥

अग्निकणः। पुं। स्फुलिङ्गे॥ अग्नेः

कणः ॥ इत्यमरः ॥

अग्निकारिका । स्त्री । अग्निकार्ये ॥ इति हेमचन्द्रः ॥

अग्निकार्यम् । न । होमादौ हविर्दानादिपूर्वकाग्निज्वालने । अग्नीन्धने ॥ अग्नौ सायंप्रातःसमिद्धोमानुष्ठाने ॥ अग्नावग्नेर्वा कार्य्यम् ॥

अग्निकाष्ठम् । न । अगुरुणि ॥ इति राजनिर्घण्टः ॥

अग्निकुक्कुटः । पुं । ज्वलदग्नितृणोल्कायाम् ॥ इति त्रिकाण्डशेषः ॥ अग्नेः कुक्कुटः ॥

अग्निक्रीडा । स्त्री । खधूपादित्यागे । हवाइ इतिभाषाप्रसिद्धे ॥

अग्निगर्भः । पुं । औषधविशेषे । अग्निनिर्यासे । अग्निजारे ॥ सूर्यकान्तमणौ ॥

अग्निगर्भा । स्त्री । महाज्योतिष्मत्याम् ॥ इति राजनिर्घण्टः ॥

अग्निचित् । पुं । साग्निके । अग्निचेतरि ॥ इत्यमरः । अग्निमचैषीत् । चिञ्चयने । अग्नौ चेरिति क्विप् तुक् ॥

अग्निचित्या । स्त्री । अग्नेश्चयने ॥ चित्याग्निचित्ययोरितिभावेयप्रत्ययस्तुक्‌चनिपात्यते ॥

अग्निचूडा । स्त्री । अग्निशिखायाम् ॥



अग्निजः । पुं । भल्लातके । भिलावा ख्ये ॥ अग्निजारवृक्षे ॥ त्रि । अग्नेर्जातमात्रे ॥

अग्निजातः । पुं । } औषधविशेषे । वडवाग्निमले । सिन्धुफले इति राजनिर्घण्टः ॥
अग्निजारः । पुं । }
अग्निजालः । पुं । }

अग्निजिह्वा । स्त्री । अग्नेर्ज्वालायाम् ॥ लाङ्गलीवृक्षे ॥ योगविशेषे ॥ यथा । सप्तपष्ठ्यादितिथयः सोमवारादिभिर्युताः । अग्निजिह्वाः सप्तयोगामङ्गलेष्वतिगर्हिताः इति ॥ काल्यादिसप्तसु ॥ यथा । काली कपाली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वा इति प्रथममुण्डकश्रुतिः ॥

अग्निज्वलिततेजनः । पुं । अग्निना दीप्तफलके । आयुधविशेषे ॥

अग्निज्वाला । स्त्री । वह्निशिखायाम् ॥ धातकीपुष्पिकायाम् ॥ लाङ्गलिक्यौषधौ ॥ अग्नेरिवज्वालास्याः । अग्नेर्ज्वालेवसा । रक्तपुष्पत्वात् ॥

अग्निदमनी । स्त्री । क्षुपविशेषे । बहुकण्टकायाम् । गुच्छफलायाम् ।

अग्निदीप्ता । स्त्री । महाज्योतिष्मतीवृक्षे ॥ इति राजनिर्घण्टः ॥

अग्निदेवा । स्त्री । कृत्तिकानक्षत्रे । इ

ति हेमचन्द्रः ॥

अग्निध्वजः । पुं । मेघवाहे । धूमे । धूँवाँ इति भाषा प्रसिद्धे ॥

अग्निनिर्यासः । पुं । अग्निजारवृक्षे ॥

अग्निपर्णी । स्त्री । अग्निवती अगिया इतिलोकप्रसिद्धौषधौ ॥

अग्निपुराणम् । न । आग्नेये ॥ तत्र श्लोकसंख्या यथा । षोडशैवसहस्राणिपुराणेचाग्निसंज्ञितमिति ॥

अग्निभम् । न । स्वर्णे ॥ कृत्तिकानक्षत्रे ॥

अग्निभूः । पुं । कार्त्तिकेये ॥ पुराकिल तारकोपद्रुतदेवरक्षार्थंशिवेनाग्निरूपंस्वबीजंवन्हिमुखेचिक्षिप्तंतेनाग्निनाकृत्तिकासुचिक्षिप्तंताश्चदैवागतगर्भास्तथाः शरवणं प्रविश्यप्रसूताः तेनाग्निभूरितिसर्वानन्दः ॥ न । जले ॥ त्रि । अग्निजाते ॥ अग्नेर्भवति । भू । क्विप् ॥

अग्निभूति । पुं । बौद्धभेदे ॥ इतिहेमचन्द्रः ॥

अग्निमणिः । पुं । सूर्यकान्ते ॥ इति जटाधरः ॥

अग्निमन्थः । पुं । श्रीपर्णे । गणिकारिकायाम् । अरणीतिख्याते ॥ अग्निमन्थः श्वयथुघ्नवीर्योष्णः कफवातहृत् । पाण्डुनुत् कटुकस्तिक्तस्तुवरो मधुरोऽग्निदः ॥ अग्निमन्थकुसुमशाकस्तु । अग्निमन्थभववालसुनीता ससैन्धवमुद्गकेसुसाधिता । तक्रतसद्घृतयुतपाचिताहिंगुनाजनितवासवासिता ॥ अग्निमन्थोद्भवश्चविदोषशमनः सरः । आध्मानच्छर्दिशोथघ्नश्शूलरोगविनाशनः ॥ अग्निंमथ्नाति । मन्थविलोडने । कर्मण्यण् ॥ जयपर्णे ॥

अग्निमुखः । पुं । देवे ॥ निम्बे ॥ चित्रके ॥ अग्निर्मुखंयस्य ॥ न । वन्हेर्वक्रेपुष्पञ्च ॥

अग्निमुखी । स्त्री । भल्लातके । भिलावाँ इतिख्याते ॥ लाङ्गलिक्याम् ॥ अग्निरिवमुखमस्याः । गौरादि ॥

अग्नियन्त्रम् । न । आग्नेयास्त्रविशेषे । तोप बन्दूक अगन गन इत्यादिभाषा प्रसिद्धे ॥

अग्निरक्षणम् । न । अग्न्याधाने । अग्निपालने ॥ अग्नेः रक्षणम् ॥

अग्निरजाः । पुं । इन्द्रगोपाभिधेकीटे ॥

अग्निरुहा । स्त्री । मांसरोहिण्याम् ॥

अग्निवल्लभः । पुं । साले ॥ सालरसे ॥

अग्निवाहः । पुं । छागे । अग्नेर्वाहः ॥ धूमे ॥

अग्निवित् । पुं । अग्निचिति । अग्निहोत्रिणि ।

अग्निवीजम् । न । } स्वर्णे ॥
अग्निवीर्यम् । न । }

अग्निव्रतम् । न । भूभुर्जोव्रतविशेषे ॥ यथा । प्रतापयुक्तस्तेजस्वीनित्यं-स्यात्पापकर्मसु । दुष्टसामन्तहिंस्रश्चतदाग्नेयव्रतंस्मृतमिति ॥

अग्निशरणम् । न । दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यशालायाम् ॥ अग्नीनांशरणम् ॥

अग्निशाला । स्त्री । अग्निशरणे ॥ अग्नीनांशाला ॥

अग्निशिखम् । न । कुसुम्भपुष्पे ॥ कुङ्कुमे ॥ अग्नेरिवशिखाकेसरोऽस्य ॥ स्वर्णे ॥ पुं । कुसुम्भवृक्षे ॥ दीपे ॥ वाणे ॥ इतिशब्दरत्नावली ॥

अग्निशिखा । स्त्री । लाङ्गलिक्याख्यौषधौ ॥ अग्नेरिवशिखायस्याः ॥ विशल्यायाम् । शाकभेदे ॥ अग्नेरिवशिखासन्तापोयस्याः ॥ ज्वालायाम् ॥

अग्निशेखरम् । न । कुङ्कुमे ॥

अग्निष्टुत् । पुं । अग्निष्टोमस्यविकृतिरूपे क्रतुविशेषे । अग्निस्तूयतेऽस्मिन् क्रतुविशेषे । ष्टुञ्स्तुतौ । सम्पदादित्वादधिकरणे क्विप् । अग्नेःस्तुत्स्तोमसोमा इति षः ॥

अग्निष्टोमः । पुं । यज्ञविशेषे ॥ अग्नीनांस्तोमः । अग्नेः स्तुत्स्तोमसोमाइतिषः । अग्निष्टोमार्थग्रन्थे ॥

अग्निष्ठः । पुं । लोहमयेतण्डुलादिभर्जनपात्रे ॥

अग्निष्वात्ताः । पुं । दिव्यपितृभेदे ॥ यथा । अग्निष्वात्ताश्चदेवानांमारीच्यालोकविश्रुता इति ॥ अपिच । अग्निष्वात्तादयोलोके पितरश्चिरवासिनः इति । चिरलोकपितरइत्यर्थः ॥ अग्निनास्वदुं यथास्यादेवमात्ताः भक्षिताः श्रौतस्मार्त्ताग्नि दग्धाइत्यर्थः । एवञ्चात्रमूर्धन्यादेशोनयुक्तः । मन्वादिस्मृतिषु मूर्धन्यषकारस्थानेसपाठः ॥ नित्यबहुवचनान्तोयमितिकेचित् ॥

अग्निहोत्रम् । न । यज्ञभेदे । अग्न्याधाने ॥ सायंप्रातःकालयोर्नियमेनानुष्ठेयकर्मविशेषे ॥ अग्नयेहोत्रमत्रेतिबहुव्रीहिः ॥ पुं । अग्नौ ॥ हविषि ॥ इतिमेदिनिकरः ॥

अग्निहोत्रहवणी । स्त्री । यज्ञाङ्गभूते निर्वापसाधने काष्ठपात्रविशेषे ॥

अग्निहोत्री । पुं । अग्निहोत्रयुक्ते । अग्निचिति ॥ अग्निहोत्रमस्यास्ति । अतइनिठनाविति इनिः । योनचिपिनुहोत्यग्नौ नाथङ्गारिणाचमानवः । मन्दाग्निरामयावीच्दरिद्रश्चसजायते ॥

अग्नीत् । पुं । ऋत्विग्भेदे ॥ अग्निमिन्धे । ञिइन्धी दीप्तौ । क्विप् । नलोपः ॥ यज्ञमण्डपभेदे ॥

अग्नीध्रः । पुं । धनदारायणीये ऋत्विग्विशेषे ॥ तस्य कर्माग्निरक्षणम् ॥ अग्निविशेषे ॥

अग्नीधा । स्त्री । अग्निकार्य्ये । हविर्दानादिपूर्वकाग्निज्वालने ॥

अग्नीध्रीयः । पुं । दक्षिणाग्नौ ॥

अग्नीन्धनम् । न । अग्निकार्य्ये ॥ अग्नौ इन्धनम् ॥

अग्नीषोमीयम् । न । अग्नीषोम्येव विधि ॥ अग्नीषोमौ देवते अस्य । द्यावापृथिवीसुनासीरेत्यादिना छः ॥

अग्नीषोम्यम् । न । हविर्विशेषे ॥ अग्नीषोमौ देवते अस्य । द्यावापृथिवीत्यपस्य चकारात् यत् ॥

अग्न्याधानम् । न । श्रौताग्निसंस्कृतौ । अग्निहोत्रे । अग्निरक्षणे । अग्नेः आधानम् । अग्निहोत्रमित्यर्थः ॥

अग्न्याधेयम् । न । आहवनीयाद्यग्न्युत्पादकेकर्मणि ॥

अग्न्यालयः । पुं । अग्न्याधारकुण्डे ॥ अग्नेः आलयः ॥

अग्न्युत्पातः । पुं । उल्कापातादिदिव्य वैकृते आकाशादिष्वग्नि विकारे । उपाहिते ॥ अग्नेरुत्पातनमुत्पातो वैकृतम् ॥ अग्निनिष्ठोत्पाते । मन्त्रादिनाग्नेर्दाह शक्तिनिवारणे इत्यर्थः ॥

अग्रम् । न । पुरस्तात् । उपरि । पल परिमाणे । आलम्बने । समूहे । वृक्षादिशिरसि । प्रान्ते । भिक्षाविशेषे । ग्रासचतुष्टये । ग्रासप्रमाणा भिक्षास्यादग्रं ग्रासचतुष्टयमिति स्मृतेः । त्रि । अधिके । प्रथमे । प्रधाने ॥ अग्यते अगति वा । अग कुटिलायां गतौ । ऋज्रेन्द्रेति साधु ॥

अग्रकाण्डः । पुं । कोमलवल्याम् । काण्डीरे ॥

अग्रगः । त्रि । सेवके । अग्रेसरे । अग्रे गच्छति । गम्लृ गतौ । अन्यत्रापीति डः ॥

अग्रगण्यः । त्रि । अग्रेगणनीये । यथा । गमनभवनयाने यद्भयानमग्रगण्य इति महानाटकम् ॥

अग्रगामी । त्रि । अग्रगे । अग्रेसरे ॥

अग्रज । पुं । ज्येष्ठभ्रातरि । ब्राह्मणे ॥ त्रि । पूर्वजाते । अग्रेजात. सप्तम्यां जनेर्डः ॥

अग्रजङ्घा । स्त्री । जङ्घाग्रभागे । प्रतिजङ्घायाम् ॥

अग्रजन्मा । पुं । द्विजे । ज्येष्ठभ्रातरि ।

ब्राह्मणि । अग्रेआदौजन्मास्य ॥
अग्रजातः । पुं । विप्रे । त्रि । पूर्वजाते । अग्रेजातः ॥
अग्रजातिः । पुं । ब्राह्मणे । अग्रेजातिर्जन्मास्य ॥
अग्रणीः । त्रि । अग्रिमे । उत्तमे । अग्रं नयति । णीञ्प्रापणे । सत्सूद्विषेतिक्विप् । अग्रग्रामाभ्यामितिणत्वम् । विष्णौ । सर्वेषामग्रणीर्विष्णुः सेव्यःपूज्यश्चनित्यश इतिमोक्षधर्मः ॥ अग्रमुत्कृष्टंनिरस्तसकलदुःखानुषङ्गंपरमानन्दस्वरूपं पदंस्थानंनयतिमुमुक्षूनितितथा ॥
अग्रतः । अ । प्रथमे । पुरोऽर्थे । यथा । अग्रतस्त्वतुरोवेदाइति । अग्रेइति । आद्यादित्वात्तसिः । अग्रे ॥
अग्रतःसरः । त्रि । अग्रगामिनि । पुरोगे । अग्रतःसरति । सृगतौ । पुरोग्रतोग्रेषुसर्त्तेरितिटः ॥
अग्रदानी । पुं । आग्रहारिके । प्रेतसम्प्रदानकघटङ्कतिलादि द्रव्यग्राहिणि पतितब्राह्मणे । यथा । लोभीविप्रश्चशूद्राणामग्रेदानं गृहीतवान् । ग्रहणेमृतदानानामग्रदानी बभूवस इतिब्रह्मवैवर्त्तपुराणम् ॥
अग्रपर्णी । स्त्री । गौडभाषायामाल्कुशीतिप्रसिद्धौषधौ । अजलोमाख्यवृक्षे ॥

अग्रमांसम् । न । हृदयान्तर्गतमांसभेदे । वृक्कायाम् । अग्रं मुख्यंमांसम् । उदरमध्यवर्त्तिमांसवर्धनरूपरोगविशेषे ॥
अग्रयाणम् । न । प्रथमे । नासीरे । सेनाविशेषे ॥
अग्रयायी । त्रि । अग्रेसरे ॥
अग्रलोहिता । स्त्री । चिल्लीशाके । इति राजनिर्घण्टः ॥
अग्रसन्धानी । स्त्री । यमपञ्जिकायाम् । जीवानांशुभाशुभकर्मलिखितयमस्यपुस्तके ॥
अग्रसरः । त्रि । अग्रगामिनि । अग्रेसरति । बाहुलकाट्टः । पुरोगाग्रतोग्रेषुसर्त्तेरितिटोवा ॥
अग्रहः । पुं । वानप्रस्थे ॥
अग्रहायणः । पुं । मार्गमासे । मार्गशीर्षे ॥
अग्रायणीयम् । न । वादस्यभेदे ॥
अग्राह्यः । त्रि । परमेश्वरे । इन्द्रियाऽविषये । नग्राह्यः । ग्रहणायोग्ये । यथा । अग्राह्यं शिवनैवेद्यंपत्रं पुष्पंफलंजलम् । शालग्रामशिलास्पर्शात्सर्वंयातिपवित्रताम् इति ॥
अग्रिमः । त्रि । ज्येष्ठे । उत्तमे । अग्रे जातः । तत्रभवोवा । अग्रादिपश्चाड्डिमच् ॥

अग्रिमा । स्त्री । लवनीफले । लोना इतिगौडप्रसिद्धेफलवृक्षे ॥

अग्रियः । पुं । ज्येष्ठसोदरे ॥ त्रि । प्रधाने ॥ इत्यमरः ॥ अग्रेभव । घः ॥

अग्रीयः । त्रि । अग्रियार्थे ॥ अग्रेभवः । छप्रत्ययः ॥

अग्रे । । प्रधाने ॥ विभक्तिप्रतिरूपकोनिपातः ॥

अग्रेगूः । पुं । अग्रगे ॥ अग्रेगच्छति । गम्लृगतौ । क्विप् । ऊङ्चगमादीनामित्यूङ् । अनुनासिकलोपश्च । अग्रेगवौ अग्रेगवः इत्यादिबोध्यम् ॥

अग्रेदिधिषूः । पुं । पुनर्भूभर्त्तरि । प्रधान पुनर्भूभार्ये ॥ अग्रेप्रधानंदिधिषूर्यस्य । अग्रेइतिविभक्तिप्रतिरूपकोनिपातः । समासान्तविधेरनित्यत्वान्नकप् ॥

अग्रेदिधिषूः । स्त्री । ज्येष्ठायांसोदरभगिन्यामनूढायां याकनिष्ठा विवाहेन दीयतेतस्याम् ॥ उक्तञ्चलोकाक्षिणा । ज्येष्ठायांयद्यनूढायां कन्यायामुह्यतेऽनुजा । साचाग्रेदिधिषूर्ज्ञेयापूर्वातुदिधिषु स्मृतेति ॥

अग्रेवणम् । न । वनस्याग्रभागे ॥ वनस्याग्रे । राजदन्तादिषु निपातनात्सप्तम्याअलुक् । वनंपुरगेतिणत्वम् ।

अग्रेसरः । त्रि । अग्रगे । पुरोगमे ॥ अग्रमग्रेणाग्रेवासरति । सृगतौ । पुरोऽग्रतोऽग्रेषुसर्त्तेरितिटः अग्रेइति एदन्तत्वंनिपातनात् ॥

अग्रेसरिक । त्रि । अग्रगामिनि ॥

अग्र्य । त्रि । अग्रिमे । प्रधाने ॥ पुं । ज्येष्ठभ्रातरि ॥ प्रतिष्ठिते ॥ अग्रेभवः । अग्राद्यत ॥ अग्रेसाधुर्वा । तत्रसाधुरितियत् ॥ अग्रइवंवा । शाखादिभ्योयः ॥

अघम् । न । व्यसने ॥ दुःखे ॥ दुरिते । पापे ॥ अपराधे ॥ त्रि । तद्वति । पापाचरणे ॥ अघतेगच्छतिदानादिना । अघिगतौ । पचाद्यच् । आगमशास्त्रस्याऽनित्यत्वान्ननुम् । अङ्घ्यतेऽनेनवा ॥ अघंविद्यते ऽस्यअर्श आद्यच् ।

अघमर्षणम् । त्रि । पापनाशिमन्त्रविशेषे । सर्वैनसामपध्वंसिनिजप्ये ॥ अघमर्षति । मृषुसहने । सहनमभिभवः । यद्वा । मृष्यति । ल्युट् । स्त्रियांटित्वान्ङीप् ॥

अघमारः । पुं । यमे ॥ अघेनपापविशेषेणअत्युग्रेण अकाले मारयतिइतिअघमारः अजन्तः ॥

अघायुः । त्रि । पापजीवने ॥

अघोरः । पुं । गिरिशे ॥ त्रि । अभयानके ॥

अघोरा । स्त्री । भाद्रकृष्णचतुर्दश्याम् ॥

अङ्कपा

यथा । भाद्रमासस्यसितेपक्षेअघोरा ख्याचतुर्दशी । तस्यामाराधितः स्था णुर्नयेच्छिवपुरंध्रुवमितिस्मृतिः ॥
अघोः । । । सम्बोधने ॥
अघन्यः । पुं । प्रजापतौ ॥ अघन्यादि त्वात्हन्तेर्यक्अडागमउपधालोपश्च ॥ हन्तुमशक्यो ऽघन्यःपर्वतइतिवे दभाष्यम् ॥
अघन्या । स्त्री । सौरभेय्याम् ॥ नहन्य तेनहन्ति वादातारम् । अघन्याद यश्चेतिसाधुः ॥
अङ्कः । पुं । रूपकभेदे ॥ चिन्हे ॥ आजौ ॥ भूषणे ॥ कृष्णभूषायाम् ॥ रूपके ॥ अगे ॥ अन्तिके ॥ उत्सङ्गे ॥ स्थाने ॥ प्रकरणे ॥ अगे ॥ कटिप्रदेशे । ना टकादिपरिच्छेदे ॥ एकादिरेखाया म् ॥ अपराधे ॥ नवसु ॥ नवमाङ्के । अङ्क्यतेऽनेन । अकिलक्षणे । हल श्चेतिघञ् ॥
अङ्कतिः । पुं । अग्निहोत्रिणि ॥ वन्हौ ॥ वेधसि ॥ वायौ ॥ अञ्चति । अञ्चुग तौ । अञ्चेःकौवेच्यतिःकश्चान्तादेशः ॥
अङ्कनम् । न । सख्यासस्थाने ॥ चिह्न युक्तीकरणे । आंकनाइतिख्याते ॥
अङ्कपालिका । स्त्री । आश्लेषे । आ लिङ्गने ॥
अङ्कपाली । स्त्री । परीरम्भे । धात्र्या

अङ्कुरः

म् ॥ वेदिकायाम् ॥ इतिमेदिनी ॥ कोटयामितिहेमचन्द्रः ॥
अङ्कलोड्यः । पुं । चिञ्चोटके । चेच् कोइतिगौडभाषायामसिद्धे ॥
अङ्गः । न । चिन्हे ॥ शरीरे ॥ अञ्चति । अञ्चुगतिपूजनयोः । अञ्च्यञ्जियु जिभृजिभ्यःकुश्चेत्यसुन् कवर्गश्चा न्तादेशः । अङ्कसी । अङ्कांसि ॥
अङ्कितः । त्रि । चिन्हिते । लाञ्छिते ॥ इतिव्याडिः ॥
अङ्किनी । स्त्री । अङ्कानांसमूहे ॥ ख लादित्वादिनिः ॥
अङ्की । स्त्री । मृदङ्गभेदे । अङ्के ।
अङ्कुरः । पुं । रुधिरे ॥ लोम्नि ॥ सलि ले ॥ अभिनवोद्भिदि ॥ अङ्क्यते । अ किलक्षणे । मन्दिवाशिमथीत्यु रच् ॥
अङ्कुरितः । त्रि । उदयति ॥
अङ्कुशः । पुं । न । सृण्याम् । बाधाया म् । अङ्क्यतेऽनेन । अकि । साम सिवर्णसिपर्णसितण्डुलाङ्कुशेति नि पातनादुशच् ॥
अङ्कुमदुर्दुरः । पुं । गम्भीरवेदिनि ॥
अङ्कुशी । स्त्री । फलाद्याहृतिसाधने ॥ बौद्धमातरि । जिनानांचतुर्विंशति शासनदेव्यन्तर्गतदेवी विशेषे ॥ इति हेमचन्द्रः ॥

अङ्कूर । पुं । अङ्कुरे । अभिनवोद्भिदि । अकाते । अकिलचणे । खर्ज्जूरादिच्चादूरः ।

अङ्कोटः । पुं । निकोचके । अङ्कोले । टेराइतिख्यातवृक्षे । अङ्कोटकःकटुस्तीक्ष्णःस्निग्धोष्णस्तुवरोलघुः।रेचनःकृमिशूलामशोथग्रहविषापहः । विसर्पकफपित्तास्रमूषकस्यविषापहः । तत्फलंशीतलंस्वादुश्लेष्मघ्नंबृंहणंगुरु । बल्यविरेचनवातपित्तदाहक्षयास्रजित् । अङ्क्यते । अकिलचणे । बाहुलकादोटः ।

अङ्कोठ । पुं । अङ्कोटे । टेराइतिख्यातवृक्षे । आंकोडइतिगौडभाषाप्रसिद्धे । अङ्क्यतेबाहुलकादोठ ।

अङ्कोलः । पुं । अङ्कोटवृक्षे ।

अङ्कोलिका । स्त्री । आलिङ्गने । इति शब्दमाला ।

अङ्कोल्लसारः । पुं । स्थावरविषप्रभेदे द्रुमान्तरे । इतिहेमचन्द्रः ।

अङ्क्यः । पुं । मृदङ्गभेदे । यथा । सार्द्धतालश्चयायाम श्चतुर्दशाङ्गुलाननः । हरीतक्याकृतिर्यःस्यादङ्क्योऽङ्कसहियायातेइतिभरतः । अपिच । हरीतयथाकृतिस्त्वङ्क्योयवमध्यस्तथोर्द्धकः । आलिङ्ग्यस्त्वेव गोपुच्छोमध्यदक्षिणवामगाः ।



अङ्ग । अ । सम्बोधने । अङ्गति । अगिगतौ । पचाद्यच् । हर्षे । सङ्गमे । असूयायाम् । पुनरर्थे । अङ्गनम् । घञ् । मूर्खोऽपिनावमन्तव्यःकिमङ्गविद्वान् ।

अङ्गम् । न । काये । गात्रे । अवयवे । प्रतीके । उपाये । श्रुतेःशिक्षादिषट्सु । यथा । शिक्षाकल्पोव्याकरणं निरुक्तंछन्दएवच । ज्योतिषञ्चषडङ्गानिकथितानिमनीषिभिः । मनसि । यथा । हिरण्यगर्भोऽङ्गभुवमुनिर्हरिरितिमाघः । क्लीवैकत्वेतु अप्रधाने । तल्लक्षणंयथा । तदीयप्रधानफलजनकव्यापारजनकत्वेसतितदीयप्रधानफलाजनकत्वमङ्गत्वम् । पुंभूम्नि । नीवृति । यथा । वैद्यनाथसमारभ्यभुवनेशान्तगंशिवे । तावदङ्गाभिधोदेशोयात्रायांनहिदुष्यतीति । अङ्गाःचत्रियविशेषाःतेषांनिवासोजनपदः अङ्गाः । तस्यनिवासइत्यणोजनपदेलुप् । लुपियुक्तवद्व्यक्तिवचने । त्रि । अङ्गवति । अन्तिके । अङ्ग्यते ज्ञायतेऽनेन । अगिगतौ । घञ् । अङ्गति । अच् । सम्पादके । षट्सु । खर्वे ।

अङ्गग्रहः । पुं । गात्रवेदनायाम् । इति वैद्यकम् ।

अङ्गज । पुं । अनङ्गे । केशे । पुत्रे । गदे । न । रुधिरे । मले । अङ्गात्

क्रुश्वेत्यसुन्। कवर्गस्यान्तादेशः। अङ्गसी अङ्गांसि ।

अङ्गसंस्कारः। पुं। परिकर्म्मणि। शरीरशोभाजनककर्म्मणि स्नानादौ। अङ्गं संस्क्रियतेऽनेन। सम्पूर्ब्बात् करोतेर्घञ् ।

अङ्गहारः। पुं। अङ्गविक्षेपे। अङ्गुल्यादिविन्यासभेदे। अङ्गानां स्थानात् स्थानान्तरेनयने। अङ्गस्य हरणम्। हृञ् हरणे। घञ् ।

अङ्गहारिः। पुं। अङ्गहारे। इति भरतधृतो हड्डुचन्द्रः ।

अङ्गहीनः। त्रि। व्यङ्गे। काणादौ। अङ्गेन अङ्गाभ्यां अङ्गैर्वा हीनः ।

अङ्गारः। पुं। महीसुते। हिलावल्याम्। पुं। न। अलाते। निर्धूमाग्निपिण्डे। अङ्गति। अगिगतौ। अङ्गिमदि मन्दिभ्य आरन्। अङ्गमियर्त्ति वा। ऋगतौ। कर्म्मण्यण् ।

अङ्गारकः। पुं। कुजे। भौमे। अङ्गारवर्णसादृश्यात्। ऋगतौ। कर्म्मण्यण्। संज्ञायांकन्। यद्वा। अङ्गारस्य रक्तवर्णत्वात्। इवेप्रतिकृताविति कन्। उल्मुकांशे। कुरुण्टके। भृङ्गराजे ।

अङ्गारकतैलम्। न। स्वनामख्यातपक्वतैलविशेषे। तस्य पाकप्रकारो यथा। मूर्व्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी। बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी। आरनालाढकेनैव तैलप्रस्थं विपाचयेत्। तैलमङ्गारकं नाम सर्व्वज्वरविमोक्षणमिति सुखबोधः ॥

अङ्गारकमणिः। पुं। प्रवाले। इति राजनिर्घण्टः ।

अङ्गारकर्कटी। स्त्री। अंगाकडी बाटी लिट्टी इत्यादि प्रसिद्धिंगतायाम्। यथा। शुष्कगोधूमचूर्णन्तु साम्बुगाढं विमर्द्दयेत्। विधाय पटकाकारं निर्धूमेऽग्नौ शनैः पचेत्। अङ्गारकर्कटी ह्येषा बृंहणी शुक्रला लघुः। दीपनी कफकृद्बल्या पीनसश्वासकासजित् ।

अङ्गारकुष्ठकः। पुं। हिलामल्याम्। कुष्ठे ।

अङ्गारधानिका। स्त्री। हसन्याम्। स्वार्थे कन् ।

अङ्गारधानी। स्त्री। अङ्गारधारिण्याम्। हसन्याम्। अङ्गारा धीयन्तेऽस्याम्। डुधाञ् धारणपोषणयोः। ल्युट् ङीप् ।

अङ्गारधारिणी। स्त्री। अङ्गारधान्याम्। अङ्गाराणां धारिणी ।

अङ्गारपरिपाचितम्। न। शूलादिना पक्वमांसे। अङ्गारेषु परितः पाचितम्। त्रि। अङ्गारपक्वे ।

अङ्गारपर्णः । पुं । चित्ररथाख्येगंधर्वे ॥ इतिमहाभारतम् ॥

अङ्गारपुष्पः । पुं । जीवपुत्रद्रुमे ॥ इति रत्नमाला ॥

अङ्गारमञ्जरी । स्त्री ।
अङ्गारमञ्जी । स्त्री । } करञ्जभेदे ॥

अङ्गारवल्लरी । स्त्री । करञ्जभेदे ॥ अङ्गारवर्णपर्णवल्लरी ॥ भार्ग्याम् ॥ गुञ्जायाम् ॥

अङ्गारवल्ली । स्त्री ॥ महाकरञ्जे ॥ भार्ग्याम् ॥ अङ्गारवत्वल्ल्यस्याः । समासान्तविधेरनित्यत्वात् । नकप् ॥

अङ्गारशकटी । स्त्री । हसन्त्याम् ॥ अङ्गाराणांशकटी ॥

अङ्गारिः । स्त्री । हसन्त्याम् ॥ इतिजटाधरः ॥

अङ्गारिका । स्त्री । इक्षुकाण्डे ॥ किंशुककोरके ॥ इतिमेदिनी ॥

अङ्गारिणी । स्त्री । हसन्त्याम् ॥ भास्करत्यक्तदिशि ॥

अङ्गारितम् । त्रि । दग्धे ॥ अङ्गाराणि सञ्जातान्यस्य । तारकादित्वादित च । न । पलाशकलिकोद्गमे ॥

अङ्गारिता । स्त्री । हसन्त्याम् ॥ लतामाने ॥ नदीभेदे ॥

अङ्गार्य्या । स्त्री । अङ्गाराणांसमूहे । पाशादिभ्योयः ॥



अङ्गावबद्धम् । न । अङ्गाश्रितोपासने ॥ अङ्गे अङ्गेषुवाअवबद्धम् ॥ त्रि । अङ्गनिबद्धे ॥

अङ्गिका । स्त्री । कञ्चुके । चोली इतिभाषाप्रसिद्धे ॥

अङ्गी । त्रि । प्रधाने । मुख्ये ॥ अवयविनि ॥

अङ्गिराः । पुं । मुनिभेदे ॥ वृहस्पतौ ॥ अङ्गिरआङ्गिरसयोरभेदोपचारात् ॥ प्रभवादिषुषष्ठे वर्षे ॥ यथा । निरातङ्कंजगत्सर्वंधनयौवनगर्वितम् । अङ्गिरसिप्रजाःसर्वानित्योत्साहावरानने इति ॥ अङ्गगति । अगिगतौ । अङ्गिरादितिअङ्गतेरसिरिडागमश्चनिपातितः ॥

अङ्गीकारः । पुं । अभ्युपगमे ॥ अङ्गीकरणम् । अङ्गीतिच्व्यन्तम् । तत्पूर्वात्कृञोभावेघञ् ॥

अङ्गीकृतम् । त्रि । स्वीकृते । ऊरीकृते । यथा । आयातयातेनभवाम्बुराशौजातोमहान्मेममप्रयासः । सोचायनाथस्य पदप्रसादादङ्गीकृतःसम्मतिकौलमार्गइति ॥ अनङ्गमङ्गमकारि ॥

अङ्गुः । पुं । अङ्गे ॥

अङ्गुरिः । स्त्री । अङ्गुल्याम् ॥

अङ्गुरी । स्त्री । अङ्गुल्याम् । पाणिपादाङ्गुल्याम् ॥

वस्थानात् सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ७१ उदाहरणानि यथा । उत्पतन् वियति पतत्री अतिदूरतया सन्नपिनप्रत्यक्षेणोपलभ्यते । लोचनस्थमञ्जनमतिसामीप्यान्नदृश्यते । वाद्येन्द्रियघातोऽन्धत्वबधिरत्वादिस्तस्मात् रूपादयोनोपलभ्यन्ते । अङ्गिकामाद्युपहतमनाः स्फीतालोकमध्यवर्त्तिनमिन्द्रियसन्निकृष्टमप्यर्थं मनोनवस्थानान्नपश्यति । इन्द्रियसन्निकृष्टं परमाण्वादिप्रणिहितमना अपिसौक्ष्म्यान्नपश्यति । कुड्यादिव्यवहितं राजदारादिर्व्यवधानान्नपश्यति । अह्नि सौरीभिर्भाभिरभिभूतंग्रहनक्षत्रमण्डलंनपश्यति । तोयदमुक्तजलबिंदून्जलाशये समानाभिहारान्नपश्यति । चकारोऽनुक्तसमुच्चयार्थः तेनानुद्भवोपिसङ्गृहीतः । तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न दृश्यते ।

अनुपशयः । त्रि । असात्म्ये ।

अनुपसंहारी । पुं । हेत्वाभासविशेषे ॥ सच अन्वयव्यतिरेकदृष्टान्तरहितोनुपसंहारी । यथा । सर्वमनित्यं प्रमेयत्वादिति । अत्रसर्वस्यापिपक्षत्वान्न दृष्टान्तोनास्ति । नउपसंहारी ।

अनुपस्कृतम् । त्रि । अविकृते । अविगर्हिते ।

अनुपहितः । त्रि । समष्टव्यष्ट्यज्ञानतदुपहितेश्वरयोराश्रये स्वमहिमप्रतिष्ठिते अक्षरशब्दवाच्ये चिन्मात्रे ॥

अनुपाकृतः । पुं । मन्त्रैः पशोः स्पर्शनमुपाकरणं तद्रहितेपशौ ।

अनुपातः । पुं । त्रैराशिकगणिते । पश्चात्पतने । पूर्वाङ्कपातानुसारेण पराङ्कपाते ।

अनुपातकम् । न । पञ्चविंशतप्रकारभिन्नेमहापातकसदृशपापविशेषे ।

अनुपात्ययः । पुं । क्रमप्राप्तस्यानतिपाते । पर्याये ।

अनुपानम् । न । भेषजाङ्गे पेयविशेषे । भेषजेनसह तत्पश्चाद्वा यत्पीयते तस्मिन् । यथा । अनुपानविशेषेणकरोतिविविधान्गुणानिति वैद्यकम् । समीपस्थोदके । अनुगतंपानम् ।

अनुपुष्पः । पुं । शरे । इतिशब्दचन्द्रिका ।

अनुपूर्वशः । अ । क्रमेणेत्यर्थे ।

अनुपेतः । त्रि । मासमुपनयस्त्वेत्युपनयनार्थमनुपसन्ने । अननुगते । एकाकिनि ।

अनुप्रविष्टः । त्रि । विषयविकारविज्ञानैः प्रच्छन्ने ।

अनुप्रभूतः । त्रि । अनुव्याप्ते ।

अनुव | अनुभ

अनुप्रासः। पुं। शब्दालङ्कारभेदे। स यथा। वर्णसाम्यमनुप्रासः। स्वरवैसादृश्येपिव्यञ्जनसदृशत्त्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टोन्यासोऽनुप्रासः। उदाहरणं यथा। आदायवकुलगन्धानन्धीकुर्वन् पदेपदे भ्रमरान्। अयमेतिमन्दमन्दं कावेरीवारिपावनः पवनइति। छेकवृत्तिगतोद्विधा। छेकाःविदग्धाः। वृत्तिर्नियतवर्णगतो रसविषयोव्यापारः। गतइतिछेकानुप्रासोवृत्त्यनुप्रासश्चेतितद्भेदौ।

अनुप्लवः। त्रि। सहाये। अनुगे। अनुपश्चात्प्लवते। प्लुङ्गतौ। पचाद्यच।

अनुबन्धः। पुं। बन्धे। दोषोत्पादे। इच्छातोऽपराधकरणे। यथा। अनुबन्धमवस्थाचहृष्ट्वादण्डं निपातयेदिति। धातादिदेशाणाम प्राधान्ये। उच्चरितप्रध्वंसिनि। विनश्वरे। प्रकृतिप्रत्ययागमादेशानांयः कार्यार्थमासज्यते नचप्रयोगसमवायी सोऽनुबन्धउच्यते। मुख्यानुयायिनिशिशौ। मुख्यंपित्रादिकमनुयातियः शिशुस्तस्मिन्। प्रकृतस्यानुवर्त्तने। प्रकृतस्यमारब्धस्यानुवर्त्तने। सम्बन्धे। पश्चाद्भाविशुभपरिणामे। अधिकारिविषयसम्बन्धप्रयोजनेषु। लेशे।

फलसाधने। अनुबध्यते। बन्धबन्धने। घञ्।

अनुबन्धी। त्रि। सहचारिणि। अविच्छेदेनव्यापके। अनुबध्नातीति।

अनुबन्धी। स्त्री। हिक्कायाम। तृष्णायाम।

अनुबोधः। पुं। प्रबोधने। गतगन्धस्य पुनःप्रयत्नेनोद्बोधने। यथा। कस्तूरिकादिनामद्यादेः। पद्मादौ। अनुबोधनम्। बुधअवगमने। भावे-घञ्।

अनुब्राह्मणी। त्रि। अनुब्राह्मणाध्ययनकर्त्तरि। ब्राह्मणसदृशोग्रन्थोऽनुब्राह्मणम्। तदधीते। अनुब्राह्मणादिनिः।

अनुभवः। पुं। स्मृतिभिन्नज्ञाने। सद्विधः यथार्थोऽयथार्थश्चेति। तद्वति तत्प्रकारकानुभवो यथार्थानुभवः। सैवप्रमेत्युच्यते। तदभाववति तत्प्रकारकस्त्वयथार्थानुभवः। उपलम्भे। उपलब्धौ। साक्षात्कारे। साक्षात्स्वरूपबोधे। अस्यमाहात्म्यन्तु। यस्यानुभवपर्यन्ता दृष्टिस्तत्त्वे प्रवर्त्तते। तद्दृष्टिगोचराः सर्वेमुच्यन्तेसर्वकिल्बिषैरिति। प्रत्ययादौ। अनुभवनम्। भू०। ऋदोरप्।

अनुभविता। त्रि। चेतने।

अनुभावः । पुं । कोपदण्डजतेजसि । प्रभावे । निश्चये ॥ सतांमतिनिश्चये । सतामभिप्रायस्यनिश्चये ॥ भावबोधके रोमांचादौ । कटाक्ष भुजाक्षेप प्रभृतिषु ॥ यथा । भावंमनोगतंसाक्षात्स्वहेतुंव्यञ्जयन्तिये । तेऽनुभावा इतिख्याताभ्रूविक्षेपस्मितादय इतिरसार्णवसुधाकरः ॥ भवनंभावः । श्रि णीभुवइतिघञ् । अनुगतोभावोऽनुभावः । प्रादयोगताद्यर्थइतिसमासः । सामर्थ्ये ॥ अनुभावयति । भुवःप्रत्यच् ॥

अनुभाव्यः । त्रि । अनुभवविषये ॥

अनुभूतः । त्रि । परिचिते ॥ यथा । जयतिश्रीगुरुर्देवोयत्प्रसादादिदंजगत् । अनुभूतंमयासम्यग्दृष्टंनसारमस्त्यपीति ॥

अनुभूतिः । स्त्री । ज्ञानभेदे । अनुभवे ॥ यथा । अनुभूतिंविनामूढोवृथाब्रह्मणिमोदते । प्रतिबिम्बितशाखाग्रफलास्वादनमोदवदिति ॥ प्रत्यक्षानुमित्युपमितिशब्दभेदात्साचतुर्विधाभवति ॥

अनुमतः । त्रि । कृताकाङ्क्षे । अनुज्ञाते ॥

अनुमतकर्म्मकारी । त्रि । आज्ञयाकार्यकर्त्तरि ॥ लिखितपत्राद्यनुसारेणकर्मकर्त्तरि ॥



अनुमतिः । स्त्री । कलोनेन्दुपूर्णिमायाम् । अष्टुायास्तनयायाम् ॥ उदयकालेमतिपद्योगात्कलाहीनेचन्द्रेसत्यनुमतिशब्दवाच्यापूर्णिमाभवति ॥ अनुज्ञायाम् । राजादेःसम्मतौ । तांविनायागादिक्रियायाअनिष्पत्तेः ॥ सम्मतिपूर्वकाज्ञायाम् ॥ अनुमन्यतेक्तिच् ॥

अनुमन्ता । त्रि । यदनुमतिंविनाकर्त्तुंनशक्यतेतस्मिन् । अनुमतिदातरि ॥ कार्यकारणप्रवृत्तिषुस्वयमप्रवृत्तोपिपरमात्मा प्रवृत्तइवसन्निधिसत्तामात्रेणतदनुकूलत्वात्स्वव्यापारेषुप्रवृत्तान्देहेन्द्रियादीन्ननिवारयति कदाचिदपि । ततसाक्षिभूत.पुरुषः साक्षीअनुमन्ता ॥

अनुमरणम । न । अनुसंस्थायाम् । पश्चान्मरणे । भर्त्तरिमृतेतत्पादुकादिकमुरसिनिधायज्वलच्चितारोहणपूर्वकं ब्राह्मणीभिन्नस्त्रियाः मरणे ॥ यथा । देशान्तरमृतेपत्यौसाध्वीतत्पादुकाद्वयम् । निधायोरसिसंशुद्धाप्रविशेज्जातवेदसमितिब्रह्मपुराणम् ॥ पृथक्चितिंसमारुह्यनविप्रागन्तुमर्हतीतिस्मृतिः । तवस्वरूपारमणीजगत्याच्छन्नविग्रहा । मोहाद्भर्त्तुश्चितारोहाद्भवेन्नरकगामिनी-

तिसहमरणानुमरणयोःसामान्यतो निषेधकमागमवचनम् ॥ सहमरणे॥

अनुमा । स्त्री । अनुमितौ । अनुमाने॥

अनुमानम् । न । कल्पने । सांख्यस्मृति परिकल्पिते प्रधाने । स्मृतौ । अनुमीयतेश्रुतिर्ययेतिव्युत्पत्त्या स्मृतेरपिप्रामाण्यम्प्रतिसापेक्षत्वात् । अनुमितिकरणे ॥ लिङ्गलिङ्गिपूर्वके । पूर्ववत् शेषवत्सामान्यतो दृष्टंचेति त्रिविधे अनुमितिसाधने । अत्रोक्तं भाष्यकारैः । सत्सुच वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थ ग्रहणदार्ढ्यायानुमानमपिवेदान्तवाक्या विरोधिप्रमाणं न निवार्यतइति ॥

अनुमानोक्तिः । स्त्री । तर्के । अनुमानस्योक्तिः ॥

अनुमितिः । स्त्री । अनुभवविशेषे । परामर्शजन्यज्ञाने । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञाने ॥ यथा । धूमदर्शनाद्वह्निमान्पर्वतइत्याकारज्ञानमनुमितिः । अस्याव्यापारकारणंपरामर्शः । अस्याःकरणंव्याप्तिज्ञानम् । अनुमानम् । डुमिञ्प्रक्षेपणे । क्तिन् ॥

अनुमेयः । त्रि । अनुमातुंयोग्ये ॥

अनुमोदः । पुं । एवमस्त्वित्याकारे अनुमोदने ॥



अनुमोदनम् । न । अनुमोदे ॥

अनुमोदितः । त्रि । अनुज्ञाते । कृतानुमोदने । अनुमते । यथा । भवताद्यवसितंतन्मेसाध्वनुमोदितमिति श्रीभागवतम् ॥

अनुयाजः पुं । यज्ञाङ्गे ॥ प्रयाजानुयाजाः । यज्ञेषुचित्रयाजानुयाजौयज्ञाङ्गइति कुत्वाभावोनिपातसिद्धः ॥

अनुयायी । त्रि । सदृशे । पश्चाद्गामिनि ॥

अनुयुक्तः । पुं । भृतकाध्येतरि । इति- महाभारतम् ॥

अनुयोक्ता । पुं । भृतकाध्यापके ॥ इति महाभारतम् ॥

अनुयोगः । पुं । प्रश्ने । अनुयोजनम् । युजेर्घञ् ॥

अनुयोगकृत् । पुं । आचार्ये ॥ इतिहेमचन्द्रः ॥

अनुयोजनम् । न । प्रश्ने । इतिहेमचन्द्रः ॥

अनुरक्तः । त्रि । अनुरागवति ॥ यथा । अनुरक्तोगुणान्ब्रूतेविरक्तोदूषणानि चेति । अनुकूले ॥

अनुरञ्जनम् । न । अनुरागे । हर्षजनने ॥

अनुरतः । त्रि । अनुरागविशिष्टे । प्रीते । अनुरक्ते । अनुपूर्वात् रमेः क-

र्त्तरिक्तः ॥

अनुरतिः । स्त्री । अनुरागे ॥

अनुरहसम् । न । एकान्ते । रहोऽनु । अनुगतंरहः । अनुगतं रहोऽस्मिन्वा अन्ववतप्तादहसइत्यच ॥

अनुरागः । पुं । अन्योन्यप्रीतौ । स्नेहे ॥ अनुगतोरागः ॥

अनुरागी । त्रि । अनुरक्ते ॥ अनरागो ऽस्यास्तिअस्मिन्वा । मत्वर्थे इनिः ॥

अनुराधा । स्त्री । सप्तदशमेनक्षत्रे ॥ अ त्रजातस्यफलंयथा । सत्कीर्तिकान्ति स्सदोत्सवःस्याज्जेतारिपूणाञ्चकला प्रवीणः । स्यात्सप्तदशेयस्यकिलानुरा धासम्प्रतप्रमोदोविविधो भवेतामि तिकोष्ठीप्रदीपः ॥ राधामनुगता ॥

अनुरुद्धः । त्रि । निवद्धे ॥

अनुरूपम् । त्रि । सदृशे ॥ योग्ये ॥

अनुरूपम् । न । सदृशे । प्रतिरूपे ॥ रू पस्ययोग्यम् । यथार्थेयोग्यतायामव्य यं विभक्तीत्यव्ययीभावः । अव्ययीभा वश्चेत्यव्ययत्वम् ॥

अनुरोधः । पुं । अनुवृत्तौ । अनुवर्त्तने । आराध्यादेरिष्टसम्पादने ॥ अनुरो धनम् । रुधिर् आवरणे । घञ् ॥

अनुलब्धः । त्रि । अनुविन्ने ।

अनुलापः । पुं । मुहुर्भाषणे । वारंवारं भाषणे । अनुलपनम् लपव्यक्तायांवा

चि । भावे घञ् ॥

अनुलिप्तः । त्रि । रञ्जिते ॥ कृतानुलेप ने ॥

अनुलेपः । पुं । चन्दनादौ ॥ अनुलेपन म् । लिपेर्घञ् ॥

अनुलेपनम् । न । चन्दनादौ ॥ गात्रेग न्धद्रव्यादिलेपने । अनुलिप्यते । लि मउपदेहे । कर्मणिल्युट् ॥

अनुलोमः । पुं । यथाक्रमे । अचमर्त्यन्त वेत्यच् ॥

अनुलोमजः । त्रि । अनुलोमजाते । अ प्रतिलोमजे ॥ यथा । ब्राह्मणात् क्ष त्रियागर्भजातः । क्षत्रियात् वैश्यायां जातइत्यादिज्ञेयम् ॥

अनुवत्सरः । पुं । सम्वत्सरे ॥

अनुवर्त्तनम् । न । अनुरोधे । आराध्या दीष्टसम्पादने ॥ अनुगम्यवर्त्तनमा- राधनम् । अनुवृत्तौ ॥

अनुवर्त्तितः । त्रि । सेविते ॥

अनुवर्त्ती । त्रि । अनुकूले ॥

अनुवाकः । पुं । ग्रन्थे । ऋग्गीतऋग् जाते । ऋग्यजुःसमूहे । अनुउच्यते । वचपरिभाषणे । घञ् । चजोरि ति कुत्वम् ॥

अनुवाक्या । स्त्री । मृग्यास्तुयाज्यायांदे वताह्वान्यामृचि ॥ अनुउच्यते । व चेर्ऋहलोर्ण्यत् । चजोरितिकुत्वम् ॥

अनुवि

। शब्दसंज्ञत्वात् वचोशब्दसंज्ञायो-
मितिनप्रतिषेधः॥

अनुवातः। पुं। वायुविशेषे। यःशिष्य
देशाद्गुरुदेशमागच्छतिवायुः सोनु
वातइत्युच्यते॥

अनुवादः। पुं। प्राप्तस्यपुनः कथने।
ज्ञातार्थस्यप्रतिपादने। सिद्धस्योपन्या
से। प्रमाणान्तरावगतस्यार्थस्यशब्दे
नोक्तिरनुवादः। ज्ञातस्यकथने। य
था। अग्निर्हिमस्यभेषजमित्यादिः।
हिमविरोधित्वस्याग्नौप्रत्यक्षावगत-
त्वात्। अनुवदनम्। वदअभिवादन
स्तुत्योः। घञ्। कुत्सितार्थे। विधि
विहितस्यानुवचनमनुवादः। न्या॰
२।६५॥

अनुवासः। पुं। सौरभ्ये।

अनुवासनम्। न। स्नेहने। धूपने।
वैद्यकोक्तस्नेहवस्तौ। यथा। द्विधाव
स्तिः परिज्ञेयानिरूहस्त्वानुवासनम्
। कषायाद्यैर्निरूहः स्यात्स्नेहाद्यैर-
नुवासनमिति। वासच्छेदेचु॰।
अनुपूर्वात् भावेल्युट्।

अनुविक्तः। त्रि। अनुलब्धे।

अनुविद्धः। त्रि। खचिते।

अनुविषयाम्। त्रि। अनुगते।

अनुविष्टितः। त्रि। अनुमर्षनि। कर्ष
रितः॥

अनुश

अनुवृत्तः। त्रि। प्रविष्टे। व्याप्ते। पा
लिते। अनुवृत्तिविशिष्टे।

अनुवृत्तिः। स्त्री। प्रवाहरूपेणानुगतौ।
अनुरोधे। आनुकूल्ये। सेवायाम्।
अन्वये। अनुवर्ततेव्याप्नोति। वृतु
वर्तने। क्तिन्। अनुवर्त्तनंवाक्तिन्।

अनुवेश्यः। त्रि। तदन्तर्गृहवासिनि।

अनुव्रजनम्। न। अनुव्रज्यायाम्। गृहा
गतानांशिष्टानांगमनसमये कियद्दू
रपर्यन्तंपश्चाद्गमनरूपे शिष्टाचारे।
यथा। आयान्तमग्रतोगच्छेत् गच्छ
न्तंतमनुव्रजेदितिनिगमकल्पद्रुमत
न्त्रम्।

अनुव्रज्या। स्त्री। गच्छतोनुगमने। अ
नुव्रजने। अनुव्रजनम्। अनुव्रज्या-
। क्यप्।

अनुशयः। पुं। द्वेषे। पश्चात्तापे। अ
नुबन्धे। दीर्घद्वेषे। शास्त्रोक्तकर्मणि
। अनुशयनम् अनेनवा। शीङ्स्वप्ने
। एरच् पुंसीतिघोवा।

अनुशयी। त्रि। चन्द्रस्थलस्खलितोऽवरो
हतिनीह्यादिदेहसंश्लिष्टे वेदविहित
कर्मानुष्ठातरि कर्मिणि। जीवे। अ
नुदग्धवत्प्रमाणमैश्वरपमूलेशेते इति
तथा।

अनुशयी। स्त्री। क्षुद्ररोगान्तर्गतपा
दरोगविशेषे। तल्लक्षणादिर्यथा।

गम्भीरामल्पघोषांचसवर्णांसुपरिस्थिताम्। पादस्यानुशयींसान्तुविद्यादन्तः पयाकिनीम्। हरेदनुशयींवेधःक्रिययाशस्त्रविद्रधेरितिभावप्रकाशः।

अनुशरः। पुं। राक्षसे। अनुशृणाति। शृहिंसायाम्। अनुपूर्वः। ऋदोरप्।

अनुशायी। पुं। जीवे।

अनुशासनम्। नं। अनुशिष्टौ। आज्ञायाम्। उपदेशे। नियोगवचने। अनुशिष्यते आख्यायते लक्षणादिर्येन। शासुअनुशिष्टौ। अनुपूर्वः। ल्युट्। ध्युत्पादने। यथा। शब्दानामनुशासनम्। अनुशिष्यन्तेअसाधुशब्देभ्यः प्रविभज्यबोध्यन्तेयेनेतिकरणेल्युट्।

अनुशासितः। त्रि। अनुशिष्टे। अनुशिक्षिते।

अनुशासिता। त्रि। नियन्तरि। प्रशासितरि।

अनुशिष्टः। त्रि। ज्ञापिते। शिक्षिते। आज्ञप्ते।

अनुशिष्टिः। स्त्री। कर्त्तव्याकर्त्तव्ययोर्विविच्यज्ञापने। अनुशासने। अनुशासनम्। शासु०। स्त्रियांक्तिन्। नावादिभ्यः। शास इदङ्हलोः।

अनुशीलनम्। न। आलोचने। मुहुःसेवने। पुनःपुनरभ्यासे।



अनुशोचनम्। न। शोके। शुचशोके। अनुपूर्वः। ल्युट्।

अनुश्रवः। पुं। वेदे। गुरुमुखादनुश्रूयतएवन केनचित्क्रियते अनुपूर्वेच्छ्रोतेर्ऋदोरविन्त्यप्।

अनुषक्। । अनुमाने।

अनुषक्तः। त्रि। अनुविषक्ते। अनुगते। अनुसज्यतेस्म। षञ्ज०। क्तः।

अनुषङ्गः। पुं। करुणायाम्। इतिहलायुधः। एकत्रान्वितार्थानामपरत्रान्वये। आसक्तौ। न्याये। उपनयस्याऽयुष्मदस्यनिगमने। यथा। वन्हिव्याप्यधूमवांश्चायमतस्माद्वन्हिमानिति। अनुषज्यतेऽत्र। षञ्जसङ्गे। हलश्चेतिघञ्। अन्योद्देशेनवृत्तावन्यस्यापिसिद्धौ।

अनुषङ्गि। त्रि। व्यापके।

अनुष्टुप्। स्त्री। सरस्वत्याम्। अष्टाक्षरायांवृत्तौ। यथा। पञ्चमोलोगुरुःषष्ठःसप्तमस्तुसमेलघुः। पादेद्विविषमेगश्चेतच्छ्लोकोऽनुष्टुप्चकीर्त्तितः। क्वचितपादेतुविषमेपञ्चमाद्यास्त्रयोपिलाः। तेनापिसर्वेगाःश्लोकेक्वचित्केचलपञ्चमइति। अनुस्तुभाति। ष्टुभस्तु०। क्विप्।

अनुष्ठानम्। न। क्रियारम्भे। करणे। अनुष्ठीयतेयत्। ष्ठा०। ल्युट्।

अनुष्ठितः। त्रि। कृते।

अनुष्णः । त्रि । अलसे । मन्दे । शीतले ॥ उष्णोदन्यः उष्णादन्यः । न । उत्पले ॥

अनुष्णवल्लिका । स्त्री । नीलदूर्वायाम् ॥

अनुसंस्था । स्त्री । अनुमरणे ॥

अनुसञ्चरन् । त्रि । गमनागमने कुर्वति ॥

अनुसन्ततम् । त्रि । अनुस्यूते । अनुगते ॥

अनुसन्धानम् । न । अन्वेषणे । अनुसन्धीयते । डुधाञ्० । ल्युट् ॥

अनुसमुद्रम् । । समुद्रस्यसमीपे । समुद्रसमया । अनुर्यत्समयेत्यव्ययीभावः ॥

अनुसरणम् । न । अनुवृत्तौ । अनुपूर्वात् सर्त्तेर्ल्युट् ॥

अनुसर्गः । पुं । प्रतिसर्गे । ब्रह्मादीनाम् मन्वन्तरोत्पत्तिक्रमे ॥

अनुसवम् । न । त्रिकाले ॥

अनुसवनम् । । सर्वदार्थे ॥

अनुसारः । पुं । पूर्वानुक्रमे । अनुसरणे । अनुक्रमे । अनुसर्त्ते घञ् ।

अनुसारी । त्रि । अनुसृत्यवर्त्तमाने ।

अनुसृतः । त्रि । उपासिते ।

अनुस्मृतिः । स्त्री । ध्याने । अनुस्मरणम् । स्मृ० । क्तिन् ।

अनुस्यूतम् । त्रि । अनुसन्तते । अनुसीव्यतेस्म । षिवु० । क्त । च्छ्वोरित्यूठ् ॥

अनुस्वारः । पुं । अं इति अचः परेविन्दौ । स्वरति । स्वृशब्दोपतापयोः ।



अच् । ततः प्रथायणं । स्वरणेम भावे घञ्वा ॥ अनुगतः स्वारः । स्वरमनुभवति वा ॥

अनुहारः । पुं । अनुकारे । सदृशकरणे । सदृशरूपवेशभाषाद्याविष्करणे ॥

अनुहरणम् । हृञ् हरणे । घञ् । उपमायाम् ॥

अनूकः । पुं । गतजन्मनि ॥ न । कुले शीले ॥ अनूच्यति । उचसमवाये इगुपधेतिकः । न्यंक्वादिः । पितुर्वा पौर्वानूकमित्यनत्, कौनूपुरुषाननुकायति । कै शब्दे । आतश्चेतिकः । अन्येषामपीति दीर्घः ॥

अनूचानः । पुं । साङ्गवेदविचक्षणे । अनुवचनसमर्थे । यथा । अनूचानः पण्डितम्मन्यमानो यो विद्यया शक्तियशः परेषाम् । तस्यान्तवन्तस्तु भवन्ति लोकानचास्यतद्ब्रह्मफलं ददातीति महाभारतम् । त्रि । सविनये । विनीते ॥ अन्ववोचत् । वेदस्यानुवचनं कृतवान्वा । उपेयिवानितिसाधुः ।

अनूचानमानी । त्रि । अनूचानंमन्ये । अनूचानमात्मानं मन्यते इत्येवंशीलः । आत्ममाने खश्चेतिपक्षे णिनिः ॥

अनूनः । त्रि । वामने । नीचे ॥

अनूढः । त्रि । अविवाहिते । न ऊढः । नञ्समासः । नलोपोनञः । तास्मा

सुडचि ।

अनूद्यम् । त्रि । अवक्तव्ये गुर्वादिनामनि । यथा । आत्मनाम गुरोर्नाम नामा तिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोरिति ॥ वदः सुपि क्यप् चेति वदेर्भावे क्यप् ।

अनूनः । त्रि । पूर्णे । नञ्जनः । अनिश्चितः । नास्ति नूनं यस्य ॥

अनूनकः । त्रि । पूर्णे । ऊनयति । ऊन परिहाणे । अच् । स्वार्थे कन् । नञ् नकः ।

अनूपः । पुं । सैरिभे । महिषे । त्रि । जलप्राये । अम्बुप्राये देशे ॥ अस्य लक्षणं यथा । वृक्षसुषंहुषृत्तस्य वातश्लेष्मामयान्वितः । देशोऽनूप इतिख्यातः शास्त्रेषु कर्मनीषिभिरिति ॥ अपि च । नदीमल्लसमीलाम्बुफुल्लोत्पलकुलैर्युतः । हंससारसकारण्डचक्रवाकादिसेवितः । सरोवराश्मकिपकच रोहितकुलाकुलः । प्रभूतद्रुमसुख्याश्च नानाशस्यफलान्वितः । अनेकशालिकेदारकदलीक्षुविभूषितः ॥ अनूपदेशो ज्ञातव्यो वातश्लेष्ममयार्त्तिमानिति भावप्रकाशः ॥ अनुगता आपोऽत्र । मादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपश्चेतिबहुव्रीहिः । ऋक्पूरित्यः । ऊदनोर्देशे ।

अनूपजम् । नपुं । आर्द्रके ॥ इतिराजनिघण्टुः । त्रि । अनूपोत्पन्नमात्रे ॥

अनूबन्ध्या । पुं । अनुबन्धे । अनुबध्यते । बन्ध बन्धने । घञ् । उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः ॥

अनूरुः । पुं । अरुणे । सूर्यसारथौ । अविद्यमानौ ऊरू यस्य ॥

अनूरुसारथिः । पुं । सूर्ये । अनूरुः सारथिर्यस्य ॥

अनूचानः । पुं । माणवके । अविद्यमाना ऋचोऽस्य । ऋक्पूरित्यप्रत्ययः ।

अनृजुः । त्रि । शठे । वक्राशये । नञ् ऋजुः ॥

अनृणी । त्रि । ऋणमुक्ते ॥ यथा । एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा सोऽनृणी भवेदिति तिथ्यादितत्त्वम् ॥

अनृतम् । न । कृषौ । असत्ये । अयथार्थकथने । अयथार्थभाषणे ॥ तत्कथने दोषः । समूलो वा एष परिशुष्यति योऽनृतमभिवदतीति श्रुतेः । अवध्यहिंसानुबन्धियथार्थभाषणे न नृतम् । अनृतम् । विवाहादिषु केष्वनृतभाषणे पापाभावो यथा । विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्यार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानी-

तिकर्णपर्वणि जिष्णुंप्रति श्रीकृष्णो क्तिः ॥

अनेकः । त्रि । एकभिन्ने । बहुषु ॥ नं ॥ व्यक्तो । प्रतिपुरुषं वुध्यादीनां भेदा-त् ॥ पृथिव्यादिकमपि शरीरघटादि भेदेनाऽनेकमेव । नएकः ॥

अनेकजः । पुं । पक्षिषु ॥ विष्णौ ॥ ध-र्मगुप्तयेऽसकृज्जायमानत्वात् । त्रि । बहुजाते ॥

अनेकता । स्त्री । परस्परभिन्नतायाम् । नएकता ॥

अनेकधा । अ । अनेकप्रकारे ॥

अनेकपः । पुं । स्त्री । हस्तिनि ॥ अने-केन करेण मुखेनच पिबति । पोपाने सुपीतिकः ॥

अनेकरूपम् । त्रि । विचित्रे । अनेकानि रूपाणियस्मिन् ॥

अनेकसंयुक्तम् । न । लिङ्गशरीरे । अने कैर्देवमनुष्यादिनानास्थूलशरीरैः सं युक्तम् । अनेकाभिः श्रोत्रादिषु ध्यन्त-संसदशकेलाभिः संयुक्तंवा ॥ त्रि । ब हुभिः सम्बद्धे ॥

अनेकान्तः । त्रि । अनियते । अनतिश ये ॥

अनेकान्तवादी । त्रि । आर्हते । सप्तप-दार्थवादिनि नास्तिकभेदे । यथा । हेससप्तपदार्थाः स्युर्जीवाजीवास्रवा स्त्रवः । संवरो निर्ज्जरश्चैव बन्धमोक्षा वुभावपि । स्याद्वादलाञ्छिताश्चैतेस-र्व्वैनैकान्तिकत्वत इति ॥

अनेकाश्रितगुणः । पुं । बहुनिष्ठगुणे ॥ सयथा । संयोगः विभागः द्विपृथक्-त्वादिः एकत्वान्यसङ्ख्येतिसिद्धान्तमु क्तावली ॥

अनेजत् । त्रि । चलनरहिते । सदैक रूपे । एजतीत्येजत् । एजृकम्पने । चलनं स्थिरत्वप्रच्युतिः । नञ्समा सः ॥

अनेडमूकः । त्रि । शठे । मूकबधिरे । वाक्श्रुतिवर्ज्जिते ॥ नास्त्येडमूको ऽस्मात् । एडमूकसदृशोऽनेडमूकइ-तिवा । सादृश्यस्यनञर्थत्वात् । अन्धे ।

अनेनाः । त्रि । निर्दोषे ॥

अनेहा । पुं । काले । समये । नहन्यते । नञि हनएहचेत्यसिरेहादेशश्च । कृदुशनसित्यनङ् ॥

अनैकान्तिकः । पुं । हेत्वाभावविशेषेस व्यभिचारे । साधारणा साधारणानुप संहारिभेदादनैकान्तिकस्त्रिविधः । ऐ कान्तिकोऽव्यभिचारी । नऐकान्ति कः । त्रि । ऐकान्तिकादितरस्मिन् ॥

अनैक्यम् । त्रि । एकताशून्ये । अनेकता याम् । एकस्यभावऐक्यम् । नऐक्य म् ॥

अनैपुण्यम् । न । अनिपुणतायाम् ।
अनैश्वर्यम् । न । अनीश्वरतायाम् ।
असामर्थ्ये ॥
अनोकहः । पुं । कुठे । वृक्षे । अनसःश कटस्याकंगतिहन्ति । अन्येष्वपीतिड लोर्डः ।
अनौचिती । स्त्री । लोकमर्यादातिक्रमे ॥ न औचिती ॥
अनौपम्यम् । त्रि । आत्मरूपे । यदित त्सदृशो द्वितीयः पदार्थो जगत्यांस्यात् तदा तदुपमानेन स आत्मोपमेयः स्यात् न तु तदस्ति तस्मादनौपम्यमात्मरूपम् ।
अन्तम् । न । स्वरूपे ॥ यथा । वनान्तभूः । पुं । नाशे । पुं । न । अवसाने । चरमे । त्रि । अन्तिके । प्रदेशे । यथा । रम्यंहर्म्यतलं न किवसतये श्राव्यं नगीतादिकं किंवाप्राणसमासमागमसुखं नैवाधिकप्रीतये । किन्तु भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलमाकलय्य सकलं सन्तोवनान्तंगता इति । परिग्रहापेचयाश्रमासौ ॥ अतिमनोहरे । रुचिरे । अवयवे ॥ निर्णये । इयत्तायाम् । सीमायाम् ॥ यथा । लवणजलान्तोनद्यः स्त्रीभेदान्तञ्च मैथुनम् । पैशुन्यंजनवार्त्तान्तं वित्तंदुःखत्रयान्तकम् । राज्यश्रीर्ब्राह्मणान्ताइत्यन्तं ब्रह्मवर्चसम् । आचारोधोपवासान्तः कुलध्वान्तंस्त्रियः स्मृताः ॥ सर्वेचयान्तानिचयाः पतनान्ताःसमुच्छ्रयाः । संयोगाविप्रयोगान्तामरणान्तञ्च जीवितमिति गारुडे । ११५ अध्यायः । अमति । अमगत्यादौ । हसिमृग्रिणीति तन् । अन्तमिया अतिबन्धने । पचाद्यच् । अन्तनम् । घञ्वा ।
अन्तःकरणम् । न । मनोबुद्ध्यहङ्कारचित्तम् । यथा । मनोबुद्धिरहङ्कारश्चित्तंकरणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया अमी इति । अस्योत्पत्तिर्यथा । मिलितैस्तुतैः अन्तःकरणमेकंस्यादिति । तैः पञ्चभूतस्वसत्वांशैर्मिलितैरन्तःकरणं भवतीत्यर्थः । आभ्यन्तरवृत्तित्वादन्तःकरणम् । अन्तःअभ्यन्तरे करणम् ।
अन्तःकरणदेवता । स्त्री । चन्द्राच्युतचतुर्मुखशङ्करेषु । यथासंख्यंचतुर्षु च तुर्षु ।
अन्तःकरणविषयः । पुं । सङ्कल्पविकल्पनिश्चयाहङ्कार्य्यचैत्त्याख्येषु । यथासंख्यंचतुर्णां चत्वारो विषयाज्ञेयाः । अन्तःकरणवृत्तिस्वेनाप्येषां व्यवहारः ॥
अन्तःकरणवृत्तिः । स्त्री । मनोवृत्तौ । साचत्रिविधा । यथाहुः । शान्ताघोरा

अन्तःप्र

रास्तथामूढामनसोवृत्तयस्त्रिधा । वैराग्यचान्तिरौदार्यमित्याद्याः शान्तवृत्तयः ॥ तृष्णास्नेहोरागलोभामित्याद्याघोरवृत्तयः । सम्मोहोभयमित्याद्याःकथितामूढवृत्तयइति ॥ वृत्तिभेदादन्तःकरणं चतुर्विधंभवति ॥ वृत्तिभेदोयथा । यदातुसङ्कल्पविकल्पकृत्यंतदाभवेत्तन्मनइत्यभिख्यम् । स्याद्बुद्धिसंज्ञंचयदाप्रवेत्तिसुनिश्चितंसंशयहीनरूपम् ॥ अनुसन्धानरूपंतच्चित्तञ्च परिकीर्त्तितम् । अहङ्कृत्यात्मवृत्त्यातुतदहङ्कारतांगतमिति ॥ सङ्कल्पविकल्पकृत्यंयदान्तःकरणंकरोतितदातदन्तःकरणंमनःसंज्ञंभवति । एवमग्रेप्यूह्यम् ॥

अन्तःकुटिलः । पुं । शङ्खे । त्रि । वक्रान्तःकरणे ॥

अन्तःपदवी । स्त्री । सुषुम्णायाम् ॥

अन्तःपुरम् । न । भूभुजांस्त्र्यगारे । शुद्धान्ते ॥ अन्तरभ्यन्तरेपुरंगृहम् । तात्स्थ्याद्राजदारेषु ॥

अन्तःपुराध्यक्षः । पुं । शुद्धान्ताधिकारी ॥ तल्लक्षणमाहयुक्तिकल्पतरुः । यथा । वृद्धः कुलोद्गतः शक्तः पितृपैतामहः शुचिः । राज्ञामन्तःपुराध्यक्षोविनीतश्चेष्यत इति ॥

अन्तःप्रज्ञः । पुं । तैजसे । इन्द्रियापेक्ष

अन्तग

यामनसोन्तः स्वखात् तद्वासनारूपप्रज्ञायस्यसः ॥

अन्तःसत्त्वा । स्त्री । गर्भिण्याम् ॥ अन्तः अभ्यन्तरे सत्त्वंयस्याःसा ॥ भल्लातक्याम् ॥

अन्तःसुखः । त्रि । वाह्यविषयजनितसुखशून्ये । स्वरूपसुखे ॥ अन्तः अभ्यन्तरे सुखंयस्यसः ॥

अन्तःस्वेदः । पुं । स्त्री । गजे ॥ अन्तः अभ्यन्तरे स्वेदोयस्य सः ॥

अन्तकः । पुं । नाशकारिणि । यमे ॥ अन्तंकरोति अन्तयति । तत्करोतीतिण्यन्तात् ण्वुल् ॥ मरणम् ॥

अन्तकरः । त्रि । नाशकरे ॥ अन्तंकरोति । दिवाविभेतिटः ॥

अन्तकर्म । न । नाशने । राघवस्य शरैर्घोरैर्घोररावणमाहवे । अनराघवेतिसम्बुद्धाकम् ॥ स्वेतिपोऽन्तकर्मणीत्यस्यलोपाधर्मैकवचनम् ॥

अन्तकालः । पुं । मरणसमये । समस्तकारणग्रामवैयर्थ्यवति । अन्तश्चासौकालश्च ॥

अन्तगः । त्रि । अन्तगामिनि । पारगे ॥ अन्तंगच्छतीतिविग्रहे अन्तात्यन्तेत्यादिनागमे ड प्रत्ययः ॥

अन्तगतः । त्रि । अवसानंप्राप्ते ॥ अन्तेगतः ॥

अन्ततः । अ । सम्भावनायाम् । अवयवे । पञ्चम्यर्थे । शासने । इतिहेमचन्द्रः । अन्त इत्यर्थे । आद्यादित्वात्तसिः ।

अन्तपालः । पुं । बाह्यरक्षके ।

अन्तः । अ । मध्ये । प्रान्ते । अभ्युपगमे । चित्ते । अमति । अमगत्यादिषु । अमेस्तुट्चेत्यरन् । तस्यतुडागमः । रेफादकारउच्चारणार्थः ।

अन्तरम् । न । अवकाशे । यथा अन्तरंदेहि । अवधौ । यथा मासान्तरेदेयम् । परिधानांशुके । यथा अन्तरे शाटकाःपरिधानीया इत्यर्थः । अन्तर्द्धौ । यथा पर्वतान्तरंगताः स्त्रियः । भेदे । परस्परवैलक्षण्ये । विशेषे । यथा । अन्तरज्ञो भव सदा धनस्य च जनस्य च । विशेषज्ञ इत्यर्थः । तादर्थ्ये । ओदनान्तरस्तण्डुलः । ओदनार्थ इत्यर्थः । छिद्रे । यथा । अन्तरं लब्ध्वाअरेःप्रहरेत् । आत्मीये । अथसोभ्यन्तरोमम । विनार्थे । यथा । अन्तरेण पुरुषकारंनकिञ्चित्सिध्यति । बहिरर्थे । यथा । अन्तरे चाण्डालगृहः । वाह्य इत्यर्थः । अवसरे । यथा । अन्तरज्ञोपि सेवकः । मध्ये । यथा । आवयोरन्तरेजाताःपर्वताःसरितोद्रुमाः । आत्मनि । यथा । प्रशान्तरंवेद । अन्तरात्मानं जानातीत्यर्थः । सदृशे । यथा । इकारयवकारोन्तरतमः । अन्तराति । राद्दाने । आतोनुपेतिकः ।

अन्तरङ्गः । त्रि । आत्मीये । अन्तःअङ्गानियस्य ।

अन्तरङ्गः । त्रि । नीचानीचादिविशेषाभिज्ञे ।

अन्तरप्रभवः । त्रि । सङ्कीर्णजातौ । अनुलोम-प्रतिलोमजाते ।

अन्तरा । अ । निकटार्थे । मध्यार्थे । विनार्थे । अन्तरेति । इणगतौ । डाप्रत्ययः ।

अन्तरात्मा । पुं । अन्तःकरणे । अन्तःअभ्यन्तरे-आत्मा । सर्वान्तरे परमात्मनि ब्रह्मलोकशब्दवाच्ये । यथा । न कर्मणाकनीयस्ता वृद्धिर्वानान्तरात्मनः । इतिवाह्वृमिवोहृत्य वेदान्तैर्घोषणाकृतेति ।

अन्तरापत्या । स्त्री । गर्भिण्याम् । अन्तरे अपत्यंयस्याः ।

अन्तरायः । पुं । विघ्ने । अन्तरायश्चदर्शितोयोगसूत्रेणयोगे । व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वाऽनवस्थितत्वानीति- । चित्तविक्षेपे । अन्तर्मध्ये अन्तरस्य व्यवधानस्यवा अयनम् अयगतौ । इगतौवा । घञ्ऽच्वा । यागे ।

अन्तरारामः । त्रि । त्यक्तसर्वपरिग्रहत्वे

नवाद्यसुखसाधनशून्ये । अन्तःआरामोऽयस्य ॥

अन्तरालम् । न । मध्ये । अभ्यन्तरे । अन्तरं खाति । आतोऽनुपेतिकः । अन्येषामपीतिदीर्घः । आङ्मर्यादायां वा । मूलविभुजादित्वात्कः ॥

अन्तरालकम् । न । अभ्यन्तरे ॥

अन्तरिक्षम् । न । अम्बरे । पतत्त्रिमेघसंचारप्रदेशे । भूलोकसूर्य्यमध्यवर्त्तिनि । द्यावापृथिव्योरन्तरीक्षते । ईषद्दर्शने । कर्मणिघञ् । वेदे छान्दसं ह्रस्वत्वम् । अन्तर्ऋक्षाणि चास्य वा पृषोदरादित्वादित्वं वा ॥

अन्तरिक्षचित् । पुं । वायौ । अन्तरिक्षेचयति वसति । चि० । क्विप् । तुक् ॥

अन्तरितम् । त्रि । तिरस्कृते । व्यवहिते । व्यपकल्पिताङ्के । यस्य वा कोऽइति भाषा ॥

अन्तरिन्द्रियम् । न । अन्तःकरणे ॥ अन्तः अभ्यन्तरे इन्द्रियम् ॥

अन्तरीक्षम् । न । नभसि । पतत्त्रिमेघसंचारप्रदेशे । द्यावापृथिव्योरन्तरीक्ष्यते । ईषद्दर्शनाङ्कनयोः । कर्मणिघञ् । अन्तरीक्षते जगदस्मिन्निति अधिकरणव्युत्पत्तिस्तु नेचिता । ल्युटा घञोबाधप्रसङ्गात् । अभ्रकथासौ ॥

अन्तरीक्षजलम् । न । आकाशजले । दिव्योदके ।

अन्तरीपः । पुं । न । द्वीपे ॥ अन्तर्गता आपोऽत्र । ऋक्पूरित्यः समासान्तः । द्यन्तरुपसर्गेभ्य इत्यपईदादेशः ॥

अन्तरीयम् । न । अधोंशुके । परिधानवस्त्रे ॥ अन्तरेभवम् । गहादित्वाच्छः । नाभौधृतस्यवस्त्रस्याच्छादयतिजानुनी । अन्तरीयंप्रशस्तंतदच्छिन्नमुभयोस्तयोः ॥

अन्तरे । । मध्ये ॥ अन्तरेति । इणागतौ । विच् ॥

अन्तरेण । । विनार्थे । मध्यार्थे । अन्तरेति । इणोणः ॥

अन्तर्गडुः । त्रि । निरर्थके । रसौली इति भाषायाम् ॥

अन्तर्गतम् । त्रि । मध्यप्राप्ते । विस्मृते । अन्तर्गम्यतेस्य अन्तर्गच्छतिस्मवा । गमलृगतौक्तः ॥

अन्तर्गेहम् । न । गृहमध्ये ॥

अन्तर्घनः । पुं । वाहीकग्रामविशेषे । घन० । अन्तर्घनोदेशइतिहन्तेर्घनादेशोऽप् प्रत्ययश्चनिपातनात ॥

अन्तर्जठरम् । न । कोष्ठे । कुक्षिमध्ये ॥

अन्तर्जलम् । न । अन्तर्जलसाध्येऽघमर्षणपादौ ॥

अन्तर्ज्योतिः । न । अन्तरात्मनि ।

अन्तर्दधनम् । न । मद्यबीजे । किण्वे । इतिशब्दचन्द्रिका ॥

अन्तर्दाहः । पुं । कोष्ठसन्तापे । शरीरा-न्तरन्त्वाशायाम् ।

अन्तर्द्धा । स्त्री । अन्तर्द्धाने । व्यवधायाम् । अन्तर्द्धानम् । डुधाञ् । अन्तःशब्द स्याङ्किविधिणत्वेषूपसर्गत्वादात-श्चोपसर्गइत्यङ् ।

अन्तर्द्धानम् । न । अन्तर्द्धौ । तिरोधाने । शरीरत्यागे ।

अन्तर्द्धिः । पुं । पिधाने । व्यवधाने । अन्तर्द्धानम् । अन्तःशब्दस्याङ्किवि धिणत्वेषूपसर्गत्वादुपसर्गेघोः किरि तिकिप्रत्ययः ।

अन्तर्द्वारम् । न । गृहाभ्यन्तर्गूढद्वारे । प्रच्छन्ने । अन्तःस्थितंद्वारम् । शाकपार्थिवादिः । खिड़कीतिख्याते । यथा । प्रच्छन्नमन्तर्द्वारञ्चपक्षद्वारंतदुच्यत इतिशब्दरत्नावली ।

अन्तर्भूतः । त्रि । मध्यस्थिते । अन्तर्गते ।

अन्तर्मनाः । त्रि । व्याकुलचेतसि । दुःखितमनसि । दुर्मनसि । विमनसि । अन्तर्मनोऽस्य ।

अन्तर्यामी । पुं । वायौ । यथा । अन्तःप्रविश्यभूतानियोबिभर्त्यात्मकेतुभिः । अन्तर्यामीश्वरः साक्षात्पातुनोयद्वशेस्फुटमिति । केतुभिः प्राणादिवृत्तिभिः । ईश्वरे । मत्स्यकसे । अन्तरनुप्रविश्यसर्वेषांभूतानांनियन्तरि । सूत्रादय्यान्तरंतत्त्वमन्तर्यामीत्युच्यते । त्रि । अन्तर्ज्ञे । मनोगतज्ञे ।

अन्तर्वंशिकः । पुं । अन्तःपुराधिकृते । कुब्जवामनादिजने । अन्तरभ्यन्तरे वंशोगृहम् । अन्तर्वंशेनियुक्तः । तत्र नियुक्तइतिठक् । संज्ञापूर्वकत्वान्नवृद्धिः । यद्वा अन्तर्वंशोऽस्यास्ति अतइनिठनाविति ठन् ।

अन्तर्वत्नी । स्त्री । गर्भिण्याम् । अन्तरस्याःगर्भइतिविग्रहे अन्तःशब्दस्याधिकरणप्रधानत्वेन प्रथमासमर्थत्वाभावादस्तिनासामानाधिकरण्याऽसम्भवादमाप्तोमतुप् अन्तर्वत्पतिवतोर्नुगित्यनेननिपात्यते नुगागमश्चविधीयते ततश्चनन्नेभ्य इतिङीप् ।

अन्तर्वमिः । पुं । अजीर्णे । अपाके । इतिविकाण्डशेषः ।

अन्तर्वाणिः । त्रि । शास्त्रज्ञे । अन्तर्वाणस्य । समासान्तविधेरनित्यत्वान्नच्यूतश्चेतिनकप् । गोस्त्रियोरितिह्रस्वः । यद्वा । अन्तर्वाणयति । प्रणशब्दे । स्याद्यणिजन्तादिचइः ।

अन्तर्विगाहः । पुं । प्रवेशे ।

अन्तर्विगाहनम् । न । प्रवेशने ।

अन्तर्वेदी । स्त्री । नीवृदन्तरे । गङ्गायमुनयोर्मध्यदेशे । हरिद्वारादारभ्य प्रयागपर्य-

...न्तेदेशे। इति त्रिकाण्डशेषः ॥

अन्तर्हासः। पुं। उदर्द्धने। गूढहास्ये ॥ ...न्तः। हसति ...

अन्तर्हितम्। त्रि। संवीते। तिरोभूते ॥ अन्तर्धीयते स्म। डुधाञ्०। क्तः। ...दधातेर्हिः ...

अन्तवत्। त्रि। विनाशिनि। अन्तोऽस्त्यस्य। मतुप् ...

अन्ताग्निः। पुं। कालानले ...

अन्तावासी। पुं। शिष्ये। अन्ते समीपे वस्तुं शीलमस्य। सुपीति णिनिः ॥

अन्तशय्या। स्त्री। मृतौ। भूमिशय्यायाम्। पितृकानने। अन्ते शय्या।

अन्तसद्। पुं। अन्तेवासिनि। अन्ते अन्तिके सीदति। षद्लृ०। सत्सूद्विषेति क्विप्।

अन्तःस्था। स्त्री। पुं। यरलवेषु। अन्तः स्पर्शोष्मणोर्मध्ये तिष्ठति। ष्ठा०। सुपिस्थ इति कः। टाप्। खर्परे शरि वेति विसर्गलोपः।

अन्तस्थीयः। त्रि। अन्तस्थेषु भवे। गहादित्वाच्छः।

अन्तावसायी। पुं। श्वपचे। मुनिभेदे। नापिते। निषादे। अन्तमवसातुं शीलमस्य। योऽन्तकर्मणि पैत्र्येवा। सुपीति णिनिः। आतोयुक्।

अन्ति। अ। समीपे। यथा। मुग्धमभीतवदुपेयतुरन्ति मात्रोरिति भागवतम् ॥

अन्तिः। स्त्री। नाट्योक्त्या ज्येष्ठभगिन्याम्। ...

अन्तिकम्। त्रि। निकटे। अन्तोऽस्यास्ति। अतइनिठनाविति ठन् ॥ अन्त्यतेऽत्र। अतिबन्धने। ण्वुल्। ...न। सामीप्ये इति धरणिः।

अन्तिकतमः। त्रि। अत्यासन्ने। नेदिष्ठे। अतिशयेनान्तिकम्। अतिशयेनेत... सं विप्रुना वितितमप् ॥

अन्तिका। स्त्री। आतलौषधौ। चुल्ल्याम्। नाट्योक्त्या ज्येष्ठभगिन्याम्। अन्तोऽस्या अस्ति। ठन्। अन्त्यतेऽत्र वा। अतिबन्धने। ण्वुल्। प्रत्ययस्थादिति इत्वम्। समीपवर्त्तिन्याम्।

अन्तिकाश्रयः। पुं। समीपस्थावलम्बने। उपघ्ने। अन्तिके आश्रीयते आश्रयणं वा। एरच्। ...

अन्तिमः। त्रि। चरमे। अन्तभवे। परस्मिन्। अन्तभवः। अन्ताच्चेति डिमच्।

अन्तेवासी। पुं। शिष्ये। अन्ते समीपे वस्तुं शीलमस्य। सुपीति णिनिः। शयवासेत्यलुक्। चण्डाले। ग्रामादेरन्ते वसति। प्रान्तगे।

अन्त्यः। पुं। चण्डाले। मुस्तायाम् ॥ त्रि। अधमे। अन्तभवे। चरमे।

न । रेवतीनक्षत्रे । मीनराशौ । द शजलधिसंख्यायाम् । सहस्रलक्षकोटौ १०००००००००००००० । अन्ते भवः । दिगादित्वाद्यत् । द्वादश लक्षेपि ।

अन्त्यजः । पुं । स्त्री । शूद्रे । नीचजातौ । यथा । रजकश्चर्मकारश्च नटो वरुड एवच । कैवर्त्तमेदभिल्लाश्च सप्तैते ऽन्त्यजाःस्मृता इतियमः ।

अन्त्यजन्मा । पुं । स्त्री । शूद्रे ।

अन्त्यजातिः । पुं । चण्डालादिसप्तसु । यथाऽऽपस्तम्बः । अन्त्यजातिरविज्ञातो निवसेद्यस्यवेश्मनि । सवैज्ञात्वा तुकालेनकुर्यात्तत्र विशोधनम् । चान्द्रायणंपराकोवा द्विजातीनांविशोधनम् । प्राजापत्यन्तुशूद्राणां तथासंसर्गदूषणे । यैस्तत्रभुक्तंपक्वान्नंकृच्छ्रं तेषांविनिर्दिशेत् । तेषामपिचयैर्भुक्तं तेषामर्द्धं विधीयते । तेषामपिचयैर्भुक्तंकृच्छ्रपादोविधीयत इतिप्रायश्चित्ततत्त्वम् ।

अन्त्यभम् । न । मीनराशौ । रेवतीनक्षत्रे ।

अन्त्यवर्णः । पुं । स्त्री । शूद्रे । अन्त्यश्चासौवर्णश्च । पुं । अन्तिमाक्षरे ।

अन्त्यावसायी । पुं । स्त्री । चण्डालेन निषाद्यांजनिते । यथा । निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम् । श्मशानगोचरंसूतेबाह्यानामपिगर्हितम् । इतिमनुः । चण्डालादि सप्तसजातिषु । यथा । चण्डालः श्वपचः क्षत्तासूतोवैदेहकस्तथा । मागधायोगवौचैवसप्तैतेऽन्त्यावसायिनः इत्यङ्गिराः ।

अन्त्येष्टिः । स्त्री । शवदाहादिक्रियारूपे चरमसंस्कारे । अन्त्या चासावि ष्टिश्च ।

अन्त्रम् । न । पुरीतति । अमति अनेनवा । अमगतौ । सर्वधातुभ्यः ष्ट्रन् । यद्वा । अमिचिमिदिशसिभ्यः क्तः । संज्ञापूर्वकत्वान्नदीर्घानुनासिकलोपौ । अन्ततिवा । अतिबन्धने । ष्ट्रन् । उक्ताः सार्द्धत्रियोव्यामाः पुंसामन्त्राणिसूरिभिः । अर्द्धव्यामेनहीनानि योषितोऽन्त्राणिनिर्दिशेदितिवैद्याः ।

अन्त्रवृद्धिः । स्त्री । पुं । रोगविशेषे ।

अन्त्रमांसम् । न । आन्त्रिके । यथा । आन्त्रिकंछिद्रमार्गेणधौतं निर्मलवारिणा । तस्यखण्डान् संविधायवेसवार युतान् पचेत् । निःसारंविरसोद्गारमान्त्रमांसमुदाहृतमिति ।

अन्दुकः । पुं । हस्तिनिगडे । पादकटके । अन्द्यतेऽनेन । अदिबन्धने । अन्दूदृन्भूजम्बितिकूः । स्वार्थेकः । स्वा

र्थिकाः प्रकृतितोलिङ्गवचनान्यति-वर्त्तन्तेपीति पुंस्त्वम् । यद्वाविनयादित्वाट्ठक् । इसुसुक्तान्तात्कः । केणेति ह्रस्वः । इकोह्रस्वोऽङ्योगालवस्येतिवा । यद्वा अन्दूशब्दात् संज्ञायांकन् । केणइतिह्रस्वः ॥

अन्दूः । स्त्री । निगडे । स्त्रीपादभूषणे । अन्द्यतेऽनेन । अदिबन्धने । अन्दूदृन्भिवितिकूः ॥

अन्धः । पुं । न । तिमिरे । अदर्शनात्मकाज्ञाने । त्रि । अदृशि । चक्षुर्हीने । पुं । भिन्नौ । यथा । तिष्ठतो व्रजतो वापियस्यचक्षुर्नदूरगम् । चतुष्पांसुर्वसुधापरिव्राट्सोऽन्धउच्यतेइति ॥ राशिविशेषे । यथा । मेषोवृषोमृगे न्द्रश्चदिवान्धाः परिकीर्त्तिताः । द्वयु ककर्कटकन्याश्चरात्रावन्धाः प्रकीर्त्तिताः इति । अन्धयति । अन्धदृष्ट्युपघाते । पचाद्यच ॥

अन्धकः । पुं । दैत्यविशेषे । देशभेदे । यत्वपार्त्तरे । मुनिविशेषे । यादवभेदेषु । हिरण्याक्षसुते ।

अन्धकरिपुः । पुं । शिवे ॥ अन्धकस्य दैत्यस्यरिपुः ॥ अंधकाख्याद्वाअन्धकारनाशकत्वात् सूर्ये । चन्द्रमसि । अग्नौच ॥

अन्धकवर्त्तः । पुं । पर्वतान्तरे ॥



अन्धकान्तकः । पुं । शिवे ॥ अन्धकस्यान्तकः ॥

अन्धकारः । पुं । न । तेजस्सामान्यभावे । ध्वान्ते । महाप्रभाणां वच्छिन्नाभावो ऽन्धकारइतिसामान्यलक्षणंयोजगदीशः । भयदृष्टितेजोवरोधकारित्वं तिकत्वं सर्वथाधिकरत्वश्चेत्यस्यगुणाइतिराजवल्लभः । मिथ्याप्रत्ययलक्षणेस्वविषयावरणे तदुपादानाज्ञाने । अन्धदृष्ट्युपघाते । चुरादिः । अन्धनम् । घञ् । अन्धंकरोतिकर्मण्यण् ॥

अन्धकारिः । पुं । हरे । शिवे । अन्धकस्यअरिः ॥

अन्धकासुहृत् । पुं । ईश्वरे । शिवे । अन्धकासून् हरति । क्विप् ॥

अन्धकूपः । पुं । कर्करान्धुके । सांधकारकूपे । मोहे । नरकविशेषे । अंधश्चासौ कूपश्च ॥

अन्धतमसम् । न । गाढान्धकारे । अन्धयति । अन्धदृष्ट्युपघाते चुरादिः । अच् । अंधञ्चतत्तमश्च अवसमन्धेभ्यस्तमसइत्यच ॥

अन्धतामिस्रः । पुं । अभिनिवेशे । सचाष्टादशविधः । तथाहि । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्यदशशब्दादीन् भुञ्जानाः शब्दादयो

भोग्यास्तदुपायांश्चाणिमादयोऽस्मा कमसुरादिभिरुपघातिधतेतिविभ्यति तदिदंभयमभिनिवेशोऽन्धतामिस्रो- दृष्टादृष्टविषयत्वाददृष्टादृष्टधेतिसांख्याः ॥ न । निविडान्धकारमये नरकविशेषे ॥ पञ्चमकाराद्यालान्तर्गतास्थानविशेषे । सचविशेषोयथा । देहनाशे अहमेवमृतोऽस्मीतिवुद्धिः ॥

अन्धमूषिका । स्त्री । देवताडे ।

अन्धवर्त्मा । पुं । वायोःसप्तमेस्कन्धे । यथा । मरुद्भिःसरभसःसामचौमानुषीतिपाः । देवीविशोऽन्धवर्त्माचस्कन्धः सप्तमआभुवादिति ७ ।

अन्धः । न । चोदने । अद्यते । अदभक्षणे । अदेर्नुम् धौचेत्यसुन् । अन्धयतिवा अन्धदृष्ट्युपघाते । असुन ।

अन्धातमसम् । न । अन्धन्धे । महान्धकारे । अन्धञ्च तत्तमश्च । अवसमन्धे भ्यस्तमस इत्यच् । अन्येषामपीतिदीर्घः ।

अन्धाहिः । पुं । कुंचियाइतिगौडप्रसिद्धे मीनभेदे । इतित्रिकाण्डशेषः ।

अन्धिका । स्त्री । द्यूतभेदे । रजन्याम् । सर्षप्याम् । सिद्धाख्यौषधौ । स्त्रीविशेषे । चक्षुर्गोरोग विशेषे ।

अन्धुः । पुं । कूपे । अन्ध्यते । अन्धगत्यादौ । कर्निदृशिकाम्यमीति कुः । यद्वा । अन्धयति । अन्धदृष्ट्युपघाते । मृगय्वादित्वात्कुः ।

अन्धुलः । पुं । शिरीषवृक्षे ।

अन्ध्रः । पुं । वैदेहेन कारावरस्त्रियामुत्पादिते अन्त्यजविशेषे । देशविशेषे ॥ यथा । जगन्नाथादूर्द्ध्वभागमर्वाक्श्रीभ्रमरात्मिकात् । तावदन्ध्राभिधोदेशः प्रोक्तःश्रीशक्तिसङ्गमे ।

अन्नम् । न । भक्ते । ओदने । सिद्धतण्डुले । यथा । सस्यंक्षेत्रगतंप्राहुःसतुषंधान्यमुच्यते । आमंवितुषमित्युक्तंस्विन्नमन्नमुदाहृतमिति वसिष्ठः । व्रीह्यादौ ॥ भक्ष्यभोज्यलेह्यचोष्यभेदाच्चतुर्विधमन्नंभवति ॥ पृथिव्याम् । उपकरणे । औपचारिकमर्थंगृहीत्वा दृष्टस्योपकरणेऽन्नशब्दः । यथा स्त्रियोऽन्नम् पशवोऽन्नम् विशोऽन्नं राज्ञामित्यादौ । त्रि । भुक्ते । अनितिः । अन्यतेऽनेनवा । अनप्राणने । कृवृजृसिद्रुपन्यनिस्वपिभ्योनिदितिन् ॥ यद्वा । अद्यतेऽस्म । अदभक्षणे । क्तः । अन्नाण इतिनिपातनात्पक्षे न जग्धः । यद्वा । अत्ति । अत । धापृवस्यज्यतिभ्योनइतिनः ।

अन्नकोष्ठकः । पुं । तण्डुलादिरक्षणस्थाने । गोलाइतिकाख्यांगृहविशेषे

द्विः । इतिहेमचन्द्रः ।

अन्नगन्धिः । पुं । अतिसारे । उदरामयरोगे । इतित्रिकाण्डशेषः । अन्नस्येगन्ध इव गन्धोऽस्य । उपमानाच्चेतीत्त्वम् ।

अन्नदः । त्रि । अन्नदातरि ।

अन्नदा । स्त्री । अन्नपूर्णायांदेव्याम् ।

अन्नदाता । पुं । प्रभौ । अन्नस्यदातरि ।

अन्नपूर्णा । स्त्री । स्वनाम्नाऽतिप्रसिद्धायांदेव्याम् ।

अन्नपूर्णास्थानम् । न । काश्याम्प्रसिद्धेसिद्धिस्थाने ।

अन्नप्राशनम् । न । अन्नाशने । यथाविधिबालकस्य प्रथमान्नभोजने । षष्ठे अष्टमे वा मासि बालकस्य पञ्चमे सप्तमे वा मासि वा लिकायाः प्रथमान्नभक्षणरूपसंस्कारइतिस्मार्त्ताः । अन्नस्यप्राशनम् यस्मिन्तत् ।

अन्नमयः । पुं । स्थूलशरीरे । प्रथमकोशे । यथा । पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैववर्द्धते । देहःसोऽन्नमयोनात्मा प्राक्कोर्ध्वंतदभावतइति ॥ अन्नस्यविकारःमयट् । यद्वा । प्रकृतमन्नम् । अन्नंप्रकृतमुच्यतेऽस्मिन् वा । तत्प्रकृतवचनेमयट् । स्थूलसमष्ट्याम् । पञ्चीकृतपञ्चमहाभूततत्कार्यात्मके विराडमूर्त्तौ ।

अन्नविकारः । पुं । रेतसि । शुक्रे । इतिराजनिर्घण्टः ।

अन्नादः । त्रि । अन्नस्यभोक्तरि । अन्नमत्तीतिविग्रहेकर्मण्यण् । दीप्ताग्नौ । आमयाविव्यतिरिक्ते । पुं । विष्णौ ।

अन्नाशनम् । न । अन्नप्राशने ।

अन्यः । त्रि । असदृशे । इतरस्मिन् । भिन्ने । अत्यन्तविलक्षणे । सदृशे । अनिति । अनप्राणने । अघ्न्यादित्वाद्यः ।

अन्यत् । । अन्यार्थे ।

अन्यतमः । त्रि । भिन्नतमे । बहूनामध्येनिर्द्धारिते कस्मिन् । न्यायमते अनेकभेदावच्छिन्नप्रतियोगिताकभेदे । अव्युत्पन्नोयम् ।

अन्यतरः । त्रि । निर्द्धार्ये । द्वयोर्मध्ये निर्द्धारितैकस्मिन् । निर्धारणेइतरच ॥ न्यायमते द्वयाव[illegible]च्छिन्नप्रतियोगिताकभेदे । [illegible] अल्पाचतरादिष्व्युपपन्नार्थके ॥ अन्यएव । अन्यत्[illegible]तत्तमन्नतिवस्वार्थेतरप् । अ[illegible]सद्व्यच ॥ [illegible]मिश्राः अन्यतमशब्दावव्युत्पन्नौ स्वभावात्[illegible]द्विषयेनिर्द्धारणे वर्त्तेते इ[illegible] राभायादि[illegible] [illegible]टा । [illegible]

अन्यतरेद्युः । । अन्यतरदिवसे । अन्यतरस्मिन्नहनि । सद्यः परुदित्या

दिनान्यतरशब्दादेधुसुप्रत्ययो निपातितः ।

अन्यतः । I । अन्यत्रार्थे । अन्यस्मात् । तसिल् ॥

अन्यतस्त्यकायी । त्रि । सपत्नजयशीले ।

अन्यत्र । I । व्यतिरेके । अन्यस्मिन् । त्रल् । विनार्थे । यथा । अन्यत्रनिधनात्पत्यु: पत्नीकेशान्नवापयेत् इति । स्थानान्तरे ।

अन्यथा । I । वितथे ॥ अपरार्थे ॥ दुष्टे । अन्येनप्रकारेण । प्रकारवचनेथाल् ।

अन्यथासिद्धि: । स्त्री । कार्य्याव्यवहितपूर्ववर्त्तित्वेसतिकार्यानुत्पादकत्वे । सापञ्चविधा । यथा यत्कार्य्यम्प्रति कारणस्यपूर्ववर्त्तिता येनरूपेण गृह्यते तत्कार्यम्प्रति तद्रूप अन्यथासिद्धम् । यथा घटं प्रति दण्डत्वम् ॥ १ ॥ यस्यस्वातन्त्र्येण अन्वयव्यतिरेकौ नस्त: किंतु कारणमादायान्वयव्यतिरेकौ तदन्यथासिद्धम् । यथा घटं प्रतिदण्डरूपम् ॥ २ ॥ अन्यम्प्रतिपूर्ववर्त्तितां गृहीत्वैवयस्य यत्कार्य्यंप्रति पूर्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यंप्रति अन्यथासिद्धत्वम् । यथा-घटादिकं प्रतिआकाशस्य ॥ ३ ॥ यत् कार्य्यजनकं प्रति पूर्ववर्त्तित्वंगृहीत्वैव यस्य यत् कार्य्यं प्रति पूर्ववर्त्तित्वं



गृह्यते तस्य तत्कार्य्यंप्रति अन्यथासिद्धत्वम् । यथा कुलालपितु घटम्प्रति ॥ ४ ॥ अवश्यक्लृप्तनियत पूर्ववर्त्तिनएव कारणत्वसम्भवे तद्भिन्नमन्यथासिद्धम् । यथा घटम्प्रति रासभादिरितिसिद्धान्तमुक्तावली ॥ ५ ॥ यस्य कारणत्वकल्पनांविनाप्यन्यप्रकारेण-कार्यसिद्धिर्भवेत् सोऽन्यथा सिद्ध: तद्धर्मोन्यथासिद्धि: ।

अन्यदा । I । कालान्तरे । अन्यस्मिन्काले । सर्वैकान्यकिंयत्तद: कालेदा ।

अन्यपूर्वा । स्त्री । पौनर्भवायां कन्यायाम् । एकस्मैवागादिनादत्तायांपुनरन्येनविवाहितायां कुमार्याम् । सा-सप्तधा । यथा । सप्तपौनर्भवा:कन्यावर्ज्जनीया:कुलाधमा: । वाचादत्ता मनोदत्ता कृतकौतुकमङ्गला । उदकस्पर्शिता याच याचपाणिगृहीतिका । अग्निंपरिगतायाच पुनर्भूप्रसवाचया । इत्येता: कश्यपेनोक्ता दहन्तिकुलमग्निवत् । इत्युदाहृतत्त्वम् ॥

अन्यभृत् । पुं । काके । इति हेमचन्द्र: । त्रि । परेषांपोषके । अन्यंबिभर्त्ति । डुभृञ् । क्विप् ।

अन्यभृत: । पुं । कोकिले । अन्येनभृत: ॥ इतिहलायुध: ।

अन्यवर्द्धित: । त्रि । अन्येन प्रति पालिते ।

अन्याद्य | अन्याय

। अन्यपुष्टे । पुं । कोकिले । अन्येन अर्द्दितः ।

अन्यवादी ।। त्रि । अन्यथावादिनि । अस्थिरवादिनि । व्यवहारेपञ्चविधहीनजनान्तर्गतहीनविशेषोयम् । यथा । अन्यवादीक्रियाद्वेषीनोपस्थायीनिरुत्तरः । आहूतप्रपलायीचहीनः पञ्चविधः स्मृतइतिनारदः ।

अन्यशाखकः । पुं । शाखारण्डे । स्वशाखामुत्सृज्यान्यशाखोक्तकर्मकारिणि । अन्याशाखा यस्यसः । कप् ।

अन्यादृक् । त्रि । अन्योपमे । अन्यप्रकारे । अन्यइवदृश्यते । दृशिर्प्रेक्षणे । त्यदादिषु दृशइतिक्विन् । आसर्वनाम्नः ।

अन्यादृशः । त्रि । अन्योपमे । अन्यप्रकारे । अन्यइवपश्यति दृश्यतेवा । दृशिर् । त्यदादिष्विति कञ् । आसर्वनाम्न ।

अन्यायः । पुं । अविचारे । परस्वहरणादौ । न्यायभिन्ने । अनौचित्ये । यथा । अन्यायेनापियद्भुक्तं पित्रापूर्वतरैस्त्रिभिः । नतच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतमितिनारदः । नन्यायः ।

अन्याय्यम् । त्रि । अयोग्ये । यथा । दृष्टार्थसत्त्वेअदृष्टकल्पनायाअन्याय्यत्वमिति । नन्याय्यम् ।

अन्येद्युः । ।। दिवसान्तरे । अन्यस्मिन्नहनि । सद्यःपरुदित्यन्यशब्दाद्युस्प्रत्ययेनिपातितः ।

अन्येद्युष्कः । पुं । विषमज्वरविशेषे । यथा । अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्ततइति । एककालंदोषामेयथा एककालमपि द्वितीयं प्रथमकालेचवदोषस्थितेः ।

अन्योदर्य्यः । पुं । स्त्री । वैमात्रेये ।

अन्योन्यम् । त्रि । परस्परार्थे । अर्थालङ्कारविशेषे । यथा । क्रिययातुपरस्परं वस्तुनोर्जनने ऽन्योन्यम् । अर्थयोरेकक्रियामुखेनपरस्परं कारणत्वेसत्यन्योन्यं नामालङ्कारः । उदाहरणम् । हंसाणं सरेहिं सिरीसारिज्जइअहसराणं हंसेहिम् । अण्णोण्णं विअ एए अप्पाणं णवरगरुअन्ति । अस्य संस्कृतंयथा । हंसानांसरोभिःश्रीःसारीक्रियते अथसरसांहंसैः । अन्योन्यमेवएतेआत्मानंकेवलंगुरूकुर्वन्तीति । श्रीः शोभा सारीकर्तं श्रेष्ठता सम्पादनम् । अत्रसरोहंसयोः परस्परंशोभयोःहीकरणरूपोपकारजनकतिक्रियद्वारान्योन्यनामालङ्कारः । अत्रोभयेषामपि परस्परजनकता मिथः श्रीसारतासम्पादनद्वारेण । कर्मव्यतिहारे सर्वनाम्नोद्वेभवतइतिद्वित्वम् ।

असमासवद्भावेपूर्वपदस्थस्य सुपःसुवे- त्वम्।

अन्योन्यद्वन्द्वः। त्रि। इतरेतरग्राह्ये।

अन्योन्याध्यासः। पुं। अन्योन्यस्मिन्नन्यो न्यात्मकतामन्योन्यधर्मांश्चे यथार्थ निरूपितेतादात्म्याध्यासे। यथा। जलधौ यथा घटाकाशो यथा सर्वस्मिन्नेहितः। तथाजीवेन कूटस्थः सोऽन्योन्या ध्यासउच्यत इति।

अन्योन्याभावः। पुं। तादात्म्यावच्छिन्न प्रतियोगिताके। यथाघटःपटोन भवतीति।

अन्योन्याश्रयः। त्रि। अन्योन्यापेक्षे। स्व ग्रहसापेक्षग्रहसापेक्षग्राहके इतिता र्किकाः। तर्कविशेषे। सचात्माश्र यवत्त्रेधा। तत्स्वलक्षणम्। स्वापेक्षापे क्षित्वनिबन्धनोऽनिष्टप्रसंगोन्योन्या श्रयः। अपेक्षाच त्रयी उत्पत्तौ स्थि तौ चज्ञप्तौ। तत्राद्या यथा। घटोयं यद्येतद्घटज्ञानजन्यज्ञानविषयःस्या त् तदैतद्घटभिन्नः स्यात्। द्वितीया यथा। घटोयं यद्येतद् घटजन्यजन्यः स्यात् तदैतद् घटजन्यभिन्नःस्यात्। तृतीया यथा। घटोयं यद्येतद्घट वृत्तिवृत्तिःस्यात् तथात्वेनोपलभ्येत इतिजगदीशः। परस्परज्ञानसापेक्ष ज्ञानाश्रयोऽन्योन्याश्रयइतिमाध्वाः।

अन्योन्यस्याश्रयः।

अन्वक्षम्। त्रि। अनुगामिनि। अनु पदे। अनुगतमक्षमिन्द्रियम्। पश्चा र्थे।

अन्वक्षम्। अ। अक्ष्णोः समीपे। अनु यत्समयेत्यव्ययीभावः। प्रतिपरसम नुभ्योऽक्ष्णइति समासान्तिष्टच्।

अन्वक्। त्रि। अनुगे। अन्वञ्चो। अन्व ञ्चति। अनुगतौ। क्विन्।

अन्वयः। पुं। सन्ततौ। कुले। पदा नामरस्परेण सम्बन्धे। यथा। विशे षणंपुरस्कृत्य विशेष्यं तदनन्तरम्। कर्तृकर्मक्रियायुक्तमेतदन्वयलक्षण मिति। अनुगमे। अनुवृत्तौ। का र्यकारणानुवृत्तौ। तत्सत्तानियत सत्ताके। द्रव्यस्वामिना सम्बन्धे। अन्वियते। इण्गतौ। दृण्गतौ। एरच्।

अन्वयव्यतिरेकि। त्रि। अन्वयेन व्यति रेकेणचव्याप्तिमतिहेतौ। यथा व वह्नौ साध्ये धूमवत्त्वम्। यत्रधूमस्तत्रा ग्निरित्यन्वयव्याप्तिः। यत्राग्निर्ना स्ति तत्रधूमोनास्तीतिव्यतिरेकव्या प्तिः। यथा महानसहृदादौ। अ न्वयव्यतिरेकोऽस्त्यस्मिन्। इनिः।

अन्वयव्याप्तिः। स्त्री। यत्रधूमस्तत्राग्नि रित्येवंरूपायांव्याप्तौ। यथा महान

से । अन्वयेनव्याप्तिः ॥

अन्ववसर्गः । पुं । कामचारानुज्ञायाम् ।

अन्ववसर्जनम् । सृजेर्घञ् ।

अन्ववायः । पुं । वंशे ॥ कुले । अन्ववाय्य-

ते । वंयगतौ । घञ् ॥

अन्वष्टका । स्त्री । सप्तीनामावश्यकश्रा

द्धकालविशेषे । अष्टकापश्चात्तिथौ

। सा तु गौणचान्द्रपौषमाघफाल्गुना

श्विनमासानां कृष्णनवमी । तस्यां

साग्नीनां मातृकश्राद्धमिति । श्राद्धवि

वेकः ॥

अन्वहम् । प्रत्यहमित्यर्थे ।

अन्वाजे । दुर्बलस्य सामर्थ्याधाने ।

सप्तमीप्रतिरूपकोऽयं निपातः ।

अन्वाजेकृत्य । दुर्बलस्य बलमाधा

अन्वाजेकृत्वा । येत्यर्थे । उपाजे

ऽन्वाजे इति गतिसंज्ञा । कुगतीति स

मासः ।

अन्वाचयः । पुं । चार्थविशेषे । मुख्यसि

द्धावप्रधानसिद्ध्यौ । यथा भिक्षाम

ट गाञ्चानयेति । एकस्य प्राधान्याद-

नुरोधेनेतरदन्वाचीयते । चीञ् ।

कर्मण्यच् ॥

अन्वादेशः । पुं । किञ्चित् कार्यं विधातु

मुपात्तस्य कार्यान्तरं विधातुं पुनरुपा

दानमन्वादेश इति लक्षिते कथिता

नुकथनमात्रे । यथा । अनेनव्याकर



णमधीतम् । एनं छन्दोऽध्यापयेति ।

अनयोः पवित्रं कुलम् एनयोः प्रभूतं

स्वमिति ।

अन्वाधिः । पुं । एकस्मिन् यदर्पितं वस्तु

तेन पुरुषान्तरे अमुष्मिन् स्वामिनि

त्वं दास्यसीति यन्निक्षिप्तं तस्मिन्

। इति विवादार्णवसेतुः ॥ कार्येषु या

चनेन अमुष्मिन् पुरुषे त्वं देया इति प

रिभाष्य यत् समर्पितं तस्मिन् ॥ यथा ।

अर्थमार्गणकार्येषु अन्यस्मिन् यर्थना

ममः । देयास्त्वमिति यो दत्तः स इहा

न्वाधिरुच्यते । इति कात्यायनः । पु

नर्बन्धके । पश्चान्मानसीव्यथायाम् ।

अन्वाधेयम् । न । स्त्रीधनविशेषे । यथा

। विवाहात्परतो यत्तु लब्धं भर्तृकुला

त् स्त्रिया । अन्वाधेयं तदुक्तं तु लब्धं बन्धु

कुलात्तथेति कात्यायनः । अन्यच्च ।

ऊर्ध्वं लब्धं तु यत् किञ्चित् संस्कारात् प्री

तितः स्त्रिया । भर्तुः पित्रोः सकाशाद्वा

अन्वाधेयं तु तद्भृगुरिति । बन्धुपदेन

मातापित्रोरुपादानम् ।

अन्वायत्तः । त्रि । अनुगते ।

अन्वारूढः । त्रि । अधिष्ठिते । अन्वाङ्

पूर्वात् रुहेर्गत्यर्थे क्तः । दत्वं धत्व

ष्टुत्वढलोपदीर्घाः ।

अन्वासनम् । न । शुश्रूषणे । उपास्तौ ।

सेवनम् ॥ अनुशोचने । शिल्पादि

गृह्हे । अनु असु॰ । ल्युट् ॥

अन्वाहार्य्यम् । न । मासिके । दर्शश्रा द्धे । पितृयज्ञपिण्डानामनुपश्चात् आ ह्रियते ॥ हृञ् हरणे । ऋहलोर्ण्यत् ॥ यथा । पितृयज्ञन्तुनिर्वर्त्त्य विप्रश्चेन्दु क्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः । त च्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥ इति मनुः ॥ इष्टे दक्षिणायाम् ॥ अ- न्वाहरणीये ॥

अन्वाहार्य्यपचनः । पुं । दक्षिणाग्नौ ॥

अन्वाहितम् । त्रि । यदेकस्य हस्ते निहि तं द्रव्यं तेनापि पश्चादन्यस्य हस्ते स्वामि ने देहीति निहितम् तस्मिन् द्रव्ये ॥

अन्विच्छा । स्त्री । अन्वेषणे ॥

अन्वितम् । त्रि । मिलिते । युक्ते । अनु गते । कृतान्वेषणादौ ॥

अन्विष्टम् । त्रि । अन्वेषिते ॥ अन्विष्य ते स्म । इषइच्छायाम् । क्तः ॥

अन्विष्यन् । त्रि । विचिन्वति ।

अन्वीक्षितम् । त्रि । विचारिते ॥

अन्वीतम् । त्रि । अन्विते ॥ अनुगते ॥ अनुपूर्वादिण्गताविति धातोः कर्मणि क्तः ॥ पृषोदरादिः । ईङ् गतावित्य स्माद्वा क्तः ॥

अन्वेषणम् । न । अनुसन्धाने । गवेषि ते । इषेरनिच्छार्थस्येति युच् ॥

अन्वेषणा । स्त्री । अनुमार्गणे । गवेष णायाम् । तर्कादिना यथावोधितध र्मान्वेषणे । टाप् ॥

अन्वेषितम् । त्रि । गवेषिते ॥ अन्वेष्य ते स्म । एषृ गतौ । इषिगम्यन्तोवा क्तः ॥

अन्वेष्टव्यः । त्रि । ज्ञातव्ये । एषितव्ये ॥

अन्वेष्टा । त्रि । अनुपदिनि । अन्वेषण कर्त्तरि । मैरणगावनेष्टारा इति भाषा ।

आपः । स्त्री । भू॰ । जले ॥ शब्दस्पर्श- रूपतन्मात्रसहितादसतन्मात्रादुत्प- न्नाः शीतस्पर्शवत्योह्यापः । आप्नुव न्ति । आप्व्याप्तौ । आप्नोतेर्ह्रस्व श्चेति क्विप् ह्रस्वश्च ।

अप । अ । अपकृष्टार्थे ॥ वर्जनार्थे । वि- योगे ॥ विपर्यये । विकृतौ । चौर्य्ये । निर्देशे । हर्षे ॥ अपो वियोगे विकृ- तौ विपरीते निदर्शने । आनन्दे वर्ज ने चौर्य्ये वारणे सम्यगीरितः ॥ वियो गे । अपयाति । विकृतौ । अपाकृत वान् । विपरीते । अपशब्दः । निद र्शने । अपदिशति । आनन्दे । अप हसति । वर्जने । अपविगर्त्तांद्दृष्टो देवः । चौर्य्ये । अपहरति ।

अपकर्म । न । दुष्क्रियायाम् ॥ अमीप- सर्गस्य कर्मशब्दस्य कर्मधारयः ।

अपकर्षः । पुं । विद्यमानधर्मापचये । अपकृष्यते । कृषविलेखने । घञ् ॥

अपकारः । पुं । द्वेषे । अनिष्टे । अपकरणम् । कृञ् । घञ् ॥

अपकारकः । त्रि । अनिष्टकारिणि ॥ अपकरोति । कृ० । ण्वुल् ॥

अपकारगीः । स्त्री । भर्त्सने । अपकारार्थांगीर्वाक् ॥

अपकारी । त्रि । धूर्ते । शठे । अपकारके । यथा । अपकारिणिचेत् क्रोधः क्रोधेक्रोधःकथंनते । धर्मार्थकाममोक्षाणां चतुर्णांपरिपन्थिनीति ॥

अपकुशः । पुं । दन्तरोगविशेषे । यथा । वेष्टेषुदाहःपाकस्ताभ्यां दन्ताश्चलन्तिच । अभ्याहताःप्रस्रवन्तिशोणितं दन्तवेदना । आध्मायन्तेस्रुतेरक्तेमुखंपूतिचजायते । यस्मिन्सोपकुशोनामपित्तरक्तकृतोगदइति ॥ ७ ॥

अपकृतः । त्रि । अपकारिणि ॥ न । अपकारे । मित्रस्यचैवापकृतेर्द्विविधोविग्रहःस्मृतः । अत्र मित्रस्यापकारे इत्यर्थदर्शनात् ॥

अपकृष्टः । त्रि । अधमे । हीने । अपकृष्यतेस्म । कृषविलेखने । क्तः ॥

अपक्रमः । पुं । पलायने ॥ अपक्रमणम् । क्रमुपादविक्षेपे । घञ् । अक्रमे ॥

अपक्रिया । स्त्री । द्रोहे ॥ अपकरणम् । कृञः श्चेतिशः ॥

अपक्रोशः । पुं । निन्दने । जुगुप्सने ॥ अपक्रोशनम् । क्रुश० । घञ् ॥

अपक्वम् । त्रि । अपरिणते । आमे ॥ न पक्वम् ॥

अपक्षेपणम् । न । अधोदेशसंयोगहेतौ कर्मविशेषे ॥ अपपूर्वात् क्षिपेर्ल्युट् ॥

अपगतः । त्रि । मृते । पलायिते । दूरीभूते । गते ॥ अपगच्छतिस्म । गम्लृ० । गत्यर्थेक्तिः ॥

अपगमः । पुं । अपगमने । गमेरप् ॥

अपगा । स्त्री । नद्याम् ॥ त्रि । अपगामिनि ॥ अपगच्छति । गम्लृगतौ । अन्येभ्योपीतिडः । टाप् ॥

अपघनः । त्रि । घनशून्ये ॥ पुं । हस्तपादाद्यङ्गेषु । अवयवे ॥ अपहन्यते । अपघनोऽङ्गमिति करणे ऽपघनादेशश्च ॥

अपघातः । पुं । अपहनने ॥ अपहननम् । हन्तेर्घञ् । हस्यघः । नस्यतः ॥

अपचयः । पुं । व्यये । हानौ । अपकारे ॥ अपचयनम् । चिञ्चयने । एरच् ॥

अपचायितम् । त्रि । अर्चिते ॥ अपचाय्यतेस्म ॥ चायृपूजानिशामनयोः । क्तः ॥

अपचारः । पुं । अहिताचरणे । यथा । योनिप्रदोषाच्चभवन्तिशिष्ये पथ्योप

दे: पुरतोजातलज्जायाम् ॥ स्त्री माघे ॥ इतिरत्नकोश: ॥

अपत्रपिष्णु: । त्रि । लज्जाके । लज्जाशीले स्वभावत: त्रपे ॥ अपत्रपते अलंकृञिति इष्णुच् ॥

अपथम् । न । अमार्गे ॥ पथोऽभाव: नञितितत्पुरुष: । पथोविभाषे तिपाक्षिकोऽप्रत्यय: ॥ अपथानिगच्छते मूढ: । अपथंनपुंसकम् । तत्पुरुषइत्येव । अपथोदेश: । अपथान दी । अपथे पदमर्पयन्तिहि श्रुतवन्तोपिरजोनिमीलिता: ॥ योनौ ।

अपन्था: । पुं । अपथे । मार्गाभावे ॥ पथोऽभाव: नञितितत्पुरुष: । अपथंनपुंसकमिति कृतसमासान्तस्यनिर्देशात्क्लीवत्वम् ॥

अपथ्यम् । त्रि । रोग्यभोज्ये । अहिते ॥ नपथ्यम् ।

अपदस्थ: । त्रि । स्वकर्मच्युते ॥

अपदानम् । न । वृत्तेकर्मणि । अवदाने । इत्ति: प्रवर्तनं साप्रशस्ता विद्यतेयत्र तत्र । यत्र कर्मणि दत्ति: सर्वै: प्रशस्यते तस्मिन्नित्यर्थ: ॥ दैप शोधने । भावे ल्युट् ॥ निन्दादाने ॥ अपकृष्टदानम् ॥

अपदान्तरम् । त्रि । अनन्तरे । अव्यवहिते ॥ नपदान्तरमत्र ॥

अपदिशम् । न । दिक्कोणे । दिशोर्मध्ये ॥ विदिशि ॥ दिशोर्मध्यम् । अव्ययमिति योगविभागात्समास: । दिग्शब्दस्यशरदादिषु पाठाट्टच् । अव्ययीभावश्चेतिसूत्राभ्यांक्लीवत्वाव्ययत्वयोर्विधानम् । तेननाव्ययीभावादतोमत्व पंचम्या इत्यादिप्रवृत्ति: ॥ अपतिर्मध्यवाची आवन्तेन समासेतु टच् नापेक्षित: ॥

अपदिष्ट: । त्रि । प्रयुक्ते । यथाकाव्ययामदिष्ट: ॥ अपदिश्यते । दिश अतिसर्जने । क्त: ॥

अपदेश: । पुं । शरव्ये । लक्ष्ये ॥ निमित्ते ॥ व्याजे ॥ स्थाने ॥ अपदेशनम् । अपदिश्यते वा । दिश अतिसर्जने । घञ् ॥

अपध्वंसज: । पुं । वर्णसङ्करे । यथा । शूद्राणांतु सधर्माण: सर्वेऽपध्वंसजा: स्मृता इतिमनु: ॥

अपध्वस्त: । त्रि । परित्यक्ते ॥ निन्दिते ॥ अवचूर्णिते ॥ अपध्वंसतेस्म । ध्वंसु अध:स्रंसने गतौच । क्त: ॥

अपनयनम् । न । अध:प्रापणे । दूरीकरणे । खण्डने ॥

अपनीत: । त्रि । विनीते । हृते ॥

अपनुति: । स्त्री । अपनोदे । खण्डने ॥

अपनेय: । त्रि । अपनोद्ये । निरस्ये ॥

अपनोदः । पुं । अपनोदने ।

अपनोदनम् । न । दूरीकरणे ।

अपपात्रितः । त्रि । उत्कटदोषैर्ज्ञातिभि
र्भिन्नोदकीकृते । यथा । अपपात्रि
तस्य रिक्थार्थपिण्डोदकानि निवर्त्तन्त
इति शङ्खापस्तम्बौ ।

अपभ्रंशः । पुं । अपशब्दे । अशास्त्रशब्दे ।
असंस्कृतशब्दे । ग्राम्यभाषायाम् । य
था दण्डी । आभीरादिगिरः काव्ये
ष्वपभ्रंश इति स्मृताः । शास्त्रेषु संस्कृता
दन्यदपभ्रंशतयोदितमिति । असंस्कृ
तादपभ्रश्यति । भ्रंशु अधःपतने । प
चाद्यच् । पतने । यथा । अन्याकृति
भवति मत्ततामप्यपभ्रंशनिष्ठुरेष्वभि
मानमक्रमाला ।

अपमः । पुं । क्रान्तौ । सूर्य्यगमनमार्गेति
र्य्यग्गोलरेखायाम् ।

अपमानम् । न । अनादरे । अस्य पर्य्याया
यथा । स्यादनादरः परीभावः परिभावः
पराभवः । अपमानपरिभवस्तिर-
स्कारस्तिरस्क्रिया । अवहेला अवहेला
स्यादवहेलनहेलने । घर्षणो निकार
धिक्कारौ पर्य्यायाः स्युरनादर इति शब्द
रत्नावली । यथा । वेदस्य नाम्नाना
मपमानाद्धोगतिरिति ।

अपमिश्यकम् । न । ऋणे ।

अपमृत्युः । पुं । विनारोगेण मरणे ।

पश्चिमत्वस्वर्गदंष्ट्रिशृङ्गिनखिपतना-
ग्निवज्राग्निविषमन्धजलप्रवेशाद्युप
सर्गजन्यमरणे इति केचित् । अपकृ
ष्टोमृत्युः ।

अपरूपितम् । न । अविस्पष्टवाक्ये ।

अपयानम् । न । पलायने । याधातोर
पपूर्वः । ल्युट् ।

अपरम् । न । गजपश्चाद्गे । त्रि । इतर
स्मिन् । अर्वाचीने । निकृष्टे । दूरा
दिसामान्ये । कार्ये । सन्निकृष्टे । परं
नेम्यतीत्यपरम् । पुं । पादः पश्चिमे ।
अपरः पश्चिमः पादः इति गजप्रकरणे
वैजयन्ती ।

अपरक्तः । त्रि । अननुकूले । विरक्ते ।

अपरसासः । पुं । गिरिविशेषे ।

अपरतिः । स्त्री । निवृत्तौ । अपरमेभ्यो
वै ति ।

अपरत्र । । । पश्चादर्थे ।

अपरत्वम् । न । अपरव्यवहारकारणे ।
तद्द्विविधम् । दिक्कृतं कालकृतञ्चेति
। समीपस्थे दिक्कृतम् कनिष्ठे काल
कृतमिति । अपरस्य भावः ।

अपरपक्षः । पुं । कृष्णपक्षे ।

अपररात्रः । पुं । रात्रिशेषे । चरमे । अ
परं रात्रेः । पूर्वापराधरेति समासे
अहः सर्वैकदेशेत्यच् ।

अपरवक्त्रम् । न । वैतालीयसंज्ञकवृत्ते ।

अपष्ठु । न । निरवद्ये । शोभनार्थे । विपरीते ।

अपष्ठुः । पुं । काले । त्रि । वामे । प्रतिकूले । विरुद्धार्थे । अपतिष्ठति । प्रागतिनिवृत्तौ । अपदुःसुषुभ्यःस्थ इति कुः सुषामादि ।

अपष्ठुलम् । त्रि । निन्दिते । विपरीते ।

अपष्ठ । न । यमकार्ये । अपनशब्दार्थे । आप्नोति । आप्० । आपःकर्माख्यायांह्रस्वोनुट्चवेत्यसुन् पाक्षिकोनुडभावः ।

अपसदः । पुं । अधमे । नीचे । अपकृष्टोऽपकृष्टेवासीदति । षद्लृ विशरणादौ । पचाद्यच् ।

अपसरः । पुं । अपसरणे । सर्पणे ।

अपसरणम् । न । स्थानात्स्थानान्तरगमने ।

अपसर्जनम् । न । परिवर्जने । दाने । आम्नाये । अपसृज्यते । सृज० ल्युट् । मोक्षे । मार्गणे ।

अपसर्पः । त्रि । चरे । अपसर्पति । सृप्लृ गतौ । पचाद्यच् । पुं । अग्निभेदे । अपक्रमे ।

अपसर्पणम् । न । प्रतिलोमगमने ।

अपसलवि । अ । पितृतीर्थे । प्रदेशिन्यङ्गुष्ठयोर्मध्ये । यथा । प्रदेशिन्यङ्गुष्ठयोरन्तरा अपसलवि अपसव्यं वा तेन पितृभ्यो निदधाति इति श्राद्धतत्त्वे भट्टभाष्यधृतवचनम् ।

अपसव्यम् । त्रि । शरीरदक्षिणे । शरीरस्य दक्षिणभागे । प्रतिकूले । विरुद्धार्थे । न । पितृतीर्थे । अपसलवि । अपगतम् अपक्रान्तं वा सव्यात् ।

अपसारणम् । न । अपनयने ।

अपसारितः । त्रि । उत्सारिते ।

अपसिद्धान्तः । पुं । स्वीकृतसिद्धान्तात् प्रच्यवे । तल्लक्षणमाह । सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः । प्र० ९९ । सिद्धान्तं स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्य अनियमात् तन्नियमप्रच्यवात् कथाप्रसङ्ग इति । तथाच कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः । तथाच सांख्यमतेनाहं वदिष्यामीत्यभ्युपेत्यारब्धायां कथायाम् आविर्भावस्याविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाविर्भावस्यासत उत्पत्तिं यद्यभ्युपैति तदाऽपसिद्धान्तः । यस्त्वेकदेशिमतेन कथामारभते तस्य शास्त्रकाराभ्युपगमविरोधेनापसिद्धान्त इति विबोधयितुमभ्युपेत्येत्युक्तम् । सौगतास्त्वपसिद्धान्तं दूषणं नमन्यन्ते इत्यन्यदेतत् । अपकृष्टः सिद्धान्तः ।

अपसोपानः । पुं । हस्तिनखे ।

अपस्करः । पुं । रथाङ्गे । चक्रभिन्नेरथा रमाके । अपकीर्यतेऽस्य स्वस्वस्थाने क्षिप्यते । कृविक्षेपे । अदेरप अप स्करोरथाङ्गमितिसाधुः ॥

अपस्नातः । त्रि । मृतस्नाते । मृतमु द्दिश्यस्नातेजने । अपकृष्टस्नातः । प्रादयोगताद्यर्थेइतिसमासः । संस्का रार्थेस्नापितेमृते ॥ इतिस्वामी ॥

अपस्नानम । न । मरणनिमित्तस्नाने । मृतस्नाने । अपकृष्टस्नानम् ॥

अपस्मारः । पुं । रोगभेदे । भूतविक्रिया याम । मिरगीतिख्याते । तस्यसामा न्यरूपम् । तमःप्रवेशःसंरम्भोदोषो द्रेकहतस्मृतिः । अपस्मार इतिज्ञेयो गदोघोरतरोहिसः ॥ अस्यौषधंयथा । यःखादेत्क्षीरभक्ताशीमाक्षिकेण वचारजः । अपस्मारंमहाघोरं चिरो त्थंसनयेद्ध्रुवमिति । वचागुरवच । अपिच । द्वौकीटमेषौविधिवद्दानी यरविवासरे । कण्ठेभुजेवासन्धार्य्य नयेदुग्रामपस्मृतिमिति । अयंकीटो नदीतीरेसिकतामध्येतिष्ठति । इति भावप्रकाशः ॥

अपस्मारी । त्रि । अपस्माररोगिणि ॥ तल्लक्षणम् । क्रुद्धैर्धातुभिराहते ऽथ मनसिमाषोमनःसन्दशनदन्तानखा दतिफेनमुद्गिरतिदोः पादौक्षिपन्मू र्च्छयीः । पश्यन्रूपमसत् क्षितौनि पततिच्यर्थां करोतिक्रियां विभ्रत सत्त्वभेवशाम्यतिगतेवेगेत्वपस्मार वान् । इति ॥

अपहृतः । त्रि । अपनीते ॥ नष्टे ॥ अ पहन्यतेस्म । हन० क्तः ॥

अपहतपाप्मा । पुं । वेदान्तवेद्यात्म नि । अपहतःपाप्माधर्माऽधर्माख्योय स्यसः ॥

अपहतिः । स्त्री । विनाशे । उच्छेदे ।

अपहन्ता । त्रि । विनाशयितरि ॥

अपहर्त्ता । त्रि । अपहारिणि । यथा । आपदामपहर्त्तारं दातारं सर्वसम्प दाम् । लोकाभिरामं श्रीरामंभूयो भूयोनमाम्यहमिति ॥

अपहस्तितः । त्रि । निरस्ते ॥

अपहारः । पुं । अपचये । हानौ । अ पहरणे । चौर्ये । संगोपने । धनस्वा म्यनुपयोगिव्यये । इतिदायभागः । अपहरणम् । हृञ् हरणे । घञ् ॥

अपहारकः । त्रि । अपहारिणि । अप हरणकर्त्तरि ॥ अपहरति । हृञ् । ण्वुल् ॥

अपहारी । त्रि । अपहरणशीले । अप हर्त्तरि ॥

अपहासः । पुं । अकारणहास्ये ॥

अपहृतः । त्रि । अपनीते ॥

अपह्नवः । पुं । स्नेहे । अपलापे । इति मेदिनी हेमचन्द्रौ ॥ अपह्नवनम् । ह्नु ङ् अपनयने । ल्युट् ॥

अपह्नुतिः । स्त्री । अपलापे । अर्थालंकारे ॥ प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः । उपमेयमसत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते सा त्वपह्नुतिः । उदाहरणम् । अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि । अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ इत्येवं वा । वतसखि कियदेतत् पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन् रागिलोके तथापि । उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् । अत्र हि न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाः शरा इति प्रतीतिः ॥ एवं वा । अमुष्मिन्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ अत्र रोमावलिधूमशिखेयमिति प्रतिपत्तिः ॥ एवमियं भङ्ग्यन्तरैरप्यूह्या ॥ अपह्नवनम् । ह्नुङ्

लिन् ॥

अपांनाथः । पुं । समुद्रे । अकूपारे । इति राजनिर्घण्टः ॥

अपाकः । पुं । अजीर्णतायाम् । त्रि । पाकाभावविशिष्टे ॥

अपाकरणम् । न । निराकरणे । अपाङ्पूर्वात् कृञो ल्युट् ॥

अपाकशाकम् । न । आर्द्रके । इति राजनिर्घण्टः ॥

अपाकृतम् । त्रि । अपोहिते । त्यक्ते । अपाकारि । डुकृञ् । क्तः ॥

अपाकृतिः । स्त्री । विकारे । अपाकरणे ॥

अपाचम् । त्रि । प्रत्यञ्चे । इति त्रिकाण्डशेषः ॥

अपाङ्क्तयः । त्रि । पङ्क्तिभोजनानर्हे । सपङ्क्तिः सहैकपंक्त्या भोजनायोग्ये । तेच । येस्तेनपतितक्लीबा ये च नास्तिकवृत्तयः इत्यादिवचनैर्मनुनोक्ता बोध्याः ॥

अपाङ्गः । पुं । नेत्रान्ते । तिलके । त्रि । अङ्गहीने । अपगतोऽङ्गात् । निरादय इति समासः ॥ अपकृष्टोऽङ्गाद्वा । अपकृष्टान्यङ्गान्यस्माद्वा । अपाङ्गति । अगि गतौ । पचाद्यच् ॥

अपाङ्गकः । पुं । अपामार्गे । नेत्रान्ते । त्रि । अंगहीने ॥

अपाङ्गदर्शनम् । न । कटाक्षे । अपांगेन नेत्रान्तेन दर्शनम् । इति हेमचन्द्रः ॥

अपाग् । त्रि । दक्षिणदिग्भवेवस्तुनि । अपाचीने ।

अपाची । स्त्री । दक्षिणदिशि ॥ अक्षो मध्ये अंचतिरूर्यम् ॥ समेत्यस्थयंम ध्यार्थे अपदिशमितिवत् ॥ अंचुगति पूजनयोः । ऋत्विगादिनाक्विन उगितश्चेतिङीप ॥

अपाचीनम् । त्रि । विपर्यस्ते । अपागर्थे । दक्षिणदिग्भववस्तुनि । अपागेव । विभाषाञ्चेरदिक्स्त्रियामिति खः । तस्य ईनादेशः ॥

अपाच्यम् । त्रि । दक्षिणदिग्भवे । पाकानहें । चुप्रागपागित्यादिनाशैषिकोयत ॥ न पाच्यम् ।

अपाटवम् । न । रोगे । असंपटुत्वे । न विद्यते पाटवं यस्मिन् ।

अपात्रम् । न । योग्यताहीने । निन्दिते । विद्यातपोहीने । नदविद्वादै । अपात्रे । नपात्रम् । अपात्रे पातयेद्यः सुवर्णं नरकार्णवे । इतिमलमासतत्त्वम् ॥

अपात्रीकरणम् । न । नवविधपापमध्ये पापविशेषे । तत्तु विधंभवति यथा । निन्दितधनादानम् १ । वाणिज्यम् २ । शूद्रसेवनम् ३ । असत्यभाषणम् ४ । इति । यथाहमनुः । निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणमिति ॥



अपादानम् । न । विश्लेषेऽवधिभूते । पंचमीकारके । यस्माद्वस्तुनोवस्त्वन्तरस्यचलनं भवति तस्मिन् । विश्लेषहेतु क्रियानाश्रयत्वे सतितद्विश्लेषाश्रयत्वम् । तस्मै कादशार्थे पंचमीस्यात् । यथा । यतोऽपायः । यथा वृक्षात्पर्णं पतति १ । यतो भी । यथा व्याघ्राद्बिभेति २ । यतो जुगुप्सा । यथा पापात् जुगुप्सते धीरः ३ । यतः पराजय । यथा सिंहात् पराजयते हस्ती ४ । यतः प्रमाद । यथा धर्मात् प्रमाद्यति नीचः ५ । यत आदानम् । यथा भूपात् धनमादत्ते विप्रः ६ । यतो भू । यथा पितुः पुत्रोजायते ७ । यतस्त्राणम् । यथा व्याघ्रात गां रक्षति गोपः ८ । यतो विराम । यथा पापाद्विरमति विप्र ९ । यतोऽन्तर्द्धिः । यथा गुरोरन्तर्द्धत्ते शिष्यः १० । यतो वारणम् । यथा यवेभ्यो गां वारयति ११ । इति मुग्धबोधटीका ।

अपान । पुं । गुदस्थवायौ । नाभेरधस्तादागमनवति मलापनयनव्यापारे । यथाव्यादिस्थानधर्त्तिनिवायौ । यथा । अधोनयत्यपानस्तु आहारञ्च क्रमान्मलम् । मूत्रशुक्रवहोवायुरपान

स्तेनकीर्त्तितः । कृकाटिकापृष्ठपार्श्व पायूपस्थस्थत्ति वायुः ॥ न । गुदे । अपसरत्येनानित्यनेन । कस्वेति वज् ।

अपान्तरतमाः । पुं । वेदाचार्यपुराणर्षिविशेषे । यःकश्चिद्द्वापरयोः सन्धौ विष्णुनियोगात् कृष्णद्वैपायनः सम्बभूवेतिस्मृतौ प्रसिद्धम् ॥

अपान्नपात् । पुं । एतन्नामधेयेदेवे ।

अपापः । त्रि । पापशून्ये । निष्पापे ॥

अपापविद्धः । त्रि । धर्माधर्मवर्जिते ॥ न पापविद्धः ॥

अपामार्गः । पुं । मत्स्यकपर्णाम् ॥ अपमार्जन्यनेन अपमृज्यते ऽनेनव्याध्यादिरितिवा । मृजूष० । हलश्चेतिघञ् । निष्ठायामनिट्त्वात्कुत्वम् । उपसर्गस्य घञीतिदीर्घः । अपकृष्टआसमन्तान्मार्गोऽस्येतिवा । अपामार्गः सरस्तीक्ष्णो दीपनस्तिक्तकः कटुः । पाचनो नावनश्छर्दिकफमेदोनिलापहः । निहन्ति हृद्रुसिध्मार्शः कंडूशूलोदरापचीः । अपामार्गोऽरुणोवातविष्टम्भीकफकृद्धिमः । रूक्षः पूर्वगुणैर्न्यूनः कथितोगुणवेदिभिः । अपामार्गफलंस्वादुरसे पाकेचदुर्जरम् । विष्टंभिवातलंरूक्षंरक्तपित्तप्रसादन मितिभावप्रकाशः ।

अपाम्पतिः । पुं । समुद्रे । वरुणे ॥ अपांपतिः । तत्पुरुषे कृतिबहुलमित्यलुक् ।

अपाम्पित्तम् । न । अग्नौ । अपांपित्तमिवदाहकत्वात् । अलुक् ।

अपायः । पुं । विश्लेषे । अप्यये । नाशे । अपगमे ॥

अपारः । त्रि । उत्तरावधिवर्जिते ॥ अपारः संसारकूपारः । अनन्तमहिमनि । नविद्यते पार उत्तरावधिर्यस्य । न । अपारे । नद्यादेरर्वाचि पारे ॥

अपार्थः । त्रि । अर्थशून्ये ॥

अपार्थकम् । न । इमंलक्षयतिगौतमः । पौर्वापर्ययोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ ५ । ५३ । पौर्वापर्येणैकार्थाभावस्तस्यायोगादसम्भवात् शाब्दबोधजनकाकांक्षाद्यभावादिति फलितार्थः । अप्रतिसंबद्धोऽसम्बद्धोर्थः प्रयोजनंशाब्दबोधरूपं यत्र । यद्यपि दशदाडिमानि षडपूपाः कुण्डमजाजिनमित्यादाववान्तरवाक्यादर्थबोधसत्त्वादव्याप्तिरतिव्याप्तिश्चनिरर्थके । तथाप्यभिमतवाक्यार्थबोधानुकूलाकांक्षादिशून्यबोधजनकपदत्त्वं तत् । अविज्ञातार्थे तुस्वस्यबोधाभवत्येवेति नातिव्याप्तिः । उद

हरणान्तु। अयोग्यानामसम्बन्धानाकांक्ष वाक्यम्। ५।३। अनर्थकं। व्यर्थे॥

अपावृतः। त्रि। पिहिते। अप्रतिबद्धे। स्वतन्त्रे। उद्घाटिते। अपगतमावरणमावरणमस्य॥

अपावृत्तम्। त्रि। लुठिते। परावृत्ते॥

अपाश्रयः। पुं। चन्द्रातपे। प्राङ्गनावरणे। त्रि। आश्रयशून्ये। अधीने॥

अपासनम्। न। मारणे। असुत्क्षेपे। भावेल्युट्॥

अपास्तः। त्रि। निरस्ते। अवधीरिते॥

अपि। अ। सम्भावनायाम्। प्रश्ने। शङ्कायाम्। गर्हायाम्। समुच्चये। युक्तपदार्थे। क्रियाकारक्रियायाम्। कामकारक्रियासु। अनुज्ञायाम्। अवधारणे। पुनरर्थे। नपिप्रति। पिगतौ। क्विप्। आगमशास्त्रस्यानित्यत्वाल्लुक्॥

अपिगीर्णम्। त्रि। ईरिते। स्तुते। वर्णिते। गीर्णे। अपिगीर्यतेस्म। गनिगरणे। क्तः। निष्ठातस्यनः॥

अपितु। अ। किन्त्वर्थे। यद्यर्थे। यद्यपि॥

अपिधानम्। न। आच्छादने। अपिपूर्वकात्डुधाञोल्युट्। त्रि। पिधानरहिते॥

अपिनद्धः। त्रि। परिहिते वस्त्रादौ। पिनद्धे। अपिनह्यतेस्म। णहबन्धने। क्तः॥

अपिहितः। त्रि। आच्छादिते। अपिधीयतेस्म। डुधाञ्। क्तः। दधातेर्हिः॥

अपीच्यम्। त्रि। अतिसुन्दरे॥

अपीतिः। स्त्री। प्रलये। अप्यये। एकीभावे॥

अपीनसम्। न। पीनसरोगे। प्रतिश्यायः। त्रि। तद्रहिते॥

अपुच्छा। स्त्री। शिंशपावृक्षे। त्रि। पुच्छहीने॥

अपुनरावृत्तिः। स्त्री। मुक्तौ। कैवल्ये॥

अपुनर्भवः। पुं। मुक्तौ। त्रि। मुक्ते। पुनर्जन्माभावे। यथाचरकः। हेतौलिङ्गे प्रशमनेरोगाणामपुनर्भवे। ज्ञानंचतुर्विधंयस्यसराजार्होभिषक्तमइति। अपुनर्भवोयस्यसः॥

अपुष्पफलदः। पुं। पनसोदुम्बरादिवनस्पतौ॥

अपूपः। पुं। पिष्टके। गोधूमे। नपूयते। पूयीविशरणे। बाहुलकात्पवलिलोपः। यद्वा। पवनं पूः। पूञ् पवने। संपदादिक्विप्। अपुवंपाति पिपर्तिवा। पा॰। आतोनुपेतिकः॥

अपूपीयम्। त्रि। अपूपार्थकपिष्टादौ। अपूपेभ्योहितम्। विभाषाहविरपूपादिभ्यइतिछः॥

अपूप्यम्। त्रि। अपूपीये। गोधूमचूर्णे॥

अपूपेभ्योहितम् । यत् ॥

अपूरणी । स्त्री । शाल्मलितरौ ॥

अपूर्वः । त्रि । अदृष्टपूर्वे । अविदिते ॥ आश्चर्ये ॥ यथा । अपूर्वयंहरेर्माया त्रिगुणारज्जुरूपिणी । यया मुक्तोनच लतिबद्धोधावतिधावति ॥ पुं । पूर्वभावविकारणसंस्पर्शशून्ये अकार्ये परमात्मनि । नविद्यते पूर्वंकारणं यस्यसः ॥ न । यागादान्तरव्यापारे ॥ धात्वर्थातिरिक्तेकालान्तरभाविकस्यफलस्यसाधने । अत्रपचद्वयंमीमांसकानाम् । तदानीमेवसूक्ष्मत्वेनोत्पन्नंफलमेवाऽपूर्वम् । कालान्तरफलोत्पादिकाशक्तिर्वेति । तदुक्तम् । यागादेव फलंतद्धिशक्तिद्वारेण सिध्यति । सूक्ष्मशक्त्यात्मकंवापिफलमेवोपजायते ॥ इति ॥

अपूर्वता । स्त्री । अपूर्वत्वे । भावेतल् ॥

अपूर्वत्वम् । न । अपूर्वतायाम् । षड्विधलिंगेषु तृतीयेलिङ्गे । प्रकरणप्रतिपाद्यस्य प्रमाणान्तरेणाविषयत्वमपूर्वत्वम् । यथाछान्दोग्येषष्ठप्रपाठकेऽद्वितीयवस्तुनोमानान्तरेणाविषयीकरणम् ॥ भावेत्वः ॥

अपूर्वप्रवेशः । पुं । प्रथमप्रवेशे । नवंगृहंनिर्माय तत्रप्रथमप्रवेशे ॥

अपूर्वविधिः । पुं । प्रमाणान्तरेणाऽप्राप्तस्य प्रापके विधौ । यथा यजेतस्वर्गकामइत्यादिः । स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात् ॥ अपूर्वश्चासौविधिश्च ॥

अपेक्षणीयः । त्रि । अपेक्षायोग्ये । अपेक्षितव्ये ॥

अपेक्षा । स्त्री । आकांक्षायाम् । कार्यनिमित्तयोरन्योन्याभिसम्बन्धे । अपेक्षणम् । ईक्ष० । गुरोश्चहलइत्यः । टाप् ॥

अपेक्षाबुद्धिः । स्त्री । अनेकैकत्वविषयकबुद्धौ । नानैकत्वावगाहिबुद्धौ । अयमेकः अयमेक इत्याकारबुद्धौ । इति कारिकावली ॥

अपेक्षितः । त्रि । ईप्सिते ॥

अपेतः । त्रि । रहिते । अपवृत्ते । अपइतः ॥

अपेतकृत्यः । त्रि । कृत्यशून्ये । कृतकृत्ये ॥

अपेतराक्षसी । स्त्री । तुलस्याम् । वृन्दायाम् । इतिराजनिर्घण्टः ॥

अपेताखिलचापलः । त्रि । नियतेन्द्रिये ॥

अपोगण्डः । त्रि । पलिभे । अतिभीरौ । विकलाङ्गे । शिशौ ॥ पयते पुनातिवा । पूङः पूङोवाक्विच् । पोगण्ड एकदेशोस्य । नपोगण्डः ॥

अपोढः । त्रि । निरस्ते ॥ बाधिते ॥ यथा । शास्तुर्नैयः परोक्षात्माबोविद्या

कल्पितः स्मृतः । अपोढे विद्यमानस्मिन् रज्वांसर्पत्ववादयः । इत्युपदेशसाहस्र्यां १४ प्रकरणे १७ पद्यम् ॥

अपोढकर्म्मा । त्रि । त्यक्तव्यापारे ॥

अपोदका । स्त्री । उपोदिकायाम् । शाकान्तरे । अपगतमुदकमस्याः ॥

अपोनपात् । पुं । एतन्नामधेये देवताविशेषे ॥

अपोहः । पुं । तर्कनिराकरणे । वितर्काभावे । शुश्रूषाद्यष्टधीगुणान्तर्गतषष्ठगुणे ॥ त्यागे ॥ अतद्व्यावृत्तौ ॥ अपगतऊहः ॥ अपोहनम् । ऊह० । घञ् ॥

अपोहनम् । न । कामक्रोधशोकादिव्याकुलचेतसां स्मृतिज्ञानयोरपाये ॥ अपोहे ॥

अपोहितम् । त्रि । अपाकृते ॥

अप्नः । न । यज्ञकार्ये ॥

अप्तुः । पुं । शरीरे । अभिलषितार्थे । अंगे ॥ आप्नोति । आप्लृव्याप्तौ । आप्नोतेर्ह्रस्वश्चेति तुः ॥

अप्नः । न । अम्बुनि ॥ आप्नोति । आप्लृ० । आपः कर्म्माख्यायां ह्रस्वो नुट् चवेत्यसुन् ॥ वैदिकोयमिति कश्चित् ॥

अप्पतिः । पुं । वरुणे ॥ अम्बुधौ ॥ अपां पतिः ॥

अप्पित्तम् । न । अग्नौ । चित्रकौषधौ ॥ अपांपित्तमिवदाहकत्वात् ॥

अप्ययः । पुं । परब्रह्मणि ॥ अपियन्ति लीयन्ते जगन्त्यस्मिन् । अपपूर्वादिणो ऽधिकरणे ऽच्प्रत्ययः ॥ अपाये ॥ अपीतौ । लये ॥ अप्येत्यस्मिन् । इण् इङ्गतौ वा । एरच् ॥

अप्रकाण्डः । पुं । झिण्टिकादौ ॥ स्तम्बे । गुल्मे ॥ नप्रकाण्डोऽस्य ॥

अप्रकाशः । पुं । सत्यप्युपदेशादौ बोधकारणे सर्वथा बोधायोग्ये ॥ प्रकाशाभावे । जनान्तिके ॥ गोपने ॥ ३ प्रकाशाभाववति ॥ नप्रकाशः ॥

अप्रखरः । त्रि । अतीक्ष्णे । पारुष्यरहिते ॥

अप्रगुणम् । त्रि । व्याकुले ॥ अप्रकृष्टगुणे ॥ भिन्नः प्रगुणात् ॥

अप्रणयः । पुं । अप्रीतौ ॥ प्रणयनम् प्रणयः । नप्रणयः ॥

अप्रतर्क्यः । त्रि । मनोऽगोचरे ॥ अनुमानाविषये श्रुत्यैकसमधिगम्ये परमेश्वरे ॥

अप्रतिकरः । त्रि । विश्वस्ते । विश्वासपात्रे ॥ इति जटाधरः ॥

अप्रतिघः । त्रि । अप्रतिपक्षे ॥ नप्रतिघः ॥

अप्रतिपक्षः । त्रि । अप्रतियोगिनि ॥ विपक्षशून्ये ॥ नास्ति प्रतिपक्षो यस्य सः ॥

अप्रतिपत्तिः । स्त्री ॥ मतिज्ञाताज्ञाने ॥

माणवेद्यः । प्रमाणजन्यातिशयाभा-
वात् । अथैवं शास्त्रयोनित्वं कथं मुच्य
ते । प्रमाणादिसाक्षित्वेन प्रकाशस्व
रूपस्य प्रमाणविषयत्वे अध्यस्तात
द्रूपनिवर्त्तकत्वेन शास्त्रप्रमाणकत्वम्
इत्यप्रमेयोभवतीश्वरः । प्रमातुयो
ग्यः प्रमेयः । न प्रमेयः अप्रमेयः ।
अप्रलम्बम् । न । अविलम्बे । शीघ्रे ।
त्रि । तद्वति ।
अप्रशस्तम् । त्रि । अश्रेष्ठे । अविहिते ।
यथा । अप्रशस्तंनिषिद्धानं राहोर
न्यत्रदर्शनादितिपराशरः ।
अप्रसङ्गः । पुं । अव्यतिकरे ।
अप्रसन्नम् । त्रि । अनच्छे । अतुष्टे ।
अप्रस्तुतः । त्रि । अनुपस्थिते । प्रकरणा
प्राप्ते । नप्रस्तुतः ।
अप्रस्तुतप्रशंसा । स्त्री । अर्थालंकारवि
शेषे । अप्राकरणिकस्यार्थस्याभिधा
नेन प्राकरणिकस्याक्षेपे । यथा । अ
प्रस्तुतप्रशंसा सा याचैव प्रस्तुताश्र
या । साच । कार्येनिमित्ते सामान्ये
विशेषे प्रस्तुतेसति । तदन्यस्यवचस्तु
ल्येतुल्यस्येतिचपञ्चधा । तदन्यस्यका
रणादेः । क्रमेणोदाहरणम् । याताः
किन्नमिलन्ति सुंदरिपुन श्चिन्तात्व
या मत्कृते नोकार्यानितरां कृशा
सि कथयत्येवं सवाष्पेमयि । लज्जाम

न्थरतारकेण निपतत्पीताश्रुणा च
क्षुषा दृष्ट्वामां हसितेनभाविमरणो-
त्साहस्तयासूचितः ॥ अत्रप्रस्थानात्
किमिति निवृत्तोसीतिकार्येपृष्टेकार
णमभिहितम् ॥ १ ॥ राजन् राज
सुता नपाठयतिमां देव्योपितूष्णीं
स्थिताः । कुब्जेभोजयमां कुमारस
चिवैर्नाद्यापि किंभुज्यते । इत्थंनाथ
शुकस्तवारिभवनेमुक्तोध्वगैःपञ्जरा
च्चित्रस्थानवलोक्य शून्यवलभावे कै
कमाभाषते ॥ अत्रप्रस्थानेऽद्यतंभ
वन्तं श्रुत्वा सद्यएवत्वदरयः पलाय्य
गताइतिकारणेप्रस्तुतेकार्यमुक्तम् ।
२ । एतत्तस्य मुखात् कियत्कमलि
नीपत्रेकणं वारिणो यन्मुक्तामणि रि
त्यमंस्तसजडःशृण्वन् यदस्मादपि ।
अङ्गुल्यग्रलघुक्रिया प्रविलयिन्यादी-
यमानेशनैः कुत्रोड्डीयगतो ममे-
त्यनुदिनं निद्रातिनान्तःशुचा ॥ अ
त्रास्थाने जडानाममत्वसंभावना-
भवतीति सामान्ये प्रस्तुते विशेषः क
थितः ॥ ३ ॥ सुहृद्वधूबाष्पजलप्रमा-
र्जनं करोतिवैरप्रतियातनेनयः । स
एवपूज्यः सपुमान् सनीतिमान् सु
जीवनं तस्य सभाजनं श्रियः ॥ अत्र
कृष्णंनिहन्त्य नरकासुरवधूनां यदि
दुःखंप्रशमयसि तत्त्वमेवश्लाघ्यइति-

| अवन्य | अव |
|---|---|
| इति । | निर्धेसाधुः। तत्रसाधुरितियत् । न |
| अफलः । पुं । भावुके । इतिशब्दचन्द्रि- | पुंर्वर्ज्यः । |
| का । त्रि । अवकेशिनि । निष्फले ॥ | अवलः । पुं । वरुणद्रौ । त्रि । बलशून्ये । |
| नफलान्यस्य । | दुर्बले । नास्तिवलं यस्य । |
| अफलप्रेप्सुः । त्रि । फलाभिलाषरहिते । | अबला । स्त्री । वनितायाम् । यथा । हृद- |
| अफला । स्त्री । घृतकुमार्याम् । भूम्या- | येवहसि गिरीन्द्रो विभुवनजयिनी- |
| मलक्याम् । इतिशब्दचन्द्रिका ॥ | कटाक्षेण । अवलास्वंयदि मन्येकेव |
| अफेनम् । न । अहिफेने । तच्चतुर्विध | लमवलोमयनजानीमइति । बलंवल |
| म् । एकंश्वेतवर्णम् अन्नजीर्णताका | मस्याः । अल्पार्थेनञ् । पराशक्ती । |
| रकत्वान्नाम जारणम् । द्वितीयं कृ | नविद्यते बलंयस्याःसकाशादन्यत्र । |
| ष्णवर्णम् मृत्युकारकत्वान्नाममा- | अवलिमा । पुं । अवलभावे । देहस्यरो |
| रणम् । तृतीयम् पीतवर्णम् वयः | गादिनिमित्ते जरादिनिमित्तेवाकृ- |
| स्तम्भनकारकत्वान्नामधारणम् । च | शीभावे । |
| तुर्थंकर्बुरवर्णम् मलसारकत्वान्नाम | अवाधः । त्रि । निर्गले । अनिवारिते ॥ |
| सारिणम् ॥ इतिराजनिर्घण्टः ॥ | नविवाधा अस्य ॥ |
| अवर्हम् । त्रि ॥ समुदायार्थशून्यवाक्ये | अवाध्यः । त्रि । सत्ये । स्थानान्तरेणवा |
| ॥ यथा । जरद्गवः कम्बलपादुकाभ्यां | धायोग्ये । |
| द्वारिस्थितोगायतिमंगलानि । तं | अविन्धनः । पुं । वाडवाग्नौ । विद्युति ॥ |
| ब्राह्मणीपृच्छतिपुत्रकामाराजन् । रु | आपइन्धनंदाह्यमस्य । |
| मायांलशुनस्यकोर्घः । इत्याद्यस्यवि- | अवोधः । पुं । अज्ञाने । त्रि । बोधहीने । |
| षयः । अवन्धने । नवध्यतेस्म । बन्ध | अबोधविक्लवः । त्रि । अज्ञानोपद्रुते । |
| बन्धने । | अबोधेनविक्लवः । |
| अवद्धमुखः । त्रि । अप्रियवादिनि । मु | अब्जः । पुं । न । शङ्खे । पुं । निचुले । |
| खरे । अपद्धनियंत्रितं मुखमस्य । | धन्वंतरौ । हिमकिरणे । न । पद्मे । |
| अबद्धम् । त्रि । अबद्धार्थे । अनर्थक- | संख्यान्तरे । दशार्बुदे । शतकोटि |
| वचसि । इतिमेदिनी हेमचन्द्रौ । | संख्यायाम् । १०००००००० । निर |
| अबन्ध्यः । त्रि । फलेग्रहौ । सफले । व | न्तरेण अप्सुजातः । पञ्चम्यामना |

तावितिडः । अप्सुजायते । जनीमा दुर्भावे । सप्तम्यामितिडोवा ॥

अब्जकर्णिका । स्त्री । संवर्त्तिकायाम् ॥

अब्जजः । पुं । ब्रह्मणि ॥ योगान्तरे ॥ यथा । स्वराशौस्वांशगे सौम्ये लग्ने वाभृगोःसुते । जीवेवाऽब्जजयोगे यातःपृथुविनाशकृदिति ॥

अब्जभोगः । पुं । वराटके । पद्मकन्दे ॥

अब्जयोनिः । पुं । धातरि । ब्रह्मणि ॥ अब्जयोनिरुत्पत्तिस्थानमस्य । विष्णोर्नाभिकमलजत्वात् ॥

अब्जवाहनः । पुं । शिवे ॥ इतित्रिकाण्डशेषः ॥ स्त्री । लक्ष्म्याम् ॥

अब्जः । न । रूपे ॥ आप्नोति । आप्लृ० । रूपेऽजुट्चेत्यसुन् ह्रस्वत्वंचधातोः प्रत्ययस्यजुट्च । अब्जसी कर्मासि ॥

अब्जहस्तः । पुं । दिवाकरे ॥

अब्जिनी । स्त्री । नलिन्याम् । पद्मसमूहे ॥ पद्मलतायाम् ॥ अब्जानिसन्त्यस्याम् । पुष्करादिभ्योदेशइतीनिः ॥

अब्जिनीपतिः । पुं । सूर्ये ॥

अब्दः । पुं । संवत्सरे ॥ सचसावनसौरचान्द्रनाक्षत्रबार्हस्पत्यभेदेनपञ्चविधः ॥ वारिवाहे ॥ मुस्तके ॥ गिरिभेदे ॥ आप्यते । आप्लृव्याप्तौ । अब्दादयश्चेतिदन् ह्रस्वत्वञ्च । अवतिवा । अव० । पूर्ववत्साधुः ॥ अपोददाति । डुदाञ० । आतोनुपेतिकोवा ॥

अब्दपर्ययः । पुं । समासे वर्षे द्वितीयवर्षस्यप्रवृत्तौ ॥

अब्दसारः । पुं । कर्पूरभेदे ॥

अब्दुर्गम् । न । जलदुर्गे । अगाधोदकेनसर्वतः परिवृतेराज्ञोवासपुरे ॥

अब्धिः । पुं । समुद्रे ॥ आपोधीयन्तेऽस्मिन् । कर्मण्यधिकरणे चेति धाञःकिः ॥ चतुर्थाङ्के ॥ सरसि ॥

अब्धिकफः । पुं । सिन्धुफेने । हिण्डीरे ॥ इत्यमरः ॥ अब्धेः कफइव ॥

अब्धिजः । पुं । विधौ ॥ अब्धेर्जातः । जनी० । डः ॥

अब्धिद्वीपा । स्त्री । पृथिव्याम् ॥ इतित्रिकाण्डशेषः ॥

अब्धिनगरी । स्त्री । कृष्णपुरि । द्वारावत्याम् ॥ अब्धौ नगरी ॥

अब्धिनवनीतम् । न । शशिनि ॥ अब्धेर्नवनीतमिव ॥

अब्धिफेनः । पुं । समुद्रफेने ॥

अब्धिमण्डूकी । स्त्री । शुक्तौ । मुक्तासीप्टे । सीपी इतिभाषा ॥ इतिहेमचन्द्रः ॥

अब्धिशयनः । पुं । नारायणे ॥ अब्धिःशयनमस्य ॥

अब्ध्यग्निः । पुं । वाडवानले ॥ इतिहेमचन्द्रः ॥

अब्धुत्थम् । क्लि । समुद्रभवे ॥

अभक्षः । पुं । सर्पे ॥ इतित्रिकाण्डशेषः ॥ त्रि । जलाहारिणि ॥

अभ्रमातङ्गः । पुं । ऐरावते ॥ अभ्रमातङ्गे ॥

अभ्रिः । स्त्री । तीक्ष्णाग्रेलोहदण्डे । अभ्रिंकार्प्णायसींदद्यात् सर्पंहत्वा द्विजोत्तम इतिमनुः । अभ्रूति । अ भूगच्छायाम् इन् ॥

अब्रह्मचर्य्यकम् । नि । मैथुने ॥ इतित्रिकाण्डशेषः ॥

अब्रह्मण्यम् । न । नाव्योक्त्यां अवध्योक्तौ । वधंनार्हतीतिवचसि । ब्रह्मणिसाधुः । तत्रसाधुरितियत् । ततोनञ्समासः । ब्रह्मण्याभावे । त्रि । तद्वति ।

अब्राह्मणः । पुं । अब्राह्मणपदवाच्येषु षट्सु ॥ तेचोक्ताः शातातपेन यथा । अब्राह्मणास्तुषट्प्रोक्ता ऋषिणातत्त्ववेदिना । आद्योराजभृतस्तेषांद्वितीयः क्रयविक्रयी ॥ तृतीयो बहुयाज्यः स्याच्चतुर्थोग्रामयाजकः ॥ पञ्चमस्तु भृतस्तेषांग्रामस्यनगरस्यच ॥ अनादित्यांतुयः पूर्वां सादित्यांचैवपश्चिमाम् । नोपासीतद्विजःसंध्यांसषष्ठोऽब्राह्मणः स्मृतः इति ॥

अभक्ष्यः । त्रि । भक्षणायोग्येग्राम्यकुक्कुटादौ । यथा । अभक्ष्योग्राम्यकुक्कुटः अभक्ष्योग्राम्यशूकरइतिमहाभाष्यम् । एवञ्चग्राम्यकुक्कुटादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यादिभक्षणे दोषाभावइति विवरणम् ॥

अभद्रः । त्रि । दुःखरूपे ॥

अभयम् । न । वीरणमूले ॥ उशीरे ॥ गर्भवासादि दुःखाभावे ॥ मोक्षे ॥ अशेषभयनिवृत्तिसाधने आत्मदर्शने ॥ त्रि । भयशून्ये । सर्वपरिग्रहशून्ये एकाकिनि ॥ शास्त्रोपदिष्टेऽर्थे सन्देहंविनाऽनुष्ठाननिष्ठे ॥ पुं । यात्रायोगान्तरे । यथा । उत्तमूलत्रिकोणेषु वर्त्तेतेगुरुभार्गवौ । अभयाभिधयोगोयंभयंकरविनाशनइति ॥ अन्यच्च । यद्येकादशगश्चन्द्रो भानुर्वाप्रबलःशुभः । अभयोनामयोगोयमरिभूतविनाशकृदिति ॥ नभयमस्मात् ॥ आत्मनि ॥ आत्मातिरिक्तस्यकस्यचिदभावात् ॥

अभयडिण्डिमः । पुं । युद्धवाद्यविशेषे । रणतूर्य्ये । सङ्ग्रामपटहे ॥

अभया । स्त्री । हरीतक्याम् । पञ्चरेखा भवेदेकाऽभयानाम्ना ... चिह्निताम्‌ ॥ नेत्ररोगेप्रशस्तेयम् । नभयमस्याः ॥

अभवः । पुं । मोक्षे ॥

अभव्यः । त्रि । अविनीते । निर्भाग्ये ।

अभिख्या

नभव्यः ।

अभावः । पुं । मरणे । असत्त्वे । द्रव्या-दिषट्कभिन्ने । स चतुर्विधोयथा । प्रागभावःप्रध्वंसाभावः अन्यन्ताभावः अन्योन्याभावश्चेतितत्संसर्गः । संसर्गाभावोऽन्योन्या भावश्चेतिद्विविधोऽभाव इतिभार्षापरिच्छेदः । नाशे । त्रि । प्रेमशून्ये । भावहीने । भाव स्थायिभावादिरिक्त्वालङ्कारिकाः ।

अभावसम्पत्तिः । स्त्री । चार्ट्येयेर्मि व्यासवृद्दौ ।

अभाषणम् । न । मौने । नभाषणम् । भाषव्यक्तायांवाचि । भावेल्युट् ।

अभि । । इत्थंभूतकथने । आभिमुख्ये । अभिलाषे । वीप्सायाम् । लक्षणे ।

अभिकः । त्रि । कामुके । अभिकामय ते । अनुकाभिकेति साधुः ।

अभिक्रमः । पुं । अभीतयोधादि युद्देश सम्मुखगमने । आरोहणे । इति हेमचन्द्रः । अभिक्रमणम् । क्रमु० । घञ् । नोदात्तेतिवृद्ध्यभावः । अभिक्रम्यतेकर्मणाप्रारभ्यतेइतिव्युत्पत्त्या कर्मारब्धफले । प्रारंभे ।

अभिक्लृप्तः । त्रि । अभिसमर्थिते । अभिप्रकाशिते ।

अभिख्या । स्त्री । अभिधाने । शोभायाम । यशसि । अभिख्यानम् । ख्याप्र

अभिधा

कथने चक्षिङादेशोवा । आतश्चोपसर्ग इत्यङ् ।

अभिगतः । त्रि । सेविते ।

अभिगन्तव्यः । त्रि । अभितःसमासाद्ये । यथाहरामंप्रतिवसिष्ठः । सन्तःसदाभिगन्तव्यायद्यपुपदिशन्तिन । याहिस्वैरकथास्तेषामुपदेशाभवन्तिताः इति ।

अभिगीतम् । न । शोभनगीते ।

अभिगृहीतपाणिः । त्रि । संयोजितहस्ते ।

अभिग्रहः । पुं । अभिग्रहणे । अभियोगे । आभिमुख्येनोद्यमे । गौरवे । अभिग्रहणम् । ग्रहउपादाने । ग्रहवृद्दिश्चप् ।

अभिग्रहणम् । न । चौर्ये । अभिहारे । आभिमुख्येनग्रहणे । अभिग्रहेल्युट् ।

अभिघातः । पुं । प्रहारे । अभिहननम् । हन० । घञ् । हनस्तोचिण्णलोः । हो हन्तेरितिकुत्वम् । क्रियाविशिष्टद्रव्यस्य द्रव्यान्तरेण संयोगविशेषो भिघातः । यथोद्यमितनिपतितमुसलस्योलूखलेन संयोग इतिव्याख्यातारः । सम्बन्धे ।

अभिघातिः । पुं । शत्रौ । अभिघातः । क्तिच् बाहुलकात्सिद्धौ ।

अभिघाती । पुं । रिपौ । अभिहन्तुंशी

लः। सुपीतिणिनिः।

अभिघारः। पुं। अभितः सेचने। घृते॥ इतिराजनिर्घण्टः।

अभिघरः। पुं। दासे। इतिहेमचन्द्रः।

अभिचारः। पुं। हिंसाकर्मणि। अथर्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चाटनादिहिंसात्मककर्मणि इतिभरतः। मारणादिफलकेतान्त्रिकप्रयोगविशेषे। सषड्विधः। मारणमोहनस्तंभनविद्वेषणोच्चाटनवशीकरणभेदादितितन्त्रशास्त्रम्। उपपातकविशेषोयम्। नाशोऽभिचारतोमास्तिधर्मिष्ठानांनसंशयः। अतस्त्वाभिचारंधार्मिकंभूपंवनितामास्तिकंनरम्। वदान्यंसदयंनित्यमभिचारे नयोजयेत्। अभिचरणम्। चरेर्घञ्।

अभिजनः। पुं। कुले। ख्यातौ। जन्मभूम्याम्। कुलध्वजे। अभिजायतेऽस्मिन्। जनीप्रादुर्भावे। हलश्चेतिघञ्। जनिवध्योश्चेति वृद्धिर्न। णिलोपस्यस्थानिवत्त्वाद्वा। अभिजन्यते। कर्मणिघञ् वा। अभितोऽभिमुखो वाजनोजन्मास्य॥ अभिजनोनाम यत्र पूर्वैरुषितमिति भाष्यम्।

अभिजनवान्। त्रि। कुलीने। अभिजनोऽस्यास्ति। मतुप्। वत्वम्।

अभिजातः। त्रि। कुलीने। न्याय्ये। पण्डिते। यथा। नन्वेच्छितव्यंयच्चादो स्त्रीपुनामकुलंवदेत्। सङ्कीर्णनाभिजातेपुनाप्रवृद्धेपुसंस्कृतमिति। अभिजायतेस्म। जनीप्रादुर्भावे। गत्यर्थेतिक्तः।

अभिजातकोविदः। पुं। जातककर्मकोविदे। जातकज्ञे।

अभिजित्। न। नक्षत्रविशेषे। उत्तराषाढायाश्चतुर्थांशस्य श्रवणादिचतुर्दण्डस्यचसंज्ञाऽभिजिदिति। अत्र जातस्यफलं यथा। अतिसुललितकान्तिः संमतःसज्जनानांननु भवतिविनीतश्चारुकीर्त्तिःसुवेशः। द्विजवरसुरभक्तो व्यक्तवाङ्मानवःस्यादभिजितियदिसूतिर्भूपतिः स्वस्ववंशे। इतिकोष्ठीप्रदीपः। यात्रामुहूर्त्तान्तरे। यथा। मध्यंव्योमिप्रयातेस्फुरदनलनिभेकेशरे चार्कबिम्बेछायासाक्षीचकान्ता प्रचलतिपुरुषे यत्रतत्रादृश्या। तावत्सौरेर्नदृष्टिःकुजकृतमशुभं नैवनष्टंचनयोगः सन्मानारोग्यसम्पत् चितिमर्थयुवतीतत्रगन्तालभेत। अभिमुखोभूयजयतिप्रतिपक्षानेनेन। जि०। क्विप्। कुतपकालइतिप्रसिद्धेदिवसस्याष्टमेमुहूर्त्ते। यथा। अपराह्णेतुसम्प्राप्तेअभिजिद्रौहिणोदये। यदत्रदीयतेजन्तो

अभिनन्दनः । पुं । बुद्धभेदे । चतुर्थतीर्थंकरजिनेयम् । न । स्तवने । त्रि । सर्वतो भावेनानन्दजनके । अभितो नन्दनः ॥

अभिनयः । पुं । विवक्षितार्थप्रतिपत्त्यर्थं असाधारणे शारीरव्यापारे । व्यञ्जके । अन्तर्गतभावस्य व्यञ्जके ऽङ्गचेष्टाविशेषे ॥ अभिनयश्चतुर्द्धा । वाचिकाङ्गिकाऽऽहार्यसात्त्विकभेदात् । विशेषो दशरूपकादिष्वनुसंधेयः । अभिनयत्यर्थम् । पचाद्यच् ॥

अभिनवः । पुं । स्तोत्रे । त्रि । नूतने । अभिनूयते । णुस्तुतौ । ऋदोरप् ॥

अभिनवतामरसम् । न । तामरसाख्ये जगतीछन्दोभेदे ॥ अभिनवतामरसं नजजाय इति लक्षणलक्षिते ॥

अभिनवोद्भिद् । पुं । अङ्कुरे । उद्भिनत्ति भुवम् । भिदिर् विदारणे । सत्सूद्विषेति क्विप् । अभिनवश्चासावुद्भिच्च ।

अभिनहनम् । न । बन्धने । मुसक इति भाषा ।

अभिनिर्मुक्तः । पुं । सूर्यास्तकाले निद्राऽऽसक्ते ब्राह्मणादौ ॥ अभिसर्वतःसायंतनेनकर्मणा निश्चयेनमुक्तः । अभिसर्वैसायन्तनकर्मनिश्चयेनमुक्तयेनवा ॥

अभिनिर्याणम् । न । विजिगीषोः प्रस्थितौ । गमने । अभिनिर्पूर्वात् यातेर्ल्युट् ॥

अभिनिविष्टः । त्रि । अभिनिवेशविशिष्टे । दुराग्रहग्रस्ते ॥

अभिनिवेशः । पुं । अन्धतामिस्रे । पञ्चमक्लेशे । सचआयुरभावेऽप्यतः शरीरेन्द्रियादिभिरनित्यैरपिवियोगोमाभूदित्याशिषद्धनामाऽस्वाभाविकः सर्वप्राणिसाधारणोमरणत्रासरूपोविपर्ययविशेषः । मनोयोगे । आग्रहे । अभितोनिवेशः ॥

अभिनिष्टानः । पुं । अक्षरभावे । विसर्जनीये । विसर्गे ॥ अभिनिस्तननम् । स्तन० । भावे घञ् । अभिनिसःस्तनःशब्दसंज्ञायामितिमूर्द्धन्यः ॥

अभिनिष्पत्तिः । स्त्री । सिद्धौ । उत्पत्तौ ॥

अभिनिस्तानः । पुं । अभिनिष्टाने ॥ षत्वाभावेमूर्द्धन्याभावः ॥

अभिनीतः । त्रि । न्याय्ये । क्रोधने । अमर्षिणि । संस्कृते । अभिनीयतेस्म । णीञ् प्रापणे । क्तः ।

अभिनीतिः । स्त्री । अभिनये ।

अभिनेता । त्रि । नाटकप्रसिद्धे अभिनयकर्त्तरि । स्वांगी स्वांगवाला इति भाषा प्रसिद्धे ।

अभिपन्नः । त्रि । अपराद्धे । अभिग्रस्ते । आपद्गते । स्वीकृते । आभिमुख्येन प्राप्ते । अभिद्रुते । अभिपद्यतेस्म ।

पद्गतौ । गत्यर्थेतिक्तः । कर्मणि वा ॥
अभिमसारी । पुं । वेदमसिद्ध क्षत्रियविशेषे । काचसेनौ ॥
अभिमायः । पुं । आशये । मानससम्मतौ । अभिमयणम् । प्रीणितर्पणे । घञ् ।
अभिमेतः । त्रि । सम्मते । अभिप्रायविषयीभूते । अभीष्टे । अभितः प्रेतिसम्मतिम् । इण् । क्तः ॥
अभिभवः । पुं । अनादरे । जये । गर्वनाशे । भावे घञ् ।
अभिभूतः । त्रि । गर्वासे । पराभूते । आलेगर्वे । इतिकर्तव्यतामूढे । आनरक्षिते । आकुले । अभिभूयतेस्म । अकर्मकत्वात्कर्तरिक्तः ।
अभिभूतिः । स्त्री । निकारे । अवमानसे ॥
अभिमतः । त्रि । सम्मते । आदृते । अभीष्टे ।
अभिमन्त्रणम् । न । निमन्त्रणे । आह्वाने । आकारणे । आङ् मन्त्र० ल्युट् ॥
अभिमन्युः । पुं । अक्षिरोगे । अधिमन्थे । सयन्तुविधः । यथा । हन्याद्दृष्टिंश्लेष्मिकः संसरावादधिमन्थोरक्तजः पश्वरात्रात् । षड्रात्राद्वैवातिकः संनिपाता न्मिथ्याचारात् पैत्तिकः सद्य एवेतिमाधवः ॥
अभिमन्युः । पुं । अर्जुनात्सुभद्रायामुत्पन्ने ॥
अभिमन्युसुतः । पुं । परीक्षिते । औत्तरेये ।
अभिमरः । पुं । युद्धे । वधे । स्ववलसाधने । इतिमेदिनीकारः । संकेतस्वलनिर्गमे । स्ववलसाध्वसे । इति हेमचन्द्रः । प्राणानिरपेक्षोयोद्रव्यहेतोर्व्याडिहस्तिनंवा योधयति सोऽभिमरइत्यके ।
अभिमर्दः । पुं । मद्ये । युद्धे । मद्ययुद्धयोरिति हेमचन्द्रः । पीडने । अभिमर्दनम् । मर्दचोदे । घञ् ।
अभिमर्शः । पुं । घाते ।
अभिमर्शितः । त्रि । स्पृष्टे ।
अभिमानः । पुं । अहङ्कारवृत्तौ । धनस्वजनादिनिमित्ते मदहृदयधारणहेतौ गर्वविशेषे । आत्मन्यत्यन्तपूज्यत्वातिशयाध्यारोपे । अर्थादिदर्पे । आदिना कुलपशुगुणादिग्रहः । ज्ञाने । प्रणये । हिंसायाम् । अभिमन्यते आनः । अभिमननम् । मनज्ञाने । घञ् । मीञ्हिंसायांवा । मीनाती त्यात्वम् ।
अभिमानितम् । न । सुरते । त्रि । अभि

अभिलावः । पुं । छेदने । लवने । अभिलवनम् । लूञ् छेदने । निरभ्योः पूल्वोरिति घञ् ।

अभिलाषः । पुं । लोभे । मनोरथे । अभिलषनम् । लषकान्तौ । घञ् । भोग्यवस्तुनि । अभिलष्यते । कर्म्मणि घञ् । सङ्गमेच्छायाम् ।

अभिलाषी । त्रि । इच्छावति । अभिलाषयुक्ते ।

अभिलाषुकः । त्रि । लुब्धे । अभिलष्यति । लषकान्तौ । लषपतपदेत्युकञ् ।

अभिलासः । पुं । अभिलाषार्थे । अभिलसनम् । लसश्लेषणक्रीडनयोः । घञ् ।

अभिवादः । पुं । प्रणामे । अभिवदनम् । वदेर्घञ् ।

अभिवादकः । त्रि । प्रणामयुते । वन्दारौ । वन्दनशीले । अभिवादयति । वदिअभिवादनस्तुत्योः । ण्वुल् ।

अभिवादनम् । न । पादग्रहणे । नामोच्चारणपूर्वकसंस्कृतप्रयोगेण नमस्कृतौ । वाचानतौ । अभिमुखीकरणार्थं चोदनं वदनम् । वदवाक्संदेशयोः चुरादिः । ल्युट् । अभिमुखे नयाश्रित्ते आशीःकार्यतेऽनेनवा । ण्यन्तादवदेः करणे ल्युट् । अभिवादनविधिमाह मनुः । अभिवादात् परं विप्रो ज्यायांसमभिवादयन् । असौनामाहमस्मीति स्वं नाम परिकीर्त्तयेत् । नामधेयस्य ये केचिदभिवादं न जानते । तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च । भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः इति । तथाच अभिवादये शुभशर्म्माहमस्मि भोः इत्यभिवादनवाक्यम् । तन्निषेधो यथा । समित्पुष्पकुशाज्यात्मपुष्पान्नहस्तो नाभिवादये चाप्यविंयुक्तमिति बौधायनः । जमयत्तु जलस्थञ्च समितपुष्पकुशानलान् । दन्तकाष्ठञ्च भस्यञ्च वहन्तं नाभिवादयेदिति लघुहारीतः । अन्यत्रापि । समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमञ्च कुर्व्वाणो नाभिवाद्यो द्विजो भवेदिति ।

अभिवाद्यः । त्रि । अभिवादनार्हे ।

अभिविधिः । पुं । तेनसहेत्यर्थे । व्याप्तौ ।

अभिविनीतः । त्रि । सर्व्वतःशिक्षिते ।

अभिविमानम् । न । आभिमुख्येन विश्वं मिमीते जानातीति योगात् वैश्वानरात्मनि ।

अभिव्यक्तः । त्रि । सर्व्वतःप्रत्यक्षे ।

अभिव्यक्तिः । स्त्री । प्रत्यक्षे । उद्भूते । अभितोव्यक्तिः ।

अभिव्याप्तिः । स्त्री । साकल्येन योगे । सम्पूर्णते । सर्वतोव्याप्तौ ॥ अभिव्यापनम् । आप्ल्व्याप्तौ । क्तिन्नादिभ्य इति क्तिन् ॥

अभिशंसनम् । न । अभिकथने ।

अभिशपनम् । न । अभिशापे ।

अभिशस्तः । त्रि । शापग्रस्ते ॥ मातामिशापे ।

अभिशस्तः । पुं । न्वमे । अभितःशस्तः प्रशस्तः ॥ त्रि । स्वर्णापवादग्रस्ते । परस्त्रियां परपुरुषेण मैथुनं प्रतिमिथ्या दूषिते । शापग्रस्ते । आचारिते । अनिर्णीतेपितस्मिन्महापातकादौ जाताभिशापे । अभिशस्यतेस्म । श्र सु हिंसायाम् । क्तः । यस्य विभाषेति नेट् । घृघिशसीतिवा ।

अभिशस्तिः । स्त्री । लोकापवादे । प्रार्थनायाम् । याच्ञायाम् ॥ अभिशंसनम् । शंसुस्तुतौ याचनेच । स्त्रियां क्तिन् ।

अभिशापः । पुं । मिथ्याभिशंसने । त्वं चौरस्त्वं त्वयैतत्कृतमित्यादिमिथ्यादूषणाभिधायकेवाक्ये । वह्निरागुरुद्विजसिद्धानामनिष्टाभिशंसने ॥ अभिशपनम् । शपआक्रोशे । घञ् ।

अभिषङ्गः । पुं । पराभवे । आक्रोशे । शपथे । सर्वतोभावेनसङ्गे । भूताद्यावेशे । अभिषञ्जनम् । षञ्जसङ्गे । घञ् । उपसर्गादितिषः ।

अभिषवः । पुं । अवभृथस्नाने । यज्ञे । स्नपने । पीडने । मद्यसन्धाने । सुराकरणे । सुरोत्पादनप्रकारे । सवने । सुत्यायाम् । अभिपूयते अभिषवणंवा । षुञ् अभिषवे । ऋदोरप् । उपसर्गादितिषः ॥ न । काञ्जिके ॥ इतिचस्त्रायुधः ॥

अभिषवणम् । न । स्नाने । षुञ० । ल्युट् ।

अभिषह्य । । प्रसह्यार्थे । अभिषोढ्वा । षहमर्षणे । क्त्वा । ल्यप् ।

अभिषिक्तः । त्रि । अभिषेचिते ।

अभिषिषेणयिषुः । त्रि । सेनयाऽभियातुमिच्छति । सत्यापपाशेत्यादिना सेनाशब्दाण्णिचि सनि सनाशंसेच्छुः । स्थादिष्वितिधात्वभ्याससकारयोः षत्वम् ।

अभिषुतम् । न । काञ्जिके । अभिषूयतेस्म । षुञ् अभिषवे । क्तः । उपसर्गादितिषत्वम् ।

अभिषेकः । पुं । शान्तिस्नाने । स्नाने । रुद्राभिषेकादौ । पूर्णाभिषेकशाक्ताभिषेकराजाभिषेकादिपदवाच्ये अधिकारमाप्त्यर्थंस्नाने ॥ मार्जने । अभिषेचनम् । षिच० । घञ् । जले । अभिषिच्यतेऽनेन घञ् ।

अभिषेचनम् । न । अभिषेके । विष० । ल्युट् ।

अभिषेणनम् । न । शत्रोरभिमुखगतौ । युद्धयात्रायाम् । यत्तेनयाभिगमनमरौ तदभिषेणनम् । सेनयाऽभियानम् । सत्यामितिसेनाशब्दात्णिच् । ल्युट् । उपसर्गात्सुनोतीतिषत्वम् ।

अभिष्टुतम् । त्रि । स्तुते । वर्णिते । ईडिते । अभिष्टूयतेस्म । ष्टुञ् स्तुतौ । क्तः ।

अभिष्यन्दः । पुं । अतिवृद्धौ । आस्रावे । अक्षिगदविशेषे । अभिष्यंदनम् । स्यंदू० घञ् ।

अभिष्यन्दिरमणम् । न । शाखानगरे । प्रधाननगरसन्निहितनगरे । इतिजटाधरः ।

अभिष्वङ्गः । पुं । उत्कटरागे । अन्यस्मिन्नहंबुद्धौ । अभिष्वञ्जनम् । ष्वञ्ज० । घञ् ।

अभिसंरब्धः । त्रि । कुपिते ।

अभिसंवृत्तिः । स्त्री । व्यवहारे ।

अभिसन्तापः । पुं । युद्धे । अभिशापे । अभितः सन्तापोऽत्र ।

अभिसन्धः । पुं । सत्यस्याभिमाने ।

अभिसन्धानम् । न । वञ्चने । प्रतारणे ।

अभिसन्धिः । पुं । अभिसन्धाने । उद्देशे ।

अभिसम्पातः । पुं । युद्धे । अभिसम्पतनम् । पत्लृ गतौ । घञ् ।



अभिसरः । त्रि । अनुचरे । सहाये । अभितः । सरति । सृ गतौ । पचाद्यच् ।

अभिसर्जनम् । न । दाने । वधे । अभिपूर्वात् सृजेर्भावे ल्युट् ।

अभिसारः । पुं । बले । युद्धे । सहाये । साधने । स्त्रीपुंसयोरन्यतरस्याऽन्यतरार्थं सङ्केतस्थानगमने । अभिसारणम् । सृ० । घञ् ।

अभिसारिका । स्त्री । नायिकाविशेषे । सङ्केतस्थलेस्वयङ्गमनकर्त्र्याम् । एवं प्रियगमनकारयित्र्याम् । कान्तार्थिनीतुयायातिसङ्केतंसाभिसारिका । इत्यमरः । भरतश्च । हित्वालज्जाभये श्लिष्टामदनेमदनेनच । अभिसारयतेकान्तंसाभवेदभिसारिकेति । अभिसरति । सृ गतौ । ण्वुल् ।

अभिसारिणी । स्त्री । अभिसारिकायाम् ।

अभिसृष्टः । त्रि । दत्ते ।

अभिहतः । त्रि । विद्धे । ताडिते ।

अभिहारः । पुं । अभियोगे । अभिगम्याक्रमणे । अभिग्रहणे । अभिमुखेन ग्रहणे । चौर्ये । कवचादिधारणे । सन्नहने । मेलने । अभिहरणम् । हृञ् हरणे । घञ् ।

अभिहितम् । त्रि । कथिते । प्रोक्ते ।

भिधीयतेस्म । डुधाञ् धारणपोषणयोः । क्तः । दधातेर्हिः ॥

अभीकः । त्रि । कामुके । क्रूरे । निर्भये । पुं । कवौ । अभिकामयते । अनुकाभिकेतिसाधुः । स्वामिनि ।

अभीक्ष्णम् । न । निश्चये । अत्यर्थे ॥ भृशे । पौनःपुन्ये । अभिक्ष्णौति । क्ष्णु तेजने । बाहुलकादमुः । अन्येषामपीतिदीर्घः ॥ यद्वा । अभिक्ष्णायनम् । क्ष्णु तेजने । डम् । पृषोदरादित्वाद भेर्दीर्घः ॥ भीघे । प्रकर्षे ॥

अभीक्ष्णम् । न । भृशे । पौनःपुन्ये । नित्ये । सर्वदार्थे । त्रि । भृशयुक्तक्रियायाम् । नित्ययुक्तक्रियायाम् ॥

अभीतः । त्रि । अभिव्याप्ते अभिपूर्वात् इणः क्तः । अभितंइतोवा ॥ निर्भये । नभीतिः ॥

अभीप्सितम् । त्रि । वाञ्छिते । अभीष्टे । अभ्याप्तुमिष्यतेस्म । आप्व्याप्तौ सनन्तः । आप्ज्ञप्यृधामीत् । क्तः ।

अभीरः । पुं । आभीरे । गोपे । अभि ईरयति । ईरगतौकम्पनेच । पचाद्यच ।

अभीरुः । त्रि । निर्भये । स्त्री । शतमूल्याम् । नभीरुः । स्थिरपत्रत्वात् ।

अभीरुपत्री । स्त्री । शतमूल्याम् । अभीरूणि पत्राण्यस्याः । पाककर्णेति ङीष् ।

अभीशुः । पुं । प्रग्रहे । किरणे । रश्मौ ।

अभीषङ्गः । पुं । आक्रोशने । शापे । षञ्जसङ्गे । घञ् । उपसर्गस्य घञीति दीर्घः ॥

अभीषुः । पुं । किरणे । अश्वास्यरज्जौ । प्रग्रहे । कामे । अनुरागे । त्रि । इच्छति । ईषतेहिनस्ति ईष्यतेवा । ईषगतिहिंसादर्शनेषु । ईषेः किच्च । आदेरिकारादिशश्च । अभिगतईषुः । प्रादयोगतेति समासः ॥

अभीष्टः । त्रि । ईप्सिते । प्रिये । अभितइष्यतेस्म । इषुइच्छायाम् । क्तः ॥

अभीष्टा । स्त्री । रेणुकाभिधगन्धवस्तुनि ।

अभुक्तः । त्रि । उपवासिनि । यथा अभुक्तस्यदिवानिद्रापापांशुमपिजीर्यतीति । अकृतभोजनेवस्तुनि ।

अभुक्तमूलः । पुं । न । ज्येष्ठान्त्यघटीचतुष्टयसहितमूलाद्यघटीचतुष्टये ॥ ज्येष्ठान्त्यैकघटीसहितमूलाद्यघटिकाद्वये ॥ ज्येष्ठान्त्यघटिकाद्वसहितमूलादिघटिकाद्वे ॥ ज्येष्ठान्त्यपञ्चघटिकासहितमूलाद्यवसुनाडिकासु ॥

अभूतः । त्रि । अविद्यमाने ॥

अभूताभिनिवेशः । पुं । असतिअस्तित्वनिश्चये ॥

अभेदः। पुं। ऐक्ये। अवियोगे। नभेदः। यथा। रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि। शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुकयोःस्यादभेदेन कल्पनमिति। यथा वा। गुणगुणिनोः क्रियाक्रियावतोश्चाभेदः।

अभेद्यम्। न। हीरके। त्रि। अभेदनीये।

अभोगः। त्रि। भोगशून्ये। भोगानर्हे। नास्तिभोगोयस्य।

अभोजनम्। न। भोजनाभावे। उपवासे। यथा। अजीर्णे भोजनंयेषां जीर्णेयेषामभोजनम्। रात्रावभोजनंयेषांतेषांनश्यन्तियरतयः इति वैद्यकम्। अपिच। वेदोदितानां नित्यानां कर्मणां समतिक्रमे। स्नातकव्रतलोपेच प्रायश्चित्त मभोजनमिति। नभोजनमितिसमासः।

अभ्यक्तः। त्रि। कृततैलाभ्यंगे। अभितोऽक्तः।

अभ्यग्रम्। त्रि। आसन्ने। समीपे। अभिमुखमग्रमस्य।

अभ्यङ्गः। पुं। तैलमर्दने। स्नेहने। यथा। तैलमल्पंयदङ्गेषु न धस्यादङ्गतर्पणम्। सामान्यैः पृथगभ्यंगोमस्तकादौ प्रकीर्त्तितः। अभ्यङ्गमाचरेन्नित्यं सजराश्रमवातहा। शिरःश्रवणपादेषु तं विशेषेण शीलयेदित्यायुर्वेदः। पादगते चाभिरेऽपिच। पिसम्बद्धेस्तः अतश्चक्षुर्हितार्थिना पादाभ्यङ्गः करणीयः। कफग्रस्तकृतशोधनमनाजीर्णिभिर्नाभ्यङ्गः करणीयः। अपिच। मूर्द्ध्निदत्तं यदा तैलं भवेत्सर्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेद्धातू अभ्यङ्गस्तत्रचेरित इति। तैलादिना शिरस्सहितदेहमर्दने॥

अभ्यञ्जनम्। न। तैले। अभ्यङ्गे। मलापहस्नाने। अभितःअञ्जनम्।

अभ्यधिकः। त्रि। सर्वोत्कृष्टे।

अभ्यनुज्ञा। स्त्री। अनुमतौ। अभितःअनुज्ञा।

अभ्यनुज्ञातः। त्रि। आभिमुख्येनज्ञाते।

अभ्यनूक्तम्। त्रि। प्रकाशिते।

अभ्यन्तरम्। न। अन्तराले। मध्यमाध्ये। अभिगतमन्तरम्।

अभ्यमितः। त्रि। रोगिणि। अभ्यम्यतेस्म। अमरोगे। क्तः। चुरादीनां णिचोवैकल्पिकत्वात् णिजभावे इट्। अभ्यमतिस्मवा। अमगत्यादौ। गत्यर्थेतिक्तः। रुष्यमत्वरेतिवेट्॥

अभ्यमित्रीणः। त्रि। अभ्यमित्र्ये। अभ्यमित्रमसंगामी। अभ्यमित्र्येच्छचेतिखः।

अभ्यमित्रीयः । त्रि । अभ्यमित्र्ये ॥ अभ्यमित्रमलंगामी । अभ्यमित्राच्छ चेतिछः । अमित्राभिमुखंसुष्ठुगच्छतीत्यर्थः ॥

अभ्यमित्र्यः । त्रि । स्वशक्तितःशत्रोरभिमुखंगच्छतीरे । अभ्यमित्रीणे । अमित्रस्याभिमुखम् । लक्षणेनाभिमती इत्यव्ययीभावः । अभ्यमित्रमलंगामी । अभ्यमित्राच्छचेतियत् ॥

अभ्यर्णम् । त्रि । समीपे ॥ अभ्यर्दतेस्म अभ्यर्दतिस्मेतिवा । अर्दगतौ । कर्मणिकर्तरिवाक्तः । अभेस्चाविदूर्यइतीडभावः । रदाभ्यामितिनस्तस्यचणत्वम् ॥

अभ्यर्हितः । त्रि । पीडिते । अभिपूर्वादर्हः क्तः । इट् ॥

अभ्यर्हणीयः । त्रि । पूज्ये ॥

अभ्यर्हितः । त्रि । उचिते ॥ श्रेष्ठे ॥

अभ्यवकर्षणम् । न । शल्यादेः समुत्पाटने । निर्हारे ॥ शस्त्रादेर्युक्त्यानिःसारणे । अभ्यवकृषेर्ल्युट् ॥

अभ्यवस्कन्दः । पुं । रिपोराक्रमणे । निःशतीकरणायशत्रुभिर्दीयमानेप्रहारे । अभ्यासादने । प्रपाते ॥

अभ्यवस्कन्दनम् । न । रिपोराक्रमणे । अभ्यासादने । प्रहारादिना शत्रोर्निःशतीकरणे । बलादाक्रमणे इतिस्वामी ॥ शत्रोःसम्मुखगमने ॥ स्कन्दिर् गतिशोषणयोः । ल्युट् ॥

अभ्यवहारः । पुं ॥ भक्षणे । सचभक्ष्यभोज्यलेह्यपेयचोष्यभेदेन पञ्चविधः ॥

अभ्यवहृतम् । त्रि । भुक्ते ॥ अभ्यवह्रियतेस्म । क्तः ॥

अभ्यसनम् । न । अभ्यासे । पौनःपुन्येनचिन्तने करणेच ॥

अभ्यसूयकः । त्रि । गुर्वादीनां वैदिकमार्गस्थानां कारुण्यादिगुणेषु प्रतारणादिदोषारोपके । अभितोऽसूयकः ॥

अभ्यसूया । स्त्री । गुणेषुदोषारोपे ॥ अभ्यसूयनम् । असूञ् असूयायाम् । कण्ड्वादित्वाद्यकिअप्रत्ययादित्यः ।

अभ्याकाङ्क्षितम् । न । अलीकाभियोगे । मिथ्यादोषा इतिख्याते । अभ्याख्याने । त्रि । ईप्सिते । अभितःआकाङ्क्षितम् ॥

अभ्याख्यानम् । न । मिथ्याभियोगे । शतंमे धारयसीत्यादिमिथ्योद्भावने । मिथ्यावादे । अभ्याङ्पूर्वात्ख्यिङोभावेल्युट् ॥

अभ्यागतः । पुं । अतिथौ । दृष्टपूर्वेगृहागते । त्रि । सम्मुखागते ॥ अभितआगतः । आभिमुख्येन आगतोवा ॥

अभ्यागमः । पुं । विरोधे । समरे । अन्तिके । अभिघाते । अभ्युद्गमने । भोगे । स्वीकारे । फलसम्बन्धे । अभ्यागमनम । गत्यृगतौ । घञ्वृद्धिरत्वम् ॥

अभ्यागारिकः । त्रि । कुटुम्बव्यापृते । पुंदारादिपोषणव्यग्रे । अभ्यागारेनियुक्तः । अगारान्ताट्ठन् । अभिअधिकआगारिकोवा ।

अभ्याघातः । पुं । चौर्याद्यनर्थोपद्रवे ।

अभ्यात्तः । त्रि । अभिव्याप्ते । व्याप्यर्थ्यानीतः कर्तरि कर्मणिवा निष्ठा ।

अभ्यादानम । न । आरम्भे । आभिमुख्येनादानम् ।

अभ्यान्तः । त्रि । रोगिणि । अभ्यम्यतेस्म । अमरोगे । क्तः । चुरादीनांणिचोवैकल्पिकत्वात् णिच्पक्षे ॥ अमतिस्सेवा । अमगत्यादौ । गत्यर्थेतिक्तः । रुष्यमत्वरेतिवेट् । इडभावे अनुनासिकस्येतिदीर्घः ।

अभ्यामर्दः । पुं । रणे । समरे । अभ्यामर्दनम् । मृदक्षोदे । घञ् ।

अभ्याशः । पुं । अभ्यश्यमेव । अन्तिके । अभ्यश्यते । अशूव्याप्तौ । घञ् ।

अभ्यासः । पुं । अभ्यसने । आवृत्तौ । आकर्णनं विचारोजपः शिष्येभ्योदानमावृत्तिश्चेति पञ्चविधोऽभ्यासोभवति ॥ खुरल्यास् । शराभ्यासे । पुं । न । प्रयोगे । संस्कारोवाकुल्योदृढतरसंस्कारे । षड्विधलिङ्गेषु द्वितीयेलिङ्गे । यथोक्तुः । प्रकरणप्रतिपाद्यस्य तन्मध्ये पौनःपुन्येनप्रतिपादनमभ्यासः । यथाछांदोग्येषष्ठप्रपाठके अद्वितीयवस्तुनोमध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनमिति । विजातीयप्रत्ययानन्तरिते सजातीयप्रत्ययप्रवाहे । अतिपरिचये । त्रि । अन्तिके । अभ्यासीदति । अन्येभ्योपीतिडः ।

अभ्यासयोगः । पुं । एकस्मिन् प्रतिमाद्यालम्बने सर्वतः समाहृत्य चेतसः पुनःपुनः स्थापनमभ्यासस्तत्पूर्वकेसमाधौ ।

अभ्यासादनम । न । रिपोरस्त्रादिभिः शत्रीकरणे । अभ्यवस्कन्दने । शत्रोःसम्मुखगमने । षद्लृ विशरणादौ । चुरादिः । ल्युट् ॥

अभ्याहारः । पुं । अभिग्रहणे । चौर्ये । आभिमुख्येनाहरणम् । हृञ्हरणे । घञ् ।

अभ्याहितः । त्रि । उपचिते । इन्धनैरुपचितेग्नौ पुं ।

अभ्युक्तः । त्रि । प्रकाशिते

अभ्युत्थानम । न । गौरवोत्थमभ्युद्गमने । गौरवदृष्ट्वाआसनादेरुत्थाने ।

-उद्यमे । उद्गते ॥ आभिमुख्येनउत्थानम् ॥

अभ्युत्पतनम् । न । आभिमुख्येनोत्पतने ॥

अभ्युदयः । पुं । पराक्रमे ॥ वृद्धिश्राद्धे ॥ अभीष्टानांकार्याणामाभिमुख्येनोदयः प्रादुर्भावोयेनेतिविग्रहः । सर्वतोभावेनधनजनादीनांवृद्धौ ॥ यथा । राजन्नभ्युदयोऽस्तु वस्तनकथे कस्तेकिमास्तेतव श्लोकैः कस्यकवेरमुष्य कृतिनस्तत्पथ्यतांपथ्यते । किन्त्वासामरविन्दसुन्दरदृशां द्राक्चामरान्दोलनादुद्वेलद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्यताम् ॥ अस्यपूर्वार्द्धंवल्लनकविकर्णाटराजयोर्वाक्यं शेषार्द्धं कालिदासस्य ॥

अभ्युदितः । त्रि । सूर्योदयकालेनिद्राकृते । सुप्तेयस्मिन्सूर्यउदितस्तस्मिन् ॥ अभिसर्वतः उदतिश्रयेन दूरं गतं ज्ञातस्तनंकर्मास्मात् । उदिते । प्रकाशिते ॥

अभ्युद्यतम् । त्रि । अयाचितोपनीते ऽन्नादौ । आभिमुख्येन स्थापिते ॥

अभ्युपगतः । त्रि । स्वीकृते । अभ्युपगम्यतेस्म । गम्लृ गतौ । क्तः । अभ्युदिते ॥

अभ्युपगमः । पुं । स्वीकारे । अङ्गीकारे । समीपागमने । अन्तिकसमागमे ।



अभ्युपेत्युपसर्गद्वयपूर्वाद्गमेः अप्वृद्धिनिश्चिगमश्चेत्यप् ॥

अभ्युपगमसिद्धान्तः । पुं । न्यायाश्रयसिद्धान्तविशेषे ॥ यथा । अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः । १ । २१ । अपरीक्षितस्य साक्षादसूचितस्य विशेषपरीक्षणं विशेषधर्मकथनम् । अभ्युपगमादिति ज्ञापकत्वे पञ्चमी अभ्युपगमज्ञापकमित्यर्थः । विशेषपरीक्षणाज्ज्ञायते, सूत्रकृतोऽभ्युपगतमिदमिति । तथाच साक्षादसूचिताभ्युपगमोऽभ्युपगमसिद्धान्तः । यथा मनसइन्द्रियत्वमिति ॥

अभ्युपपत्तिः । स्त्री । अनुग्रहे । हितसम्पादनाहितनिवारणमर्थे ॥ अभ्युपपदनम् । पद गतौ । क्तिन् ॥

अभ्युपायः । पुं । स्वीकारे । इतिहेमचन्द्रः ॥ उपाये । यथा । तत्स्वीकृतव्यतिकरे कइहाभ्युपायइतिकाव्यप्रकाशः ॥

अभ्युपायनम् । न । उपढौकनद्रव्ये । उपायने ॥ यथा । तायानय समं गोपैर्नन्दाद्यैः साभ्युपायनैरितिविष्णुभागवतम् ॥

अभ्युपेतः । पुं । उपगते । स्वीकृते ॥

अभ्युषः । पुं । ईषत्पक्वे । भर्जिते ॥

षायंमधुरं सुशीतमायुष्करंधातुविवर्द्धनंच। हन्यात्त्रिदोषंव्रणमेहकुष्ठप्लीहोदरग्रंथिविषकृमींश्च ॥ रोगान्हन्तिदृढयतिवपुर्वीर्यवृद्धिंविधत्ते तारुण्याढ्यंरमयतिशतंयोषितांनित्यमेव। दीर्घायुष्कान्जनयति सुतान्विक्रमैः सिंहतुल्यान् मृत्योर्भीतिंहरतिसततंसेव्यमानंमृताभ्रमिति ॥ अथाशोधिताभ्रस्यदोषाः। पीडांविधत्ते विविधांनराणां कुष्ठंक्षयंपाण्डुगदंचशोथम्। हृत्पार्श्वपीडांचकरोत्यसह्यामशुद्धमभ्रं गुरुवह्निहृत्स्यात् ॥ अस्यशोधनविधिर्यथाः। कृष्णाभ्रकंधमेद्वह्नौ ततः क्षीरेविनिःक्षिपेत्। भिन्नपत्रंतुतत्कृत्वातण्डुलीयाम्लयोर्द्रवैः। भावयेदष्टयामंतदेवमभ्रं विशुध्यति। मारणन्तु। कृत्वाधान्याभ्रकंतच्चशोधयित्वाथमर्दयेत्। अर्कक्षीरैर्दिनंखल्वेचक्राकारंचकारयेत्। वेष्टयेदर्कपत्रैस्तसम्यग्गजपुटेपचेत्। पुनर्मर्द्यंपुनः पाच्यंसप्तवारान् पुनःपुनः ॥ ततोवटजटाकाथैस्तद्वद्देयंपुटत्रयम्। म्रियतेनात्रसन्देहः प्रयोज्यंसर्वकर्मसु। तुल्यंघृतंमृताभ्रेणलोहपात्रेविपाचयेत्। घृतेजीर्णेतदभ्रन्तु सर्वयोगेषुयोजयेदिति भावप्रकाशः।

अभ्रति अभ्रयतेवा। अभ्र॰। कुन्।



अभ्रस्याकृतिर्वा। इवे प्रतिकृताविति कन्।

अभ्रङ्कषः। पुं। समीरणे। अभ्रंकषतिहिनस्तीतिविग्रहे सर्वकूलाभ्रेत्यादिनाकषेः खच्प्रत्ययः। मुमागमः।

अभ्रपिशाचः। पुं। राहौ। इतित्रिकाण्डशेषः।

अभ्रपुष्पम्। न। जले। अभ्रस्यपुष्पमिव। पुं। वेतसे। अभ्रमिव अभ्रसमः थेवा पुष्पमस्य।

अभ्रमांसी। स्त्री। आकाशमांसीलतामाम्। इतिराजनिर्घण्टः।

अभ्रमातङ्गः। पुं। ऐरावणे। अभ्रंमेघस्तदात्मकोमातङ्गः। शाकपार्थिवादिः। अभ्रे आकाशे मेघेवा विद्यमानोमातङ्ग इतिवा।

अभ्रमुः। स्त्री। ऐरावतपत्न्याम्। अभ्रेखेमाति मन्थरगामिनीत्वात्। बाहुलकाद्‌डुः। अभ्रे आकाशएवमाति। मामाने। मितद्र्वादित्वाड्डुर्वा। न भ्राम्यति। भृत्वचरीत्युः। मन्थरगामिनोत्थिर्थ इतिवा।

अभ्रमुप्रियः। पुं। अभ्रमातङ्गे। अभ्रमोः प्रियः।

अभ्रमुवल्लभः। पुं। ऐरावणे। अभ्रमोर्वल्लभः।

अभ्ररोहम्। न। वैदूर्यमणौ। इति

राजनिर्घण्टः ॥

अभ्रलिप्ती । स्त्री । अल्पैरभ्रैर्लिप्ताथादि वि,। अल्पैरभ्रैर्लिप्ता का इत्याख्यायामितिङीष् ।

अभ्रवाटिकः । पुं । आम्रातके ॥ इतिराजनिर्घण्टः ॥

अभ्रावकाशकः । पुं । तापसान्तरे । यो वातातपवर्षेषु केवलमाकाशे असंवृतप्रदेशे तपश्चरतिसोऽभ्रावकाशकः ।

अभ्रिः । स्त्री । काष्ठकुद्दाले । नौमलोत्सारके । पोतादेर्मलापनयनार्थं काष्ठघटितकुद्दाले । अभ्रति । अभ्र गतौ । सर्वधातुभ्यइन्निति इन् ।

अभ्रियम् । त्रि । मेघभवे । अभ्रेभवम् । समुद्राभ्राद्घः । छान्दसत्वं प्रायिकम् ॥ स्त्रियामभ्रिया ।

अभ्री । स्त्री । काष्ठकुद्दाले, ॥ अभ्रति । अभ्रगतौ । सर्वधातुभ्यइतिइन् । कृदिकारादितिङीष् ।

अभ्रेषः । पुं । न्याये । उचिते । भ्रेषणम् भ्रेषः । भ्रेषृचलने । घञ् । भ्रेषादन्य. ॥

अभ्रोत्थम् । न । कुलिशे । त्रि । अभ्रभवे ।

अम । । अल्पे । शीघ्रतायाम् । इति व्यादि ।

अमः । पुं । रोगे ॥ त्रि । अपक्वफलादौ ।

अमङ्गल । पुं । एरण्डवृक्षे ॥ त्रि । मङ्ग-



लहीने । अशुभसूचके ।

अमण्डः । त्रि । मण्डहीने ।

अमतः । पुं । मृत्यौ । काले । रोगे । त्रि । असंमते । अविज्ञाते । अतति । अमति । अमगत्यादिषु । भृमृदृशियजीत्यादिनाऽतच ।

अमतिः । पुं । काले । दण्डे । चन्द्रे । त्रि । दुष्टे । अमति । अमगत्यादिषु । अमेरतिः ।

अमत्रम् । न । भाजने । भाण्डे । अमति-अत्रमत्र । अमगत्यादिषु । अमिनक्षियजिवधिपतिभ्योऽत्रन् ।

अमदनः । पुं । शिवे ।

अमनाः । त्रि । स्नेहशून्ये ।

अमनस्कः । त्रि । अप्रगृहीतमनस्के । पुं । योगग्रन्थविशेषे ।

अमनिः । स्त्री । वर्त्मनि । गतौ ॥ अमति । अमगत्यादिषु । अर्त्तिसृधृ इत्यादिनाऽनिः ।

अमन्दः । त्रि । धृष्टे ॥ मन्दभिन्ने ॥

अमम. । पुं । भाविजिनविशेषे ॥ त्रि । ममताहीने ॥

अमर. । पुं । सुरे ॥ अष्टशाब्दिकान्तर्गतवैयाकरणविशेषे । येननामलिङ्गानुशासनंकृतम् ॥ विक्रमादित्यसभास्थनवरत्नान्तर्गतरत्ने ॥ अयवी इतिकथित । स्नुहीवृक्षे । पारदे ।

अस्थिसंहारे। त्रि०। मरणवर्जिते। नम्रियते इतिअमरः। मृङ्प्राणत्यागे तुदादि०। पचाद्यच्।

अमरजः। पुं०। खदिरवृक्षभेदे। कालस्कन्धे। पत्तरौ।

अमरदारु। पुं०। देवदारुवृक्षे।

अमरद्विजः। पुं०। देवले। देवाजीवे। पुजारीति प्रसिद्धे। अमराणांद्विजः।

अमरपुष्पकः। पुं०। काशे। इक्षुगन्धायाम्। इतिरत्नमाला।

अमरपुष्पी। स्त्री। अवाक्पुष्प्याम्। अधःपुष्प्याम्।

अमरप्रभुः। पुं०। विष्णौ। अमराणांप्रभुः।

अमररत्नम्। पुं०। स्फटिके। इतिराजनिर्घण्टः।

अमरवल्लरी। स्त्री। आकाशवल्ल्याम्।

अमरा। स्त्री। गुडूच्याम्। अमरावत्याम्। दूर्वायाम्। स्थूणायाम्। जरायौ। इन्द्रवारुण्याम्। वटीवृक्षे। महानील्याम्। घृतकुमार्याम्। नाभिनालायाम्। नम्रियते मृङ्प्राणत्यागे। पचाद्यच्। टाप्।

अमराद्रिः। पुं०। सुमेरौ। अमराणामद्रिः।

अमरालयः। पुं०। स्वर्गे। अमराणामालयः।



अमरावती। स्त्री। इन्द्रपुर्याम्। यथा। नानारत्नप्रभाजालमण्डलालङ्कृता हरेः। सिद्धसाध्यमरुज्जुष्टा जम्भारेरमरावतीति। अमराः सन्त्यस्याम्। मतुप्। मतौबह्वचोनजिरादीनामितिदीर्घः।

अमरेशः। पुं०। अमरकण्टकतीर्थस्थदेवे। अमरेशोऽमरकण्टकस्त्यागमोक्तेः। अपिच। अमरेशमहापीठे कुशस्थलसंज्ञकः। तत्रदुर्गाद्वयंनाम चण्डिकाचमहेश्वरीति।

अमर्त्यः। पुं०। विबुधे। नम्रियते। अमर्त्यः। नमर्त्यः इतिनञ्समासोवा।

अमर्त्यनदी। स्त्री। गङ्गायाम्। अमर्त्यानांनदी।

अमर्त्यभुवनम्। न०। स्वर्गे। अमर्त्यानांभुवनम्।

अमर्षः। पुं०। कोपे। क्रुधि। परोत्कर्षासहनरूपेचित्तवृत्तिविशेषे। कृतापराधे स्वसमर्थस्यद्वेषे। अमर्षणम्। मृषतितिक्षायाम्। भावेघञ्। नञ्समासः।

अमर्षणः। त्रि०। क्रोधने। नमर्षणशीलः। युच्। असहने।

अमलम्। न०। अभ्रके। त्रि०। निर्मले। रजस्तमोमलरहिते। अमति। अम गतौ। वृषादिभ्यश्चित्। नम

अमस्येतिवा ।

अमला । स्त्री । लक्ष्म्याम् ॥ भूम्यामल-कयाम् ॥ सातलावृक्षे । नाभिनाला याम् । टाप् ।

अमलात्मा । पुं । निवृत्तरागादिमले ।

अमस: । पुं । काले । निर्बोधे । रोगे ।

अमहात्मा । पुं । क्षुद्रहृदये । नमहात्मा ।

अमा । । सहार्थे । निकटे ॥ नमाति मा माने । किप ।

अमा । स्त्री । दर्शे । अमावास्यायाम् ॥ नामैकदेशेनामग्रहणात् । चंद्रलोकस्त्वमूर्यदीधिती ॥

अमांस: । त्रि । दुर्बले ॥ अल्पमांसयुक्ते । मांसरहिते ॥ नमांसमस्य । अल्पार्थेनञ् ।

अमांसाशी । त्रि । निरामिषाशिनि ॥ यथा । नभक्षयेत् वृथामांसममांसाशी भवत्यपीतिशान्तौ मोक्षधर्मे भीष्म: ।

अमात्य: । पुं । मन्त्रिणि । यथा । शान्तो विनीत:कुशल: सत्कुलीन:शुभान्वित: । शास्त्रार्थतत्त्वगोऽमात्योभवेद्भूमिभुजामिहेतियुक्तिकल्पतरु: । त्रि । सहभवे । अमासह समीपेवाभव: । अव्ययात्त्यप् ।

अमाव: । त्रि । कार्यकारणभावशून्येतु-रीयेपरमात्मनि । मायापरिच्छित्ति: सानविद्यतेयस्यस: । निर्धने ।

अमानम् । न । अनादरे ॥ नमाननम् ।

अमानस्यम् । न । पीडायाम् । त्रि । पीडायुक्ते । मानसाय हितम् मानसे-साधुवा । उगवादित्वात् तचसाध्विति वायत् । नमानस्यममानस्यम् ।

अमामसी । स्त्री । दर्शे । कृष्णपक्षान्ततिथौ ।

अमामासी । स्त्री । अमावास्याम् ।

अमावसी । स्त्री । अमामस्याम् ॥

अमावस्या । स्त्री । अमायाम् । अमासहवसतोऽस्याम् चन्द्रार्कावित्यमेरपवादाद्वे रमावस्यदन्यतरस्यामित्यधिकरणे यत् पाचिकोह्रस्वश्चनिपातसिद्ध: ॥ सूर्याचन्द्रमसोर्य: पर:सन्निकर्ष: सामावस्येतिगोभिल: । पर:सन्निकर्षश्चउपर्यधोभावा पन्नसमसूत्रन्यायेनैकरावच्छेदेन सत्तावस्थानरूपोबोध्य: ।

अमावासी । स्त्री । दर्शे । इतिशब्दरत्नावली ।

अमावास्या । स्त्री । दर्शे ॥ अमासहवसतोऽस्यांचन्द्राकौ । अमावस्यदन्यतरस्यामितिण्यत् । णित्त्वाद्वृद्धि: ।

अमित: । त्रि । अपरिच्छिन्ने ॥ अपरि

च्छेदे ॥

अमितौजाः। त्रि। अमितवीर्यशालिनि ॥ अमितमपरिच्छेद्यमोजः सामर्थ्यं यस्य ॥

अमित्रः। पुं। रिपौ ॥ अमति गच्छति अमगतौ रोगेवा। अमेर्द्विषतिचिदिति इत्रः ॥

अमी। त्रि। रोगिणि ॥ अमोरोगस्तद्वान्। इनिः ॥

अमीवम्। न। क्रौर्ये ॥ पापे ॥ दुःखे ॥ अमीवहन्निति लक्षणम् ॥

अमुत्रम्। न। छुरिकाविशेषे॥ छायच्छुरीति यवनभाषा॥ त्रि। मुक्तिरहिते अत्यक्ते॥

अमुतः। I। अमुष्मादित्यर्थे। तसिल्॥

अमुत्र। I। भवान्तरे। परलोके। अमुष्मिन्। अदसः सप्तम्यास्त्रल्।

अमुर्हि। I। अमुष्मिन्काले॥

अमुष्यपुत्रः। पुं। स्त्री। मख्यातवंशजे। कुलीने॥

अमूढः। त्रि। वेदान्तप्रमाणसञ्जातसम्यक्ज्ञाननिवारितात्माज्ञाने।

अमूदृशः। त्रि। एवं प्रकारे। एतद्रूपे॥

अमूर्त्तः। त्रि। निरवयवे। वाय्वन्तरीक्षयोः। यथा। सन्निवेशेनेन दृश्यो यस्तन्मूर्त्तमुच्यते। भिन्नदृग्विषयंमूर्त्तममूर्त्तंत्वितरद्भवेत्। इति वे दविदः। न्यायमतेनाकाशकालदिगात्मसु। एषांसामान्यगुणाः सङ्ख्यापरिमितिपृथक्त्वसंयोगविभागाः। तत्राकाशस्यविशेषगुणः शब्दः। कालदिशोर्विशेषगुणोनास्ति। आत्मनोविशेषगुणास्तु। बुद्धिसुखदुःखेच्छाद्वेषयत्नभावनाख्यसंस्काराधर्माधर्मौचेति॥

अमूर्त्तविद्। त्रि। शून्यवादिनि॥ अमूर्त्तःसर्वाकारशून्यो निस्स्वभावः परमार्थः इति शून्यवादिनां कथनैव। यतः परमार्थो निस्स्वभावश्चेति. व्याघातः॥

अमूलः। त्रि। मूलहीने॥

अमूलकम्। त्रि। मूलरहिते॥ प्रमाणशून्ये। नास्तिमूलंयस्य। कप्॥

अमूला। स्त्री। अग्निशिखा वृक्षे। ओषधिविशेषजातौ। मूलाभवइति-टाप्॥

अमृणालम्। न। नलदे। वीरणमूले॥ मृणालमिव। साहश्येऽनञ्॥

अमृतम्। न। यज्ञशेषे। होमावशिष्टाज्यपुरोडाशादौ। अमृतमिव- अमृतसाधनत्वात्॥ पीयूषे॥ सलिले। घृते। अयाचितागतवस्तुनि॥ अमृतंस्यादयाचितमितिमनुः। मोक्षे। अविद्यमानं मृतंमरणमत्र। स्वर्गे॥ नम्रियंतेऽनेन। तन्निमड्ग्याः

किञ्चेतितन् । प्रानिर्घण्टे अमृत
शब्देनविषसामान्यं वत्सनाभःापार
दश्चोक्तः ॥ काञ्चने ॥ स्वादुनि । आ
नन्दे । रसायने । स्वस्मिन् । हृद्ये ।
गोरसे ॥ देवानां सर्वमाखिर्मोक्ष चो
घने । पदेपदे स्वादुनि । सुरायाम
॥ आभूतसम्प्लवस्थाने । योगविशेषे ॥
सयथा । वुधनन्दगतानन्दाक्षुजेभद्रा
जयागुरौ । भृगौरिताममृतंप्रोक्तं पूर्णा
चरविचंद्रयोरिति । पञ्चमानिकस्य
द्वितीयपर्याये । पुं । धन्वन्तरौ । देवे
॥ मरणादिदेहेन्द्रियमनोधर्मवर्जिते
आत्मनि ॥ वाराहीकन्दे । वनमुद्गे
॥ त्रि । अविनाशिनि । अमरणधर्मि
णि । देवतात्मभावे ।

अमृतगतिः । स्त्री । छन्दोविशेषे । यथा
। यदिदश्वमंगुरुविहितं विशिखमित
सुकविहितम् । अमृतगतिः फणिप
थिता दशयतिकान्तपविदितेति ।

अमृतजटा । स्त्री । जटामांस्याम् ।

अमृततरङ्गिणी । स्त्री । ज्योत्स्नायाम् ।

अमृततिलका । स्त्री । वर्णवृत्ते । यथा
। नगणपयोधररुचिरा कुसुमविरा
जितसुकरा । वसुलघुदीर्घयुगलका
भवतिसखेऽमृततिलकेति । स्वरि-
तगतिश्चनजनगैः ।

अमृतत्वम् । न । अमरणभावे । स्वात्म
निर्व्यवस्थाने । मोक्षे ।

अमृतदीधितिः । पुं । इन्दौ ।

अमृतनालिका । स्त्री । कर्पूरनालिक
प्रभेदे पक्वान्नविशेषे ।

अमृतफलम् । नं । नासिपातीति यवने
पुंप्रसिद्धे रुचिफले । यथा । अमृत
फलंलघुहृद्यंसुस्वादुचीनजरेद्दापाम्
देशेषु मुद्गलानां वहुलंतल्लभ्यतेलो
कैरिति । पारे वतद्रौ । पटोले ।

अमृतफला । स्त्री । द्राक्षायाम् । आम
लक्याम् ॥

अमृतयोगः । पुं । पथ्यामृते योगविशे
षे । अपिच । हस्तमूलोत्तरापुष्या
रोहिणीरेवतीरवौ । सोमेभद्राश्वि
नीहस्ताफलगुनीविधिविष्णुयुक् । कु
जेच्छिद्रपुष्याश्विसार्पपौष्णसमीर-
णाः । वुधेशतभिषामैत्रकृत्तिकारो
हिणी तथा । गुरौपुष्यानुराधाच
स्वातीचैवपुनर्वसुः । भृगौभगाजयु
ग्मित्रतुरङ्गश्रवणानिच । शनौस्वा
तीरोहिणीचामृतयोगंविदुर्वुधाइति
। पुनश्च । आदित्यभौमयोर्नन्दा-
भद्राशुक्रशशाङ्कयोः । जयाजेयागु
रौरिक्तापूर्णार्कि,चामृताशुभाइति ॥
अपरञ्च । रवौमूला । सोमेश्रवणा ।
भौमेउत्तराभाद्रपदा । वुधेकृत्तिका
। गुरौपुनर्वसु । शुक्रेपूर्वफाल्गुनी ।

शनैस्वातिनक्षत्रञ्चेत्तदाऽमृतयोगो भवतीति ॥

अमृतरसा । स्त्री । अंदरसाइतिभाषाप्रसिद्धे पक्वान्नभेदे । यथा । तृतीयभागखण्डेनमिश्रितंषष्टिपिष्टकम् । शुभ्रमीषद्दधियुतंमर्दयेद्दृढपाणिना ॥ एवंसमुदितंकृत्वास्थापयेद्रजनीमितम् । ततोऽन्यस्मिन्नहनितच्चिपितंनिस्तुषैस्तिलैः ॥ विधायपूपकंतेन तन्विकायांघृतेपचेत् । ततोऽमृतरसानातायातद्बलवर्द्धिनी । अरोचकज्वरार्त्तानांसुशीताभिक्तकुट्टिमेति ॥ कपिलद्राक्षायाम् ॥

अमृतवल्ली । स्त्री । गुडूच्याम् ॥

अमृतसंयावः । पुं । पक्वान्नविशेषे । स यथा । समितांमधुदुग्धेनमर्दयित्वा सुशोभनम् । पचेद्घृतेतामेसमे न्यस्त्वाकंनवेघटे। ततोमरिचचूर्णेनाखण्डचूर्णविचूर्णितम् । कुर्यात्कर्पूरसंयुक्तंसंयावममृतोपमम् ॥ संयाममृतंस्वादुपित्तघ्नंमधुरंस्मृतम् । वृष्यंवातहरंहृद्यंविपाकेगुरुभाषितमिति ॥

अमृतसम्भवा । स्त्री । गुडूच्याम् ॥

अमृतसारजः । पुं । गुडे । तवराजो ऽवखंडे ॥

अमृतसिद्धियोगः । पुं । योगविशेषे । यथा । हस्तामृगशिरावाजीमैत्रपुष्येचरेवती । रोहिण्यर्कादिपुत्रे याऽमृतसिद्धिर्यथाक्रममिति ॥

अमृतसूः । पुं । विधौ । स्त्री । अदितौ ॥ अमृतानांदेवानांसूः प्रसूतिः ॥

अमृतसोदरः । पुं । घोटके । इतिराजनिर्घण्टः ॥

अमृतस्रवा । स्त्री । रुदन्त्याम् ॥ उपवल्लिकायाम् । घनवल्ल्याम् ॥

अमृता । स्त्री । मागध्याम् । पथ्यायाम् ॥ कथितामांसलाऽमृ-तेतिलक्षयाम् । विरेचनेमप्रशस्तेयम् । गुडूच्याम् । अमृतमस्याः । आमलक्याम् । नम्रियंतेऽनया । तन्निस्रुङ्भ्याक्विबेति तन् । मदिरायाम् । इन्द्रवारुण्याम् । ज्योतिष्मत्याम् ॥ गोरक्षदुग्धायाम् । अतिविषायाम् । रक्तत्रिवृति । दूर्वायाम् । तुलस्याम् ।

अमृतान्धाः । पुं । देवे । अमृतमन्धोऽन्नंयस्य सः ॥

अमृताफलः । पुं । पटोले । इतिद्रव्याभिधानम् ।

अमृतायमानः । त्रि । अमृतरसभरिते । आनन्दसुधारसपुष्टे ।

अमृताशः । पुं । विष्णौ । आत्मामृतरसमश्नाति इति तथा । अमृतवदमृतस्वरूपानन्दस्तमश्नात्यनुभवति ॥ अश० । कर्मण्यणा ॥

अमृताशनः। पुं। देवे॥ अमृतमशनमस्य॥

अमृतासङ्गम्। न। कर्परिकातुत्थे॥

अमृताहरणः। पुं। गरुडे॥ अमृतमाहरणं यस्यसः॥

अमृताह्वम्। न। लघुबिल्वफलाकृति खुरासानदेशजे फलविशेषे। अमृतफले। नाशपातीतीतरजनभाषाप्रसिद्धे॥

अमृतोत्पन्नम्। न। खर्परीतुत्थे॥

अमृतोत्पन्ना। स्त्री। मक्षिकायाम्॥ इतिराजनिर्घण्टः॥

अमृतोद्भवम्। न। खर्परीतुत्थे। तुत्थे॥

अमृतोपमः। त्रि। प्रीत्यतिशयास्पदे। अमृत मुपमायस्य॥

अमृष्यमाणः। त्रि। असहमाने॥

अमेधाः। त्रि। मूढे॥

अमेध्यम्। न। पुरीषे॥ अयज्ञार्हे। अशुचिमांसादौ॥ त्रि। अपवित्रे॥ नमेध्यमितिविग्रहः॥

अमेयः। त्रि। अपरिच्छेद्ये। इयानितिमातुमशक्ये। नमेयः॥

अमोघः। पुं। नदविशेषे॥ त्रि। सफले। अव्यर्थे। परमेश्वरे। सद्भिपूजितःस्तुतःसंस्मृतःसर्वफलंददातिनृयाकरोतीत्यमोघः। नमोघः॥

अमोघदृक। त्रि। यथार्थवीर्ये॥

अमोघा। स्त्री। हरीतक्याम्। विडङ्गे। पाटलायाञ्च॥

अम्नर्। १। शीघ्रे। साम्प्रतिके॥

अम्नस्। १।

अम्बकम्। न। लोचने॥ ताम्रे॥ अम्बकःपितेतिच्यम्बकेराम्बाश्रमः॥

अम्बरम्। न। पतत्रिमेघसञ्चारप्रदेशादुपरिसिद्धविद्याधरसञ्चारप्रदेशे। आकाशे। स्वनामख्यातसुगन्धिद्रव्ये। वस्त्रे। कार्पासे। अभ्रधातौ॥ लिम्ना। दृष्टमे। अम्बते शब्दायते। अविशब्दे। भाविघञ्। अम्बःशब्दःतंराति। रातेःकः। अम्बरम्। अम्बते अम्ब्यतेवा। अविशब्दे। बाहुलकाद्रोवा॥

अम्बरलेखि। न। अभ्रङ्कषे॥

अम्बरीषः। पुं। मान्धातृतनये। सूर्यवंशीयनाभागात्मजेपरमभागवते॥ नरकभेदे। किशोरे। भास्करे। विष्णौ। खण्डपरशौ। आम्रातके। अनुतापे॥ न। रणे॥ भ्राष्ट्रे। भर्जने॥ पचन्तितस्मिन्नम्बरीषम्। निपातनात्साधु। अम्ब्यतेऽनेनवा। अविशब्दे। अम्बरीषइतिसाधुः। मण्डकपाकभाजने॥

अम्बष्ठः। पुं। देशभेदे। विप्राद्विवाहितवैश्यासुते। ब्राह्मणाद्वैश्यकन्या

योऽम्बष्ठो नाम जायते ॥ अयं चिकित्सावृत्तिर्वैद्य इति ख्यातः ॥ हस्तिपके । कायस्थजातिविशेषे । अम्बे तिष्ठति । गतिनिवृत्तौ । सुपीतिकः । अम्बाम्बेति षत्वम् ।

अम्बष्ठकी । स्त्री । पाठायाम् । पिटीकृष्ण इति हिमगिरिप्रसिद्धलतायाम् ।

अम्बष्ठा । स्त्री । अम्ललोण्याम् । चाङ्गेर्याम् । पाठाम्बायाम् । पाठायाम् । यूथिकायाम् । जूही इति ख्यातपुष्पे । ब्राह्मणाद्वैश्यायामुत्पन्नायाम् । अम्बे मातेव तिष्ठति । सुषिस्थ इति षः । अम्बाम्बेति षत्वम् । ङ्यापोरिति ह्रस्वः ।

अम्बष्ठिका । स्त्री । अम्बष्ठायाम् । पाठायाम् । ब्राह्मण्याम् । बामनेटी इति भाषाप्रसिद्धायाम् ।

अम्बष्ठी । स्त्री । अम्बष्ठायाम् ।

अम्बा । स्त्री । मातरि । दुर्गायाम् । नाट्योक्त्यापि मातरि । पाण्डुराज्ञो मातुः स्वसायाम् । अम्बष्ठायाम् । पाठाम्बायाम् । अम्ब्यते शब्द्यते । अबि शब्दे । गुरोश्च हलः ।

अम्बामखः । पुं । नवरात्रोत्सवे ।

अम्बालिका । स्त्री । अम्बार्थे । काशिराजस्य सुतायाम् । पाण्डुराज्ञो मातरि ।



अम्बासुतः । पुं । गणेशे ।

अम्बिका । स्त्री । पार्वत्याम् । अम्बैवाम्बिका । जगन्मातृत्वात् । मातरि । धृतराष्ट्रजनन्याम् । काशिराजतनयायाम् । जैनदेव्यन्तरे । कटुक्याम् । अम्बष्ठायाम् ।

अम्बु । न । जले । चतुर्थभवने । ह्रीवेरे । अम्बते । अबि शब्दे । बाहुलकादुः ।

अम्बुकण्टकः । पुं । कुम्भीरे । शृङ्गाटके ।

अम्बुकिरातः । पुं । कुम्भीरे । इति त्रिकाण्डशेषः ।

अम्बुकीशः । पुं । शुस इति प्रसिद्धे जलजन्तुविशेषे । शिशुमारे । इति हेमचन्द्रः ।

अम्बुकूर्मः । पुं । शिशुमारे । इति हेमचन्द्रः ।

अम्बुकेशरः । पुं । छोलङ्गवृक्षे । इति रत्नमाला ।

अम्बुचामरम् । न । शैवले । इति जटाधरः ।

अम्बुजः । पुं । हिज्जले । निचुले । न । कमले । वज्रे । शङ्खे । अम्बुनि जातः । जनीप्रादुर्भावे । सप्तम्यां जनेर्डः ।

अम्बुवासिनी । स्त्री । पाटलौ ॥

अम्बुवासी । स्त्री । पाटलावृक्षे ॥

अम्बुवाहः । पुं । अम्बुदे ॥ अम्बु वहति । वह० । कर्मण्यण् ॥ मुस्तके ॥

अम्बुवेतसः । पुं । जलवेतसे ॥ अम्बुनिजातो वेतसः । शाकपार्थिवादिः ॥

अम्बुशिरीषिका । स्त्री । शिरीषिकायाम् । जलशिरीषे ॥

अम्बुसंरोधः । पुं । जलधौ ॥ अम्बु संरुध्यतेऽनेन ॥

अम्बुसर्पिणी । स्त्री । जलौकायाम् ॥

अम्बूकृतम् । त्रि । सनिष्ठेवे । श्लेष्मकणानिर्गमसहितवचसि । अम्बुशब्द उपचारात्तद्वति । अनम्बु अम्बु भवति करोति वा । च्विः । च्वौ चेति दीर्घः । कृ० ॥

अम्लः । पुं । अम्लरसे ॥ इत्यमरः । पृथ्वीयादिकोऽम्लते । अविशब्दे । मूशक्यम्बिभ्यः क्तः ॥

अम्भः । न । जले । आप्नोति आप्यते वा । आप्नृ व्याप्तौ । उदके नुम् भौ चेति ह्रस्वो भान्तादेशो नुमागमश्च । अम्भतेर्वा । अभि शब्दे । असुन् । देवे । मनुष्ये । पितरि । असुरे । तानि ह वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरोऽसुरा इति श्रुतेः । बाले । ह्रीवेरे । लग्नाच्चतुर्थराशौ । नवविधतुष्टिषु प्रकृत्याख्यतुष्टि राध्यात्मिका अम्भ उच्यते । यथा कस्यचिदुपदेशः विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः तच्च प्रकृतिरेव करोति इतिकृतं तेध्यानाभ्यासेन तस्मादेवमेवास्तु वत्सेति येयमुपदिष्टस्य शिष्यस्य प्रकृतौ तुष्टिः सा प्रकृत्याख्या अम्भ उच्यते ॥

अम्भःसारम् । न । } मुक्तायाम् । इति राजनिर्घण्टः ॥
अम्भस्सारम् । न । }

अम्भःसूः । पुं । } धूमे । इति हेमचन्द्रः ॥
अम्भस्सूः । पुं । }

अम्भोजम् । न ॥ अम्बुजे । पुं । चन्द्रमसि । त्रि । जलोद्भवे । अम्भसि जातः । जनी० । सप्तम्यां जनेर्डः ॥

अम्भोजखण्डम् । न । अम्भोजानां समूहे । कमलादिभ्यः खण्डः ॥

अम्भोजन्म । न । कमले ॥

अम्भोजयोनिः । पुं । वेधसि । अम्भोजं योनिः प्रादुर्भावस्थानमस्य । नारायणनाभिकमलजत्वात् ॥

अम्भोजिनी । स्त्री । पद्मसमूहे । नलिन्याम् ॥ पद्मवति देशे । अम्भोजानि सन्त्यत्र । पुष्करादिभ्यो देशे इनिः ॥

अम्भोदः । पुं । जलदे । मुस्तके । अम्भो ददाति । दा० । कः ॥

अम्भोधरः । पुं । अम्बुधौ । मेघे । मुस्तके । धरति । धृञ् धारणे । अच् । अ

अम्भः

अम्भोधरः ॥

अम्भोधिः । पुं । सिन्धौ । समुद्रे ॥ अम्भांसि धीयन्तेऽत्र । धाञः, कर्मण्यधिकरणेचेति किः ॥ जलाशये ॥

अम्भोधिवल्लभः । पुं । प्रवाले ॥ इतिराजनिर्घण्टः ॥

अम्भोनिधिः । पुं । अब्धौ । समुद्रे । अम्भांसि निधीयन्तेऽस्मिन् । कर्मण्यधिकरणेचेति धाञः, किः ॥ अम्भसां निधिर्वा ॥ हरौ ॥ अम्भांसि देवादयो तिर्यगन्ते ऽस्मिन्निति ॥ देवमनुष्य पितृसुरादेवादयः ॥

अम्भोरुहम् । न । अम्बुजे । अम्भसि रोहति । रुहः प्रादुर्भावे । इगुपधेतिकः ॥

अम्मयम् । त्रि । अम्बुमये । आप्ये । जलविकारे फेनादौ । अपांविकारः । एकाचोनित्यमितिमयट् । स्त्रियाम्मयी ॥

अम्रः । पुं । आम्रवृक्षे । न । आम्रफले ॥ इतिशब्दरत्नावली ॥

अम्रातः । पुं । आम्रातके ॥

अम्रातकः । पुं । आम्रातके । अम्बाडा इतिख्याते । अम रामतति । अततात्यगमने । कृञादिभ्योवुन् । रलयोरैक्यम् ॥

अम्लः । पुं । रसान्तरे । खट्टा इतिभाषा । तोयाग्निगुणबाहुल्यादम्लइतिश्रुतः । अस्यगुणायथा । अम्लोऽग्निदीप्तिकृत्स्निग्धःशोफपित्तकफापहः । विबन्धानाहहृच्चित्तदीपनः रुच्योविलोचनइति ॥ अम्लवेतसे । इतिराजनिर्घण्टः ॥ न । तक्रे ॥ अम्यते यदश्यतेभोक्तृभिः । अमगत्यादिषु । सूत्रथ्यम्बिभ्यः क्त इतिबाहुलकात्क्तः ॥ त्रि । अम्लरसवति । अर्शआद्यच् ।

अम्लकः । पुं । लकुचवृक्षे । इतिशब्दरत्नावली ॥

अम्लखण्डम् । न । लवणतृणे ॥

अम्लकेशरः । पुं । मातुलुङ्गे । अम्लाः केशरा अस्य ॥

अम्लचूडः । पुं । अम्लद्रव्यविशेषे । शाकाम्ले । चिञ्चासारे । इतिराजनिर्घण्टः ॥

अम्लजम्बीरः । पुं । अम्लनिम्बूके ।

अम्लद्रवः । पुं । बीजपूरादिरसे ।

अम्लनायकः । पुं । अम्लवेतसे ।

अम्लनिशा । स्त्री । शट्याम् ।

अम्लपञ्चफलम् । न । अम्लरसयुक्तपञ्चप्रकारफले । तद्यथा । कोलम् १ । दाडिमम् २ । वृक्षाम्लम् ३ । चुक्रिका ४ । अम्लवेतसमिति ५ । मतान्तरेतु । जम्बीरम् १ नारङ्गम् २ अम्लवेतसम् ३ तिन्तिडीकम् ४ बीजपूरमिति ५ राजनिर्घण्टः

अम्लपत्रः । पुं । अश्मन्तकवृक्षे ॥

अम्लपत्री । स्त्री । क्षुद्राम्लिकायाम् । पलाशीलतायाम् ॥

अम्लपनसः । पुं । लिकुचे । अम्लश्चासौ पनसश्च ॥

अम्लपूरम् । न । वृक्षाम्ले ॥

अम्लफलम् । न । अम्लो इं॰म॰ वृक्षाम्ले । पुं । आम्रवृक्षे ॥

अम्लभेदनः । पुं । अम्लवेतसे ॥

अम्लरुहा । स्त्री । मालवदेशजनागवल्लीप्रभेदे ॥

अम्ललोनिका । स्त्री । चाङ्गेर्याम् ॥

अम्लवती । स्त्री । क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥

अम्लवर्गः । पुं । अम्लादिगणे । यथा । आम्र आम्रातको धात्री लकुचं चकपित्थकम् । नारङ्गं द्विविधा जम्बूः करमर्दं पियारकम् ॥ दाडिमं पार्वतीद्राक्षा द्विधा बदरतूदकम् । वीजपूरं च जम्बीरं निम्बकं लीकाम्लवेतसम् ॥ वृक्षाम्लं हरिमन्थं चाङ्गेरी चाम्लवर्गकः ॥ निम्बूकं दाडिमं धात्रीफलमम्लं प्रशस्यते । प्रदद्यादम्लसात्म्याय कांजिकं वा पुरातनमिति ॥ ज्वराधिकारस्याथ श्लोकाः ॥

अम्लवल्ली । स्त्री । चिपर्णिकानामकन्दविशेषे ।

अम्लवाटिका । स्त्री । नागवल्लीभेदे ॥

अम्लवातकः । पुं । आम्रातके ॥

अम्लवास्तूकम् । न । चुक्रे । चूका इति प्रसिद्धशाके ॥

अम्लबीजम् । न । वृक्षाम्ले ॥

अम्लवृक्षम् । न । वृक्षाम्ले । इम्ली इति प्रसिद्धवृक्षे ॥

अम्लवेतसः । पुं । स्वनामख्यातवृक्षे । सहस्रवेधिनि । चुक्रे । गुणा यथा । अम्लवेतसमत्यम्लं भेदनं लघुदीपनम् । हृद्रोगशूलगुल्मघ्नं पित्तलोहितदूषणम् ॥ रूक्षं विण्मूत्रदोषघ्नं प्लीहोदावर्त्तनाशनम् ॥ हिक्कानाहारुचिश्वासकासाजीर्णवमिप्रणुत् । कफवातामयध्वंसि च्छागमांसद्रवत्वकृत् ॥ चणकाम्लगुणं चैव लोहसूचीद्रवत्वकृदिति ॥ अम्लश्चासौ वेतसश्चेति सलात् ॥

अम्लशाकः । पुं । अम्लचूडे । न । चुक्रे ॥ वृक्षाम्ले ॥

अम्लसारः । पुं । अम्लवेतसे । निम्बूके ॥ हिन्ताले । न । काञ्जिके ॥

अम्लहरिद्रा । स्त्री । शट्याम् ॥ इति राजनिर्घण्टः ॥

अम्ला । स्त्री । चिञ्चायाम् ॥

अम्लाङ्कुशः । पुं । अम्लवेतसे ॥

अम्लातकः । पुं । आम्रातके ॥

त्प्रकारकानुभवे ॥ सचसंशयविपर्ययतर्कभेदात्त्रिविधः ॥ अयथार्थश्चासावनुभवश्च ॥ नयथार्थानुभवोवा ॥

अयथार्थस्मृतिः । स्त्री । अप्रमाजन्यायांस्मृतौ ॥ अयथार्था चासौस्मृतिश्च ॥

अयनम् । न । पथि ॥ अयन्ते ईयन्तेवाऽनेन । करणेति ल्युट् युजवा ॥ भानोरुदग्दक्षिणतोगतौ ॥ यथा । मकरकर्कटसङ्क्रान्तौ । चे उदग्दक्षिणायनेइति ॥ अपिच । युसृपिसङ्क्रमतो मृगकर्किणोरयनके भवतइति ॥ अयतेऽनेन । अयगतौ । ल्युट् ॥ ऋतुत्रये ॥ यथा । मैरर्त्तुवितयं प्रदिष्टमयनमिति ॥ अयते यात्यनेन ऋतुत्रयेणसूर्योदक्षिणामुत्तरांवेति ॥ समरसमारम्भकाले योधानां यथा प्रधानं युद्धभूमौपूर्वापरादिदिग्विभागेनावस्थिति स्थानानि यानि नियम्यन्ते तेषु मोरचाइतीतरभाषाप्रसिद्धेषु ॥ व्यूहप्रवेशमार्गे ॥ गतौ ॥ आश्रये ॥ स्थाने ॥ गेहे ॥ शास्त्रे ॥ यथा ॥ ज्योतिषामयनंनेत्रमिति ॥

अयनांशः । पुं । सूर्यगतिविशेषस्य भागे ॥ यथाहकालिदासः ॥ शाकः शराम्भोधियुगोनितोहृतोमानंखतर्कैरयनांशकाः स्मृताइति ॥

अयन्त्रितः । त्रि । अनर्गले ॥ नयन्त्रितः ॥

अयवान् । त्रि । भाग्यवति ॥ मतुप् ॥

अयशः । न । अधर्मनिमित्तायां लोकनिन्दायां प्रसिद्धौ । अकीर्त्तौ ॥ नयशः ॥

अयः । न । लौहे ॥ एति अयतिवा । इणगतौ ॥ असुन् ॥

अयस्कान्तः । पुं । चुम्बकाश्मनि ॥ अयः कान्तोऽस्य ॥ कान्तीसार इतिख्याते कान्तलौहे ॥ सचतुर्विधः ॥ भ्रामकचुम्बकरोमकस्वेदकभेदात् ॥ एते रसायने उत्तरोत्तरंगुणिनः ॥ भ्रामे या दार्ढ्याङ्गकान्तिकान्सर्वरोगदायिनइतिराजनिर्घण्टः ॥

अयस्कारः । पुं । लौहकारे ॥ अयःकरोति । डुकृञ् करणे । कर्मण्यण् ॥

अयाचितम् । न । अमृतवृत्तौ ॥ यथा ॥ ऋतमुञ्छशिलंज्ञेयममृतंस्यादयाचितमितिमनुः ॥ त्रि ॥ याच्ञांविनालब्धेवस्तुनि ॥ अनर्थिते ॥ पुं । मुनिभेदे । उपवर्षे ॥ व्रतविशेषे ॥ नयाचितम् ॥

अयाज्यः । त्रि । व्रात्ये ॥ नयाज्यः ॥

अयानम् । न । स्वभावे ॥ इतिहारावली ॥ अगमने ॥

अयानयम् । न । द्यूतिनांस्थलविशेषे तेषांगतिविशेषे ॥ अयसचिऽनतं-

अरुणात्मजः। पुं। जटायुनामविहगे। अरुणसंज्ञानूरोरात्मजः।

अरुणावरजः। पुं। गरुडे।

अरुणोदकम्। न। सरोविशेषे। मेरोः प्राच्यांदिशियो विष्कम्भशैलस्तस्य मूले सरोऽरुणोदकंनाम तच्च हेमाब्जमण्डितम्।

अरुणोदयः। पुं। ब्राह्ममुहूर्त्ते। सूर्योदयात् पूर्वमुहूर्त्तद्वये। यथा। रजनीशेषयामस्य शेषपादेऽरुणोदयः इति। अपिच। चतस्रो घटिकाः प्रातररुणोदय उच्यते। यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृत इति॥ सप्तपञ्चारुणोदयं इति देवी भागवतम्। अपसप्तपञ्चाशत् घटिकोत्तरमरुणोदय इति तदर्थः। अरुणस्योदयोऽयस्मिन्सः।

अरुणोदयसप्तमी। स्त्री। माकर्य्याम् भविष्योक्तविवरणायां तपः शुक्लसप्तम्याम्।

अरुणोदा। स्त्री। मन्दरगिरिशिखरान्निपतन्त्यां सरिति। अरुणो यथामफलरसः संपन्नउदकं यस्याः।

अरुणोपलः। पुं। पद्मरागे। चुन्नीतिलोके। अरुणोऽरुणवर्णश्चासावुपलः पाषाणश्च।

अरुन्तुदः। त्रि। मर्मस्पृशि। मर्मपीडके। अरु पि। मर्माणि तुदति। तुद व्यथने। विध्वरुषोस्तुद इति खश्। अरुर्द्विषदिति मुमि कृते संयोगान्तस्य सकारस्य लोपः।

अरुन्धती। स्त्री। वशिष्ठपत्न्याम्। अक्षमालायाम्। कर्दममुनेः कन्यायाम्।

अरुन्धतीजानिः। पुं। वशिष्ठे। अरुन्धती जायायस्य सः। जायाया निङ्।

अरुन्धतीनाथः। पुं। वशिष्ठे। अरुन्धत्याः नाथः स्वामी।

अरुष्कः। पुं। भल्लातके। इतिशब्दरत्नावली।

अरुष्करः। पुं। भल्लातकवृक्षे। न। भल्लातकफले। त्रि। व्रणकृति। अरुर्व्रणं करोति। दिवाविभेतिटः। नित्यसमासेऽनुत्तरपदस्थेति षः।

अरुः। न। मर्मणि। पुं। रक्तखदिरे। अर्के। पुं। न। व्रणे। घाते। इयर्त्ति। ऋगतौ। अर्त्तिपृवपियजी त्युसिः।

अरुष्का। स्त्री। भूधात्र्याम्। भूमि आंवला इतिख्यातायाम्।

अरूपः। त्रि। रूपशून्ये। कुत्सितरूपे।

अरूपः। पुं। रवौ। सर्पविशेषे। ऋच्छति अर्थान्। ऋ गतिप्रापणयोः।

त्वादौपठित्वाकवचं पठेत् । जपेत् सप्तशतींपश्चात्क्रमएषशिवोदितः इति । त्रि । कल्लोले । अर्ज्यते । अ र्ज अर्जने । ष्टपादित्वात्कलच् । न्य ङ्क्वादिः ।

अर्गला । स्त्री । आगल इतिभाषाप्रसिद्धे कपाटबन्धककाष्ठविशेषे । कपाटान्तरविष्कम्भदण्डे । त्रि । कल्लोले । टाप् ।

अर्गलिका । स्त्री । अर्गले । आगलीइतिभाषाप्रसिद्धायाङ्क्षुद्रार्गलायाम् ।

अर्गली । स्त्री । कपाटरोधनार्थंतन्मध्यस्थे क्षुद्रदण्डे । गौरादित्वान्ङीष् ।

अर्घ्वधः । पुं । राजवृक्षे ।

अर्घः । पुं । मूल्ये । पूजाविधौ । पूजोपचारभेदे । अर्घ्यतेऽनेन । अर्हपूजायाम् । हलश्चेति घञ् । न्यङ्क्वादिः । अर्घिर्धात्वन्तरंवा । अर्घशब्दः सामान्यः सर्वत्राभिलामेसयकारोनपुंसकलिङ्गेनैवप्रयोज्यः । अन्यवेदिना निर्यकारः पुल्लिंगेन प्रयोज्यः । इति आहतत्त्वेरघुनन्दनः ।

अर्घीशः । पुं । ईश्वरे । शिवे । इतिशब्दरत्नावली ।

अर्घ्यम् । न । जरत्कारुमुनेस्तपोवनत स्रूत्पन्नमधुनि । उपचारभेदे । मस्तके दीयमाने अर्घजले । अर्घायेदम् । पादार्घाभ्यांचेतियत् । त्रि । पूजार्हे । अर्घस्ययोग्ये । अर्घमर्हति । दण्डादिभ्यश्चेतियत् । पुं । मूल्ये । पूजाविधौ ।

अर्चकः । त्रि । पूजके । यथा । अर्चकस्यतपोयोगादर्चनस्यातिशायनात् । आभिरूप्याच्चबिम्बानांदेवः सान्निध्यमृच्छतीतितिथ्यादितत्त्वम् । अर्चति । अर्च० । ण्वुल् ।

अर्चनम् । न । पूजायाम् । यथा । अनधान्यकरंनित्यंगुरुदेवद्विजार्चनमिति । अर्चपूजायामस्माच्चौरादिकात्स्वार्थण्यन्तात्ल्युट् । त्रि । पूजाद्रव्ये ।

अर्चना । स्त्री । पूजायाम् । टाप् ।

अर्चा । स्त्री । प्रतिमायाम् । यथाऽस्मो कृष्णोव्यासादीन् प्रति । किंस्वल्पतपसांनृणामर्चायांदेवचक्षुषाम् । दर्शनस्पर्शनमश्नप्रह्वपादार्चनादिकमिति दशमस्कन्धे ८४ अध्यायः । पूजायाम् । अर्चनम् अर्च्यतेवा । अर्चपूजायामस्माच्चौरादिकाद्गुरोश्चहलइत्यप्रत्ययः । टाप् ।

अर्चिः । स्त्री । ज्वालायाम् । इसन्तः । अर्च० । णिजन्तादर्चर्वा ।

अर्चितम् । त्रि । पूजिते । अर्च्यतेस्म० । अर्चपूजायाम् । क्तः ।

अर्चिरादिमार्गः । पुं । उत्तरमार्गे ।

अर्चिरादुपलक्षिते देवयानपथि ।

अर्चिष्मान् । पुं । वह्नौ । भास्करे । दीप्ते । अर्चिर्विद्यतेऽस्यास्मिन्वा । मतुप् ।

अर्चिः । न । स्त्री । मयूखे । वह्निशिखायाम् । दीप्तौ । अर्च्यते । अर्च पूजायाम् । अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः । अर्चिः सान्तः ।

अर्च्यः । त्रि । पूज्ये । ऋच्यते । ऋचस्तुतौ । ण्यत् । यजयाचरुचप्रवचर्चश्चेति कुत्वनिषेधः ।

अर्ज्जकः । पुं । बाबुई इतिभाषाप्रसिद्धे श्वेतपर्णासे । अस्य गुणाः । कटुरुष्णाः कफवातामयनेत्ररोगनाशी च विकारी सुखप्रसवकारकश्चेति राजनिर्घण्टः । अर्जयति । अर्जसंर्जेअर्जने । ऋगतिस्थानार्जनो पार्जनेषुवा । वर्यन्तः । ण्वुल् । त्रि । उपार्जनस्य कर्त्तरि ।

अर्जनम् । न । अर्जयितृव्यापारे । स्वामित्वहेतुभूतव्यापारे । सङ्ग्रहे । सम्पादने । अर्ज० । ल्युट् ।

अर्जुनः । पुं । ककुभद्रुमे । कोह इति ख्याते । अस्य गुणा यथा । क्षतभग्नरक्तस्तम्भनमूत्रकृच्छ्ररोगे पथ्यत्वमितिराजवल्लभः । कषायत्वमुष्णत्वं व्रणशोधनत्वम् कफपित्तश्रमतृष्णाऽर्त्तिनाशित्वं वायुरोगप्रकोपकारित्वमिति राजनिर्घण्टः । सर्वसम्पत्तिपराक्रमे तृतीयेपाण्डुतनये । कार्त्तवीर्ये । मयूरे । मातुरेकसुते । धवले । करवीरे । न । तृणे । नेत्ररोगे । यथा । एकोयः शशरुधिरोपमस्तु बिन्दुः शुक्लस्थो भवति तदर्जुनं वदन्तीति । त्रि । धवलवर्णवति । अर्ज्यते । अर्ज अर्जने । अर्जेर्णिलुक् चेत्युनन् । तृणाख्यायां चिद्रिति वा नन् ।

अर्जुनधनुः । न । गाण्डीवे । अर्जुनस्य धनुः ।

अर्जुनध्वजः । पुं । वायुपुत्रे । हनूमति ।

अर्जुननामा । पुं । ककुभद्रुमे ।

अर्जुनी । स्त्री । गवि । अर्जुनवर्णयोगात् । अन्यतोङीष् । उषायाम् । बाहुदानद्याम् । कुट्टन्याम् ।

अर्जुनोपमः । पुं । शाकद्रौ । महापत्रे । सेगन इति गौडदेशे ख्याते । अर्जुनस्योपमायस्य ।

अर्णः । पुं । अक्षरे । शाकद्रुमे । अर्णः सः ।

अर्णवः । पुं । अम्बुनिधौ । अर्णांसि यत्र सन्ति । अर्णसो लोपश्चेति मत्वर्थीयो वः ।

अर्णवजः । पुं । न । समुद्रफेने ।

अर्णवमन्दिरः । पुं । वरुणे । अर्णवेम

ऽर्थ्याकार्योत्पादे ।
अर्थवान् । त्रि । धनिनि । अर्थः सन्निहि
तोऽस्यास्य मतुप् । अर्थसन्निहितेतु
अर्थाद्द्रित्येव । प्रयोजनवति । पुं । पु
रुषे, इति राजनिर्घण्टः ॥
अर्थवादः । पुं । विधिशेषे । स्तुतौ ।
कालिनिकफलश्रुतौ । अङ्गेफल-
श्रुतौ । तल्लक्षणं यथा । अभिधे-
यया गौण्या वा वृत्त्या भूतमर्थव
दन् स्वाध्यायविध्यापादितप्रयोज
नवत्त्वलाभाय विधिसाकांक्ष इति ।
सर्वोपाङ्गविधिलिङ्गेषु पञ्चमम् । यथा ।
प्रकरणप्रतिपाद्यस्य तत्तत्प्रशंसन
मर्थवादः । यथाछान्दोग्ये षष्ठप्रपाठ
के उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रु
तं भवति अमतं मतं अविज्ञातं वि-
ज्ञातमित्यद्वितीयवस्तुप्रशंसनमि
ति । अर्थस्य प्रयोजनस्य वदनं विध्य
र्थप्रशंसापरं वचनम् । अर्थवादो हि
स्तुत्यादिद्वारा विध्यर्थमीमं प्रवर्त्तये
प्रशंसतीति । स्तुतिनिन्दापरकृतिः पु
राकल्पश्चेत्यर्थवाद इति न्याय चतु
ष्कम् । स्तुतिः सा या विध्यर्थस्य प्रशं
सार्थकं वाक्यम् । यथा । सर्वजिता
वै देवाः सर्वमजयन् सर्वस्याप्त्यै
सर्वस्य जित्यै सर्वमेवैतेनाप्नोति
सर्वं जयतीत्यादि । अनिष्टबोधनद्वा

अर्थवा

रा विध्यर्थप्रवर्त्तकं निन्दा । यथा ।
स एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टो
मो य एतेनानिष्ट्वा अन्येन यजते स
गर्त्ते पतत्ययमेवैतज्जीर्यते प्रमामी
यत इत्यादि । पुरुषविशेषनिष्ठमि
थो विरुद्धकथनं परकृतिः । यथा ।
हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ
पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदा
ज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृ
षदाज्यमित्यभिदधतीत्यादि । ऐ
तिह्यसमाचरिततया कीर्त्तनं पुराक
ल्पः । यथा । तस्माद्वा एते पुरा ब्राह्म
णा बहिष्पवमानं सामस्तोमं मस्तौ
षन् यज्ञं प्रतनवामहे इत्यादीत्यर्थः ।
प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थ
वाद इति लौगाक्षिभास्करः । यथा ।
विरोधे गुणवादः स्यादनुवादोऽवधा-
रिते । भूतार्थवादस्तद्धानादर्थवाद
स्त्रिधा मत इति । अस्यार्थः । विरोधे वि
शेष्यविशेषणयोः सामानाधिकरण्ये-
नान्वयविरोधे गुणवादः अङ्गकथनरू
पत्वात् । यथा यजमानः प्रस्तर इति
। अत्र प्रस्तरः कुशमुष्टिः तस्य यजमा
नेऽभेदान्वयबाधात् यजमानस्य कुश
मुष्टिधारणरूपार्थवादरूपत्वात् गु
णवादः । अवधारिते प्रमाणान्तरसि
द्धे योऽवादः । यथा नान्तरीक्षेऽग्नि

ध्येतव्यः अग्निर्हिमस्य भेषजमित्यादि च। अन्तरीक्षेऽग्निचयनस्यासम्भवेन तदभावस्य अग्नेर्हिमनाशकत्वस्य च लौकिकप्रमाणसिद्धत्वादनुवादः। तद्वानौ तयोर्विरोधावधारणयोरभावे भूतार्थवादः। यथा इन्द्रो वृत्रं हन्नित्यादि। सोऽपि द्विविधः स्तुत्यर्थवादो निन्दार्थवादश्च। यथा। सन्ध्यामुपासते ये चेत्यादिः स्तुत्यर्थवादः। स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः इत्यादिनिन्दार्थवाद इति। तत्त्वसम्बोधनीमते तु सप्तविधः। यथा। स्तुत्यर्थवादः १ फलार्थवादः २ सिद्धार्थवादः ३ निन्दार्थवादः ४ परकृतिः ५ पुराकल्पः ६ मन्त्रः ७। एषामुदाहरणानि च तानि ग्रन्थगौरवभिया न लिखितानि॥

अर्थविज्ञानम्। न। शुश्रूषाद्यष्टधीगुणान्तर्गतगुणविशेषे। शब्दार्थज्ञाने॥

अर्थविप्रकर्षः। पुं। पूर्वपूर्वमपेक्ष्योत्तरोत्तरस्य विलम्बेनार्थोपपादकत्वे॥

अर्थव्यपाश्रयः। पुं। प्रयोजनसम्बन्धे॥

अर्थव्ययज्ञः। त्रि। धनव्ययप्रकारविदि। मुकुले॥ अर्थव्ययौ जानाति। ज्ञा। कः॥



अर्थशास्त्रम्। न। अथर्ववेदस्योपवेदे चतुःषष्टिकलासङ्ग्राहके औशनसादिशास्त्रभेदे। दण्डनीत्याम्। यथा बृहस्पतिप्रभृतिभिः प्रणीतमर्थशास्त्रकम्। तथैव दण्डनीतिः स्यादन्वयेनान्यथाविति। अर्थ्यते गम्यते गतौ। उषिकुषिगार्तिभ्यस्थन्निति थन्। अर्थस्य भूमिधनादेः शास्त्रम्॥

अर्थसमाहर्त्ता। त्रि। सम्यग्धनार्जनशीले॥

अर्थसिद्धकः। पुं। सिन्दुवारवृक्षे॥

अर्थागमः। पुं। आये॥

अर्थान्तरम्। न। प्रकृतानाकाङ्क्षितार्थे। यथा गोतमः। प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्। ५। प्रकृतात् कृतोपयुक्तात् त्यक्तोऽपेक्षमीतेनेप्रकृतोपयुक्तमर्थमुपेक्ष्य असम्बद्धार्थाभिधानमर्थान्तरम्। प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ता शब्दो गुणः स चाकाशस्येत्यादि॥

अर्थान्तरन्यासः। पुं। अर्थालङ्कारभेदे। यथा। सामान्यं वा विशेषो वा तदन्येन समर्थ्यते। यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥ साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत्समर्थ्यं

तेविशेषो वा सामान्येन सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम् । निजदोषावृतमनसा मतिसुन्दरमेव भाति विपरीतम् । पश्यति पीतोपमतः शशिशुभ्रं शंखमपि पीतम् । सुसितवसनालङ्कारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्वनासि शुभमदः । गुणानामेव दौरात्म्याद्धुरि धुर्य्यो नियुज्यते । असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः । अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् । त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गता इति ।

अर्थापत्तिः । स्त्री । प्रमाणविशेषे । जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनायाम् । अनुपपद्यमानेनार्थेनोपपादककल्पने ॥ यथा दृष्टयामे च भानं घृष्टयामश्च मेघस्य वैयधिकरण्यान्न व्याप्तिरिति नानुमानेऽन्तर्भावः । उक्तेनानुक्तसाधिपत्तिर्या सा अर्थापत्तिः ॥ अलङ्कारान्तरे । एकस्य वस्तुनो भावादेवमस्त्वन्यदापतेत् । कैमुत्यन्यायतः साऽस्मादर्थापत्तिरलङ्क्रिया । दण्डापूपिकयार्थमित्युपपतनमर्थापत्तिरितिसङ्ग्रम् ।

अर्थार्थी । त्रि । धनमुद्दिश्य यज्ञोपकरणं तदभीप्सौ । अर्थस्य अर्थी ।

अर्थिकः । पुं । वैतालिके । निद्रालस्य राजादेः स्तुत्यादिना प्रातर्जागरयितरि ।

अर्थितः । त्रि । याचिते । अर्थ्यते स्म । अर्थ० । क्तः ।

अर्थी । त्रि । याचके । सेवके । विवादिनि । धनिनि । सहाये । अर्थोऽस्यास्ति । सन्निहितोऽस्यास्ति । अर्थो वा सन्निहिते इति इनिः ॥ अर्थयते वा णिनिः । अर्थ याचने । ग्रह्यादित्वाण्णिनिः । स्त्रियामर्थिनी ।

अर्थ्यः । त्रि । पण्डिते । सम्प्रार्थ्ये । न्याय्ये । अर्थगामिनि । न । शिलाजतुनि । अर्थे साधुः । तत्र साधुरिति यत् ॥ अर्थादनपेतः । धर्मपथ्यर्थेति यत् ॥ अर्थ्यते । अर्थ उपयाञ्चायाम् । ण्यन्तः । अचो यत् ॥

अर्दनम् । न । गमने । पीडने । याचने । हनने । अर्द भावे ल्युट् ।

अर्दना । स्त्री । याञ्चायाम् ॥ अर्द गतौ याचने च । ण्यन्तः । ण्यासेति युच् । टाप् ।

अर्दितम् । त्रि । याचिते । हिंसिते ।

रोगिणि । गते ॥ न । वातव्याधिविशेषे ॥ तस्य लक्षणम् । वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ॥ शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ॥ ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे च वेदना ॥ तमर्द्दितमिति प्राहुर्व्याधिं व्याधिविशारदा इति । यस्मिन् पार्श्वे अर्द्दितं तस्मिन् पार्श्वे ग्रीवादीनां वेदनेत्यर्थः । अस्यौषधं यथा ॥ रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं ह्यर्द्दितरोगयुक्तः । तस्यार्द्दितं नाशमुपैति शीघ्रं वृन्दं घनानामिव वायुयोगादिति । विषमज्वरेप्येतद्देयम् ॥ अर्द्दिते त्रि । अर्द्द गतौ याचने च । क्तः ।

अर्द्धः । पुं । भित्ते । खण्डे । न । समांशे । आधा इति भाषा ॥ स्थाने । रूपकादि । ऋध्नोत्यनेन । ऋधु वृद्धौ । हलश्चेति घञ् ॥ अत्रायं विवेकः । अर्द्धशब्दः खण्डसामान्यवाची पुंलिङ्ग एव । जसि अर्द्धे अर्द्धाः । समखण्डविवक्षायां क्लीबमेव । यदा त्वर्द्धशब्दो धर्मिपरस्तदा त्रिलिङ्ग एवेति ॥

अर्द्धगङ्गा । स्त्री । कावेर्याम् । अर्द्धं गङ्गायाः । अर्द्धं नपुंसकमिति समासः ।

अर्द्धगुच्छः । पुं । चतुर्विंशतियष्टिहारे । गुच्छार्द्धे । अर्द्धं गुच्छस्य ।

अर्द्धचन्द्रः । पुं । नखक्षते । गलहस्ते । बाणभेदे । चन्द्रार्द्धे । अर्द्धचन्द्राकारे स्त्रीणां ललाटाभरणविशेषे ॥

अर्द्धचन्द्रा । स्त्री । कृष्णत्रिवृति । अर्द्धचन्द्रो यस्याः । एतद्दलस्यार्द्धचन्द्राकारत्वात् ॥

अर्द्धचन्द्रिका । स्त्री । कर्णस्फोटालतायाम् । चित्रपर्ण्याम् ।

अर्द्धचोलकः । पुं । कूर्पासे । काँचुली इति प्रसिद्धे वस्त्रे । कुर्त्ती इति च प्रसिद्धे । इति हारावली ॥

अर्द्धजाह्नवी । स्त्री । कावेर्याम् ॥

अर्द्धतिक्तः । पुं । नेपालनिम्बे ॥

अर्द्धनारीश्वरः । पुं । शिवे । उमामहेश्वरे । अस्य ध्यानं यथा । नीलप्रवालरुचिरं विलसत्त्रिनेत्रं पाशारुणोत्पलकपालकशूलहस्तम् । अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं बालेन्दुबद्धमुकुटं प्रणमामि रूपमिति ॥

अर्द्धनावम् । न । नावोऽर्द्धे । नावोऽर्द्धम् । अर्द्धं नपुंसकमिति तत्पुरुषः । अर्द्धाच्चेति नावष्टच् ॥

अर्द्धपारावतः । पुं । चित्रकण्ठे । तित्तिरिपक्षिणि ॥

अर्द्धपुलायितम् । न । अश्वस्य मण्डलागतिविशेषे । यथा । शताद्यर्द्धकसादूर्द्धं मण्डलायितसंज्ञिताः । उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति ।

न निपातितः ॥

अर्य्या । स्त्री । वैश्यजातीयायाम् । स्वामिन्याम् । अर्यच क्षत्रियाभ्यां वास्वार्थ इति आनुगागमाभावेटाप् ॥

अर्य्याणी । स्त्री । वैश्यजातीयायाम् । स्वामिन्याम् । अर्यक्षत्रियाभ्यां वास्वार्थ इतिपक्षे आनुगागमोङीप् च ॥

अर्य्यी । स्त्री । वैश्यप्रियायाम् । अर्य्यस्य स्त्री । पुंयोगलक्षणोङीष् ॥

अर्वती । स्त्री । कुट्टन्याम् । वडवायाम् । घोटक्याम् । तुरग्याम् ॥

अर्वा । पुं । तुरङ्गमे । ऋच्छति गच्छति । अन्येभ्योपीति सामदीत्यादिना वनिप् । यद्वा अर्वतिवा । अर्व गतौ । बाहुलकात् कनिप् । मघेन्द्रे । उपकर्षपरिमाणे । त्रि । अधमे । ऋच्छतेः अवद्यायमाधमार्वरेफाः कुत्सितइतिवर्जन्तो निपातः ॥

अर्वाकृतनः । त्रि । निर्मूले । अवेदमूले । स्वेच्छाकृते । अर्वाकभवः । सायंचिरमित्यादिनाट्युः ॥

अर्वाक् । अ । अवरे । पूर्वकालतःपश्चादर्थे । अवरे अञ्चति । अस्तातिः । अञ्चेर्लुक् । पृषोदरादिः । अर्वन्तमञ्चतिवा । विपर्य्यस्ते । इतिधरणिः ॥

अर्वाचीनः । त्रि । अर्वाचि पश्चाज्जाते । अर्वागेव । विभाषाञ्चेरदिक्



स्त्रियामितिखः ॥

अर्शम् । न । गुदव्याधौ । इतिशब्दरत्नावली ॥

अर्शः । न । अर्शे । गुदव्याधिभेदे । दुर्नामके । गुदकीले । अस्यसामान्यलक्षणं यथा । दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् । मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसितान् जगुरिति । अथास्यसामान्यतोनिदानंयथा । पृथग्दोषैः समस्तैश्च शोणितात् सहजानिच । अर्शांसिषट्प्रकाराणि विद्याद्गुदवलित्रये ॥ सामान्यतोऽर्शसश्चिकित्सायथा । यद्वायोरानुलोम्याय यदग्निबलवृद्धये । अन्नपानौषधंसर्वं तत्सेव्यंनित्यमर्शसैरिति । ऋच्छति । ऋगतौ । व्याधौ शुट् चेत्यर्त्तेरसुन् ॥

अर्शसः । त्रि । गुदव्याधियुक्ते । अर्शोरोगयुते । अर्शांस्यस्यविद्यन्ते । अर्शआदिभ्योऽच् ॥

अर्शसानः । पुं । अग्नौ । ऋच्छति । ऋ० । अर्त्तेर्गुणः शुट्चेत्यसानच् । अर्शसानाय गमनशीलाय अग्नये इतिवेदभाष्यम् ॥

अर्शी । त्रि । गुदव्याधियुक्ते । इतिशब्दरत्नावली ॥

अर्शोघ्नः । पुं । सूरणे । भल्लातके । अ

शांसि चन्ति । अमनुष्यकर्तृकेषु चे
तिहन्तेष्टक् ॥

अर्शोघ्नी । स्त्री । तालमूल्याम् । भल्लात
क्याम् । टित्वान्ङीप् ॥

अर्शोरोगयुतः । त्रि । अर्शसे । मूलव्याधि
मति । अर्शोरोगेणयुतः ॥

अर्शोऽहितः । पुं । अर्शोघ्ने । अर्शसोऽ
हितः ॥

अर्हन्तः । पुं । क्षपणे । बुद्धे ॥ त्रि । मा
न्ये । इतिमेदिनीमुद्राङ्किता ॥

अर्हः । पुं । पूजाप्रशंसास्तुतिनमस्कारा
दिभिः पूजनीये परमेश्वरे । अर्हति
पूज्यतेषोडशभिरुपचारैरित्यर्थः ।
अर्हः कर्मणिघञ् ॥ शक्रे । त्रि । योग्ये
अर्हति । अर्हपूजायाम् । पचाद्यच् ॥

अर्हणः । पुं । जिने । न । पूजने ।
उपायने । पुष्पादौ ॥

अर्हणा । स्त्री । अर्चायाम् । योग्यायां
पूजायाम् । अर्हपूजायां चुरादिः ।
ण्यासश्रन्थोयुच् । टाप् ॥

अर्हणीयः । त्रि । पूज्ये ॥

अर्हन् । पुं । जिने ॥ जिनभेदे । अना
दिसिद्धजीवास्तिकाये । क्षपणे ॥ बुद्धे
॥ कोङ्कवेङ्कट कामारा जिनऋषभदे
वे । त्रि । पूज्ये ॥ अर्हति । अर्ह० । अ
र्हः प्रशंसायामिति शतृप्रत्ययः ॥

अर्हत्तमः । त्रि । श्रुताचाराभिजनादि
भिः पूज्यतमे ॥

अर्हन्तः । पुं । सुगते । क्षपणे । अर्हति
। अर्ह० । बाहुलकाज्झच् ॥

अर्हा । स्त्री । पूजायाम् ॥ अर्ह० । गुरो
श्चहलइत्यकारप्रत्ययः । टाप् ॥

अर्हितम् । त्रि । अर्चिते । अर्ह्यतेस्म । अ
र्हपूजायाम् क्तः ॥

अलम् । न । वृश्चिकपुच्छकण्टके ॥ ह
रिताले ॥

अलकः । पुं । न । चूर्णकुन्तले । अलति
भूषयति मुखम् अल्यतेवा । अलभू
षणादौ । कृञादित्वाद्वुन् ॥

अलकनन्दा । स्त्री । कन्यायाम् । गङ्गा
याम् । यथा । तथैवालकनन्दापि दक्षि
णेनैतिभारतम् । प्रयातिसागरं भू
त्वा सप्तभेदा महामुने इति ॥ तथासौ
[illegible] ॥

अलकप्रभा । स्त्री । यक्षेशपुर्याम् ।

अलकप्रियः । पुं । पीतसालके । विजय
सार इतिख्याततरौ ॥

अलका । स्त्री । कुबेरपुर्याम् ॥ अष्टव
र्षाविधिदशवर्षपर्यन्तवयस्कायां कन्या
याम् । अलति भूषयति । अलभूष
णादिषु । कुनशिल्पिसंज्ञयोरपूर्वस्या
पि । क्षिपकादित्वान्नेत्वम् ॥

अलकाधिपः । पुं । धनपतौ ॥ अलका
याअधिपः ॥

नि निश्चयः । पद्मरागश्च वज्रञ्च विज योगेऽविदास्तथा । मुक्तावैदूर्यनीलानि तथा मरकतं क्रमात् ॥ आदित्यादिग्रहाणां सर्वसम्पत्प्रदामताः । सुवर्णेनापि घटना सर्वेषामुपयुज्यते । प्रधानभूषणेष्वेषमप्रधाने न निश्चयः । प्रधानभूषणं प्रायः शिरसोऽभिधीयते । तस्य प्रधानभूषत्वादिष्याद्भृगुनन्दनः ॥ सुखदास्मयः मुद्रा दुःखदा दोषशालिनः । अतोऽमणीनां लक्ष्यामि लक्षणानि यथाक्रममिति युक्तिकल्पतरुः । मणिविशेषलक्षणानि तत्तच्छब्दे द्रष्टव्यानि । काव्यालङ्कारे । उपमादौ ॥ सद्विविधः । शब्दालङ्कारोऽर्थालङ्कारश्च । तस्य च सोदाहरणान्युपमादिस्तत्तच्छब्दे वलोकनीयानि । खलुष्कलेशेषगुरोः संज्ञायाम् । अलंक्रियतेऽनेन । तुकृञ्० । घञ् ॥

अलङ्कृतः । त्रि । भूषिते । अलंक्रियते-स्म० । क्त ॥

अलङ्क्रिया । स्त्री । भूषायाम् अलङ्कारसाध्यशोभायाम् ॥ अलंकरणम् । कृञः श च । टाप् ।

अलन्धूमः । पुं । धूमसंहतौ ॥

अलब्धः । त्रि । अप्राप्ते ।

अलब्धभूमिकत्वम् । न । कुतश्चिन्निमित्तात् समाधिभूमेरलाभे ॥



अलम् । अ । भूषणे । पर्याप्तौ । वारणे । निषेधे । निरर्थके । शक्तौ । अन्वर्थे । अवधारणे । अलति अलनं वा अलभूषणादौ । बाहुलकादम् ।

अलम्पुरुषीणः । त्रि । मतिमल्लादौ । अलंपुरुषायेत्यर्थे अषडक्षेति खः ।

अलम्बुषः । पुं । प्रहस्ते । छर्दे । राक्षसान्तरे ।

अलम्बुषा । स्त्री । मुण्डीर्याम् । स्वर्वेश्याभेदे । लज्जालुप्रभेदे । गन्धाबुम् ॥ अलम्बुषा लघुः स्वादुः कृमिपित्तकफापहा स्यात् गुणाः ॥

अलम्बुसाः । पुं भूम्नि । देशविशेषेषु ।

अलर्कः । पुं । प्रेतापंसे । धवलार्के । यथा । अलर्ककुसुमं हृष्यं लघु दीपन पाचनम् । अरोचकप्रसेकार्शः कासश्वासनिवारणमिति ॥ उन्मत्तशुनि । विक्षिप्तकुक्कुरे । नृपान्तरे । अलति । अलभूषणादौ । क्विप् । अलश्चासावर्कश्च । यद्वा अलमर्कते अर्च्यते वा । अर्कस्तवने, अर्चपूजायां वा । घञ् । शकन्ध्वादिः । जन्तुविशेषे ।

अलर्ककः । पुं । अलर्कार्थे ॥

अलले । अ । पिशाचभाषयासंबोधने ॥

अलवालम् । न । आलवाले । लवमा

लाति। लआदाने। मूलविभुजादि त्वात्कः। नञ्समासः।

अलसः। त्रि। अवश्यकर्त्तव्येऽप्यप्रवृत्तिशीले। क्रियामन्दे। क्रियाजडे। शीतके। यथा। स्त्रीभिः प्रगल्भवक्त्रीभिरलसः परिभूयते। इति कामन्दके। श्रियं हि सततोत्साही दुर्बलोपि समश्नुते, इति च। पुं। पादरोगभेदे। यथा। क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ। दुष्टकर्दमसंस्पर्शादलसं तं विभावयेदिति। द्रुमभेदे। न लसति। लस श्लेषणे। पचाद्यच्।

अलसकः। पुं। उदररोगविशेषः। अस्य स्वरूपन्तु। कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति। निरुद्धो मारुतश्चैव कुक्षावुपरिधावति। वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि। तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु। इति।

अलसा। स्त्री। हंसपद्याम्। टाप्।

अलसीका। स्त्री। शरीरजोदकविशेषे। उक्तं च चरकेण। आमगन्धि यत्त्वभ्यन्तरत्वङ्मांसान्तरगतमुदकं तदलसीका शब्दं लभते इति।

अलसेक्षणा। स्त्री। स्त्रीविशेषे। अलसे ईक्षणे यस्याः।

अलातः। पुं। न। अङ्गारे। उल्मुके।



अर्द्धदग्धकाष्ठे। लानम्। ला आदाने। क्तः। नञ्समासः।

अलाबुः। स्त्री। तुम्ब्याम्।

अलाबूः। स्त्री। तुम्ब्याम्। न लम्ब्यते। लबि अवस्रंसने। नञि लम्बेर्नलोपश्चेत्यूणित्। अलाबुः कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला। मिष्टतुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु। वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम्। अलाबुकाफलं दीर्घं धृतेपक्वं सजीरकम्। दुग्धसैन्धवचूर्णेन संसिक्तं लघु शी पितम्।

अलाबूकटम्। न। तुम्बीरजसि। अलाबूनां रजः। अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानमिति कटच्।

अलारम्। न। कपाटे।

अलिः। पुं। स्त्री। सुरायाम्। पुष्पलिहि। कोकिले। काके। वृश्चिके। अलति दंशे समर्थो भवति। अल भूषणादौ। सर्वधातुभ्य इन्।

अलिकम्। न। ललाटे। अलति अस्य तेजः। अल०। वाहुलकादिकन्।

अलिकुलसङ्कुलः। पुं। कुब्जकवृक्षे।

अलिङ्गः। त्रि। सर्वसंसारधर्मवर्जिते परमात्मनि। लिङ्गं बुद्ध्यादि विद्यमानमस्येति। सन्निहितमपि न लिङ्ग्यतव तिवा। धर्मध्वजिलरक्षिते। अव्यक्त

लिङ्गे ॥

अलिजिह्वा । स्त्री । अल्परसने । जिह्वोपरिक्षुद्रजिह्वायाम् ।

अलिञ्जरः । पुं । मणिके । माट् इति ख्याते । अलनम् । अलंभूषणादौ । शृकृत्र्यादिभ्यः । इनच् । अलिं सामर्थ्यं जरयति जृणाति वा । जृष्वयोर्हानौ जृषयोर्हानौ वा । अण् । अत्र पृषोदरादिः ॥

अलिदूर्वा । स्त्री । मालादूर्वायाम् ॥

अली । पुं । वृश्चिके । भ्रमरे । अलं सामर्थ्यमस्यास्ति । व्रीह्यादित्वादिनिः । अव्ययानां भमात्रे टिलोपः ॥ यद्वा । अलिः वृश्चिकलाङ्गूलम् । तदस्यास्ति । अत इनिः ॥

अलिन्दः । पुं । प्रघाणे । बहिर्द्वारप्रकोष्ठे । द्वारप्रकोष्ठा बहिर्द्वारोपवर्त्तिचतुष्के । द्वारवहिर्भागे । अल्यते भूष्यते । अलंभूषणादौ । बाहुलकात् किन्दच् ॥

अलिपकः । पुं । पिके । भृङ्गे । कुक्कुरे ॥

अलिपत्रिका । स्त्री । वृश्चिकासञ्ज्ञके क्षुपे ।

अलिपर्णी । स्त्री । वृश्चिकाल्याम् ॥

अलिप्रियम् । न । कोकनदे । रक्तोत्पले । [illegible] ॥

अलिप्रिया । स्त्री । पाटलावृक्षे ॥

अलिमकः । पुं । भेके । पिके । अलौ । भ्रमरे । पद्मकेशरे । मधूके । इति मेदिनीकरः ॥

अलिमोदा । स्त्री । गणिकारीवृक्षे ॥

अलिम्पकः । पुं । पिके । अलौ । पद्मकेशरे । मधूके । भेके । इति हेमचन्द्रः ॥

अलिसुः । पुं । संततगगनचारिणि भ्रान्त्यमसिद्धे मणिविशेषे । समाचौदाहरन्ति वेदान्तेषु वार्त्तिककाराः । अलिसुः पक्षिणः पुंयोगगगनं याति भूतलम् । स्वबोधाभावतः स्वेच्छयोपैत्यम्बरं पुनरिति ॥

अलिवल्लभा । स्त्री । पाटलौ । फलेरुहायाम् [illegible] ॥

अलिवाहिनी । स्त्री । केयेर इति कोंकनदेशप्रसिद्धे केविकापुष्पे ॥

अलीकम् । न । अप्रिये । दिवि । भाले । अलति अल्यते वा । अलंभूषणादौ । अलीकादयश्चेति साधुः । असत्ये ॥ अतन्त्यनेनाऽधोगतिम् । अत० । अलीकादिः ॥

अलीकमत्स्यः । पुं । रिकवच इति ख्याते ॥ यथा । माषपिष्टिकयालिप्तं नागवल्लीदलं मृदु । तत्तु संस्वेदयेत्सम्यक् स्थाल्यामास्तारकोपरि ॥ ततो निष्कास्य तं खण्डं ततस्तैलेन भर्जयेत् ॥

अलीकमत्स्य उक्तोयंमकार: पाकप-
नैः । तं दन्तीकभटिचेश यांस्तूकेन
चभजयेत् । अलीकमत्स्यकोहृच्यो
हंष्योवल्योऽतिपुष्टिद:। वातहृच्छु
क्रदःमोक्त.किञ्चित्पित्तंमकोपयेदि-
ति ।

अलुब्ध: । त्रि । निर्लोभे । लोभहीने ।

अले । ।। पिशाचोक्यासम्बुद्धौ ।

अलेपकम् । न । निरवद्ये ।

अलेले । ।। पिशाचोक्यासम्बुद्धौ ॥

अलोक: । पुं । अतलादितलस्य । नलो
क्यते अस्माभिः । लोकृ० । घञ् ।

अलोकाकाशास्तिकाय: । पुं । लोका-
न्तां वहिर्भूताकाशे ।

अलोभ: । पुं । लोभाभावे । त्रि । तद्व
ति । यथा । अलोभीस्यात् प्रजावि
षेगृह्णीयात सम्मितंकरम् । एव
न्तङ्गीकृतधर्मं पुत्रवत्पालयेत् प्रजा
इतिराजधर्म: ।

अलोभी । त्रि । लोभरहिते । अलो
भोस्यास्तीतिनि: ।

अलोलुप: । त्रि । इन्द्रियाणां विषयस
न्निधानेप्यविक्रियपुरुषे ।

अलौकिक: । त्रि । लोकातीते । लौ
किकमत्यचाविषये । अमानुषिके ।
नलौकिकः ।

अल्पम । त्रि । किञ्चिदर्थे । ईषत् । मना-
क् । स्तोके । अल्प्यतेधार्यते । अल्प
भूषणादौ । वाहुलकात्पः । सूक्ष्मे ।
स्वल्पे । मर्त्ये ॥

अल्पकम् । त्रि । अल्पार्थे । कृपणे ।
पुं । यवासे । अल्पमेवस्वार्थेकः ।

अल्पकेशी । स्त्री । भूतकेश्याम् ॥

अल्पगन्धम् । न । रक्तकैरवे ।

अल्पतनु: । त्रि । स्वल्पदेहवति । पुंसि
। खर्वे । दुर्बले । अल्पास्थियुक्ते ।
अल्पातनुःशरीरमस्य ।

अल्पप्रज्ञ: । त्रि । अल्पमेधसि । अल्पा
प्रज्ञायस्यस: ।

अल्पप्रमाणक: । पुं । चेञ्चाने । चेली । चे
ञ्चातरमूल इतिगौडभाषाप्रसिद्धे
फललताविशेषे । त्रि । अल्पमाने ॥
अल्पंप्रमाणमस्य ।

अल्पबुद्धि: । त्रि । मन्दे । अल्पाबुद्धिरस्य ॥

अल्पमारिष: । पुं । तण्डुलीये । चंउरा
ई इतिप्रसिद्धशाके । अल्पश्चासौमा
रिषश्च ॥

अल्पमेधा: । पुं । मन्दप्रज्ञावेनवस्तुवि
वेकासमर्थे । अल्पप्रज्ञे । अल्पामेधा
यस्य । नित्यमसिच् प्रजामेधयोः ।

अल्पशमी । स्त्री । शमीरे ।

अल्पसर: । न । वेशन्ते । अल्पंचतत्सर
श्च ॥

अल्पायु: । पुं । छागे । त्रि । मितायुषि

दिष्यप्रकाशेवन्निष्यमेव अवस्थित मेकरूपंचेतो विज्ञानमस्येति । त्रि । अकुटिलचित्ते । अवक्रसरलंचेतो यस्य ।

अवक्रयः । पुं । मूल्ये । वेत्ते । राजग्राह्योद्रव्ये । वणिग्भिः शुल्कस्थानेमतिभाण्डमधिपतयेदेये । एतावत्कालमुपयोगार्थं भाण्डवस्त्रादि मैयादीयते मह्यं च युष्माभिरेताव द्दनंदेय मिष्येवंविधेभाटके । भाडा इति प्रसिद्धे । अवक्रीयते ऽनेन । र्डुक्रीञ्द्रव्यविनिमये । पुंसीतिघः । एरजित्यचतुन ल्युटावाधात् ।

अवक्लेदनम् । न । किञ्चिदार्द्रत्वे ।

अवक्षुतम् । न । उपरिक्षुतक्षुते ।

अवक्षेपः । पुं । निन्दायाम् ।

अवक्षेपणम् । न । भर्त्सने ।

अवक्षेपणी । स्त्री । वल्गायामितिहेम चन्द्रः ।

अवगणितम् । त्रि । तिरस्कृते । परिभूते । अवगणितेस्म । गणसंख्याने । क्त ।

अवगण्डः । पुं । गण्डस्थव्रणे । सरण्डे । अवगच्छति । गम्लृ गतौ । अमन्ताड्डः ।

अवगतः । त्रि । मते । ज्ञाते । विदिते । अवगम्यतेस्म । गम्लृ गतौ । क्तः ।

अवगतिः । स्त्री । ध्यानमात्रे । ज्ञानसा



मान्ये । अवगम्यतेऽनया । गम्लृ । क्तिन् ।

अवगथः । त्रि । प्रातःस्नाते । अवगीयते । हृङ्° । निशीथगोपीथावगथा इति थक् गाडोह्रस्वश्च निपातनात् ।

अवगमः । पुं । माने । अवगम्यतेऽनेन । फले । अवगम्यते प्राप्यते । गम° । अप् ।

अवगाढः । त्रि । निविडे । अन्तः प्रविष्टे । निमग्ने । अवपूर्वाद्गाहेः कर्त्तरि क्तः ।

अवगाहः । पुं । जलद्रोण्याम् । नौका जलसेचनकाष्ठपात्रे इतिहलायुधः ॥

अवगाहः । पुं । स्नाने । स्नानगृहे ।

अवगाहनम् । न । अवलोडने । निमज्जने । अवगाहे । गोताभारके न हाना इतिभाषा ।

अवगीतः । त्रि । निर्वादे । जनापवादे । मुहुर्दृष्टे । दुष्टे । गर्हिते । ख्यात गर्हणे । अवगीयतेस्म । गैशब्दे । क्तः । घुमास्थेतीत्वम् । मुहुर्गीते ॥

अवगीर्णः । त्रि । वर्णिते । अवगीर्यतेस्म । गशब्दे । क्तः । अपानान्निर्गते द्रव्ये ।

अवगुणः । पुं । दोषे ।

अवगुण्ठनम् । न । योषाशिरः प्रावरण क्रियायाम् । घूंघट करना इतिभाषा ।

योषाननावरकसूक्ष्मवस्त्रे । स्त्रीमुखाच्छादनवस्त्रे । आच्छादनंसमुद्दिष्टमवगुण्ठनमीश्वरि ॥ धूल्यादिप्रचयो ॥ वेष्टने । मुद्राविशेषे ।

अवगुण्ठिका । स्त्री । योषाप्रावरणक्रियायाम् । अवगुण्ठने ॥ जवनिकायाम् ॥

अवगुण्डितम् । त्रि । चूर्णिते ॥

अवग्रहम् । न । प्रातिशाख्यादिषु पदविशेषे । यस्यपदस्यावग्रहःक्रियते तच्चेत्यर्थः ॥ अवगृह्यते ग्रहउपादाने । विच्छेदोनग्रहेरर्थः । पदान्यैरिवाद्या पञ्चपुंषेतिकर्प । ग्रहिज्येति सम्प्रसारणम् । कुगतीतिसमासः ।

अवगोरणम् । न । ताडनार्थयष्ट्यादीनामुद्यमे । मारणेकूं लकुडउठावना इतिभाषा ॥

अवग्रहः । पुं । दृष्टिरोधे । ज्ञानभेदे ॥ प्रतिबन्धे । गजालिके । हस्तिललाटे ॥ अवगृह्यतेऽङ्कुशेन । ग्रहेरप् ॥ विच्छेदे । अवान्तरपदसंघांस्सूचयितुं पदपाठकाले किञ्चित्कालमवसाने ॥ अवग्रहणमवग्रहः । ग्रहउपादाने । अवपूर्वात्ग्रहेर्वर्षेभावे ग्रहवृदृनिश्चिगमश्चेत्यप् । स्वभावे

अवग्रहणम् । न । प्रतिरोधे । तिरस्कृतौ । अनादरे ।

अवग्राहः । पुं । दृष्टिरोधे ॥ अवग्रहणमवग्राहः । अवेग्रहोवर्षप्रतिबन्धे इति अवपूर्वात् ग्रहेर्घञ् ॥ शापे । आक्रोशेऽवन्योर्ग्रहइतिघञ् । अवग्राहस्ते भूयात् अभिभवइत्यर्थः ॥

अवघट्टः । पुं । गर्त्ते । भूरन्ध्रे ।

अवघातः । पुं । अवहनने । तण्डुलादिकण्डने । अवहननम् । हनहिंसागत्योः । घञ् । हनस्तोऽचिण्णलोः । हो हन्तेरितिकुत्वम् ।

अवचयः । पुं । पुष्पफलादीनांछेदने ॥

अवचूडः । पुं । अवचूले । अधोलम्बिकलापे ॥

अवचूर्णितम् । त्रि । पेषिते । अवध्वस्ते । क्षिप्तसुधादिचूर्णस्यलेखादौ ॥ फल्गुचूर्णैराचिते । अवचूर्ण्यतेस्म । सत्यापेतिणिजन्तात् क्तः । यद्वा । चूर्णप्रेरणे चुरादिः

अवचूलः । पुं । अवाग्ध्वजकञ्चुके । ध्वजाग्रबद्धाधोमुखवस्त्रे । भाण्डेका पटका इतिभाषाप्रसिद्धे ।

अवचूलकम् । न । चामरे ।

अवच्छिन्नः । त्रि । सङ्कुचिते ॥ अवच्छेदकतानिरूपके । विशिष्टेअवच्छेदाश्रये ॥ अवच्छिद्यतेस्म । छिदिर् । क्तः ।

अवच्छुरितम् । न । अट्टहासे । अवच्छु

रणम् । छुरच्छेदने । भावेक्तः ।

अवच्छेद. । पुं । विरामे ॥ सङ्कोचे ॥ विशेषणत्वे ॥ एकदेशे । परिच्छेदे ।

अवच्छेदकम् । त्रि । न्यायमतेन अव्याप्य वृत्त्यधिकरणसम्बन्धैकदेशे ॥ इतरव्यावर्त्तके । विशेषणे ॥

अवच्छेदकावच्छेदः । पुं । व्यापकत्वे ॥

अवच्छेद्यम् । त्रि । अवच्छेदावच्छेदकोभयनिरूपणीये ।

अवज्ञा । स्त्री । अनादरे ॥ अवज्ञानम् । ज्ञातश्चोपसर्गे इत्यङ् । टाप ।

अवज्ञातम् । त्रि । अवमानिते । अवज्ञायतेस्म । ज्ञा अवबोधने । क्तः ।

अवज्ञानम् । न । तिरस्कारे ।

अवटः । पुं । खिले । गर्त्ते । यथा । रसातलगतस्त्वानामेषधर्मः सनातनः । अवटेयेनिधीयन्ते तेषांलोकाः सनातना इतिरामायणम् । कूपे । कुहकजीविनि ॥ अवन्त्यस्मात् अवरक्षणादौ । शकादिभ्योऽटन् ।

अवटनिरोधनः । पुं । नरकविशेषे ॥

अवटिः । स्त्री । गर्त्ते । इतिहलायुधः ।

अवटीटः । त्रि । नतनासिके । अवनाटे । अवनमनं नासिकायाः । नते नासिकायाः सञ्ज्ञायां टीटञ्नाटच भटचः । अवटीटम्नासिकायानतमस्त्यस्याः । अर्श आद्यच् । अवटीटानासिका सा अस्त्यस्यपुरुषस्य । अर्श आद्यच् ॥

अवटुः । पुं । वृक्षभेदे । गर्त्ते ॥ कूपे । पुं । स्त्री । घाटायाम् । ग्रीवापश्चाद्भागे । ग्रीवायामुन्नतभागे । अवटलति । टल वैक्लव्ये । अवटीकतेवा । टीकृ गतौ । मितद्र्वादित्वात् डुः ॥ यद्वा । अवटति । वट वेष्टने वटभाषणेवा । बाहुलकादुः ॥

अवटोदा । स्त्री । भारतवर्षस्थनद्यन्तरे ।

अवडीनम् । न । पक्षिणामवरोहणे । पक्षिणामधोगमने ॥

अवतंसः । पुं । न । कर्णपूरे ॥ शेखरे । शिरोभूषाभेदे । उत्तंसे । अवतंसयति अवतंस्यतेऽनेनवा । तसिः सैत्रोभूषार्थः । पचाद्यच् हलश्चेतिघञ्वा ।

अवतमसम् । न । क्षीणान्धकारे । अवहीनं तमः । अवसमन्धेभ्यस्तमस इत्यच् ।

अवतरणम् । न । अवतारे ।

अवतारः । पुं । अवतरणे । अवरोहे । पुष्करिण्यादौ । देवानांविशेषतोविष्णोर्मूर्त्यन्तरेण पूर्णांशावेशाद्यैः पृथिव्यां प्रादुर्भावे । अवतारास्त्वसङ्ख्यातास्तेष्वेते विशेषतःप्रसिद्धाः

मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च रामश्च बुद्धः कल्की च ते दश ॥ अपिच। प्रकृतिर्विष्णुरूपा च पुंरूपश्च महेश्वरः। एवं प्रकृतिभेदेन भेदास्तु प्रकृतेर्दश ॥ कृष्णरूपा कालिका स्याद्रामरूपा च तारिणी। बगला कूर्ममूर्त्तिः स्यान्मीनो धूमावती भवेत् ॥ छिन्नमस्ता नृसिंहः स्याद्वाराहश्चैव भैरवी। सुन्दरी जामदग्न्यः स्याद्वामनो भुवनेश्वरी। कमला बौद्धरूपा स्यान्मातङ्गी कल्किरूपिणी। स्वयं भगवती काली कृष्णस्तु भगवान् स्वयम् ॥ स्वयञ्च भगवान् कृष्णः काली रूपो भवेद्ध्रुवम्। इति मुण्डमाला। विशेषो ललितोपाख्याने द्रष्टव्यः ॥ पुनश्च श्रीभागवते १ स्कन्धे ३ अध्याये स एव प्रथमं देवः कौमारं सर्गमाश्रित इत्यादिना द्रष्टव्यः। तीर्थे। नद्यादितीर्थे ॥ अवतरत्यनेनास्मिन्वा। तृ प्लवनसन्तरणयोः। अवे तॄस्त्रोर्घञ्।

अवतारणम्। न। भूतादिग्रहे। वस्त्राञ्चले। अर्चने। अवरोहणे ॥

अवतीर्णः। त्रि। अवतरणविशिष्टे। प्रादुर्भूते। जलादौ कृतावरोहे। प्रविष्टे।

अवतोका। स्त्री। स्रवद्गर्भायाम्। पतितगर्भायां गवि। अवगलितं तोकम-



पत्यं यस्याः ॥

अवदंशः। पुं। दंशने। भक्षितद्रव्यचर्वणे। मद्यपानरुचिजनकभक्ष्यद्रव्ये। अवदंश्यते पानरुच्यर्थम्। दंश दशने। कर्मणि घञ् भावे वा।

अवदातः। पुं। सिते। गौरे। त्रि। विशुद्धे। शुक्लगुणविशिष्टे। पीतवर्णवति। मनोज्ञे। अवदायते स्म। दैप् शोधने। क्तः।

अवदानम्। न। खण्डने। पराक्रमे। अतिकृत्ते। शुद्धकर्मणि। यथा। विपञ्चमागायन्तीविविधमवदानं पुरारिपोरिति। उशीरे। दो अवखण्डने दैप् शोधने वा। भावे ल्युट्।

अवदारकः। पुं। खनित्रे। त्रि। विदारणकर्त्तरि।

अवदारणम्। न। खनित्रे। अवदार्यतेऽनेन। दृ विदारणे। णिच्। ल्युट्।

अवदाहः। पुं। अवदहने। न। वीरणमूले। अवनीयते दाहोऽस्मात्।

अवदीर्णम्। त्रि। खण्डिते। द्रुते। द्रवीभूते घृतादौ। अवदीर्यते स्म। दृ विदारणे। क्तः।

अवदोहः। पुं। दुग्धे। अवदुह्यते। दुह प्र० कर्मणि घञ्।

अवद्यम्। त्रि। अधमे। पापे। निन्द्ये। न वदति परं गुणम् न उद्यते न उच्यते

वा। अवद्यावमाधमार्वरेफाः कुत्सिते इतिमेदिनीर्लिङ्कर्तरियत्। अवद्यप द्येतितु कर्मणियत्॥

अवद्योतनम्। न। प्रकाशे। त्रि। तति।

अवद्रङ्गः। पुं। हट्टे।

अवधानम्। न। मनोयोगे। अवडुधाञोल्युट्।

अवधारणम्। न। निश्चये। अवधृतौ। इयत्तादिपरिच्छेदे। परिमाणनिश्चये।

अवधारितः। त्रि। निश्चिते। कृतावधारणे।

अवधार्यः। त्रि। अवधारणीये। निधार्ये।

अवधिः। पुं। अवधाने। सीम्नि। परस्याम् कालावधि। काले। बिले। अवधान स। डुधाञ्०। उपसर्गे घोः किः।

अवधीरितः। त्रि। अवज्ञाते।

अवधूतः। त्रि। अभिभूते। निर्भर्त्सिते। यथा। अवधूतभयः। धातौ। अवधुनोति धूञ्०। क्तः॥ अनाहते। योगेश्वरे। सन्न्यासाश्रमिणि। तस्मिन्नर्थे यथा। अक्षरत्वाद्वरेण्यत्वाद्धूत संसारबन्धनात्। तत्त्वमस्यर्थसिद्धत्वादवधूतोभिधीयत इति। अपि च। योविलङ्घ्याश्रमान् वर्णान् आत्मन्येवस्थितः पुमान्। अतिवर्णाश्रमीयोगी अवधूतःसकथ्यतइति। यथा रविःसर्वरसान् प्रभुङ्क्ते हुताशनश्चापिहि सर्वभक्षकः। तथैवयोगी विषयान् प्रभुङ्क्ते नलिप्यते पुण्यपापैश्चशुद्धएषापि। अत्रत्यो विशेषो हंसेद्रष्टव्यः।

अवधूननम्। न। तिरस्कारणे।

अवधूलनम्। न। अवचूर्णने।

अवधृतः। त्रि। आकर्णिते। निश्चिते।

अवधृतिः। पुं। अवधारणे।

अवध्यः। त्रि। मारणायोग्ये। यथा। अवध्याश्चस्त्रियंमाहुस्तिर्यग्योनिगतास्वपीति। अपिच। किंत्वयान श्रुतं लोके अवध्याः पशवोपिहइति। अवध्योब्राह्मणोदण्ड्यो ... अवधे पापमुक्तमनुना। यामानवध्यस्यवधेतावान् वध्यस्य मोक्षणे। अधर्मोनृपतेर्दृष्टोधर्मस्तुविनियच्छत इति। ९ ऽध्याये २४९ श्लोकः।

अवध्वंसः। पुं। परित्यागे। निन्दने। अवचूर्णने।

अवध्वस्तः। त्रि। परित्यक्ते। निन्दिते। अवचूर्णिते। अवध्वस्यतेस्म। ध्वंसुगतौच। क्तः।

अवनम्। न। प्रीतौ। रक्षणे। प्रीणने। अवरक्षणादौ। ल्युट्।

अवनतम्। त्रि। अधोगते। आनते।

अवनमतिस्म । णमप्रह्वत्वे । गत्यर्थे तिक्तः ॥ अनुदात्तोपदेशेत्यनुनासिकलोपः ।

अवनतिः । स्त्री । विनये । अनौद्धत्ये ।

अवनद्धः । त्रि । मिस्युते ।

अवनाटः । त्रि । नतनासिके । नासिकायाःनतम् । नतेनासिकाया इति नाटच् । तद्योगान्नासिकाऽवनाटा । साऽस्त्यस्य ॥ अर्शआद्यच् ।

अवनामः । पुं । प्रणामे । अवनमनम् । अवपलोघञ् ।

अवनायः । पुं । अधोनयने । निपातने । अवनयनम् । णीञ् प्रापणे । अवोदोर्नियइति घञ् ।

अवनिः । स्त्री । भुवि । अवति अव्यते वा । अवरक्षणादौ । अर्त्तिसृधृधमीत्यनिः ॥

अवनिक्तः । त्रि । चालिते ।

अवनी । स्त्री । स्थिरायाम् । भूमौ । नायमाराथायास् । कृदिकारादिति वा ङीप् ।

अवनीपतिः । पुं । राजनि । अवन्याः पतिः ॥ अवनीं पातिवा । पारक्षणे पातेर्डतिः ॥

अवनेजनम् । न । प्रक्षालने । हस्तसंस्कारे । अव णिजिर॰ । ल्युट् । पिण्डप्रदानार्थमास्तृतकुशोपरिजलसे-चने ॥

अवन्तयः । पुं । देशभेदे । मालवेषु । अवति । अवरक्षणादौ । झाद्भुक्षका झिच् ।

अवन्तिका । स्त्री । उज्जयिन्याम् ।

अवन्तिसोमम् । न । काञ्जिके । अवन्ति सु अभिषुतं सोमम् । शाकपार्थिवादिः ।

अवन्ती । स्त्री । देशभेदे । यथा । ताम्रपर्णीं समासाद्यश्वाद्रिशिखरोन्नतः । अवन्तीसंज्ञकोदेशः कालिकावनतिष्ठतीति ।

अवपातः । पुं । बिले । निपाते । अधःपतने । अवपतनम् । पत्लृ॰ । घञ् । गजग्रहणगर्त्ते । अवपातस्तुहस्त्यर्थे गर्त्तेछन्नेतृणादिनेत्यमरः । मेधावीति भाषा ।

अवपाचितः । त्रि । भिन्नोदकीकृते अपपाचिते ।

अवपाशितः । त्रि । बद्धे ।

अवप्लुतः । त्रि । अवतीर्णे । सहसैवावतीर्णे ।

अवबुद्धः । त्रि । अनुभूते ।

अवबोधकः । पुं । परिदीपके । अवबोधयति । बुध । ण्वुल् ॥

अवभर्जितः । त्रि । दग्धे ।

अवभासः । पुं । साक्षात्कारे ॥

२० । पचाद्यच् । अवगाहने ।

अवस्कन्दनम् । न । अवतरणे । अवगाहने ।

अवस्करः । पुं । विष्ठायाम् । अपाने । गुह्ये । उपस्थे । गोप्ये । अवकीर्यते क्षिप्यते । कर्म्मणि अप् । अवदारम् । कस्कादि । वर्चस्कोऽवस्कर इत्यमरः ॥ साधुः ।

अवस्तात् । अ । अवरे । अधोर्थे । अवरस्मिन् अवरस्याम् अवरस्मात् अवरस्याः अवरो ऽवरा वा वसत्यागतो रमणीयो वा । दिक्शब्देभ्य इत्यस्ताति । विभाषावरस्येति पक्षेऽवादेशः ।

अवस्तारः । पुं । जवनिकायाम् । कनात इति चिक इति प्रसिद्धायाम् । आस्तरणे । अवस्तृणात्यनेनास्मिन् वा । स्तृञ् आच्छादने । अवेस्तॄ इति घञ् ॥

अवस्तु । न । अज्ञानादिसकलजडसमुदायस्वरूपे महाप्रपञ्चे । वस्तुनोऽन्यस्मिन् । असद्वस्तुनि ॥

अवस्था । स्त्री । दशायाम् । कालकृतविशेषे । कालकृतो धर्म्मो वपुषो यौवनादिविशेषस्तस्मिन् ॥ यथाहुः । कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशाद्यौवनं तु ततः परमिति । अपि च । आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते । वृद्धस्तु सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परमिति । अवस्थाने ॥ अवतिष्ठति । अवपूर्वात् स्थाधातोरवस्थायामिति चापकात् साधुः ॥ अवतिष्ठतेऽनया वा । आतश्चोपसर्ग इत्यङ् । टाप् ।

अवस्थाचतुष्टयम् । न । वैद्यकमते कालकृतचतुर्व्विधदशायाम् । यथा । आपञ्चदशवर्षं बाल्यम् । आत्रिंशद्वर्षं कौमारम् । आपञ्चाशद्वर्षं यौवनम् । पञ्चाशत ऊर्द्ध्वं वृद्धत्वमिति ।

अवस्थानम् । न । स्थितौ । वासे । प्रतिष्ठायाम् । अवपूर्वात्तिष्ठतेर्ल्युट् ॥

अवस्थितः । त्रि । प्रतिफलिते । आसीने । कृतावस्थाने । स्थिते । अवपूर्वः ष्ठागतिनिवृत्तौ । क्तः । यतिस्यतीति त्वम् ।

अवस्थितिः । स्त्री । अवस्थाने ।

अवस्यन्दनम् । न । नाद्ये ।

अवस्रंसनम् । न । अधः पतने ।

अवस्रंसितः । त्रि । लम्बिते ।

अवहः । पुं । वायोस्तृतीयस्कन्धे ॥ यथा । ततः सप्त्योभुवोध ऽर्त्तीविधर्त्तीच विधारयाः । वरणश्च तृतीयोयमाच न्द्राद्यमहोगणः ३ इति ॥

अवहननम् । न । अवघाते ।

अवहस्तः । पुं । हस्तपृष्ठे ।

अवहारः । पुं । चौरे । द्यूतयुद्धादिवि

अवाङ्मुखः । त्रि । अधोमुखे ॥ अवाङ्मुखं यस्य सः ॥

अवाक् । अ । अधोदेशे । अवाचि देशे अवाचो देशात् अवाग्देशो वा । दिक्‌शब्देभ्यः सप्तमी पञ्चमी प्रथमाभ्य इत्यस्तातिः । अस्तेर्लुक् ।

अवाङ् । त्रि । अधोमुखे । नम्रे ॥ अवाञ्चत्यधोमुखीभवति । ऋत्विगिति क्विन् ॥

अवाक् । त्रि । मूके । न वाग् यस्य ॥

अवाची । स्त्री । दक्षिणदिशि । अधोदिशि । अधोमुख्याम् । अवाक् अधोमध्ये अञ्चति सूर्येण । ऋत्विगादिना क्विन् । उगितश्चेति ङीप् इति स्वामी ॥ वस्तुतस्तु दक्षिणदिशि असाधुरेवायम् । अवपूर्वस्याञ्चतेरधोमुखीभाववृत्तेः ॥

अवाचीनम् । त्रि । दक्षिणदिग्भवे । अधोमुखे । अवागेव । विभाषाञ्चेरिति खः ॥

अवाच्यम् । न । दुर्वचने । अनक्षरे ॥ न वचनार्हम् । ण्यत् । वचोऽशब्दसंज्ञायामिति न कुत्वम् । त्रि । अनिन्दिते । अवक्तव्ये ॥ यथा । नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् । ब्राह्मणानां विशेषेण नैवपृयात् यायेच्च न । यदाप्याणगुणमर्थं तदेवमततं वदेत् । तूष्णीमासीत निन्दायां कुर्वन्नेव स्वमात्मनि इति महाभारतम् ॥

अवाच्यदेशः । पुं । योनौ । भगे ॥ अवाच्यश्चासौ देशश्च ।

अवाच्यवचनम् । न । दोषविशेषे । यदेवावाच्यवचनम् वाच्यवचनं हितम् ॥

अवान्तरः । त्रि । प्रधानान्तःपातिनि । इयं फलश्रुतिर्न श्रेयःपरमपुरुषार्थसाधनपरा भवति । किन्तु बहिर्मुखानां मोक्षविवक्षयाऽवान्तरकर्मफलैः कर्मसु रुच्युत्पादनमात्रम् ॥ यथा । पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् । पित्रैवमुक्तः पिबति तिक्तम प्यतिबालक इति ॥

अवाप्तः । त्रि । प्राप्ते ॥

अवाप्तिः । स्त्री । प्राप्तौ ॥

अवाप्यः । त्रि । लभ्ये ॥

अवारम् । न । नद्यादेः पूर्वतीरे । अर्वाक्तटे । अर्वाक् तीरम् अवारम् । अवव्रियते । वृङ् गतौ । कर्मणि घञ् ॥ न वारमस्य चेति भाः । अर्श आद्यच् ॥

अवारपारः । पुं । समुद्रे ।

अवारपारीणः । त्रि । पारगे ॥ अवारपारं गच्छति अवारपारयोर्भयोरन्तरगामी वा । राष्ट्रावारपाराद् घखाविति खः ॥ अवारपारगामिनि ॥ अथापाराच्यन्तानुकालंगामीति खः ॥

अविपश्चित् । पुं । विचारजन्यतात्पर्यपरिज्ञानशून्ये । अविवेकिनि । नविपश्चित् ।

अविप्रकृष्टः । त्रि । आसन्ने ।

अविप्रियः । पुं । श्यामाकतृणे ।

अविप्रिया । स्त्री । क्षेत्रलतायाम् ।

अविभक्तम् । त्रि । अभिन्ने । एकमेवार्थे । अर्थान्तरे सर्वत्राऽनुस्यूते अधिष्ठानतयाबाधावधितया च सर्वस्मिन्निव समाने । नविभक्तम् ।

अविभावितः । त्रि । अनुपलक्षिते ।

अविमरीसम् । न । मेषीदुग्धे । अवेर्दुग्धम् । अवेर्दुग्धे मरीसच् मत्ययः ।

अविमुक्तम् । न । काशीक्षेत्रे । अविमुक्ते महादेवो विशालाक्षी शिवाप्रियेत्यागमः । यथा । मुनेर्मलयकालेऽपि तत्क्षेत्रं कदाचन । विमुक्तं न शिवाभ्यां यदविमुक्तं ततो विदुरिति । अविमुक्तं न मोक्तव्यं सर्वथैव मुमुक्षुभिः । किन्तु विघ्ना भविष्यन्ति काश्यां निवसतां सतामिति श्रीदेवीभागवतम् । त्रि । अत्यक्ते । नविमुक्तम् ।

अविरतम् । न । सन्तते । अनवरते । अनुपरते । नास्ति विरतमस्य । क्रियाविशेषणे धर्मा नंक्लीबम् । सत्त्वगामितु त्रिलिङ्गम् ।

अविरतिः । स्त्री । चित्तस्य विषयसम्प्रयोगात्मनिगर्हे ।

अविरलः । त्रि । घने । निबिडे ।

अविरुद्धः । त्रि । अनुकूले । अप्रतिषिद्धे । नविरुद्धः ।

अविरोधः । पुं । विवादाभावे । यथा । श्रुतिस्मृतिविरोधेतु श्रुतिरेव गरीयसी । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सतेति । नविरोधः ।

अविलम्बितम् । त्रि । आशुगे । उच्चण्डे । न । आशुनि । शीघ्रे । विलम्बते स्म । विपूर्वकलम्बिसंसने । आयुष्योपधः । अकर्मकत्वात् कर्तरि क्तः । नञ्समासः ।

अविला । स्त्री । मेष्याम् । भेड्याम् ।

अविवरः । त्रि । नीरन्ध्रे ।

अविवाक्यम् । न । दशरात्रस्य दशमेऽह्नि ।

अविवादः । पुं । विवादाभावे । नविवादः ।

अविवेकः । पुं । विषयविरक्त्यभावे । सम्भूयकारितायाम् । नविकिञ्चिदेकं कार्यं पर्यालोच्य पितुः सम्भूय । विपर्यासे । व्याकुलत्वहेतौ मोहे । अविमृश्यकारित्वे । सदसद्विवेचनाराहित्ये । त्रि । तद्वति । नविवेकः ।

अविवेकी । त्रि । विवेकहीने । अविवेचके । तस्मादविवेकिनः सुखमात्रलिप्सोर्नाऽत्राधिकारित्व इति मुक्तिवाद

अविसो | अवीरा

स्यगादाधरीटीका । अनमुक्तिविचारे ।

अविवेकिः । न । व्यक्ते । प्रधाने । महदादौ । यथा प्रधानं स्वतोनविविच्यते एवंमहदादयोपि न प्रधानादिविच्यन्ते ॥ बालिशे । मूर्खे । गुरुवाक्याद्युपदेशरहिते । नविवेकी ।

अविशिष्टम् । त्रि । समाने । नविशिष्टम् ।

अविशेषः । पुं । तन्मात्रेषु । तानि ह्यस्मदादिभिःपरस्परव्यावृत्तानि नानुभूयन्त इत्यविशेषाः सूक्ष्माश्चोच्यन्ते । निष्पञ्चो । विशेषाभावे । त्रि । विशेषरहिते । तुल्ये ।

अविश्रान्तम् । न । अनवरते । त्रि । विश्रामहीने ।

अविश्वस्तः । त्रि । प्रत्ययायोग्ये । विश्वासोनर्हे । यथा । नविश्वसेदविश्वस्ते विश्वस्तेनातिविश्वसेत् । विश्वासाद्भयमुत्पन्नंमूलान्यपिनिकृन्ततीति ॥

अविश्वासा । स्त्री । चिरप्रसूतायांगवि ।

अविषः । पुं । अब्धौ । राजनि । अवति । अमरस्वामादौ । अविमद्योष्टिषचः । त्रि । निर्विषे ।

अविषा । स्त्री । निर्विषाख्ये ।

अविषी । स्त्री । नद्याम् । टित्त्वान्ङीप् ॥

अविसोढम् । न । अविमरीसे । अवेर्दुग्धम् । अवेर्दुग्धसोढदूसमरीसच्यिवक्तव्याः ॥

अविस्पष्टम् । न । क्लिष्टे । अप्रकटवचने । नविस्पष्टंयतेस्म । स्पशबाधनस्पर्शनयोः । कर्मणिक्तः । अविस्पष्टेति निर्देशादिडभावः ।

अवी । स्त्री । ऋतुमत्याम् ॥ अवति लज्जायाः । अवरचणादौ । अविहृस्रुतन्त्रिभ्यईः ।

अवीचिः । पुं । नरकभेदे । तरङ्गे ॥ नास्तिवीचिः सुखमत्र । त्रि । तरङ्गशून्ये ।

अवीचिमयः । पुं । नरकभेदे । यःसाक्ष्याद्यावनृतंवदति सनिरवलम्बेऽवीचिमयेऽधश्शिरानिपात्यते ॥ इति श्रीभागवतम् ॥

अवीजा । स्त्री । ईषदीजायांद्राचायाम् । किसमिस् इतिलोके ।

अवीतम् । न । अनुमानप्रभेदे । व्यतिरेकमुखेन प्रवर्त्तमाने निषेधके । तद्यावीतंशेषवत् । विशेषेणस्पष्टमितोवीतः सनभवतीत्यवीतः ॥

अवीरः । त्रि । निःसत्त्वे । निर्वीर्ये ।

अवीरा । स्त्री । निष्पतिसुतायाम् । वीरयति । वीरविक्रान्तौ । अच् । पतिपुत्रवतीनारीवीराप्रोक्तामनीपिभिः । नवीरा । अजातोपत्यविधवा

अव्यक्तः

ज्वीरेतिस्मृतिः ।

अवृजिनः । त्रि । यथोक्तकारितयानि- ष्पापे ।

अवेक्षणम् । न । दर्शने । ईषद्दर्शने । ल्युट् ।

अवेक्षा । स्त्री । अवेक्षणे । प्रतिजागरे । अवधाने । अवेक्षणम् । ईषद्दर्शने । गुरोश्चहलइत्यः । टाप् ।

अवेक्षिता । न । अवेक्षके । अध्यक्षे । आयव्ययादिनिरीक्षके । अवेक्षते । ईक्ष० । तृच् ।

अवेद्यः । पुं । गोवत्से । त्रि । अज्ञेये ।

अवेलः । पुं । अपलापे । त्रि । वेला- शून्ये ।

अवेला । स्त्री । पूगचर्विते । चवाई सुपारी इतिभाषा ।

अवैधम् । त्रि । विधिविवर्जिते । विध्य- विषये । यथा । अवैधपशुघ्नं कुर्वन् राक्षोदण्डेनशुध्यतीति ।

अवोदम् । त्रि । अवक्लेदने । उन्दीक्लेद- ने अवपूर्वः । भावेघञ् । अवोदैधौ द्मेतिनिपातनान्नलोपः ।

अव्यक्तः । पुं । शरे । स्मरहरे । सर्वका- रणे । रूपादिहीनतया चक्षुराद्य- गोचरे योगाभ्यासावसेये भावे । कश्चिदेपुसर्वकार्यपुसद्रूपेणानुगते । हिरण्यगर्भे । सूक्ष्मशरीरे । स्यापा-

अव्यक्त

ख्यायाम् । निर्विकारे । शब्दप्रवृ- त्तिनिमित्तजातिगुणक्रियासम्बन्ध- रहिते । व्यक्तःस्पष्टोनेत्यव्यक्तः । यत्र ध्वनिर्वर्णारादयोवर्णा विशेषरूपेण नव्यज्यन्तेसध्वनिरव्यक्तः । मूर्खे । कन्दर्पे । न । प्रकृतौ । तथाहि । यत्सर्वस्यजगतो वीजभूतं, सव्याकृ तनामरूपसतत्त्वम् ।सर्वकार्यकारण- शक्तिसमाहाररूपम् अव्यक्तव्याकृता- काशादिनामवाच्यंपरमात्मन्योतमो- तभावेनेत्समाश्रितम् वटकणिकाया- मिव वटवृक्षशक्तिः संख्यादिरूपेण निरूप्यमाणे व्यतिरेकनास्तीत्यव्य- क्तम् । तदुक्तम् । हेतुमदनित्यमव्या- पिसक्रियमनेकमाश्रितंलिङ्गम् । सावयवंपरतन्त्रं व्यक्तं विपरीतमव्यक्त- मिति । सोऽप्यव्यक्तशब्ददो । आ- त्मनि । परमात्मनि । मायोपाधिके ब्रह्मणि । त्रि । अवयवरहितेन । अ- व्यक्तमितिविज्ञेयं लिङ्गग्राह्यमतीन्द्रि- यम् । सूक्ष्मे । अविस्तये । अस्फुटे । नव्यज्यतेस । अस्फूव्यक्त्यादौ । क्तः । अव्याकृतकार्यभूतसूक्ष्मे । भूतसू- क्ष्मन्याधिकरणे । नव्यक्तम् इतिवा ।

अव्यक्तमूलप्रभवः । पुं । संसारवृक्षे ।

अव्यक्तरागः । पुं । अरुणवर्णे । किञ्चि- ल्लोहिते । अव्यक्तोरागोयस्य ।

अव्यक्तलिङ्गः । त्रि । अदृष्टेनश्रुतिस्मृत्युक्तमकारेण अमर्वति । नव्यक्तंदृष्टे नगृह्योतंलिङ्गमांश्रमिस्य अनेन ।

अव्यग्रः । त्रि । अनाकुले । नव्यग्रः ॥

अव्यङ्गः । त्रि । अविकले । परिपूर्णे । अविकलाङ्गे । नव्यङ्गः ॥

अव्यङ्गा । स्त्री । शूकशिम्ब्याम् ॥

अव्यञ्जनः । पुं । शृङ्गहीनपशौ । त्रि । अव्यक्ते । अस्फुटे । अविद्यमानंव्यञ्जनंयस्ययस्मिन्वा ॥

अव्यण्डा । स्त्री । शूकशिम्ब्याम् । कौंच इतिख्यातायाम् ॥ नविगतमण्डमस्याः ॥

अव्यतिकरः । पुं । अप्रसङ्गे ॥

अव्यथः । पुं । सर्पे । त्रि । निर्व्यथे । न व्यथायस्य । नव्यथते । व्यथभयसञ्चलनयोः । पचाद्यच् ॥

अव्यथा । स्त्री । पथ्यायाम् । चारव्याम् । ओषधीभेदे । शुण्ड्याम् । नव्यथयिस्याः । नव्यथते । व्यथ । पचाद्यच् । टाप् ॥

अव्यथी । पुं । अश्वे । नव्यथते तच्छीलः । व्यथ० । जिद्रुचिक्षिप्रीत्यवसा व्यथाभ्यमपरिभूप्रसूभ्यश्चेतीनिः ॥

अव्यथिषः । पुं । अर्णवे । सूर्ये । नव्यथते । व्यथ० । नञिव्यथेरितिटिषच् ।

अव्यथिषी । स्त्री । धरायाम् । रात्रौ ॥



टित्त्वान्ङीप् ॥

अव्यभिचारी । त्रि । केनापिप्रतिकूलेन हेतुनानिवारयितुमशक्ये ॥

अव्ययः । पुं । न स्वरादिशब्दे । पुं । विष्णौ । शिवे । अनाद्यनन्तेदेहादिसन्तानाश्रये आत्मिकांनमन्तरेणानुच्छेदेमायामयेसंसारदृत्ते । त्रि । उत्पत्तिविनाशादिसर्वक्रियाशून्ये । नित्ये । अविनाशिनि । अपरिच्छिन्ने । यथा । सदृशंत्रिपुलिङ्गेषु सर्वासुचविभक्तिषु । वचनेषुचसर्वेषु यन्नव्येति तदव्ययमिति । नविद्यतेव्ययोऽवयवापचयोगुणापचयोविनाशोवायस्य । यद्वा । नव्येति विकारं नभजत इत्यव्ययम् । विपूर्वादिणः पचाद्यच् । नव्ययः ॥

अव्ययात्मा । पुं । अनश्वरस्वभावे ॥

अव्ययीभावः । पुं । प्रायः पूर्वपदार्थप्रधानेसमासविशेषे ॥

अव्यलीकः । पुं । सत्ये ॥

अव्यवसायवान् । त्रि । शिक्षौ । व्यवसायरहिते । इतित्रिकाण्डशेषः ॥

अव्यवस्था । स्त्री । शास्त्रविरुद्धव्यवस्थायाम् । अपसिद्धान्ते । अविधौ ॥

अव्यवस्थितः । त्रि । नीतिशास्त्रादिव्यवस्थानभिज्ञे । सिद्धान्तरहिते ॥

अव्यवहार्य्यः । त्रि । अभिधानाभिधेयक

ययोर्वाङ्मनसयोरविषये। अव्यवहारायोग्ये। नव्यवहार्यः।

अव्यवहितम्। त्रि। व्यवधानशून्ये। संसक्ते। अपदान्तरे। नव्यवधीयतेस्म। दधातेर्क्तः।

अव्याकृतः। पुं। बीजरूपे। अविवेके। अव्यक्ते। प्रकृतौ। असम्भूतौ। सांख्यशास्त्रे। अनिर्वाच्ये। नव्याकृतः।

अव्याकृताकाशः। पुं। अव्यक्ते।

अव्याजः। पुं। छलाभावे। श्रीये।

अव्यापकम्। त्रि। परिच्छिन्ने। नव्यापकम्।

अव्यापि। त्रि। व्यक्ते।

अव्याप्यम्। त्रि। व्याप्तिरहिते। अव्यापनीये। अनधीने।

अव्याप्यवृत्तिः। त्रि। किञ्चिदवच्छिन्नवृत्तौ। स्वसमानाधिकरणाभावप्रतियोगिनि। दैशिककालिकभेदेन सद्विविधः। तत्पर्यायः। प्रादेशिकः। आत्मनोविशेषगुणाः। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्काराः ९। आकाशस्यविशेषगुणः शब्दः १०। सामान्यगुणौ संयोगविभागौ १२। एतेसर्वे अव्याप्यवृत्तयः स्युरितिन्यायभाषा।

अव्युत्पन्नः। त्रि। अनभिज्ञे।



अशनम्। त्रि। अश्यते।

अशकुम्भी। स्त्री। पानीयपृष्ठजे कुम्भीइतियस्याःप्रसिद्धिः।

अशक्तः। त्रि। असमर्थे। सामर्थ्यहीने। यथा। उपवासेष्वशक्तानांनक्तंभोजनमिष्यतइति। नशक्तिरस्य। नञ्दुःसुभ्योहलिसक्थ्योरितिपाठात्पक्षेअच्।

अशक्तिः। स्त्री। करणवैकल्यहेतुकेबुद्धिधर्मे। साचाष्टाविंशतिभेदभिन्ना यथा। एकादशेन्द्रियवधाःसहबुद्धिवधैरशक्तिरुद्दिष्टा। सप्तदशधाचबुद्धेर्विपर्ययात्तुष्टिसिद्धीनामिति। एकादशेन्द्रियवधास्तु। बाधिर्यंकुष्ठितान्धत्वंजडताजिघ्रतातथा। मूकताकौण्यपङ्गुत्वक्लैव्योदावर्त्तमत्तताः। यथासंख्यंश्रोत्रादीनामिन्द्रियाणांवधाः। एतद्धेतुकाबुद्धेरशक्तिः स्वव्यापारेभवति। तथाचैकादशहेतुत्वादेकादशधाबुद्धेरशक्तिरुच्यते। हेतुहेतुमतोरभेदविवक्षया सामानाधिकरण्यम्। तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वास्वरूपतोऽशक्तिमाह। सहबुद्धिवधैरिति। कतिबुद्धेःस्वरूपतोवधाइत्यतआह। सप्तदशधाचबुद्धेः। कुतः। विपर्ययात्तुष्टिसिद्धीनाम्। तुष्टयोनवेतितद्विपर्ययास्तन्निरूप

यात्वमभवंति। एवंसिद्धयेऽष्टाविति तद्विपर्ययास्त्विरूपणादष्टौभवन्ति इतिसंख्या। अपिच। अशक्ति: कारकापायेसद्यप्रभविष्णुता करिकाणामन्तःकरणवहिष्करणानामपायेविनाशेसति विद्यमानेऽप्यर्थे अप्रभवनशीलत्वमशक्तिः अन्धवधिरादेरिवरूपशब्दादाविति।

अशक्यः। त्रि। असाध्ये। अशकनीये।

अशनुः। पुं। चन्द्रे। त्रि। मधुरहिते। मिर्चेन।

अशनम्। न। ओदने। भक्षणे। अश। ल्युट्। ज्वरवान्ज्वरवर्ज्जितो यथालघुकुर्यादशनंदिनात्यये।

अशनाया। स्त्री। बुभुक्षायाम्। क्षुधायाम्। अशितुमिच्छा अशनस्येच्छा वा। अशनायतिवा सुपइतिक्यच्। अशनायेति ईत्वाभावः। अमरस्त्वयादित्वः।

अशनायितम्। त्रि। क्षुधिते। अशनस्येच्छा अशनायेतिसाधुः। अशनायाजातास्य। तारकादिः।

अशनिः। स्त्री। पुं। चञ्चलायाम्। विद्युति। पवौ। वृक्षादिविनाशकेमेघोत्पन्नज्योतिषि। अश्नाति सङ्घातं करोति। अश्यतेऽनेनेतिवा। अर्त्तिसृधृधम्यश्यादिना अनिः।

अशनिवर्षणे। उल्काविशेषे।

अशनिध्वित्। स्त्री। विद्युति। अशनेः छित्।

अशब्दः। पुं। न। अवेदमूलके।

अशमः। पुं। इदंकृत्वेदंकरिष्यामीति सङ्कल्पप्रवाहानुपरमे।

अशयः। पुं। तापसान्तरे। यःकदापिनशेते।

अशरीरः। पुं। स्वेनरूपेणाकाशकल्पे परमात्मनि। त्रि। शरीररहिते। यथा। प्रत्येगज्ञानशिखिध्वस्तेमिथ्याज्ञानेसहेतुके। नेतिनेतिस्वरूपत्वादशरीरोभवत्ययमिति।

अशर्म। न। दुःखे। त्रि। पीडायुते। शर्मसुखम् तद्विरुद्धम्। नञ्त्रितिन असमासः।

अशाखा। स्त्री। शूलीतृणे।

अशान्तः। त्रि। इन्द्रियलौल्यादनुपरते। आत्मसाक्षात्कारशून्ये। नशान्तः।

अशाश्वतः। त्रि। अस्थिरे। दृष्टनष्टप्राये। नशाश्वतः।

अशास्त्रम्। न। वेदादिविरुद्धे। नशास्त्रमस्मिन्।

अशास्त्रविहितम्। त्रि। वेदेनप्रत्यक्षादिनावा अविहिते। बुद्धागमेवोधिते। शास्त्रेणविहितम्। नशास्त्रविहितम्।

शौर्य्यपर्मीने इति विश्वः ॥

अशोकषष्ठी । स्त्री । चैत्रशुक्लषष्ठ्याम् ॥

अशोका । स्त्री । कटुरोहिण्याम् । बुद्धशासनदेवीविशेषे । अशोकोऽस्याः ॥

अशोकारिः । पुं । कदम्बद्रौ ।

अशोकाष्टमी । स्त्री । चैत्रशुक्लाष्टम्याम् ॥

अशोचः । पुं । अलङ्कृतौ ।

अशोच्यः । त्रि । शोचितुमयोग्ये । निरपराधे ।

अशौचम् । न । आशौचे । वैदिककर्मानर्हत्वप्रयोजके संस्कारविशेषे । विहितकर्मविरोध्यदृष्टविशेषे । शुचित्वाभावे । यथा । क्रियाहीनस्य मूर्खस्य महारोगिण एव च । यथेष्टाचरणस्याहुर्मरणान्तमशौचकमिति ॥ क्रियाहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः । मूर्खस्य गायत्रीरहितस्य सार्थगायत्रीरहितस्येति रुद्रधरः । महारोगिणः उन्मादादिपापरोगाष्टकान्यतमरोगवतः । यथेष्टाचरणस्य द्यूतवेश्याद्यासक्तस्येत्यर्थः ॥ न शौचम् ॥

अश्मकदली । स्त्री । काष्ठकदल्याम् ।

अश्मकीटः । पुं । नारकीटे ।

अश्मकुट्टः । न । तपोविशेषात्तव्रतसंकेतापसान्तरे । भक्षणार्थं प्रियङ्ग्वादीनश्मनैव कुट्टयति । कुट्ट । अच् ॥

अश्मकेतुः । पुं । क्षुद्रपाषाणभेदाख्ये ।

अश्मगर्भः । पुं । हरिन्मणौ । मरकते ॥ अश्मनो गर्भः ॥

अश्मगर्भजम् । पुं । पन्ना इति प्रसिद्धे मरकतमणौ ।

अश्मघ्नः । पुं । पाषाणभेदनवृक्षे । हाथोजोड़ीति भाषा ।

अश्मजम् । त्रि । शिलाजाते । न । शिलाजतुनि । अश्मनो जातम् । जनी प्रादुर्भावे । पञ्चम्यामजातौ विति डः ॥

अश्मजतुकम् । न । शिलाजतुनि ॥

अश्मजातिः । स्त्री । मरकतादिरत्ने । अश्मनो जातिः ॥

अश्मदारणः । पुं । टाँकी इति प्रसिद्धे । टङ्के । दारयति । दॄ । ण्यन्तात् ल्युः । अश्मनो दारणः । दार्यतेऽनेनाश्मा । ण्यन्तात् ल्युट् ।

अश्मा । पुं । पाषाणे । अश्नुते । अशू व्याप्तौ सङ्घाते च । अन्येभ्योऽपीति मनिन् । अशिशकिभ्यां छन्दसीति निन्वा । भाषायामपीष्यते छन्दसीति तु शकिनैवान्वेति व्याख्यानात् ।

अश्मन्तम् । न । अशुभे । चुल्ल्याम् । मरणे । अनवधौ । क्षेत्रे । अश्मनोऽप्यन्तोऽत्र । शकन्ध्वादिः ।

अश्मन्तकः । पुं । न । उद्दाने । चुल्ल्याम् । मल्लिकाच्छदने । दीपाधाराच्छादने ।

संयुपर्माने इतिगिनिः ॥

अशोकषष्ठी । स्त्री । चैत्रशुक्लषष्ठ्याम् ॥

अशोका ॥ स्त्री । कटुरोहिण्याम् । बुद्ध
शासनदेवीविशेषे नशोकोऽस्याः ॥

अशोकारिः । पुं । कदम्बद्रौ ।

अशोकाष्टमी । स्त्री । चैत्रशुक्लाष्टम्याम् ॥

अशोचः । पुं । अनहङ्कृतौ ।

अशोच्यः । त्रि । शोचितुमयोग्ये । निर
पराधे ।

अशौचम् । न । आशौचे । वैदिकक-
र्मानर्हत्वमेधाजके संस्कारविशेषे ।
विहितकर्मविरोध्यदृष्टविशेषे । शुचि
त्वाभावे । यथा । क्रियाहीनस्य मूर्खस्य
महारोगिण एव च । यथेष्टाचरणस्या
हुर्मरणान्तमशौचकमिति । क्रिया
हीनस्य नित्यनैमित्तिकक्रियाननुष्ठा
यिनः । मूर्खस्य गायत्रीरहितस्य सार्थ
गायत्रीरहितस्येति कश्यपः । महारो
गिणः उन्मादादिपापरोगाष्टकान्य
तमरोगवतः । यथेष्टाचरणस्य शूद्रवे
श्याद्यासक्तस्येत्यर्थः ॥ न शौचम् ।

अश्मकदली । स्त्री । काष्ठकदल्याम् ।

अश्मकीटः । पुं । नारकीटे ।

अश्मकुट्ट । त्रि । तपोविशेषात् नवसंचेता
पसान्तरे । अचर्वणार्थं प्रियङ्ग्वादी
नश्मन्येव कुट्टयति । कुट्ट । अच् ।

अश्मकेतुः । पुं । क्षुद्रपाषाणभेदाख्ये ।



अश्मगर्भः । पुं । हरिन्मणौ । मरकते ॥
अश्मनो गर्भः ।

अश्मगर्भजम् । पुं । पन्नादृतिप्रसिद्धे म
रकतमणौ ।

अश्मघ्नः । पुं । पाषाणभेदनवृक्षे । हा
थोजोडीति भाषा ।

अश्मजम् । त्रि । शिलाजाते । न । शिला
जतुनि । अश्मनो जातम् । जनीप्रा
दुर्भावे । पञ्चम्यामजातौविति डः ।
लोहे ।

अश्मजतुकम् । न । शिलाजतुनि ।

अश्मजातिः । स्त्री । मरकतादिरत्ने ।
अश्मनो जातिः ।

अश्मदारणः । पुं । टाँकी इति प्रसिद्धे ।
टङ्के । दारयति । दृ । ण्यन्तात् ल्युः ।
अश्मनो दारणः । दार्यते ऽनेन वा ।
ल्युट् ।

अश्मा । पुं । पाषाणे । अश्नुते । अशू
व्याप्तौ सङ्घाते च । अन्येभ्योऽपीति
मनिन् ॥ अशिशकिभ्यां छन्दसी तिम
निन्वा । भाषायामपीष्यते छन्दसी
लितु शकिरेवान्येतिव्याख्यानात् ।

अश्मन्तम् । न । अशुभे । चुल्ल्याम् । म
रणे । अनवधौ । क्षेत्रे । अश्मनोऽप्य
न्तो ऽत्र । शकन्ध्वादिः ।

अश्मन्तकः । पुं । न । उद्दाने । चुल्ल्याम् ।
मल्लिकाच्छादने । छादने

अशिश्विरः । त्रि । अनिपुणे । शिश्वा रहिते ।

अशितम् । त्रि । भुक्ते । तृप्ते । अश्यते स्म । अशभोजने । क्तः ।

अशित्रम् । त्रि । चौरे । पुं । चरौ । अश्नुतेऽनेन । अशभोजने । अशित्रादिभ्यइत्रोत्राविति इत्रप्रत्ययः ॥

अशिरः । पुं । शीतिस्वाचे । राक्षसे । भास्करे । वायौ । न । हीरके ॥

अशिरा । स्त्री । अशिरराक्षसनार्याम् ।

अशिश्विका । स्त्री । पुत्ररहितायाम् । नशिशुर्यस्याः । सख्यशिश्वीतिसाधुः । स्वार्थेकन् ।

अशिश्वी । स्त्री । अशिश्विकायाम् । नास्याः शिशुरस्तीत्यर्थे सख्यशिश्वीति भाषायामिति निपातनान्ङीप् ॥

अशीतिः । स्त्री । सङ्ख्याविशेषे ८० । सङ्ख्येये । अष्टदशतः परिमाणमस्य । पङ्क्तिविंशति त्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतीत्यादिना निपातनात्प्रकृतेरशीभावस्तिप्रत्ययश्च ।

अशीर्षिकः । त्रि । अशीर्षवति । शीर्षा दिपुशीर्षोन्नम इतिपाठात्कन् ।

अशीलः । त्रि । दुःशीले ।

अशुचिः । पुं । विपत्तुरेपादौ । त्रि । आशौचाशौचहीने । यथा । अतानामुपयातानांन्नादादीनाशसङ्गमे । करोतिर्यः चौरकर्मसोऽशुचिः सर्वकर्मस्विति । नशुचिः ॥

अशुद्धः । त्रि । अज्ञानतत्कार्यसंयुक्ते । अपवित्रे । अकृतशोधने । नशुद्धः ।

अशुभम् । नं । पापे । अनिष्टफले । यथा । स्वेन्द्रियाणांस्वसामर्थ्यंस्वकर्माणिकृतानिच । मुहुर्मुहुश्चविस्मृत्य द्विरमेदशुभान्मनइति । अमङ्गले । त्रि । तद्युक्ते । नशुभम् ॥

अशून्यशयनव्रतम् । न । श्रावणकृष्णद्वितीयायांकर्त्तव्येमत्स्यपुराणोक्तेव्रतविशेषे ।

अशृतम् । त्रि । अपक्वे । नशृतम् ।

अशेषः । त्रि । निःशेषे । सम्पूर्णे । नशेषोऽस्य ।

अशोकः । पुं । कङ्केलिपादपे । यथा । अशोकश्चरणाघाताज्जायते पुष्पवत्तर इति । अस्यगुणायथा । अशोकः शीतलस्तिक्तो ग्राहीवर्ण्यः कषायकः । दोषापचीतृट्दाहकृमिशोषविषास्रजिदिति । नशोकोऽस्मात् । वकुलद्रुमे । न । पारदे । पुष्पे । अशोकस्य पुष्पम् । पुष्पमूलेषु बहुलमित्यणो विकारावयवार्थस्यलुक् । त्रि । सन्तापवर्जिते । निःशोके ।

अशोकरोहिणी । स्त्री । कटुकायाम् । कटुरोहिण्याम् । अशोकस्यरोहतीति । क

स्त्वयुः पर्मीने इतिशिनिः ॥

अशोकषष्ठी । स्त्री । चैत्रशुक्लषष्ठ्याम् ।

अशोका ॥ स्त्री । कटुरोहिण्याम् । वृद्ध स्त्वशासनदेवीविशेषे निशोकोऽस्याः ॥

अशोकारिः । पुं । कदम्बद्रौ ।

अशोकाष्टमी । स्त्री । चैत्रशुक्लाष्टम्याम् ॥

अशोचः । पुं । अनहङ्कृतौ ।

अशोच्यः । त्रि । शोचितुमयोग्ये । निरपराधे ।

अशौचम् । न । अशौचे । वैदिककर्मानर्हत्वप्रयोजके संस्कारविशेषे । विहितकर्मविरोध्यदृष्टविशेषे । शुचित्वाभावे । यथा । क्रियाहीनस्य मूर्खस्य महारोगिण एव च । यथेष्टाचरणस्याहुर्मरणान्तमशौचकमिति । क्रियाहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः । मूर्खस्य गायत्रीरहितस्य सार्थगायत्रीरहितस्येति कल्पतरुः । महारोगिणः उन्मादादिपापरोगाष्टकान्यतमरोगवतः । यथेष्टाचरणस्य धूतवेश्यादासक्तस्येत्यर्थः ॥ निशौचम् ॥

अश्मकदली । स्त्री । काष्ठकदल्याम् ।

अश्मकीटः । पुं । नारकीटे ।

अश्मकुट्टः । त्रि । तपोविशेषात्सञ्चेतापसान्तरे । भक्षणार्थं प्रियङ्ग्वादीनश्मनैव कुट्टयति । कुट्ट । अच् ॥

अश्मकेतुः । पुं । क्षुद्रपाषाणभेदाख्ये ।



अश्मगर्भः । पुं । हरिन्मणौ । मरकते ॥ अश्मनो गर्भः ।

अश्मगर्भजम् । पुं । पन्ना इति प्रसिद्धे मरकतमणौ ।

अश्मघ्नः । पुं । पाषाणभेदनवृक्षे । पाथरचूर इति भाषा ।

अश्मजम् । त्रि । शिलाजाते ॥ न । शिलाजतुनि । अश्मनो जातम् । जनी प्रादुर्भावे । पञ्चम्यामजातावितिडः ॥ लोहे ।

अश्मजतुकम् । न । शिलाजतुनि ॥

अश्मजातिः । स्त्री । मरकतादिरत्ने ॥ अश्मनो जातिः ॥

अश्मदारणः । पुं । टाँकी इति प्रसिद्धे । टङ्के । दारयति । दॄ । ण्यन्ताल्ल्युः । अश्मनो दारणः । दार्यतेऽनेनेति वा । ण्यन्ताल्ल्युट् ।

अश्मा । पुं । पाषाणे । अश्नुते । अशू व्याप्तौ सङ्घाते च । अन्येभ्योऽपीति मनिन् ॥ अशिशकिभ्यां छन्दसीति मनिन्वा । भाषायामपीष्यते छन्दसीति तु यकिनैवान्वेतिव्याख्यानात् ।

अश्मन्तम् । न । अशुभे । चुल्ल्याम् । मरणे । अनवधौ । क्षेत्रे । अश्मनोऽप्यन्तो ऽत्र । शकन्ध्वादिः ।

अश्मन्तकः । पुं । न । उद्दाने । चुल्ल्याम् । मल्लिकाच्छदने । दीपाधारे । छादने ।

। पुं। दृक्षविशेषे। अम्लोटके। वृक्षान्तरे। आवुडेति प्रसिद्धे। इन्दुके।

कुरोल्यौम्। अम्लपत्रे। कोविदारवृक्षे।

**अश्मपुष्पम्**। नि। शैलेये। कालानुसार्ये। शिलाजतुनि। अश्मनः पुष्पमिव।

**अश्मभाण्डम्**। नि। लौहभाण्डे। हमाम-दिस्तेतिख्याते।

**अश्मभित्**। पुं। अश्मभेदे। पाषाणभेदे। त्रि। पाषाणभेदके। अश्मानं भिनत्ति। भिदिर्‌श क्विप् तुक्।

**अश्मभेदः**। पुं। पाषाणभेदे। गुणास्तु अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः। भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः। योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानि चेति।

**अश्मरः**। पुं। पाषाणजाते। प्रस्तरसम्बन्धिनि।

**अश्मरी**। स्त्री। मूत्रकृच्छ्रे। अश्मानं राति। रादाने। आतोनुपसर्गे कः। गौरादिः।

**अश्मरीघ्नः**। पुं। वरुणद्रौ। अश्मरीं हन्ति। हन०। हन्ते राऽमनुष्यकर्तृके टक्।

**अश्मशीर्षः**। पुं। देवधान्ये।

**अश्मसारः**। पुं। न। लौहे। अश्मनः सारः।



**अश्मीरः**। पुं। न। अश्मरीरोगे।

**अश्मोत्थम्**। न। शिलाजतुनि।

**अश्यमानः**। त्रि। भुज्यमाने।

**अश्रम्**। नि। नेत्राम्बुनि। अश्नुते कण्ठम्। अशूव्याप्तौ। अन्यत्रापीति रक्।

**अश्रद्धानः**। त्रि। श्रद्धाहीने। पापकारिणि। आसुरसम्पदमारूढे। गुरुवेदान्तवाक्यार्थे इदमेवं न भवत्येवेति विपर्ययरूपानास्तिक्यबुद्धिरश्रद्धा तद्वति।

**अश्रान्तम्**। नं। सन्तते। त्रि। अश्रमे। श्रमुतपसि खेदे च। भावे क्तः। अनुनासिकस्येति दीर्घः। अविद्यमानं श्रान्तं श्रमः। क्रियाविशेषणत्वे क्लीवत्वम्। द्रव्यविशेषणे तु त्रिलिङ्गम्।

**अश्रिः**। स्त्री। कोट्याम्। खड्गाद्यग्रभागे। गृहादिकोणे। अश्नोति अश्नुते वा। अशभोजने अशूव्याप्तौ वा। विड्क्रादि। आश्रीयते महारायेम्। आङि श्रिञ्हनिभ्यां ह्रस्वश्चेति ण्। स च डित्। डित्वाट्टिलोपः आङो ह्रस्वश्च।

**अश्रु**। न। नेत्रजले। अश्नुते कण्ठम्। अशूव्याप्तौ। अशूटष्टचेति, इत्यस्य यात्त्वं साधु। नञ्पूर्वात् श्रूयते ऽनया। नश्रूयते इति विग्रहः।

**अश्रुतः**। त्रि। मूर्खे। अश्रुतश्रवणे। अनाकर्णिते।

अश्लीकम् । नं । अश्लीके । श्रीभे । रेफस्य लकारः ॥

अश्लीलम् । न । ग्राम्यवाचि । भण्डादिवचने ॥ श्रियं राति । आतोनुपेतिकः । तद्भिन्नम् । कपिलकादी नामुपसङ्ख्यानमिति लत्वम् । श्रीशोभातस्याः सिध्मादित्वाल्लच् । अश्लीलं तदमङ्गलं व्यञ्जुगुप्साव्रीडाकरम् ॥

अश्लेषा । स्त्री । नवमनक्षत्रे । तत्रजातस्य फलं यथा । वृथाटनः स्यादतिदुष्टचेताः कष्टप्रदश्चापि हि योजनानाम् । सर्पे सदर्पो हि शठार्पितार्थः कन्दर्पसन्तप्तमनामनुष्य इति ॥ चि । श्लेषशून्ये ।

अश्लेषाभवः । पुं । केतुग्रहे । अश्लेषायां भवोयस्य ॥

अश्लेषाभूः । पुं । केतुग्रहे ॥

अश्वः । पुं । तुरगे । अस्यमांसगुणा यथा । अश्वमांसं तु सवर्णं वह्निकृत्कफपित्तलम् । वातहृद्बृंहणं बल्यं चक्षुष्यं मधुरं लघु ॥ इति राजवल्लभः ॥ संज्ञायाम् । पुं । सप्ताङ्के । पुंजातिभेदे । यथा । कामृतुं व्यवपुर्धृष्टो मिथ्याचारश्च निर्भयः । श्वादयाङ्गुलमेढ्रश्च दरिद्रश्चुष्वयोमश्चाश्व इत्यस्य लक्षणम् ॥ अश्नुते । अशू व्याप्तौ संघाते च । अशूमुपिलटी तिकन् ।

अश्वकन्दिका । स्त्री । अश्वगन्धायाम् ॥



अश्वकर्णः । पुं । सालवृक्षे । सखुआ इति ख्याते ॥ अश्वकर्ण इव पत्रमस्य । अश्वकर्णः कषायः स्यात् स्वेदकफकृमीन् । व्रणविद्रधिवाधिर्ययोनिकर्णगदान् हरेत् ॥

अश्वकर्णकः । पुं । शालवृक्षे । जरणद्रुमे ॥

अश्विनी । स्त्री । अश्विनीनक्षत्रे ॥

अश्वखरजः । पुं । वेसरे । खच्चर इति भाषाप्रसिद्धे ॥

अश्वखुरः । पुं । नखीतिख्याते गन्धद्रव्ये ।

अश्वखुरा । स्त्री । अपराजितायाम् ॥

अश्वगन्धा । स्त्री । वराहकर्ण्याम् । असगन्ध इतिख्यातौषधौ ॥ अश्वगन्धानिलश्लेष्मश्वित्रशोथक्षयापहा । बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला ॥

अश्वगन्धिका । स्त्री । अश्वगन्धायाम् । अश्वगन्धैव । स्वार्थे कः ॥

अश्वगोयुगम् । न । अश्वयुग्मे । द्वावश्वौ । द्विगोर्युगच् ॥

अश्वगोष्ठम् । न । मन्दुरायाम् ॥ अश्वानां स्थानम् । गोष्ठादयः स्थानादिषु पशुनामभ्य इति गोष्ठच् प्रत्ययः ।

अश्वग्रीवः । पुं । विष्णुवेद्यसुरविशेषे ।

अश्वघ्नः । पुं । करवीरे ॥ अश्वं हन्ति । हनः । अमनुष्यकर्तृके चेतिटक् । गमहनेत्युपधालोपः । कुत्वम् ॥ नि

। हयूप्रे।

**अश्वतर:** । पुं । गन्धर्वविशेषे । नागभेदे ॥ वेगसरे । गर्दभेनाश्वायामुत्पन्ने । घोटकाद्गर्दभीजाते । तनुरश्व: । वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वइति ष्टरच ॥ अश्वेनाश्वायामुत्पन्नोऽश्व: अश्वत्वजाति: तत्सहचरितस्योक्तो धर्मस्य तनुत्वमन्यपितृकत्वात् । ङीषि । अश्वतरी ।

**अश्वत्थ:** । पुं । पिप्पलद्रौ । वृक्षादीनां मध्ये भगवद्विभूतौ ॥ गर्दभाण्डेवृक्षे । पार्श्वपिप्पले । अश्वत्थंजलमस्यास्ति । मूले सिक्तत्वात् । अर्शआद्यच् । अश्वत्थवत् कामकर्मवातेरितनित्यप्रचलितस्वभावत्वात् आशुविनाशित्वेन श्वोपिस्थास्यतीतिविश्वासानर्हत्वान्मायामयेसंसारवृक्षे ॥ शाल्मलिवटाद्यपेक्षयाऽनश्वरं श्विरंतिष्ठति अश्वत्थतिष्ठतिवा । ष्ठागतिनिवृत्तौ । पृषोदरादित्वात्पूर्वोत्तरपदान्तयो:सकारयोस्तकारौ । सुपिस्थइतिक: । अस्थिररूपोयंसंसारवृक्ष: । न । जले ।

**अश्वत्थकम्** । न । तृणविशेषे । अश्वत्थफलमश्वत्थ: । तद्युक्त:कालोप्यश्वत्थ: । अश्वत्थे अश्वत्थफलोत्पत्तिकाले देयमृणम् । कलाप्यश्वत्थयवबुसाद्वुन् ।

**अश्वत्थफला** । स्त्री । वृन्तुपायाम् ॥

**अश्वत्थभेद:** । पुं । स्थालीवृक्षे ।

**अश्वत्थव्रतम्** । न । कन्यानांबालवैधव्यदोषनिवारके व्रतविशेषे ॥ यथा । सुस्नाताभिन्नवस्त्राढ्या कन्यापितृगृहाद्बहि: । करकेणाम्बुपूर्णेन सिञ्चेत्संप्रतिवासरम् । चैत्रेचाश्विनेमासेचतृतीयासितपक्षत: । यावत्कृष्णतृतीयास्यान्मासमेकंयथाविधि ॥ ब्राह्मणान् भोजयेन्नित्यंपूजनंचसमाचरेत् । तदाशिषामुयात्कन्यासौभाग्यंचसुखान्वितम् ॥ प्रतिमांपार्वतीशयोर्विश्ववेभाजनेर्चयेत् । चन्दनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि ॥ उपचारैर्यथाभक्त्यानैवेद्यै:प्रतिवासरम् । एवंव्रतप्रभावेणबालवैधव्यनिष्कृति: ॥ जायतेकन्यकानांचतत:पाणिग्रहक्रियेति ।

**अश्वत्था** । स्त्री । पूर्णिमातिथौ ॥ इषपौर्णमास्याम् ।

**अश्वत्थामा** । पुं । द्रोणाचार्यपुत्रे । कृपीसूनौ ॥ अश्वस्येव स्थामबलंयस्य । पृषोदरादित्वात् सलुप्त: । यद्वा । अश्वत्थतिष्ठति । ष्ठा० । आतोमनिन् ।

**अश्वत्थिका** । स्त्री । }
**अश्वत्थी** । स्त्री । } वृक्षविशेषे । पवित्रायाम् । पिप्पलिकायाम् ।

अश्वनायः । पुं । अश्वपाले । अश्वान्नयति । कर्मण्यण् ।

अश्वपतिः । पुं । रामायणप्रसिद्धे नृपतौ । कैकेये ॥

अश्वपालः । पुं । घोटकरक्षके ।

अश्वपुच्छी । स्त्री । माषपर्ण्याम् ।

अश्ववालः । पुं । काशे । अश्वस्यवाले ।

अश्वमहिषिका । स्त्री । अश्वमहिषयोः स्वाभाविकेवैरे । अश्वमहिषयोर्वैरम् । द्वन्द्वाद्वुन्वैरमैथुनिकयोः ।

अश्वमारः । पुं । करवीरे ।

अश्वमारकः । पुं । करवीरे । अश्वानां मारकः ॥

अश्वमुखः । पुं । किन्नरे । अश्वस्येवमुखमस्य ॥

अश्वमुखी । स्त्री । किम्पुरुषयोषिति । अश्वस्येवमुखंयस्याः ॥

अश्वमेधः । पुं । यागभेदे । क्रतुराजि ॥

अश्वमेधीयः । पुं । ययौ । अश्वमेधाय हितः । अश्वमेधाच्छ । अश्वलक्षणंयथा । गोक्षीरसवर्णश्च कुन्देन्दुहिमसन्निभम् । पीतपुच्छं श्यामकर्णं सर्वतोगतिमत्तमम् । श्यामंवापिमहीपालयज्ञेषुस्सुरपं विदुरिति ॥

अश्वयुग् । पुं । आश्विने ॥ स्त्री । अश्विनीनक्षत्रे । अश्वंयुनक्ति रूपेणानुकरोति । युजिर्योगे । सत्सूद्विषेति क्विप् । अश्वंयुजि जाते । जातार्थप्रत्ययस्यवालुक्पक्षे आश्वयुजः ।



अश्वयुजः । पुं । आश्विने । अश्वयुजायुक्तापौर्णमास्यस्मिन्नस्ति । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥

अश्वरोधकः । पुं । करवीरवृक्षे ।

अश्वलः । पुं । वेदप्रसिद्धे ऋषिभेदे ।

अश्वलक्षणम् । न । घोटकलक्षणे ।

अश्वलोमा । स्त्री । सर्पविशेषे । हलाहले । अश्वलालेत्यपिपाठः । इति त्रिकाण्डशेषः ॥

अश्ववक्त्रः । पुं । किन्नरे । अश्वस्येववक्त्रमस्य ।

अश्ववारः । पुं । सादिनि । अश्वंवारयतीति । कर्मण्यण् ।

अश्ववारणः । पुं । गवये । गोसदृशे । इति हेमचन्द्रः ।

अश्ववाहः । पुं । सादिनि ।

अश्ववित् । पुं । नले । दमयन्तीपतौ । त्रि । अश्वविद्यान्विते ।

अश्ववैद्यः । पुं । घोटकचिकित्सके । शालिहोत्रादिषु । सारोत्तरीतिख्याते ।

अश्वशाला । स्त्री । मन्दुरायाम् ।

अश्वशृगालिका । स्त्री । अश्वशृगालवैरे । अश्वशृगालयोर्वैरम् । द्वन्द्वाद्वुन्वै

दिनचयम्। शास्त्रंतपनाधीयीतयत्न वर्ज्यविवर्जयेदितिब्रह्माण्डपुराणम्। श्राद्धभेदे। पौषादिमासत्रयाणांकृष्णाष्टम्यास्। यथा। तिस्रोऽष्टकाभवन्ति पूपाष्टका मांसाष्टका शाकाष्टका-चेति। तत्रापूपस्यानुरूपतया तस्यैव, इतिवमतयामुख्यत्वम्। मांसशाकयोस्तूपकरणत्वेनान्वयो यथास्तक्ष्यमष्टकाद्वये मुख्यद्रव्यमोदनादिकमेव। अस्नन्तिपितरोऽस्याम्। अश भोजने। इष्यशिभ्यांतकन्। अष्टका पितृदेवत्ये॥

अष्टकाङ्गम्। न। नयपीठ्याम्। पाशारङ्क इतिगौडभाषाप्रसिद्धे। इतित्रिकाण्डशेषः।

अष्टौ। त्रि। सङ्ख्याविशेषे ८। सङ्ख्येये। अश्नुते। अशूव्याप्तौ, सङ्घाते च। सप्यशूभ्यांतुट्चेतिकनिन्।

अष्टपात्। पुं। शरभे। लूतायाम्।

अष्टपादः। पुं। किन्तनौ। ऊर्णनाभविशेषे। शरभे।

अष्टपादिका। स्त्री। चापरमाली इति गौडभाषाप्रसिद्धे लताविशेषे।

अष्टमः। त्रि। अष्टानाम् पूरणे। तस्यपूरणेडट्। नान्तादसङ्ख्यादेर्मट्। पञ्चमस्यभागे। मानपञ्चमयोः कन्लुकौ वेतिकस्यमनोयालुक्।



अष्टमङ्गलः। पुं। श्वेतोरः खुरपुच्छास्यपृष्ठकेशतुरङ्गमे। न। द्रव्यान्तरे। तथा। स्वगराजोवृषोनागः कलशो व्यञ्जनंतथा। वैजयन्तीतथाभेरी दीप इत्यष्टमङ्गलमिति॥ अन्यच्च। लोकेस्मिन्मङ्गलान्यष्टौ ब्राह्मणोगौर्हुताशनः। हिरण्यंसर्पिरादित्य आपोराजातथाष्टम इतिस्मृतिः। अष्टौमङ्गलानियस्य। अष्टानांमङ्गलानांसमाहारः॥ अष्टौषधयुक्तपक्वघृते। यथा। ब्राह्मीवचाकुष्ठंतथाहरीतकी-सिद्धार्थकमथापिच। सारिवासैन्धवश्चैवपिप्पलीघृतमष्टमम्। सिद्धंघृतमिदंमेध्यंपिबेत् प्रातर्दिनेदिने। इतस्मृतिः कुमाराणांपिवताम्अष्टमङ्गलमिति॥

अष्टमानम्। न। कुडवपरिमाणे। अष्टमाढे।

अष्टमिका। स्त्री। शुक्तिपरिमाणे। मतुस्तोलके। इतिवैद्यकपरिभाषा।

अष्टमी। स्त्री। चीरकाकोल्याम्। तिथिविशेषे। अष्टानांपूरणी। ङीप्। अथजातस्यफलन्तु। भूपालतः मानधनः कृशाङ्गः सुखीकृपालुर्युवतिप्रियश्च। चतुष्पदाद्योधनधान्ययुक्तः स्यादष्टमीजोमनुजः सुधीर इति।

अष्टमूर्त्तिः। पुं। शिवे। अष्टौमूर्त्त

योयस्य। यथा। पृथिवीसलिलंतेजो वायुराकाशमेवच। सूर्याचन्द्रमसौ याजिरष्टौभङ्करमूर्त्तयइतियादवः। क्षितिमूर्त्तिः सर्वः १। जलमूर्त्तिर्भवः २। अग्निमूर्त्तीरुद्रः ३। वायुमूर्त्तिरुग्रः ४। आकाशमूर्त्तिर्भीमः ५। यजमानमूर्त्तिः पशुपतिः ६। चन्द्रमूर्त्तिर्महादेवः ७। सूर्यमूर्त्तिरीशानः ८। एताःशरभमूर्त्तिशिवस्याष्टपादाः।

अष्टरवः। पुं। मेघनादे।

अष्टलोहकम्। न। अष्टसङ्ख्यकधातुविशेषे। यथा। सुवर्णम्। रजतम्। ताम्रम्। वङ्गः। सीसम्। कान्तलोहम्। मुण्डलोहम्। तीक्ष्णलोहमिति॥

अष्टवर्गः। पुं। आदिकादिवर्गेषु। जीवकादौ। यथा। जीवकर्षभकौमेदे काकोल्यावृद्धिवृद्धिके। अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः। अष्टवर्गो हिमः स्वादुर्वृंहणः शुक्रलो गुरुः। भग्नसन्धानकृत्तन्यवकासवलवर्द्धनः। वातपित्तास्रतृड्दाहज्वरमेहक्षयप्रणुत। राज्ञामप्यष्टवर्गस्तु यतोयमतिदुर्लभः। तस्मादस्यप्रतिनिधिंगृह्णीयात्तद्गुणंभिषक्। मेदाजीवककाकोलीऋद्धिद्वन्द्वेपिचासति। वरीविदार्यश्वगन्धावाराहीश्चक्रमात्क्षिपेत्॥ मेदामहामेदास्थाने शतावरीमूलम्। जीवकर्षभयोःस्थानेविदारीमूलम्। काकोलीक्षीरकाकोल्योःस्थाने अश्वगन्धामूलम्। ऋद्धिवृद्ध्योःस्थाने वाराहीकन्दंक्षिपेत॥ नीतिवेदिनांशास्त्रे। कृषिर्वणिक्पथोदुर्गंसेतुःकुञ्जरबन्धनम्। खन्याकरबलादानंसैन्यानांचनिवेशनम्। अष्टवर्गमिमंसाधुः स्वयंवृद्धोपिवर्द्धयेदिति। अष्टानांवर्गः।



अष्टश्रवाः। पुं। ब्रह्मणि। द्रुहिणे॥

अष्टाकपालः। पुं। हविर्भेदे॥ यत्राष्टसुकपालेषुपुरोडाशःपक्कोहूयते तस्मिन्यज्ञे॥ अष्टसुकपालेषुसंस्कृतः। संस्कृतंभक्ष्याइत्यणोद्विगोर्लुगनपत्यइतिलुक्। अष्टनःकपालेहविषीत्यात्वम्।

अष्टाङ्गः। पुं। योगभेदे। अष्टअङ्गान्यस्य। तानियथा। यमंनियममासनंप्राणायामंततःपरम्। प्रत्याहारंधारणाचध्यानंसार्द्धंसमाधिना। अष्टाङ्गान्याहुरेतानियोगिनांयोगसाधने इति। पापके। प्रणतिविशेषे। यथा। जानुभ्यांचतथा पद्भ्यांपाणिभ्यामुरसाधिया। शिरसावचसादृष्ट्याप्रणामोऽष्टाङ्गईरित इति।

अष्टाङ्गार्घ्यः । पुं । अष्टद्रव्यघटितपूजोपकरणविशेषे । यथा । आपः क्षीरं कुशाग्राणि दधिसर्पिः सतण्डुलाः । यवाः सिद्धार्थकाश्चैव अष्टाङ्गार्घ्यः प्रकीर्त्तितः ॥ इति तन्त्रशास्त्रम् ॥ अपि च । आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि । रक्तानि करवीराणि तथा रक्तञ्च चन्दनम् ॥ अष्टाङ्ग एष अर्घो वै भानवे परिकीर्त्तितः ॥ इति काशीखण्डम् ॥

अष्टादशः । त्रि । अष्टादशानां पूरणे । डट् ।

अष्टादश । त्रि । साष्टदशसङ्ख्यायाम् । साष्टदशसङ्ख्येये । अष्टौ च दश च अष्टाधिका दशेति वा । द्व्यष्टनः सङ्ख्यायामित्यात्वम् ॥ अथाष्टादशवाचकाः शब्दाः ॥ द्वीपः । विद्या । पुराणम् । स्मृतिः । धान्यमिति ॥

अष्टादशाङ्गः । पुं । अष्टादशद्रव्यात्मके पाचने ।

अष्टापदः । पुं न । कनके । शारीणां खेलनाधारपट्टे । शारीफलके । पुं । शरभे । मर्कटे । मकडी इति भाषाप्रसिद्धे । कृमौ । कैलासे । कीलके । पतौ पतौ अष्टौ पदान्यस्य । अष्टौ धातवः पदान्यस्य ॥ अष्टसु धातुषु पदं प्रतिष्ठास्येति वा । अष्टनः संज्ञायामिति दीर्घः । यद्वा । अष्टाना- मष्टपदम् ।

अष्टापदी । स्त्री । चन्द्रमल्ल्याम् । लूतायाम् । अष्टौ पादाः अस्याः । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपे पादोऽन्यतरस्यामिति ङीपि पादः पत् ॥

अष्टापाद्यम् । न । अष्टभिर्गुणिते । अष्टभिरापाद्यते गुण्यते इति तत् ॥

अष्टारचक्रवान् । पुं । मञ्जुघोषे । जिनविशेषे । अष्टारचक्रमस्यास्तीति मतुप् ॥

अष्टिः । स्त्री । बीजे । अश्यते भूमौ क्षिप्यते । अशु० । कर्मणि क्तिन् । पृषोदरादिः ॥ षोडशाक्षरायां वृत्तौ । षोडशाङ्के ॥

अष्टिदिनान्तरालः । त्रि । षोडशदिनसाध्यकार्ये ॥

अष्ठीला । स्त्री । नाभेरधोभागे पाषाणपिण्डिकावद्वातव्याधिविशेषे । यथा । आध्मापयन् वस्तिगुदं रुध्वा वातश्चलोन्नताम् । कुर्यात्तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीमिति ॥ वर्त्तुलपाषाणखण्डे ॥

अष्ठीवत् । न । पुं । जानुनि । ऊरुपर्वणि । अतिशयितमस्थि यस्मिन् । मतुप् । आसन्दीवदष्ठीवदिति निपातनादस्थिशब्दस्याष्ठीभावः । जान्वोः सन्धौ ।

असः । पुं । अन्यस्मिन् । सन भवति । न

असमासः।

असंवीतः। त्रि। नग्ने।

असंस्कृतः। त्रि। गर्भाधानादिसंस्कारविधुरे। अनुपनीते। नसंस्कृतः। सुसंस्कृतःसुतः श्रेष्ठोनापरोवेदपारगः।

असंस्तुतः। त्रि। अपरिचिते। नसंस्तुतः।

असंहतः। पुं। सेनानांपृथग्वृत्तिमति व्यूहे। असंलग्ने।

असकृत्। अ। पौनःपुन्ये। अनेकशः। नसकृत्।

असक्तः। त्रि। सर्वसम्बन्धशून्ये। फलाभिलाषरहिते कर्त्तृत्वाभिमानहीने यथाविधिकर्मकर्त्तरि। नसक्तः।

असक्तबुद्धिः। त्रि। अहमेषां ममैतेइत्यभिष्वङ्गरहितबुद्धौ। असक्ताबुद्धिर्यस्य।

असक्तात्मा। त्रि। अनासक्तचित्ते। दृष्टप्राप्तान्यतयाविरक्ते। असक्त आत्मा अन्तःकरणंयस्य।

असक्तिः। स्त्री। सङ्गाभावे। ममेदमित्येतावन्मात्रेणप्रीतिः सक्तिस्तदभावे। नसक्तिः।

असङ्कसुकः। त्रि। स्थिरमतौ। नसङ्कसुकः।

असङ्कुलः। पुं। गजाद्यध्वनि। विस्तृतेपथि। नसङ्कुलः।

असङ्क्रान्तमासः। पुं। मलमासे। मलिम्लुचे।

असङ्ख्यः। त्रि। युद्धवर्जिते। परार्द्धातीतसंख्यायाम्। सामान्यतोगणनारहिते।

असङ्ख्यातः। त्रि। अकृतसङ्ख्ये। अनगिने इतिभाषा।

असङ्ख्येयः। पुं। परमात्मनि। हरौ। यस्मिन्संख्यानामरूपभेदादिनविद्यते। त्रि। सङ्ख्यातुमयोग्ये।

असङ्गः। पुं। सङ्गविरोधिनि। पुत्रवित्तलोकैषणात्यागरूपे वैराग्ये। निर्विषये चिदात्मनि। यथा। आत्मस्थाममविद्यातामसङ्गोनस्पृशत्यसौ। दृष्टान्तमेवियन्निरावस्पृश्यो वियता यथा। नदृष्टालिप्यते व्योमना तमेनापिशुष्यति। अविद्यया विद्यया वाणात्मन्यतिरायस्तथेति। त्रि। रागाभाववति। आशायातु निरायस्त्वमभावयातुभावना। अमनस्त्वमभेयातुतथासङ्गे नजीवतः। नास्तिसङ्गोयस्य।

असङ्गतः। त्रि। अनुचिते। नसङ्गतः। सङ्गतिरहिते। नासङ्गतंप्रयुञ्जीत।

असङ्गतिः। स्त्री। अर्थालङ्कारभेदे। यथा। भिन्नदेशतयात्यन्तंकार्यकारणभूतयोः। युगपद्धर्मयोर्यत्रख्यातिः

अष्टाङ्गार्घ्यः। पुं। अष्टद्रव्यघटितपूजोपकरणविशेषे। यथा॥ आपः क्षीरं कुशाग्राणि दधिसर्पिः सतण्डुलाः। यवाः सिद्धार्थकाश्चैव अष्टाङ्गार्घ्यः प्रकीर्त्तितः॥ इति तन्त्रशास्त्रम्। अपि च। आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि। रक्तानि करवीराणि तथा रक्तं च चन्दनम्। अष्टाङ्ग एष अर्घो वै भानवे परिकीर्त्तितः॥ इति काशीखण्डम्॥

अष्टादशः। त्रि। अष्टादशानां पूरणे। डट्।

अष्टादश। त्रि। साष्टदशसङ्ख्यायाम्। साष्टदशसङ्ख्येये। अष्टौ च दश च अष्टाधिका दश वा। द्व्यष्टनः सङ्ख्यायामित्यात्वम्॥ अथाष्टादशवाचकाः शब्दाः॥ द्वीपः। विद्या। पुराणम्। स्मृतिः। धान्यमिति।

अष्टादशाङ्गः। पुं। अष्टादशद्रव्यात्मके पाचने।

अष्टापदः। पुं न। कनके। शारीणां खेलनाधारपट्टे। शारीफलके। पुं। शरभे। मर्कटे। मकडी इति भाषाप्रसिद्धे। कृमौ। कैलाशे। कीलके॥ पक्षी पक्षी अष्टौ पदान्यस्य। अष्टौ धातवः पदान्यस्य॥ अष्टसु धातुषु पदं प्रतिष्ठाऽस्येति वा। अष्टनः संज्ञायामिति दीर्घः। यद्वा। अष्टानाम् अपदम्।

अष्टापदी। स्त्री। चन्द्रमल्लयाम्। लताभाम्। अष्टौ पादा अस्याः। सङ्ख्यासुपूर्वस्येति पादस्यान्त्यलोपे पादोऽन्यतरस्यामिति ङीपि पादः पत्।

अष्टापाद्यम्। न। अष्टभिर्गुणिते। अष्टभिरापाद्यते गुण्यते इति तत्।

अष्टारचक्रवान्। पुं। मञ्जुघोषे। जिनविशेषे। अष्टारचक्रमस्यास्तीति मतुप्।

अष्टिः। स्त्री। वीजे। अश्यते भुज्यते। अशु॰। कर्मणि क्तिन्। पृषोदरादिः। षोडशाक्षरायां वृत्तौ। षोडशाङ्के।

अष्टिदिनान्तरालः। त्रि। षोडशदिवसाभ्यन्तरे।

अष्ठीला। स्त्री। नाभेरधोभागे पाषाणपिण्डिकावद्वातव्याधिविशेषे। यथा। आध्मापयन् वस्तिगुदं रुद्ध्वा वातश्चलोन्नताम्। कुर्यात्तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीमिति॥ वर्त्तुलपाषाणखण्डे।

अष्ठीवत्। न। पुं। जानुनि। ऊरुपर्वणि। अतिशयितमस्थि यस्मिन्। मतुप्। आसन्दीवदष्ठीवदिति निपातनादस्थिशब्दस्याष्ठीभावः। जान्वोः सन्धौ।

असः। पुं। अन्यस्मिन्। सनभयोरि। न

असम्बद्धः । त्रि । समुद्धृते । पण्डितम्मन्ये । दृप्ते । धृतिजटाधरः । अकृतसन्नाहे । नसम्बद्धः ॥

असपत्नः । त्रि । शत्रुवर्जिते ॥ नविद्यतेसपत्नोयस्य ॥

असभ्यः । त्रि । सभायामनर्हेस्त्रीवर्गनादौ ॥ सभायामनुपयुक्ते ॥ खले ॥

असमः । पुं । बुद्धे ॥ त्रि । विषमे ॥ अतुल्ये ॥ नविद्यते समोयस्य ॥

असमञ्जसम् । त्रि । अयुक्ते ॥ नसमञ्जसम् ॥ पुं । केशिन्यामुत्पन्नेसगरात्मजे ॥

असमर्थः । त्रि । सापेक्षे ॥ अशक्ते । दुर्बले ॥ नसमर्थः ॥

असमवायिकारणम् । न । कार्येणकारणेनवासहैकस्मिन्नर्थेसमवेतत्वेसति कारणे ॥ यथातन्तुसंयोगःपटस्य तन्तुरूपंपटरूपस्य । यथावा । परमाणुद्वयसंयोगोद्व्यणुकस्य कपालरूपंच घटरूपस्य । असमवायिकारणन्तु सर्वत्रद्रव्येगुणः गुणेगुणः कर्मच ॥ असमवायिच तत्कारणञ्च ॥

असमानयानकर्मा । पुं । सन्धेः प्रभेदे । यत्र त्वमत्रयाहि अहमत्रयास्यामीति सामयिकोत्तरकालीनफलार्थितयै क्रियते सोऽसमानयानकर्मासन्धिर्बोध्यः ॥

असमाहितः । त्रि । अनेकाग्रमनसि विचिप्तचित्ते ॥ नसमाहितः ॥

असमीक्ष्यकारी । त्रि । जाल्मे । अविचार्यकर्त्तरि । असमीक्ष्याविचार्यकर्त्तुं शीलमस्य । सुपीतिणिनिः ॥

असमेषुः । पुं । अनङ्गे ॥ असमाःइषवोयस्य ॥

असम्पृक्तः । त्रि । असम्बद्धे ॥ नसंपृक्तः ॥

असम्प्रज्ञातसमाधिः । पुं । निर्विकल्पकसमाधौ ॥ निवृत्तचेतोव्यापारे यः परमानन्दसाक्षात्कारः सोऽपुंसान्द्रसाक्षात्कारवत् सोऽसम्प्रज्ञातसमाधिः ॥

असम्बद्धम् । त्रि । अबद्धे । अनर्थकवाक्ये ॥ नसम्बद्धम् ॥

असम्बद्धप्रलापः । पुं । सत्यस्यापिराजदेशचौरवार्त्तादिर्निष्प्रयोजनवर्णने ॥ त्रि । तद्वति ॥

असम्बाधः । त्रि । अन्योन्यपीडारहिते ॥

असम्भूतिः । स्त्री । प्रकृतौ । चित्तन्त्रायामायायां परमेश्वरस्योपाधौ ॥ सम्भवनंसम्भूतिःकार्यम् । तस्याःअन्या ॥

असम्भेदः । पुं । अविदारणे । अविनाशे ॥ सम्भेदनम् । भिदिर् विदारणे । घञ् । नसम्भेदः ॥

असम्मतम् । त्रि । मृणाय्ये । अनभिमते ॥ नसम्मतम् ॥

साख्यादसङ्गतिः । इहयद्देशकालयोरन्तर्हितमेवकार्यमुत्पद्यमानंदृष्टम् । यथा धूमादि । यत्रहेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतयायुगपदवभासनंसातयोःस्वभावोत्यन्त परस्परसङ्गतित्यागादसङ्गतिः। उदाहरणम् । जस्से अ वणो तस्से अ वेअणा भण इतं जणो अलिअम् । दन्तक्खअं कवोले वहूए वेअणा सवत्तीणम् । अस्यसंस्कृतं यथा । यस्यैवव्रणस्तस्यैववेदनाभणतितज्जनोऽलीकम् । दन्तक्षतंकपोलेवध्वावेदनासपत्नीनामिति ।

असत् । पुं । इन्द्रे । इतित्रिकाण्डशेषः ॥ त्रि । निरुपाख्ये । प्रागभावप्रतियोगिनि । निःस्वरूपे । यत्सम्बन्धितयाथ अविद्यते तत्तत्रासदित्युच्यते । निषेधमुखेन प्रतीयमाने अभावत्वाश्रये । अश्रद्धयाहुतंदत्तंतपस्तप्तं कृतंचयत् । असदित्युच्यतेपार्थ नचतत्प्रेत्यनो इह । यत्कालतो देशतो वस्तुतोवा परिच्छिन्नं तदसत् । अविद्यमाने । प्रत्यक्षाद्यगोचरत्वाद् सत् स्वभावमिववर्त्तमाने कारणात्मनि ॥ असज्जने । दुराचारा दुर्विचेष्टा दुष्पृष्टाः प्रियसाहसाः । असन्तस्त्विति विख्याताः सन्तश्चा चारलक्षणाः ॥ सदत्यन्ताभावोऽसदितिबौद्धाः ।

असती । स्त्री । व्यभिचारिण्याम् । कुलटायाम् । सत्याभिन्ना ।

असतीसुतः । पुं । स्त्री । कौलटेरे । असत्यासुतः ।

असत्कृतः । त्रि । परिभूते । प्रियभाषणपादप्रक्षालनपूजादिसत्कारशून्ये । नसत्कृतः ।

असत्पथः । पुं । मन्दमार्गे । कुपथे । नसत्पथः ।

असत्त्वम् । त्रि । मिथ्यायाम् । सत्त्वंनास्तियस्तस्मिन् ॥

असदध्येता । त्रि । कुपाठिनि । अजमे । असदध्ययनशालिनि ॥ नसदध्येता ॥

असद्ग्रहः । पुं । दुराग्रहे । नसद्ग्रहः । अखट्टी । बालकोंकाहठ इतिभाषा ।

असद्योनिः । स्त्री । पश्वादियोनौ । तस्यांहितामसमनिष्टंफलंभुज्यते । नसद्योनिः ।

असद्रूपः । त्रि । देहादिप्रपञ्चे । असदाधमन्वतंरूपं स्वरूपंयस्य ।

असनम् । न । क्षेपणे । पुं । जीवकद्रुमे । प्रियसालके । विजयसाराख्ये । अजकर्णे । महासर्जद्रुमे । अस्यते । असुक्षेपणे । ल्युः ।

असनपर्णी । स्त्री । शातकटचे । शीतलपातके ।

। षिञ् बन्धने। अञ्जिघृषिभ्यः क्तः। य द्वा। सीयतेस्म। क्तः। सित। शुक्लके नातद्भिन्ना। छन्दसिक्रमेक्रदतितस्य क्तः। नात्त्वान्ङीप्। वीरिण्याम्।

असिगण्डः। पुं। क्षुद्रोपधाने। छोटा सिहाना इति भाषा।

असितः। पुं। श्यामवर्णे। व्यासशिष्ये ऋषिविशेषे। शनौ। कृष्णपक्षे। न। कासीसे। त्रि। कृष्णवर्णवति श्यामले। सितविरुद्धोऽसितः।

असितफलः। पुं। मधुनारिकेरे।

असिता। स्त्री। खड्गतायाम्। नील्याम्। असितपलितयोः प्रतिषेधात् व र्णादनुदात्तादितिङीप् तकारस्यन कारादेशश्चन।

असिताभ्रशेखरः। पुं। बुद्धभेदे।

असितार्चिः। पुं। अनले। असिता अर्च्चिर्ज्वाला यस्य।

असितालुः। पुं। नीलालौ।

असितोत्पलम्। न। नीलोत्पले।

असिदंष्ट्रः। पुं। मकराख्ययादसि।

असिद्धः। पुं। हेत्वाभासविशेषे। सच त्रिविधः। आश्रयासिद्धः स्वरूपासिद्ध व्याप्यत्वासिद्धश्चेति। त्रि। अपक्वे। अनिष्पन्ने। सिद्धिरहिते।

असिद्धिः। स्त्री। अनिष्पत्तौ। न्यायम तेसा त्रिविधा। पक्षासिद्धिः १ यथा। काञ्चनमयपर्वतो वह्निमानित्यादिः। स्वरूपासिद्धिः २ यथापर्वतः काञ्च नमयवह्निमानित्यादिः। व्याप्यत्वा सिद्धिः ३ यथा पर्वतोवह्निमान् ज्वल त्वात् इत्यादि।

असिधाराव्रतम्। न। असिधाराचंक्रम णतुल्ये व्रतविशेषे। यथा। युवायु वत्यासार्द्धं यन्मुग्धाभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गःस्यादसिधाराव्रतंहि तदितियादवः।

असिधावः। पुं। शस्त्रमार्जके। अ सिंधावति। धावु॰। कर्मण्यण्।

असिधावकः। पुं। शस्त्रमार्जके। असिं धावति। धावुगतिशुद्ध्योः। कर्मण्य ण्। स्वार्थेकन्। कुलेषा।

असिधेनुः। स्त्री। छुरिकायाम्। असे र्धेनुरिव। स्वल्पखड्गे।

असिधेनुका। स्त्री। छुरिकायाम्। अ सेर्धेनुकेव।

असिपत्रः। पुं। इक्षौ। नरकान्तरे। खड्गकोषे। गुण्डनामकतृणे। य स्यकन्दः कशेरु। खड्गाकारदलेवृ क्षविशेषे। आसन्नघातुके।

असिपत्रकः। पुं। इक्षौ।

असिपत्रवनम्। न। नरकविशेषे। य था। यस्त्विहवै निजवेदपथादनाप द्यपगतः पाषण्डञ्चोपगतस्तमसिप

असम्मूढः । त्रि । स्थितमत्ते । सम्मोहव र्जिते । भ्रान्तिरहिते ॥ नसम्मूढः ।

असम्मोहः । पुं । प्रत्युत्पन्नेषु वोहव्येषु कर्त्तव्येषु वा अव्याकुलतयाविवेकेन प्रवृत्तौ । नसम्मोहः ॥ त्रि । तद्वति ।

असम्यग्व्ययः । पुं । आयतुरीयांशादधिकव्यये । व्यसनविषयव्यये ।

असहः । पुं । कुकरौंधा इतिविश्रुते क्षुपे ।

असह्रम् । न । लौहे ॥ असह्रमन्त्रविशेषे ।

असहनः । पुं । स्त्री । शत्रौ ॥ अमर्षणे ।

असाधारणम् । त्रि । तन्मात्रसम्बन्धिनि ॥ साधारणाद्भिन्ने । विशेषे । न्यायमते साध्यव्यापकीभूताभावप्रतियोगिनिर्हेतौ । यथा । वह्निमान् जलत्वादित्यादि ।

असाधारणत्वम् । न । तद्भिन्नावृत्ति त्वेसतितसकलतद्वृत्तित्वे ।

असाधारणानैकान्तिकः । पुं । हेत्वाभासविशेषे । सर्वसपक्षव्यावृत्ते । यथा शब्दोनित्यःशब्दत्वादिति । शब्दत्वं सर्वेभ्योनित्येभ्योव्यावृत्तं शब्दमात्रवृत्ति ।

असाधुः । त्रि । खले ॥ सद्भावहानास्पदुर्नये परदोषेचत्वदिव्यचक्षुः । स्वगुणोदागिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥

असाध्यः । त्रि । याप्ये । अप्रतिक्रिये । असाधनीये । बुद्धिमद्साधनकिञ्चिदितिवाक्यायनः ॥ नसाध्यः ।

असान्द्रम् । त्रि । विरले । नसान्द्रम् ॥

असाम्प्रतम् । । । अयुक्ते । यथा । भिन्नस्तिसर्वमर्यादांनान्यथाद्याप्यमेचते । अस्यदग्धोदरस्यार्थे कोनकुर्यादसाम्प्रतमिति ॥ नसाम्प्रतम् ।

असारः । पुं । एरण्डवृक्षे । न । अगुरुणि ॥ त्रि । फल्गौ । निस्सारे । नसारो ऽस्य ।

असि । । । त्वमित्यर्थे । यथा, वेत्स्यसि । वाक्यालङ्कारे ।

असिः । पुं । निस्त्रिंशे । खड्गे ॥ स्त्री । नदीभेदे । अस्यते यसुचेपणे । असतिवा असदीप्तौ । सर्वधातुभ्यइन् । खनिकष्यज्यसिवसीत्यादिनावर्ण ।

असिकम् । न । अधरचिबुकयोर्मध्यभागे । इतिहेमचन्द्रः ।

असिकारः । पुं । खड्गकारिणि । असिं करोति । कृञ० । कर्मण्यण् ॥

असिक्निका । स्त्री । असिक्न्याम् । दासाम् ॥ यथा । गतोगणस्तर्णमसिक्निकानामिति ॥

असिक्नी । स्त्री । अन्तःपुरचारिण्यां प्रेष्यायाम् । नदीभेदे । सिनोति

न्दस्थले । अनधिकारिणि । अस्थाने हिस्थाप्यमाने च वाच्यलिङ्गम् ।

अस्थायम् । त्रि । अगाधे ।

अस्थायी । त्रि । नश्वरे । स्थितिरहिते ॥

अस्थारम् । न । गभीरे ।

अस्थावरम् । त्रि । स्थावरेतरद्रव्ये । जङ्गमवस्तुनि ।

अस्थि । न । कीकसे । बीजे । अस्यते । असु क्षेपणे । असिसञ्जिभ्यां क्थिन् । अस्थीनि तरुण नलक कपाल रुचक वलयभेदात् पञ्चविधानि भवन्तीति वैद्याः ॥

अस्थिकम् । न । अस्थनि । स्वार्थे यावादित्वात् कन् ।

अस्थिकृत् । पुं । शरीरस्थमेदोधातौ ।

अस्थिजः । पुं । मज्जनि ।

अस्थितुण्डः । पुं । स्त्री । पक्षिणि ।

अस्थिधन्वा । पुं । शम्भौ ।

अस्थिपञ्जरः । पुं । शरीरास्थिसमूहे । करङ्के ।

अस्थिभक्षः । पुं । स्त्री । पक्षिभेदे । कुक्कुरे ।

अस्थिभुक् । पुं । स्त्री । कुक्कुरे । शुनि ।

अस्थिमाली । पुं । रुद्रे । अस्थ्नां माला अस्ति अस्य । व्रीह्यादित्वादिनिः ।

अस्थिरः । त्रि । चञ्चले । सङ्कुले । न स्थिरः ।

अस्थिविग्रहः । पुं । भृङ्गरीटे । भृङ्गिनामकशिवद्वारपाले ॥

अस्थिशृङ्खला । स्त्री । ग्रन्थिमति । अस्थिसंहारे ।

अस्थिसंहारः । पुं । हस्तिशुण्डाम् । ग्रन्थिमति । यथा । अस्थिसंहारकः प्रोक्तो वातश्लेष्महरोऽस्थियुक् । उष्णः सरः कृमिघ्नश्च दुर्नामघ्नोऽक्षिरोगजित् ॥ रूक्षः स्वादुर्लघुर्वृष्यः पाचनः पित्तलः स्मृतः ॥ काण्डं त्वक्परिहितमस्थिशृङ्खलायामापाद्य द्विदलमकञ्चुकं तद्दत्तम् । सम्पिष्टं सुतनु ततस्तिलस्य तैले सम्पक्वं वटकमतीव वातहारि ॥

अस्थिसंहारिका । स्त्री । ग्रन्थिमति । हडजोडा इति ख्यातौषधौ ।

अस्थिसंहारी । पुं । अस्थिसंहारके ग्रन्थिमति ।

अस्थिसारः । पुं । मज्जायाम् ।

अस्थिस्नेहसम्भवः । मज्जनि । मज्जायाम् ।

अस्नायिरम् । त्रि । शिरावर्जिते । स्थूलशरीरवर्जिते । अविद्यमानाः स्नावाः शिरा यस्मिन् ।

अस्निग्धदारु । न । देवदारुभेदे । देवकाष्ठे ।

अस्पर्शः । त्रि । स्पर्शाभाववति । सम्बन्धशून्ये ।

याम् ॥

अस्वाज्जकः । पुं । श्वेततुलस्याम् ।

अस्वी । त्रि । अस्रवति । अस्रोस्त्यस्य । सुखादित्वादिनिः ॥

अस्नु । न । नेत्रजले । अस्यति । अस्नु क्षेपणे । अश्वादिषुदन्त्यमध्यस्यापि पाठात् साधु ॥

अस्वच्छन्दः । त्रि । अस्वतन्त्रे । अधीने ॥ नस्वः छन्दोऽस्य ॥

अस्वन्तम् । न । अशुभे । चुल्याम् । म रणे । अनर्थयोः । क्षेत्रे । असुनामन्तोऽत्र ॥

अस्वन्तरः । त्रि । अत्यन्तदुरन्ते ॥

अस्वप्नः । पुं । देवतायाम् । त्रि । अनि द्रे । अविद्यमानः स्वप्नोनिद्राअस्येति विग्रहः ॥

अस्वरः । त्रि । असौम्यस्वरे । काका दिवद्रूक्षस्वरे । अप्रशस्तः स्वरोयस्य ॥

अस्वर्ग्यम् । त्रि । स्वर्गहेतुधर्मविरोधि नि । अस्वर्ग्यं लोकविद्विष्टंधर्ममप्या चरेन्नतु ॥ स्वर्गायहितंनभवतीति ॥

अस्वादुकण्टकः । पुं । गोक्षुरके । अ स्वादुः कण्टकोयस्यसः ।

अस्वाध्यायः । पुं । विधिपूर्वकवेदाध्ययनवर्जिते । निराकृतौ । नस्वाध्यायो वेदाध्ययनमस्य ।

अस्वामिकम् । त्रि । स्वामिरहितेवस्तु नि ॥ यथा । एतद्वायद्दानंस्वभूमाव-स्वामिकायाश्चनदद्यात् । अस्वामिकान्याहयमः । अटव्यःपर्वताःपुण्या नद्यस्तीर्थानियानिच । सर्वाण्यस्वामिकान्याहुर्नहितेषुपरिग्रहः ॥ पुण्याइतिविशेषणात् अटव्योनैमिषाद्याः । पर्वताहिमालयादयः । नद्यो गङ्गाद्याः । तीर्थानिपुरुषोत्तमादिक्षेत्राणि । वाराणस्यादीयतनानिच । स्वाम्यभावेहेतुमाह नहितेष्विति । इतिव्याहृतत्त्वम् ॥

अस्वैरी । पुं । परतन्त्रे । नस्वैरी ॥

अह । [illegible] । प्रशंसायाम् । क्षेपणे । नि योगे । विनिग्रहे । आचारातिक्रमे ॥ पूजायाम् ।

अहंयुः । त्रि । अहङ्कारिणि । अहमस्यास्ति । अहमितिमान्तमव्ययम् । अहंशुभमोर्युस् ॥

अहङ्कारः । पुं । अहमितिकरणे । ग र्वे । अहङ्कारस्तुसर्वेषां पापबीजम मङ्गलम् । ब्रह्माण्डेषुचसर्वेषां गर्वम र्यन्तमुन्नतिः । सचद्विविधः । विशे षरूपःसामान्यरूपश्चेति । तथाय महमेतस्य पुत्रश्चर्येवंस्थूलमभिमन्य मानोविशेषरूपोऽयमहङ्कारः । अ स्मीत्येतावन्मात्रमभिमन्यमानः सा मान्यरूपः समष्ट्यहङ्कारः । सचवि

अस्पर्शयोगः । पुं । ब्रह्मस्वभावे ॥ स्पर्शं नं स्पर्शः सम्बन्धो न विद्यते यस्य योगस्य केनचित् कदाचिदपि सः ॥ यथाहुः । अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः । अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहमिति ॥ अद्वैतानुभवोऽस्पर्शः । स एव योगो जीवस्य ब्रह्मभावेन योजनात् । सर्वसम्बन्धाख्यस्पर्शवर्जितत्वात् अस्पर्शयोगः ॥

अस्पष्टम् । त्रि । अव्यक्ते ॥ न स्पष्टम् ॥

अस्फुटम् । त्रि । अस्पष्टे ॥ न स्फुटम् । सर्वः शब्दो वर्णात्मक एव व्यञ्जकविशेषाभावादस्फुटः ॥

अस्फुटवाक् । त्रि । अव्यक्तवाचि । लोहले ॥ नस्फुटा वाग् यस्य ॥

अहम् । त्रि । अस्मच्छब्दस्य प्रथमैकवचने । देहत्रयविशिष्टत्वेनाशुद्धे जीवे । कर्त्ता सुखी इत्यादि व्यवह्रियमाणे ॥ अहंशब्दप्रत्ययालम्बने । अहंप्रत्ययवेद्ये । अहंशब्दप्रत्ययालम्बनत्वेन प्रत्यक्षे । सर्वदोपलब्धिस्वरूपे प्रत्यगात्मनि ॥ अस्ति । असभुवि । युष्मदस्मदादिक् ।

अस्मि । । अहमित्यर्थे । यथा । दासेकृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये इति । अस्मीत्यस्मदर्थानुवादे निपातोऽपि

तिगणव्याख्यानम् ॥

अस्मिता । स्त्री । दृग्दर्शनशक्त्योरेकात्मतायाम् ॥ बुद्धिपुरुषयोरभेदाभिमाने ॥ मोहे ॥ स चाष्टविधः । देवा हि अष्टविधमैश्वर्यमासाद्याऽमृताभिमानिनोऽणिमादिकमात्मीयं शाश्वतमभिमन्यन्त इति । सोऽयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः ॥

अस्रः । पुं । कोणे ॥ कचे ॥ न । अश्रुणि ॥ शोणिते ॥ अश्यते । असुक्षेपणे । बाहुलकाद्रः ॥

अस्रकण्ठः । पुं । शरे ॥ अस्रः कण्ठे यस्य ॥

अस्रखदिरः । पुं । रक्तखदिरवृक्षे ॥

अस्रजम् । न । मांसे ॥

अस्रपः । पुं । राक्षसे ॥ अस्रं रक्तं पिबति । पा० । आतोनुपसर्गे कः । न । मूलर्क्षे ॥

अस्रपत्रकः । पुं । भिण्डायाम् । भिण्डीतिप्रसिद्धशाके ।

अस्रपा । स्त्री । जलौकायाम् ॥ अस्रं पिबति । पा० कः । टाप् ॥

अस्रफला । स्त्री । शल्लकीवृक्षे ।

अस्रबिन्दुच्छदा । स्त्री । लक्ष्मणानामकन्दे ।

अस्रमातृका । स्त्री । शरीरस्के ।

अस्ररोधिनी । स्त्री । लज्जालुलता-

याम् ।

अस्वाक्षिकः । पुं । श्वेततुलस्याम् ।

अस्वी । त्रि । अस्ववति । अस्वोऽस्यास्ति । सुखादित्वादिनिः ।

अस्नु । न । नेत्रजले । अस्यति । असु क्षेपणे । अश्वादिषु दन्त्यमध्यस्यापि पाठात् साधु ।

अस्वच्छन्दः । त्रि । अतन्त्रे । अधीने । नस्वः छन्दोऽस्य ।

अस्वन्तम् । न । अशुभे । चुल्ल्याम् । मरणे । अनवधौ । क्षेत्रे । असुनामन्तोऽत्र ।

अस्वन्तरः । त्रि । अत्यन्तदुरन्ते ॥

अस्वप्नः । पुं । देवतायाम् । त्रि । अनिद्रे । अविद्यमानः स्वप्नो निद्रा अस्येति विग्रहः ।

अस्वरः । त्रि । असौम्यस्वरे । काकादिवद्रूक्षस्वरे । अप्रशस्तः स्वरोऽयस्य ।

अस्वर्ग्यम् । त्रि । स्वर्गहेतुधर्मविरोधिनि । अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु ॥ स्वर्गाय हितं न भवतीति ॥

अस्वादुकण्टकः । पुं । गोक्षुरके । अस्वादुः कण्टकोयस्य सः ।

अस्वाध्यायः । पुं । विधिपूर्वकवेदाध्ययनवर्जिते । निराकृतौ । नस्वाध्यायो वेदाध्ययनमस्य ।

अस्वामिकम् । त्रि । स्वामिरहितेवस्तुनि ॥ यथा । एतच्चाप्रदानं स्वभूमाव-स्वामिकायाश्च नदद्यात् । अस्वामिकान्याहयमः । अटव्यः पर्वताः पुण्या नद्यस्तीर्थानियानिच । सर्वाण्यस्वामिकान्याहुर्नहितेषु परिग्रहः ॥ पुण्यादिति विशेषणात् अटव्यो नैमिषाद्याः । पर्वता हिमालयादयः । नद्यो गङ्गाद्याः । तीर्थानि पुरुषोत्तमादिक्षेत्राणि । वाराणस्याद्यायतनानिच । स्वाम्यभावे हेतुमाह नहितेष्विति । इति श्राद्धतत्त्वम् ।

अस्वैरी । पुं । परतन्त्रे । नस्वैरी ।

अह । अ । प्रशंसायाम् । क्षेपणे । नियोगे । विनिग्रहे । आचारातिक्रमे ॥ पूजायाम् ।

अहंयुः । त्रि । अहङ्कारिणि । अहमस्यास्ति । अहमिति मान्तमव्ययम् । अहंशुभमोर्युस् ॥

अहङ्कारः । पुं । अहमितिकरणे । गर्वे । अहङ्कारस्तु सर्वेषां पापबीजमङ्गलम् । ब्रह्माण्डेषु च सर्वेषां गर्वपर्यन्तमुन्नतिः । सच द्विविधः । विशेषरूपः सामान्यरूपश्चेति । तथाय महमेतस्य पुत्रस्त्वेवंब्रुतमभिमन्यमानो विशेषरूपोऽप्यहङ्कारः । अस्मीत्येतावन्मात्रमभिमन्यमानः सामान्यरूपः समष्ट्यहङ्कारः । सचवि

अहर्दि | अहहा

द्वयथानामिति नटिलोपः ॥

अहमुत्तरः। पुं। अभिमानाधिक्ययुक्ते॥ अहमहंभावः अहंकार अभिमानउत्तरोऽधिकोयस्य ॥

अहम्पूर्विका। स्त्री। अभिमानविशेषे॥ अहम्पूर्वमहम्पूर्वमितियोधानांधावनक्रियायाम् ॥ अहम्पूर्व अहम्पूर्वमित्यहम्पूर्विकास्त्रीयामित्युक्तेः॥ अहम्पूर्वम्। सुप्सुपेतिसमासः। स्वार्थेकन्। अहम्पूर्वमित्यस्त्यस्याम्। ठन्वा॥

अहम्मतिः। स्त्री। अज्ञाने। अविद्यायाम्॥ अहमितिविभक्तिप्रतिरूपकमव्ययमहङ्कारार्थकम्। अहम्प्रधानामतिः॥

अहर्गणः। पुं। मासे। अह्नां गणः॥ ग्रहाणां मध्यादिज्ञानार्थं श्वेतवराहकल्पावधिद्यप्यवधिग्रन्थसिद्धान्तोक्तकल्पावधिकल्पाद्यब्दावधिवा षटकालपर्यन्तं परिगणिते दिनसमूहे। दिनपिण्डे। द्युवृन्दे।

अहर्ज्जरः। पुं। संवत्सरे॥ वत्सरोहि अहोभिःपरिवर्त्तमानो लोकान् जरयतीतिश्रद्यानिगाऽस्मिन् जीर्यन्त्यन्तर्भवन्तीतिभाष्यकृताव्याख्यानात्। घॊापनिपदेीर्य प्रयोगः॥

अहर्दिवम्। न। अहन्यहनि॥ अहनि चदिवाच। अचतुरेत्यादिनायीप्सा। यांवन्द्वोऽच्प्रत्ययस्च॥

अहर्पतिः। पुं। सूर्ये॥ अह्नःपतिः। अहरादीनांपत्यादिषुवारेफः॥ पक्षे अहःपतिः॥

अहर्बान्धवः। पुं। दिवाकरे॥

अहर्मणिः। पुं। भास्करे॥ अह्नोमणिरिव॥ अर्कवृक्षे॥

अहर्मुखम्। न। प्रत्यूषे॥ अह्नोमुखम्। रोऽसुपीतिरः॥

अहल्यम्। त्रि। हलानाकृष्टक्षेत्रे। देशभेदे॥

अहल्या। स्त्री। गौतमर्षिपत्न्याम्। द्वयम्बकन्यास्येका॥ अप्सरोभेदे॥

अहस्करः। पुं। भास्करे॥ अहःकरोति। दिवाविभेतिटः। कस्कादित्वात्सः॥

अहस्पतिः। पुं। यदाचैयमासोभवति तदाचयमासस्यपूर्वोत्तरामधिमासौ भवतः तयोः सरस्मिन्नधिमासे॥

अहह। त्र। अद्भुते। खेदे। परिक्लेशे। प्रकर्षे॥ सम्बोधने॥ अहंजहातिजिहीतेवा। ओहाकृत्यागेओहाङ् गतौ। अन्येष्वपीतिडः। पृषोदरादित्वान्मलोपः। भावेवाप्रत्ययः॥

अहहा। त्र। अहहेत्यर्थे पुं॥ अहंजहातिजिहीतेवा। ओहाकृत्यागेओहाङ् गतौ। क्विप्। पृषोदरादित्वान्मलोपः। भावेवाप्रत्ययः॥

अहार्य्यः । पुं । पर्व्वते । त्रि । हर्त्तुमशक्ये । ह्रियते । हृञ् हरणे । ऋहलोर्ण्यत् । नहार्य्यः । अभेद्ये ॥

अहिः । पुं । वृत्रासुरे ॥ सर्पे ॥ सूर्य्ये । सीसके । राहौ । पथिके । खले । यथा । विषधरतोऽप्यतिविषमः खल इति नमृषावदन्ति विद्वांसः । यदहिर्नकुलद्वेषी सकुलद्वेषी पुनः पिशुन इति । वप्रे । अश्लेषानक्षत्रे । अष्टमे । पञ्चमात्रिकस्य षष्ठे ।ऽऽ। प्रभेदे । आ हन्ति । हन गतिहिंसागत्योः । आङि श्रिहनिभ्यां ह्रस्वश्चेतीण् । सच डित् । डित्त्वाट्टिलोपः । आङो ह्रस्वश्च ॥

अहिंसा । स्त्री । वाङ्मनःकायैः परपीडावर्ज्जने । प्राणिनां पीडाया निवृत्तौ । अशास्त्रीयप्राणिपीडनाभावे । यथाह मनुः । यावेद विहिता हिंसा नियतास्मिंश्चराचरे । अहिंसामेव तां विद्या द्वेदाद्धर्मो हि निर्बभाविति ॥ हिंसनम् हिंसा । नहिंसा ॥

अहिंस्रा । स्त्री । ओषधिभेदे । कुलेखाडा इति गौडभाषा । कुलिकद्रुमे । हिंस्राख्यौषधिप्रभेदे ।

अहिकः । पुं । भुवर्षे ।

अहिका । स्त्री । शाल्मलिद्रुमे ।

अहिकान्तः । पुं । समीरे । अहेः कान्तः ।

अहिगम्यः । पुं । पन्नगाधिपस्य सम्म ऽ।। प्रभेदे ॥ सर्पाणां समूहे ।

अहिच्छत्रः । पुं । देशविशेषे । मन्थप्रभेदे । मेषशृङ्गी वृक्षे ।

अहिच्छत्रा । स्त्री । कान्यकुब्जदेशप्रसिद्धे पुरीविशेषे ॥ चीनीति प्रसिद्धायां शर्करायाम् ॥

अहिजित् । पुं । हरौ । शक्रे ॥ अहिंसर्पमिन्द्रं वाजैषीत् । जि जये । क्विप् ॥

अहिजिह्वा । स्त्री । नागजिह्वाख्यलतायाम् ॥

अहितः । त्रि । शत्रौ । अपथ्ये । न हितमस्मात् ॥

अहितुण्डिकः । पुं । व्यालग्राहिणि । भिक्षार्थं सर्पखेलके । संपेला इति ख्याते ॥ अहेस्तुण्डं मुखम् रोमदीव्यतीति ठक् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥

अहिद्विट् । पुं । गरुडे । शक्रे । मयूरे । नकुले ॥ हरौ । अहिं द्वेष्टि । द्विष० । क्विप् ॥

अहिनकुलिका । स्त्री । अहिनकुलयोर्वैरे ॥ अहिनकुलयोर्वैरम् । द्वन्द्वाद्वुन् वैरमैथुनिकयोरितिवुन् ।

अहिनिर्ल्वयनी । स्त्री । सर्पनिर्मोके । सर्पत्वचि । अहिर्निर्म्लीयतेऽस्यां सा अहिनिर्ल्वयनीति व्याख्यातारः ।

अहिपतिः । पुं । वासुकिनागे । शेषनाग

गे। अहीनांपतिः

अहिपुत्रकः । पुं । तरालौ । नौकाजलोत्तारके ।

अहिपूतनः । पुं । क्षुद्ररोगविशेषे ॥

अहिफेनम् । न । आफूके । अफीमइतिविख्याते । इतिराजनिर्घण्टः ।

अहिबुध्नः । पुं । रुद्रविशेषे । शिवे ॥

अहिबुध्नदेवता । स्त्री । उत्तरभाद्रपदायाम् । अहिबुध्नोदेवताअस्याः ॥

अहिभयम् । न । राज्ञांस्वपक्षप्रभवेभये । अहिरिविग्रहस्थत्वात् आवृताकारत्वाच्च स्वपक्षप्रभवादिः । अहेर्भयम् । निजोद्यमित्रस्वसमाश्रितस्व-सम्बन्धतः कार्यसमुद्भवश्च । भृत्या गृहीताविविधोपचारैः पर्यंबुधा.स स्वविधंवदन्ति । सर्पभये ।

अहिभयदा । स्त्री । भूम्यामलक्याम् ।

अहिभुक् । पुं । गरुडे ॥ बर्हिणि ॥ नाकुल्याम् । गन्धनाकुल्याम् । अहिं भुङ्क्ते । भुजअभ्यवहारे । क्विप् ।

अहिमः । त्रि । शीतस्पर्शशून्ये ॥

अहिमर्दनी । स्त्री । गन्धनाकुलीनामकन्दे ॥

अहिमारः । पुं । } अरिमेदकवृक्षे ।
अहिमेदकः । पुं । }

अहिलता । स्त्री । नागवल्ल्याम् । अहिलोकस्यपातालस्यलता । शाकपार्थि-वादिः । गन्धनाकुल्याम् ।

अहीनः । पुं । अहर्गणसाध्यसुत्याकक्रतौ । अह्नांसमूहः । अह्नःखःक्रतौ । अहीनेयजनमशुचिकर्मितिश्रुतिः । अहिस्वामिनि ।

अहीरणिः । पुं । द्विवक्त्राहौ । द्विमुखसर्पे । इति त्रिकाण्डशेषः ।

अहुतः । पुं । ब्रह्मयज्ञाख्येजपे ॥

अहे । अ । क्षेपे । वियोगे ।

अहेरुः । स्त्री । शतमूल्याम् । नहिनोति । हिगतौ । बाहुलकाद्रुः ।

अहैतुकः । त्रि । फलाभिसन्धानरहिते ।

अहो । अ । धिगर्थे । शोके । करुणार्थे । विषादे । सम्बोधने । प्रशंसायाम् । विस्मये । पादपूरणे । असूयायाम् । वितर्के । अहानम् । ओहाङ्गतौ । डोप्रत्ययः ।

अहोरात्रः । पुं । दिनरात्रिमानात्मके काले । सूर्योदयद्वयपरिच्छिन्ने त्रिंशन्मुहूर्त्तात्मकेकाले । सच (मानुषाहोरात्र) षष्टिघटिकाभिर्भवति । यथा । अहोरात्रेविभजतेसूर्योमानुषदैविके । रात्रिः स्वप्नायभूतानांचेष्टायैकर्मणामह इति ॥ मतान्तरे तुचतुर्विंशतिहोराभिर्मानुषाहोरात्रोभवति । यथोक्तंपद्मपुराणेगणभेदनामाध्याये । चतुर्विंशतिमेताभि

रहोरात्रंप्रचच्यते । पश्चिमादिङ्घैराव्राद्ङ्होराणांविद्यतेक्रमइति ॥ (पैत्राहोरात्रः) पैत्र्येरात्र्यहनीमासःप्रविभागस्तुपच्चयोः । कर्मचेष्टास्वहःकृष्णःशुक्लः स्वप्नायशर्वरी ॥ (दैवाहोरात्रः) दैवेरात्र्यहनीवर्षंप्रविभागस्तयोःपुनः । अहस्तत्रोदगयनंरात्रिःस्याद्दक्षिणायनम् ॥ (प्राजापत्याहोरात्रः) युगसहस्राभ्यांप्राजापत्यमेकमहोरात्रम् ॥ अहश्चरात्रिश्चतयोः समाहारः । रात्राह्नाहाः पुंसि । अहः सर्वैकदेशेत्यच् समासान्तः ॥

अहोवत । । अनुकम्पायाम् ॥ खेदे ॥ सम्बोधने ॥ अहोच वतच ॥

अहोहो । । चित्रे ॥ अहोच हीच ॥

अह्नाय । । द्रुते ॥ ह्वनेम् । हुङ्अपनयने । बाहुलकाद्भावे घञ् । इद्धि. ॥ पृषोदरादित्वादस्ययः । ततोनञ्समासः ॥

अह्नीकः । पुं । क्षपणके ॥

अह्लधा । स्त्री । भल्लातकवृक्षे ॥

---

आ

आ॰—स्मृतौ ॥ स्मृतिस्तूचनेयथा । आ



एवं किलतत ॥ वाक्ये ॥ वाक्यस्यान्यथात्वेद्योत्ये यथा । आएवंमन्यसे । पूर्वंमैवंमंस्था इदानींत्वेवंमन्यसइत्यर्थः ॥ अनुकम्पायाम् ॥ आदेवदत्तो दरिद्रः ॥ समुच्चये ॥ देवेभ्यश्चपितृभ्यश्च आ ॥ आप्नोति । आप्लृव्याप्तौ । क्विप् । पृषोदरादित्वात् पलोपः ॥ स्वीकारे ॥ अयंप्रगृह्यसंज्ञकत्वात्प्लुतप्रगृह्याअचीतिसन्धिंनयाति ॥

आः । पुं । महेश्वरे ॥ पितामहे ॥

आकम्पितः । त्रि । कम्पविशिष्टे । प्रेङ्खिते ॥ आकंप्यतेस्म । कपिचलने । गत्यर्थेतिक्तः ॥

आकरः । पुं । निवहे ॥ धातुरत्नाद्युत्पत्तिस्थाने ॥ खनौ ॥ श्रेष्ठे ॥ आकुर्वन्त्यत्र एत्यकुर्वन्तिव्यवहारंमस्मिन्वा । डुकृञ्करणे । आकीर्यन्तेधातवोऽत्र वा । कृविक्षेपे । पुंसिसंज्ञायामिति घः ॥

आकरिकः । त्रि । आकरेनियुक्ते ॥ तत्र नियुक्त इतिठक् ॥

आकर्णनम् । न । श्रोत्रकर्मणि । श्रवणे ॥

आकर्णितः । त्रि । अवधृते ॥ श्रुते ॥

आकर्षः । पुं । द्यूते ॥ इन्द्रिये ॥ पाशके ॥ शारिफलके ॥ धन्वाभ्यासाङ्के । कोदण्डाभ्यासवस्तुनि । आकर्षणे ॥ निकषोपले ॥ आकर्षण माकृष्यते आ

कर्षन्त्यस्मिन्वा । कृषविलेखने । घञ् । काष्ठविशेषे । आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः ।

आकर्षकः । पुं । अयस्कान्ते । चुम्बके । त्रि । कर्षके । आकर्षणकर्त्तरि । आकर्षे कुशले । आकर्षे कुशलः आकर्षादिभ्यः कन् ।

आकर्षणम् । न । आकर्षे । बलादानयने ।

आकर्षणी । स्त्री । फलपुष्पाद्याकर्षक यष्टिकाविशेषे । आँकडा इति भाषा ।

आकर्षिकः । पुं । वणिग्विशेषे । आकर्षेण चरति । आकर्षात् ष्ठल् । स्त्री । आकर्षिकी । ङीप् ।

आकलनम् । न । आकाङ्क्षायाम् । परिसंख्याने । बन्धने । कलशब्दसंख्यानयोः । आङ्पूर्वादस्माल्ल्युट् ।

आकलितः । त्रि । अनुस्मृते । धृते ।

आकल्पः । पुं । कल्पने । वेषे । मण्डने । आभरणे । त्रि । कल्पान्ताय धिके । आकल्पनम् । कृपूसामर्थ्ये । घञ् । कृपेरोलः । आकल्पन्तेऽथा आकल्पयतिवा स्वार्थेण्यन्तः ।

आकल्पकः । पुं । तमोमोहग्रन्थौ । उत्कलिकायाम् । मुदि ।

आकषः । पुं । निकषोपले । कसौटी इति भाषा । आङ्पूर्वात् कषेरच् ।

आकषकः । त्रि । आकषे कुशले । आकर्षादिभ्यः कन् ।

आकस्मिकम् । त्रि । अकस्माद्भवे ।

आकाङ्क्षा । स्त्री । अभिलाषे । वाक्यार्थज्ञानहेतौ पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाभावे । आकाङ्क्षारहितं वाक्यं नप्रमाणम् । यथा गौरश्वः पुरुषो हस्तीति न प्रमाणमाकाङ्क्षाविरहात् । न्यायमते यत् पदं विनायत्पदान्वयबोधो नभवति तत्पदे तत्पदप्रसेति । प्रतीतपर्यवसानविरहः ख्याकाङ्क्षारिकाः ।

आकायः । पुं । निवासे ।

आकारः । पुं । इङ्गिते । अभिप्रायानुरूपचेष्टाविष्करणे । आकृतौ । मुखप्रसादवैवर्ण्यादि रूपे प्रीत्यप्रीतिसूचके देहधर्मे । मूर्त्तौ । आकरणम् । घञ् । आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् । बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ।

आकारकरभः । पुं । अकर्करा इति प्रसिद्धे ।

आकारगुप्तिः । स्त्री । रत्याद्युत्थरागादिगोपने । अवहित्थायाम् । आकारस्य शोकादिजनितमुखम्लान्यादेर्गोपनम् । क्तिन् । रत्यादिरूपकोप-

उत्पत्तिस्थः ।

आकाशमूली । स्त्री । पाना इति गौड भाषाप्रसिद्ध कुम्भिकायाम् ॥ जलव ल्कले ।

आकाशरत्थी । पुं । प्रगण्डिस्थितमधि धौ । दुर्गवद्धिः प्राचीरोपरिस्थिते चरे । इति राजधर्मः । मत्वर्थीय- इन् ।

आकाशवल्ली । स्त्री । अमरवेल आका शवेल इति ख्याते लताविशेषे । खप ल्ल्याम् ।

आकाशवाणी । स्त्री । अशरीरिण्यां वा चि । दैववाण्याम् ।

आकाशसलिलम् । न । दिव्योदके ॥

आकाशास्तिकायः । पुं । अजीवपदार्थे । स च लोकाकाशास्तिकायो ऽलो- काकाशास्तिकायश्चेति द्विरूपः ।

आकिञ्चन्यम् । न । अकिञ्चनिमनि । अकिञ्चनतायाम् ॥ भावे ष्यञ् ।

आकीर्णम् । त्रि । व्याप्ते । सङ्कीर्णे । ना नाजातीयसम्मिश्रिते ॥ आकीर्य्यते- स्म । कृविक्षेपे । क्तः ।

आकुञ्चनम् । न । न्यायमते पञ्चप्रका रकर्म्मान्तर्गतकर्म्मविशेषे । सङ्कोचे ।

आकुञ्चितः । त्रि । आभुग्ने ।

आकुलम् । त्रि । व्यस्ते । व्याकुले ॥ सु भिते । लोले । आकोलति । कुल संस्त्याने । इगुपधेति कः ।

आकुलाकुलम् । त्रि । आकुलप्रकारे । प्रकारे गुणवचनस्येति द्विर्भावः ।

आकुलितम् । त्रि । क्षोभिते । आकुली कृते । सम्बाधिते ॥

आकूतम् । न । अभिप्राये । आशये । इति हेमचन्द्रः ॥

आकूतिः । स्त्री । स्वायम्भुवमनोः कन्या याम् । क्रियायाम् ॥

आकृतिः । स्त्री । रूपे । वपुषि । जातौ । अवयवसंस्थानविशेषे । आकृतिर्जा तिलिङ्गाख्या । न्यायसूत्रम् । जाति लिङ्गमित्याख्या यस्याः जातेर्गोत्वा देर्लिङ्गं सास्नादिसंस्थानविशेषो लिङ्ग म । तस्य च परम्परया द्रव्यवृत्तित्वम् । जातिर्द्रव्यासमवायिकारणतावच्छे दिकालिङ्गं धर्मो यस्याः सेत्यर्थ इति कश्चित् । द्वाविंशत्यक्षरायां वृत्तौ । आकरणम् । कृञ्० । क्तिन् । आक्रि यतेऽयं गौरयमश्व इति व्यज्यतेऽनेने- ति आकृतिः संस्थानम् ।

आकृतिच्छत्रा । स्त्री । घोषातक्याम् ।

आकृष्टम् । त्रि । आकर्षिते । कृताक र्षणे । आकृष्यते स्म । कृष विलेख ने क्तः ।

आकेकरा । स्त्री । दृष्टिविशेषे ॥ यथा । दृष्टिराकेकरा किञ्चित्स्फुटापाङ्गे म

सारिता । मौलिताङ्घ्रिपुरांलोकिता राज्यावर्त्तनोत्सवेति न्वत्यविलासो- क्तः ॥

आकोकेरः । पुं । मकरराशौ ॥

आकोशलम् । न । अकौशले ॥

आक्रन्दः । पुं । क्रन्दने । आह्वाने ॥ मित्रे । दारुणयुद्धे । भ्रातरि ॥ शब्दे ॥ पार्ष्णिग्राहात् परस्मिनराज्ञि । देशाक्रमणायाचरतः पार्ष्णिग्राहस्यथो नियामकस्तस्यानन्तरोऽन्यपतिरित्यर्थः । न । दुःखिनांरोदनस्थाने । सारोदवदिते । आक्रन्दनम् आक्रन्दते ऽस्मिन् आक्रन्दयतिवा । आक्रन्दिकाह्वानेरोदनेच । आङः क्रन्दसातत्ये । घञ् ॥ पचाद्यच्वा ॥

आक्रन्दिकः । त्रि । दुःखिनांरोदनस्थाने गमनकर्त्तरि । आक्रन्दंधावति । आक्रन्दाम्बेतिठञ् । स्त्री । ङीप् ।

आक्रमः । पुं । अधिकमे । आक्रमणम् । आङ् पूर्वातक्रमेर्भावेघञ् ।

आक्रमणम् । न । आक्रमकरणे । व्यापने । आङःक्रमेर्भावेल्युट् ।

आक्रान्तः । त्रि । कृताक्रमणे । व्याप्ते । अभिभूते । आक्रामतिस्म । क्रमु पादविक्षेपे । क्तः ।

आक्रीडः । पुं । उद्याने । राज्ञः क्रीडासाधनेसाधारणेवने । लीलास्थाने ॥ आक्रीडन्त्यत्र । क्रीडृविहारे । हलश्चेतिघञ् ॥

आक्रुष्टः । त्रि । निन्दिते । क्रोशतेः कर्मणिक्तः । क्षुब्धस्वान्तेतिपक्षेऽइट्त्वम् ॥

आक्रोशः । पुं । अभिशापे । शापे । विरुद्धानुध्याने । आक्रोशनम् । क्रुश आह्वाने । भावे घञ् ॥

आक्रोशनम् । न । अभीषङ्गे ॥ आक्रोशे । आङ्पूर्वात्क्रुशेर्ल्युट् ।

आचयूतिकम् । न । अचयूतेन निर्वृत्तेवैरे । निर्वृत्तेचयूतादिभ्यइति ठक् ॥

आचपाटिकः । पुं । अचदर्शके । धर्माध्यक्षे ॥

आचपादः । पुं । नैयायिके । न । न्यायशास्त्रे ॥

आचारः । पुं । आचारणायाम् ॥

आचारणम् । न । मैथुनार्थाक्रोशे । चरसञ्चलने । प्रयोजकणयन्ताल्लुट् ॥

आचारणा । स्त्री । मैथुनंप्रत्याक्रोशे । परस्त्रीनिमित्तंपुंसः परपुरुषनिमित्तंस्त्रियावा दूषणे ॥ यथा कृताऽगस्यागमनस्त्वं स्थानान्तरंगच्छेति ॥

आचारणम् । चरेःप्रयोजकणयन्तान्न युच् ।

अचारितः । त्रि । अभिशस्ते । मिथ्यापवाददूषिते । परस्त्रियां परपुरुषे वा

मैथुनं प्रति मिथ्या दूषिते। आचार्य्येते स्म। चरेरर्थन्तात् क्तः। आचार्दः सञ्जातो ऽस्येतितारकादित्वादितच्। 

आचिकः। पुं। आचेरगाछ इतिगौड भाषा प्रसिद्धे आछुकवृक्षे। रञ्जनद्रौ। त्रि। अचदेविनि। अचैर्दीव्यति अदेवीत् देविष्यति वा तैर्जयति वा। तेन दीव्यतीति ठक्। अचैर्जिते।

आक्षिप्तः। त्रि। क्षिप्ते। आक्षिप्यते स्म। क्षिपेः क्तः।

आक्षीवः। पुं। शोभाञ्जने। अक्षीवे। त्रि। मत्ते। आक्षीवति आक्षीवयति वा। क्षीवृ मदे। पचाद्यच्।

आक्षेवत्तम्। न। अक्षेवत्ते।

आक्षेपः। पुं। अपवादे। भर्त्सने। आकृष्टौ। धनादिन्यासकरणे। काव्यार्थालङ्कृतिभेदे। यथा। निषेधोवक्तु मिष्टस्य यो विशेषाभिधित्सया। वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधामतः। विषयश्चित्तस्य प्राकरणिकत्वा दनुपसर्जनीकार्यस्याशक्यत्वस्य प्रतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपः। क्रमेणो दाहरणम्। एहि किं



पि कौर अविकरणिकिंब भणामि अ लमथवा। अविचारिअकज्जारम्भआरिणी मरउण भणिस्सम्। अस्य संस्कृतं यथा। एहि किमपि कस्याअपिकृते निष्कृप भणामि अलमथवा। अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्ये। एइत्यव्ययंसानुनयसम्बोधने एहिआगच्छ। एहिं शीतिपाठे इदानीमपीत्यर्थः। अथवेतिपूर्वाक्षेपे। अलंन भणिष्यामीत्यर्थः। खेदातिशयात् पुनरुक्तिः। अलंव्यर्थमिति। अविचारितेतिस्वभावमनालोच्य, अनुरागवर्द्धनपरेत्यर्थः। अइविरहदुर्दशातिशयोवक्ष्यमाणोवक्तु मशक्य तयानिषिद्ध इत्याक्षेपालङ्कारः। ज्योत्स्नामौक्तिकदामचन्दनरसः शीतांशुकान्तद्रवाः, कर्पूरं कदलीमृणालवलयान्यम्भोजिनी पल्लवाः। अन्तर्मानसमास्त्वया प्रभवतातस्याःस्फुलिङ्गोत्करव्यापाराय भवन्ति हन्तकिमनेनोक्तेन न ब्रूमहे इति। आक्षेपणम्। क्षिपप्रेरणे। घञ्।

आक्षेपकः। पुं। निन्दाकरे। व्याधे। अनिलव्याधिविशेषे। तस्य कारणलक्षणे यथा। यदातु धमनीः सर्वाः कुपितोऽभ्येतिमारुतः। तदाक्षिपत्याशु

| आख्यात | आगम |
|---|---|

आखुभुक् । पुं । बिडाले । आखून् भुङ्क्ते । भुजपालनाभ्यवहारयोः । क्विप् ।

आखुरथः । पुं । गणेशे । आखूरथोऽस्य ॥

आखुविषहा । पुं । देवताडवृक्षे । देवदाली लतायाम् ।

आखेटः । पुं । मृगयायाम् । आखिद्यन्ते प्राणिनोऽत्र । खिद दैन्ये । हलश्चेति घञ् ।

आखेटकः । पुं । मृगयायाम् । स्वार्थे कन् ।

आखेटशीर्षकम् । न । सुडङ्ग इति गौडभाषाप्रसिद्धे कुट्टिमान्तरे । यथा । कपिशीर्षं द्रुमशीर्षं तथाचाखेटशीर्षकम् । इतिकुट्टिमभेदाः स्युः शाब्दिकैः समुदाहृता इति ।

आखेटिकः । पुं । विम्बकद्रौ । मृगयाकुशलकुकुरे ॥

आखोटः । पुं । अक्षोटे । पार्वतीये ।

आख्या । स्त्री । नाम्नि । संज्ञायाम् । उक्तौ । आख्यानम् । ख्यामकथने । आतश्चोपसर्ग इत्यङ् ।

आख्यातम् । त्रि । कथिते । व्याख्याते । न । तिङि । क्रियाप्रधानमाख्यातमिति वैयाकरणाः । भावप्रधानमाख्यातमितिनैगमाः । आख्यायतेस्म । ख्या० । चक्षिङ आदेशोवा । क्तः ।

आख्याता । त्रि । प्रतिपादयितरि । वक्तरि तृच् ।

आख्यानम् । न । सोपर्णमैत्रावरुणाद्युपाख्याने । आङ्पूर्वात्ख्यातेर्ल्युट् ।

आख्यानकी । स्त्री । आख्यानकी तौजगुरुगणोजौ जतावनेतिजगुरुगुरुश्चेदिति लक्षण लक्षितवृत्ते ।

आख्यायिका । स्त्री । उपलब्धार्थकथायाम् । यथा । प्रबन्धकल्पनांस्तोकसत्यांमाज्ञाः कथांविदुः । परम्पराश्रयायास्यात्सामताख्यायिका क्वचिदिति ॥ गद्यपद्यमयबन्धे । त्रि । कथके । आख्याते । चक्षिङः ख्याञ् । ण्वुल् ।

आगतम् । त्रि । आयाते । उपस्थिते ॥ प्राप्ते । गम० । क्तः ।

आगतिः । स्त्री । आगमने । क्तिन् ।

आगन्तुः । त्रि । अतिथौ । आगमनशीले । अनियते । आगन्तूनामन्ते सन्निवेशः । आगच्छति । गम्लृ गतौ । सितनिगमीतितुन् ।

आगन्तुकः । त्रि । अतिथौ । आहार्ये । अनित्यस्थायिनि । स्वार्थे कन् ।

आगमः । न । तन्त्रशास्त्रे । अस्यार्थः । आगतंशिववक्त्रेभ्योगतञ्चगिरिजामुखे । मतंश्रीवासुदेवस्यतस्मादागमउच्यतेइति । तस्यलक्षणं यथा । सृष्टिश्च प्रलयश्चैव देवतानांतथार्चनम् ।

घञ् ॥

आघातनम् । न । वधस्थले । हनने ।

आघारः । पुं । घृते । वैदिकानां कर्मविशेषे । ऋग्वेदिनां स्रुवेण चतुराज्यं स्रुचि दत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं मन्त्रैर्वायव्यकोणादारभ्याग्नेय्यीं यावदविच्छिन्ना घृतधारा दीयते पुनश्च स्रुवेण चतुराज्यं स्रुचि दत्वा इन्द्रं ध्यात्वा अग्नेर्नैरृतीं दिशमारभ्य ऐशानीं दिशमवधीकृत्य सन्तत्या घृतं धार्यते तस्मिन् कर्मणि ॥ यजुर्वेदिनां तु स्रुवेण मन्त्रोच्चारणपूर्वकं पूर्वोक्तक्रमेण घृतधारादाने । इति पशुपतिः ॥ आघारणम् । घृच क्षरणदीप्त्योः । घञ् । सेके ।

आघारणम् । न । सेचने ।

आघूर्णितः । त्रि । आहते । घूर्णिते । भ्रामिते । घूर्ण तनेचादौ ।

आघोटा । त्रि । अव्यात्मकशब्दवक्तरि ।

आघ्राणम् । न । तृप्तिसामान्ये । गन्धग्रहणे ॥ आघ्रायते स्म । घ्रागन्धोपादाने । क्तः । नुदविदेतिना नत्वम् ।

आघ्रातम् । त्रि । शिङ्घिते । घ्राणविषयीकृते । आक्रान्ते । तृप्ते । आघ्रायते स्म । घ्रा° । क्तः । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्यामिति पाक्षि-



कौ नत्वाभावः ॥

आङ् । अ । सीमायाम् । मर्यादायाम् । तेन विनेत्यर्थे । यथा । आसमुद्रक्षितीशानाम् ॥ अभिव्याप्तौ । तेन सहेत्यर्थे । यथा । आकुमारं यशः । क्रियायोगे । धातुना योगे सति योऽर्थो जायते तत्र । यथा । आरोहति । ईषदर्थे । यथा । आपिङ्गलः । अतति सातत्यगमने । आहुलकात् डाङ्प्रत्ययः ॥

आङ्गम् । न । कोमलाङ्गे । त्रि । अङ्गाधिकारीये । अङ्गसम्बन्धिनि । अङ्गस्येदम् । अण् ।

आङ्गारम् । न । अङ्गारवृन्दे । अङ्गाराणां समूहः । भिक्षादिभ्योऽण् ॥

आङ्गिकः । त्रि । आङ्गिके । अङ्गनिष्पन्नभावव्यञ्जकभ्रूक्षेपादौ । अङ्गजाते । अङ्गेन हस्तादिना निर्वृत्तम् । निर्वृत्तेऽक्षद्यूतादिभ्य इति ठक् ।

आङ्गिरसः । पुं । वाचस्पतौ । जीवे । अङ्गिरसोऽपत्यम् । ऋष्यन्धकेत्यण् । बहुत्वे त्वत्रिभृग्वित्यणो लुक् । आङ्गिरसः आङ्गिरसौ अङ्गिरसः ॥

आचयाणः । त्रि । त्रुमासे ॥ [illegible]

आचमः । पुं । आचमने । जलपाशने ॥

आचमनम् । न । उपस्पर्शे । वैधकर्मारम्भात् पूर्वं वारत्रयजलपानानन्तर-

यथा क्रमाष्टाङ्गस्पर्शरूपशुद्धिजनकक्रियायामित्यर्थः ॥ अत्र प्रमाणम् । मध्याल्यपाणौ यादौ त्रिः पिबेदम्बुवीक्षितम् । सम्मृज्याङ्गुष्ठमूलेन द्विः प्रमृज्यात् ततो मुखम् । संहत्य तिसृभिः पूर्वमास्यमेव सुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥ अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः । नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै । सर्वाभिश्च शिरः पश्चात् बाहू चाग्रेण संस्पृशेत् ॥ इति दक्षः ॥ आयतं पर्वणाङ्गुल्या गोकर्णाकृतिवत् करम् । संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत् । माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः । इति भारद्वाजः ॥ दक्षिणेनोदकं पीत्वा वामेन संस्पृशेद्बुधः । तावन्न शुध्यते तोयं वामहस्तेन नरः स्पृशेदिति देवीभागवतम् ॥ अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः । हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ॥ शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः । इति याज्ञवल्क्यः । त्रियाऽकैर्दर्शिकं तीर्थं शूद्रजातेस्तथैव च । सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोरिति । चमु अदने । भावे ल्युट् । अदनं चात्र जलस्यैवेति व्याख्यातारः । आचम्यते अनेन । अधिकरणे वा ल्युट् ।

आचमनकः । पुं । निष्ठीवनपात्रे । पतद्ग्रहे । प्रौणे ।

आचमनीयम् । न । मुखप्रक्षालनार्थजले । यथा । उदकं दीयते यत्तु मस्तकं फेनवर्जितम् । आचमनाय देवेभ्यस्तदाचमनमुच्यत इति ॥ कालिकापुराणम् ॥

आचरणम् । न । आचारे । व्यवहारे । आङ्पूर्वाच्चरतेर्भावे ल्युट् । रथादौ ॥ आचरति गच्छत्यनेनेति करणे ल्युट् ।

आचरितम् । त्रि । कृताचरणे । ऋणदे ॥ पारिभाषिकं तद्यथा । दारपुत्रपशून् हत्वा कृत्वा द्वारोपवेशनम् । यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते । इति ।

आचर्यः । पुं । गन्तव्यदेशे । चरेराङि चागुराविति यत् ।

आचान्तः । त्रि । कृताचमने ।

आचामः । पुं । आचमने । भक्तमण्डे । मासरे । आचम्यते । चमु॰ । अकर्त्तरीति घञ् । वृद्धिः । भावे घञ् ।

आचारः । पुं । मन्वाद्युक्ताचमनादिव्यवहारे । चरित्रे । शीले । सर्वस्य प्राधान्यं यथा । सर्वागमानामा-

चारःप्रथमं परिकल्पते। आचारप्रभवोधर्मोधर्मस्यप्रभुरच्युत इतिमहाभारतम्। आचारः परमोधर्मःश्रुत्युक्तःस्मार्त्तएवचेतिमनुः। अपिच। आचाराद्विच्युतोविप्रोनवेदफलमश्नुते। आचारेणतुसंयुक्तः सम्पूर्णफलभाग्भवेत्। एवमाचारतोदृष्ट्वाधर्मस्यमुनयोगतिम्। सर्वस्यतपसोमूलमाचारंजगृहुःपरमितिच। आचर्य्यते। चर॰ घञ्।

आचारवर्जितः। त्रि। आचारवर्हिभूते। आचारेणवर्जितः। आचारहीने। लोकवाह्यव्यवहर्त्तरि॥

आचारहीनः। त्रि। गुर्वतिथिप्रत्युत्थानाद्याचारवर्जिते। आचारेणआचाराद्वाहीनः। आचारहीनंनपुनन्तिवेदायद्यप्यधीताःसहषड्भिरङ्गैः।

आचारी। त्रि। आचारवति। श्रुतिस्मृत्युक्ताचारयुक्ते। सं॰ इनिः॥

आचारी। स्त्री। हिलमोचिकायाम्।

आचार्य्यः। पुं। मन्त्रव्याख्याकृति। साङ्गकल्पवेदाध्यापयितरि। यथाहमनुः। उपनीयतु यःशिष्यं वेदमध्यापयेद्द्विजः। सकल्पंसरहस्यञ्चतमाचार्य्यं प्रचक्षते। इति। मोक्षसाधनस्योपदेष्टरि श्रीगुरौ। सचोक्तःश्रुत्यर्थे। स्वयमाचरतेशिष्यानाचारेस्थापयत्यपि। आचिनोतिहिशास्त्रार्थमाचार्य्यस्तेनकथ्यते। आमायतत्त्वविज्ञानाच्चराचरसमानतः। यमादियोगसिद्धत्वादाचार्य्यइतिकथ्यते। इति। श्रीशङ्कराचार्य्ये। द्रोणाचार्य्ये। आचर्य्यते। चरेर्ण्यत्॥

आचार्य्यकम्। न। आचार्य्यकर्म्मणि॥ योपधाद्गुरूपोत्तमाद्वुञ्।

आचार्य्यमिश्रः। पुं। गौरवान्विते।

आचार्य्या। स्त्री। स्वयंमन्त्रव्याख्यानकारिण्याम्। पुंयोगाभावान्नानुगमोङीष्च। टाप्।

आचार्य्यानी। स्त्री। आचार्य्ययोषिति। आचार्य्यस्य स्त्रीत्यर्थे इन्द्रवरुणभवशर्वेत्यादिना आचार्य्यशब्दस्यानुगमोङीष्च। आचार्य्यादणत्वञ्चेति णत्वाभावः॥

आचिख्यासा। स्त्री। आख्यातुमिच्छायाम्॥

आचितः। पुं। शकटोन्मेये। शाकटभारे। छकडेकाभार इतिभाषा। अयुतपले। न। दशभारपरिमाणे। २५ मण इतिभाषा। त्रि। संगृहीते। छन्ने। व्याप्ते। आचीयतेस्म। चिञ् चयने। क्तः। ग्रथिते। गुम्फिते।

आच्छन्नम्। त्रि। आच्छादिते। आवृ

ते ।

आच्छादः । पुं । वस्त्रे । इतिहेमचन्द्रः ।

आच्छादनम् । न । पिधाने । वस्त्रे । अपवारणे । छादयति । छद अपवारणे आङ्पूर्वः । ण्यन्तात् ल्युट् । आच्छाद्यते ऽनेनवा ।

आच्छादितः । त्रि । आवृते । कृताच्छादने ।

आच्छिन्नः । त्रि । बलादृते ।

आच्छुकः । पुं । आचगाछ इतिगौडभाषा प्रसिद्धे वृक्षविशेषे । पर्यायः के । रत्ननदी ।

आच्छुरितम् । न । सशब्दहासे । नखवाद्ये । नखाघातविशेषे । आच्छुरणम् । छुरच्छेदने ।

आच्छुरितकम् । न । सशब्दहासे । परस्यामर्षजनकेहास्ये । नखाघातविशेषे । आच्छुरणमपरच्छेदनम् । आच्छुरैर्भावितः । स्वार्थेकः ।

आच्छोदनम् । न । मृगयायाम् । आच्छिद्यन्तेऽत्र । छिदिर्० । ल्युट् । पृषोदरादिः ।

आजम् । न । घृते । त्रि । अजस्यमांसादौ । यथा । तिलजतैलसुपाकसुपाचितंकासमर्दसुरसैविमर्दितम् । सूपभूपभवधूपधूपितं यक्षिमान्द्यनरणं रुजापरम् । याहशायातवोनृणामानामपिताहशाः । अतोधातुविवृद्ध्यर्थमाजमांसंप्रशस्यते । इति । अजस्येद-मित्यर्थे-अण् ।

आजकम् । न । छागवृन्दे । अजानांसमूहः । गोत्रोक्षोष्ट्रेतिवुञ् ।

आजकारः । पुं । भरोवृषे । शिवस्यवृषे ।

आजगवम् । न । शिवस्यधनुषि । अजगवे । प्रज्ञादित्वात् ।

आजन्मसुरभिपत्रः । पुं । मरुवके ।

आजमीढः । पुं । युधिष्ठिरपाण्डवे । स्वार्थेऽण् ।

आजानम् । न । देवलोके । स्वभावे ।

आजानदेवः । पुं । देवताविशेषे । यथा । सृष्टेराजननादादौ देवत्वंयेप्रपेदिरे । आजानदेवास्तेचस्युः पूर्वेभ्यः सूक्ष्ममूर्त्तयःइति । पूर्वेभ्यः पूर्वपूर्वेभ्यः । अपिच । कल्पादावेवदेवत्वंगता आजानदेवता इति ।

आजानुबाहुः । त्रि । जानुपर्यन्तदीर्घबाहुविशिष्टे । यथा । आजानुबाहुः सुशिराः सुललाटः सुविक्रम इति रामायणम् ।

आजानेयः । पुं । स्त्री । कुलीनाश्वे । शोभनाश्वे । यथा । शक्तिभिर्भिन्नहृदयाः स्खलन्तश्चपदेपदे । आजानन्तियतः संज्ञामाजानेयास्ततः स्मृताः ।

इत्यमरशास्त्रम् । अजनम् । अजग
ति क्षेपणयोः । घञ् । आजेन क्षेपे
ण आनेयः प्रापणीयः आयत्तो वा ।

आजिः । स्त्री । समभूमौ । सङ्ग्रामे ।
आक्षेपे । क्षणे । मर्यादायाम् । य-
था । आजेः शरणम् । अजन्त्यस्या-
म् । अज० । अज्यतिभ्याञ्चेतीण् ।
अजनम् । इणजादिभ्यइतीञ् विधा
नसामर्थ्याद्वेर्नवी । अन्यथा । व्यादि
भ्यइत्येवावक्ष्यत् । बहुलंतणीति वा ॥

आजीवः । पुं । जीविकायाम् । आजी
व्यते अनेन । जीवप्राणधारणे । हल
श्चेति घञ् ।

आजीवी । पुं । एकदण्डिनि ।

आजीव्यम् । न । उपजीव्ये ।

आंजुः । स्त्री । वेतनंविनाकर्मकर्त्तरि ।
रेफान्तः ॥

आजूः । स्त्री । वेतनंविनाकर्मकर्त्तरि ।
विष्टायाम् ॥ वेठी वेठु इ० हिमन्त्रे-
षांप्रसिद्धम् वेगारीत्यन्यत्र ॥ आज
वति । जुगतौ । क्विब्वचिप्रच्छीतिक्वि-
प् दीर्घो । । हठाद्भृतिकः क्लेशावि
ष्टराजूरवकीर्त्यते ।

आज्ञप्तः । त्रि । आदेशिते । मासान्ते ।

आज्ञा । स्त्री । निदेशे । शासने । स्व-
ल्पाङ्गमस्थाने । आज्ञानम् । आ-
भवबोधने । आतश्चोपसर्गइत्यङ् ।
टाप् ॥

आज्ञाकारी । त्रि । आज्ञानुवर्त्तिनि ।
आज्ञयाकर्मकारिणि ।

आज्ञाचक्रम् । न । भ्रुवोर्मध्ये । षट्च
क्रान्तर्गतषष्ठचक्रे । आज्ञासंज्ञकं-
चक्रम् । यथा । आज्ञाचक्रंतदूर्ध्वेतु
आत्मनाधिष्ठितंपरम् । आज्ञासङ्क्रम
णंतत्रतेनाज्ञेति प्रकीर्त्तितम् । तत्र
निहितचित्तस्यपुरुषस्यसर्वपदार्थसा
क्षात्कारेण एवं भूतमेवंवर्त्तते एवंभ
विष्यतीतिज्ञानेन आज्ञायाः तः पर
त्वयैवंकर्त्तव्यमिति परमेश्वराज्ञायाः
सङ्क्रमश्चभवति तेनहेतुनातदाज्ञा
चक्रमितिकीर्त्तित मित्यर्थः ।

आज्ञापकः । त्रि । आज्ञाकर्त्तरि ।

आज्ञापत्रम् । न । आदेशलिपौ । नि-
देशलिखने । हुकम्नामा इतिपा
रस्यभाषा ।

आज्ञापनम् । न । विज्ञापने । जनाव-
ना इति भाषा ।

आज्ञाप्तः । त्रि । आज्ञाप्तिविशिष्टे । ल
ब्धाज्ञे ।

आज्यम् । न । घृते । आअज्यतेऽनेन ।
अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । आ
ङ्पूर्वादञ्जेः संज्ञायामितिक्यप् । आ
अनक्त्यनेनवा । श्रीवासे ।

आज्यपाः । पुं । पुलस्त्यस्यतनयेषुवैश्या

नापिष्टपु । आज्यंपिबति । पापाने । क्विप् ।

आज्यभाग: । पुं । वैदिकानामाहुतिविशेषे । तत्र । ऋग्वेदिनामग्नेरुत्तरभागे स्रुवेणाग्निसम्प्रदानकघृताहुतिः । तद्दक्षिणभागे सोमसम्प्रदानकाहुतिश्च । यजुर्वेदिनान्त्वग्नेरुत्तरदक्षिणयोः पश्चिमादिप्राच्यन्तघृतधारेति पशुपतिः ।

आज्यस्तोत्रम् । न । सामगानां मातः सवनेगायत्रसाम्नागीयमानेषु चतुर्षुस्तोत्रेषु ।

आञ्जनेय: । पुं । हनूमति । यथा । उल्लङ्घ्यसिन्धोः सलिलंसलीलंयः शोकवह्निंजनकात्मजायाः । आदायतेनैवददाहलङ्कांनमामितंप्राञ्जलिराञ्जनेयमिति । अञ्जनायाः अपत्यम् । स्त्रीभ्योढक् ।

आञ्जिनेय: । पुं । अञ्जनहारी इतिभाषाप्रसिद्धे जन्तुविशेषे । इतिशब्दमाला ।

आटरूष: । पुं । वृषे । वासके । अटरूषएव । स्वार्थेऽण् ॥

आटि: । पुं । शरारिपक्षिणि । आअटति । अटगतौ । इन् ।

आटिकी । स्त्री । अनुपजातपयोधरादिस्त्रीष्वङ्गनायाम् । शृङ्गान्तरायाटनार्हत्वादाटिकी ।

आटिक: । त्रि । अटनायप्रवृत्ते ॥

आटीकनम् । न । वत्सानांगमने ॥ आ ईषत् । टीकृगतौ । ल्युट् ।

आटीकर: । पुं । वृषे ॥

आटीकलम् । न । वत्सानांक्रीडास्थ्यास् ॥

आटोप: । पुं । दर्पे । संरम्भे ॥ आनाहे । उदरेवायुजन्यगुडगुडाशब्दे ।

आडम्बर: । पुं । तूर्यस्वने । पक्ष्मणि । संरम्भे । क्रोधे । गजगर्जिते । युद्धपटहे ॥ हर्षे । आरम्भे । दर्पे । यथा । असारस्यपदार्थस्यप्रायेणाडम्बरोमहान् । नहितादृक् ध्वनिः स्वर्णेयादृक्कांस्येप्रजायते इति । आडम्बयते । हविक्षेपे । चु० । घञ् । भावेघा । आडम्बंरातिरायतिवा । आतोनुपेतिकः । मूलविभुजेतिकः । आडम्बयतिवा । वाहुलकादरन् ॥

आडि: । स्त्री । शरालिखगे । स्वनाम्नाख्याते मत्स्यविशेषे । इति गौडाः । आअडति । अडउद्यमने । इन् ॥

आडिका । स्त्री । शरारिविहगे ।

आडी । स्त्री । शरालिपक्षिणि । कृदिकारादितिङीष् ।

आडू: । पुं । उडुपे । भेले । जम्बाप्रदेशे । ढोंगा ढोंगी इतिभाषाप्रसिद्धे ।

टौ । सीमनि ।

आण्डम् । त्रि । अण्डसम्भवे ।

आण्डजः । त्रि । अण्डजे ॥ स्वार्थेऽण् ।

आण्डीरः । त्रि । आण्डवति । आण्डो ऽस्त्यस्य । काण्डाण्डादीरन्नीरचाविति ईरच् ।

आतः । २ । इतोपीत्यर्थे ।

आतङ्कः । पुं । रोगे । सन्तापे । शङ्कायाम् । मुरज्यध्वनौ । भये । ज्वरे ॥ आतङ्कनम् । तङ्किकृच्छ्रजीवने । घञ् । हलश्चेतिकरणेवा ॥

आतञ्चनम् । न । मंतोषापे । गलितस्य स्वर्णादेर्द्रव्यान्तरेणाम चूर्णने । इति स्वामी । निःक्षेपणमिति सुभूतिः । उपद्रव इति रायमुकुट. । द्रवद्रव्यमचेपणोचित चूर्णमिति सारसुन्दरी । दुग्धादेर्दध्यादिभावार्थं तक्रादि प्रक्षेपे । जवने । वेगे ॥ प्रापणे । आप्यायने । तञ्चुगतौ । ल्युट् ।

आततः । त्रि । विस्तृते । व्याप्ते । आसमन्तात्ततम् । आतन्यतेस्मा । तनु विस्तारे । तनिमङ्भ्यांकिचेतितन् । आतन्यतेस्मवा । क्तः । अनुदात्तोपदेशेतिनलोपः ॥

आततायी । त्रि । वधोद्यते । सयथा । अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारीचषडेतेह्याततायिनः । आततायिनमायान्तंहन्यादेवोविचारयन् । नाततायिवधे दोषोहन्तुर्भवतिकश्चनेति । णिनिः । आततंयथा तथा अयितुंशीलमस्य ।

आतपः । पुं । प्रकाशे । द्योते । सूर्यालोके । अस्यगुणा यथा । आतपःकटुकोरूक्षःस्वेदमूर्च्छातृषापहः । दाहवैवर्ण्यजननो नेत्ररोग प्रकोपण इति । आतपति । तपसन्तापे । अच् ॥

आतपत्रम् । न । छत्रे ॥ आतपात् त्रायते । त्रैङ् पालने । आतोनुपेतिकः । सुपीतियोगविभागात्कः ॥

आतपवारणम् । न । छत्रे । आतपस्य वारणम् ।

आतपाभावः । पुं । छायायाम् ।

आतपोदकम् । न । मृगतृष्णाजले । आतपेनोष्णोदके । आतपस्यउदकम् ।

आतरः । पुं । तरपण्ये । नद्यासरणाय देयेकपर्दकादौ । यथा ॥ आतरलाघवहेतोर्मुररिपुतरणौ तवावलम्बनम् । अपणपणमिहकुरुते नाविक पुरुषे न विश्वासइति ॥ आतरन्त्यनेन । पुंसिसंज्ञायामितिघः ।

आतर्पणम् । न । प्रीणने । तृप्तौ । मङ्गलालेपने । आङ्पूर्वात्तृपेर्भावेल्युट् ।

आतापी । पुं । असुरविशेषे ॥

आतायी । पुं । चिल्ले । चील इति प्र° खगे । आतायते तच्छीलः । तायृ सन्तानपालनयोः । सुप्यजाताविति णिनिः । यद्यप्यत्र वृत्तिकारादिभिरनुपसर्गे इत्युक्तम् तथापि भाष्ये उपसर्गे णिनिः स्वीकृतः ॥

आतारः । पुं । तरपण्ये । आतरे ॥

आतिः । स्त्री । शरारिविहगे ॥ आ अतति । अत° । अज्यतिभ्यांचेतीण् । यद्वा । अतनम् । इणजादिभ्य इतीण् ॥

आतिथेयम् । न । अतिथ्यर्थे । अतिथिभोजनादौ ॥ त्रि । अतिथौ साधौ । अतिथिसेवके । तत्रसाधुरित्यधिकारे । पथ्यतिथिवसतिस्वपतेर्ढञ् । स्त्री । ङीप् ॥

आतिथ्यः । पुं । अतिथौ ॥ त्रि । अतिथ्यर्थवस्तुनि भक्ष्यभोज्यादौ ॥ अतिथिसेवायाम् ॥ अतिथय इदम् । अतिथेर्ञ्यः ॥

आतिवाहिकः । पुं । अर्चिरादिमार्गे ॥ न । शरीरान्तरे । देवता येन शरीरेण लिङ्गशरीरं परलोकं नयति तदातिवाहिकं शरीरान्तरमिति व्याख्यानात् ॥

आतुः । पुं । उडुपे । भेलके । डोंगा डोंगी इति भाषा ॥

आतुरः । त्रि । आमयाविनि । रोगिणि ॥ कातरे ॥ आतुतोर्त्ति । तुरत्वरणे । छान्दसाश्मिञ्चिङ्गापोयां प्रयुज्यन्ते । इगुपधेतिकः ॥

आतृप्यम् । न । आता इति गौडभाषाप्रसिद्धे फलविशेषे । सरीफा इति भाषाप्रसिद्धे ॥ अस्यगुणास्तु । तृप्तिजनकत्वरक्तवर्द्धकत्वस्वादुत्वशीतलत्वबलमांसकारित्वहृद्यत्वदाहरक्तपित्तवायुनाशित्वानीतिद्रव्यगुणः ॥

आतोद्यम् । न । वीणावंश्यादिवाद्ये ॥ तच्चतुर्विधं भवति यथा । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंश्यादिकन्तु सुषिरं कांस्यतालादिकं घनमिति ॥ आसमन्तात् तुद्यते । तुद व्यथने । ण्यत् ॥

आत्तः । त्रि । गृहीते । ग्रस्ते ॥

आत्तगन्धः । त्रि । दूरीभूताहङ्कारे । अभिभूते ॥ आत्तः अरिणा गृहीतः गन्धो गर्वो यस्य सः ॥ गृहीतगन्धे ॥

आत्तगर्वः । त्रि । भग्नाहङ्कारे । आत्तगन्धे ॥ आत्तः वैरिणा गृहीतो गर्वो यस्य ॥

आत्मगुणः । पुं । तार्किकसमयप्रसिद्धेषु बुद्ध्यादिषु चतुर्दशगुणेषु ॥ ते चोक्ताः । बुद्ध्यादिषट्कं सङ्ख्यादिपञ्चकं भावना तथा । धर्माधर्मौ गुणा एते

रूपे ॥ निरुपचरितस्वरूपे ॥ ज्ञान सुख्योराश्रये । सर्वजन्तूनां प्रत्यक्चे तनेस्वसंवेद्ये प्रसिद्धे । मुख्यगौणमि थ्येतित्रिविधेषु साक्षिपुत्रादिदेहादि लक्षणेषु । भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥ त्यज्यमाने मिनस्य ऽः प्राप्यमाणे पि नाप्यते । आगमापायसाक्षीयः सवा त्मानुभवात्मकः । विशुद्धचिद्रूपे त्व म्पदलक्ष्ये तुरीये । अहंप्रत्ययवेद्ये । इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्या त्मनोलिङ्गम् । न्यायसूत्रम् । १।१० ॥ यच्चाप्नोतियदादत्ते यच्चात्तिविष यानिह । यच्चास्यसन्ततोभावस्तस्मा दात्मेतिकीर्त्तितः ॥ संततिसन्तत भावेनजाग्रदादिसर्वावस्थास्वनुवर्त्त ते । अततिसातत्यगमने । सातिम्यां मनिन्मनिणाविति मनिण् । भावि । ब्रह्मणि ॥ यथा । आत्मैवेदं सर्वम् । हार्दाकाशे ।

आत्मनीनः । पुं । सुते । श्याले । मा गधारे । विदूषके । त्रि । आत्मने हिते । यथा । अद्यापि नैवात्मनीनं कृतंकर्म्मयातंजनुः कापिशल्यं वै य र्म । किंदारदेहात्मजस्वर्गादन्तेनचि तोरतिविन्दस्वेचेन मुकुन्देनेति ॥ प

ख्ये । आत्मनेहितम् । आत्मनविश्व जनभोगोत्तरपदात्खः ॥

आत्मपरिज्ञानम् । न । ब्रह्मात्मैक्यसा क्षात्कारे । आत्मनः परिज्ञानम् ।

आत्मप्रकाशः । पुं । आत्मनः प्रकाशे । आत्मनस्ततप्रकाशत्त्वंयत पदार्था वभासनम् । नाग्न्यादिदीपवद्दी प्तिर्भवत्यान्ध्यं यतोनिशि ॥

आत्मबन्धुः । पुं । पितृष्वसुः पुत्रे । मा तुलपुत्रे । मातृष्वसुः पुत्रे । आत्म नोबन्धुः ।

आत्मवीरः । पुं । प्राणवति । श्याल के । विदूषके ।

आत्मभवः । पुं । सुरज्येष्ठे । हिरण्यग र्भे । विष्णौ ।

आत्मभाविः । पुं । मनोवृत्तौ ।

आत्मभूः । पुं । ब्रह्मणि । पितामहे । चतुरानने । कामदेवे ॥ विष्णौ । शिवे । आत्मनोविष्णोः सकाशात् आत्मनास्वयमेववाभवति । भू० । भुवःसंज्ञान्तरयोरितिक्विप् ॥

आत्ममूर्त्ती । पुं । दुरालभायाम् ।

आत्मम्भरिः । त्रि । स्वोदरपूरके । आ त्मोदरमात्रस्य भरणकर्त्तरि । आ त्मानंबिभर्त्तीतिविग्रहे फलेग्रहिरा त्मम्भरिश्चेतिआत्मनोमुमागमोभृ ञ्इन्प्रत्ययश्चनिपात्यते ।

आत्मयाजी । त्रि । सर्वत्रपरमात्मभावनापुरःसरं नित्यं विहितकर्मणोऽनुष्ठातरि । आत्मशुद्ध्यर्थमेवस्वर्गाद्यासङ्गंहित्वायोदेवान्यजतेसदुत्यर्थः ॥

आत्मयापनम् । न । कायक्षेपे । शरीररक्षणे । आत्मनः स्वस्ययापनम् ।

आत्मयोनिः । पुं । कामदेवे । परमेष्ठिनि । शिवे । विष्णौ । आत्मैव योनिः उपादानकारणमस्य ।

आत्मरक्षा । स्त्री । महेन्द्रवारुणीवृक्षे । आत्मनोरक्षणे ।

आत्मलाभः । पुं । ज्ञाने । आत्मनो ह्यलाभोऽज्ञानमेव तस्मात् ज्ञानमेवात्मनोलाभः । नग्रामाद्यनात्मलाभवदप्राप्तिश्चणात्मलाभः खभूतभव्ययोर्भेदाभावात् । आत्मलाभात् परोलाभोनास्तीति मुनयो विदुः ।

आत्मलोकः । पुं । स्वस्वरूपे । आत्मैवलोकः ।

आत्मलोम । न । श्मश्रुणि । स्वलोममात्रे ।

आत्मवान् । त्रि । अप्रमत्ते । अप्रमादिनि । सर्वदासावधाने । ज्ञानिनि । स्वेमच्छिन्निसदामतिमति । धृतिमति । मनस्विनि । अस्त्यर्थेमतुप् । आत्मवान्सत्त्ववाननुद्धतप्रत्युत्पन्नमाता ।

आत्मवश्यः । त्रि । मनोधीने । स्वाधीने । आत्मनोवश्यः । आत्मावश्योयस्यवा ।

आत्मवित् । त्रि । मुक्ते । आत्मानंस्वंशब्दादिविपर्ययबुद्धिप्रत्ययसाक्षिणंयो वेदसतथा । कर्मिणि । आत्मानंशरीरेन्द्रियाद्यतिरिक्तंनित्यादिकर्त्तारं परलोकेदुःखभागिनंवेत्ति विजानातीतितथा ॥

आत्मशल्या । स्त्री । शतावर्य्याम् ।

आत्मशुद्धिः । स्त्री । चित्तशुद्धौ । आत्मनःशुद्धिः ।

आत्मसम्भावितः । त्रि । सर्वगुणविशिष्टोऽहमित्यात्मनैव पूज्यतांप्रापितो नकैश्चित्, साधुभिस्तथ । आत्मनासम्भावितः ।

आत्मसाक्षी । त्रि । बुद्धिवृत्तिसाक्षिणि ।

आत्मस्थः । त्रि । हृदिस्थे ।

आत्महत्या । स्त्री । आत्मघाते । स्ववधे ।

आत्महा । पुं । देवाजीवे । देवले । त्रि । आत्मघातिनि । उदरभेदिनि । अनात्मन्यात्माभिमानिनि । अविदुषि । आत्मघातस्य प्रायश्चित्तविधानादर्शनात् संसरणमेवफलं निश्चितम् । आत्मानंहन्तिक्विप् । आत्माज्ञानंसर्वपापस्यमूलम् । अविद्यादोषेणविद्य

मानस्यात्मनस्तिरस्कारणात् विद्यमानस्यात्मनो यत्कार्यं फलमजरामरत्वादिसंवेदनादिलक्षणं तद्गतस्येवतिरोभूतं भवतीति प्राकृतोऽविद्वानात्महेत्युच्यते। येयथासन्तमात्मानमकर्त्तारं स्वयंप्रभुम्। कर्त्ता भोक्तेतिमन्यन्तेतएवात्महनोजनाः। यथाहुराचार्याः। लब्ध्वाकथञ्चिन्नरजन्मदुर्लभं तत्रापिपुंस्त्वंश्रुतिपारदर्शनम्। यस्त्वात्ममुक्त्यै नयतेतमूढधीः सह्यात्महास्वं विनिहन्त्यसद्ग्रहादिति। नृदेहमाद्यंसुलभं सुदुर्लभं प्लवंसुकल्पंगुरुकर्णधारम्। मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं नतरेत् सआत्महेति श्रीभागवतम्।

आत्माधीनः। पुं। सुते। पुत्रे। प्राणधारे॥ श्याले। विदूषके। इतिहेमचन्द्रः। त्रि। स्वायत्ते। आत्मनोऽधीनः।

आत्माशी। पुं। मत्स्ये। इतित्रिकाण्डशेषः॥

आत्माश्रयः। पुं। दोषविशेषे। स्वापेक्षत्व आत्माश्रयः। स्वस्यस्वापेक्षत्वेऽनिष्टप्रसङ्ग आत्माश्रयः। सचोत्पत्तिस्थितिज्ञप्तिद्वारात्रेधा। यथा। यद्ययंघट एतद्घटजन्यः स्यात् तदा एतद्घटानधिकरणक्षणोत्तरवर्त्ती नस्यात्। यद्ययंघटएतद्घटवृत्तिःस्यात् एतद्घटव्याप्योनस्यात्। यद्ययंघट एतद्घटज्ञानाभिन्नःस्यात् ज्ञानसामग्रीजन्यः स्यात्। एतद्घटभिन्नःस्यादितिवासर्वत्राप्याद्यम्॥

आत्मीयः। त्रि। अन्तरङ्गे। स्वकीये।

आत्मोद्भवः। पुं। आत्मजे। पुत्रे।

आत्मोद्भवा। स्त्री। दुहितरि। पुत्र्याम्। माषपर्ण्याम्।

आत्मोपजीवी। पुं। भार्यिकादौ। देहक्लेशोपजीविनि। आत्मना देहेनउपजीवितुं शीलमस्य। सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः॥

आत्यन्तिकम्। त्रि। अतिशयेनजाते॥

आत्ययिकः। त्रि। अत्ययः प्रयोजनमस्येत्यर्थे। अत्ययार्थे। विनयादित्वात् स्वार्थे ठक्॥

आत्रेयः। पुं। अत्रिसुतेः पुत्रेषु। सोमश्च। दत्तोदुर्वासाश्चन्द्रश्चेति। अत्रेरपत्यम्। इतश्चानिञ इति ढक्। शरीरस्थरसधातौ। इतिहेमचन्द्रः।

आत्रेयिका। स्त्री। ऋतुमत्याम्। इतिहलायुधः।

आत्रेयी। स्त्री। ऋतुमत्याम्। पुष्पवत्याम्। नदीविशेषे। आत्रेयीवाऽगम्यत्वात्। अपत्ये ढक्। ङीप्।

आथर्वणः । पुं । अथर्ववेदज्ञब्राह्मणे । पुरोहिते । आथर्वणिकस्यायं धर्मआम्नायो वा । आथर्वणिकस्येकलोपश्च । न । अथर्वणा सूक्ते । भिक्षादिभ्योऽण् ।

आथर्वणिकः । पुं । अथर्वाध्ययनपरे । अथर्वाणमधीते । वसन्तादिभ्यष्ठक् । दाण्डिनायनेति निपातनाट्टिलोपो न भवति ।

आददानः । त्रि । उपादानं कुर्वति ।

आदमः । पुं । मुनिविशेषे । अयम्बरमलप्रवर्त्तकोऽधपराक्तेवभूव ।

आदरः । पुं । आरम्भे । सन्माने । समादरे । दृ विदारणे । आङ्पूर्वः ऋदोरप् ।

आदर्शः । पुं । टीकायाम् । दर्पणे । प्रतिपुस्तके । आदृश्यते रूपमनेनेति दृशिर् प्रेक्षणे । हलश्चेति घञ् ।

आदह । ा । उपक्रमे । कुत्सने । हिंसायाम् ।

आदाता । त्रि । ग्रहीतरि ।

आदानम् । न । ग्रहणे । स्वीकारे । वाजिनामलङ्कारे । रोगलक्षणे । आङ्पूर्वाद्दाञो ल्युट् ।

आदानी । स्त्री । ननुयां इति प्रसिद्धे फलशाके । घोषायाम् ।

आदास्यमानः । त्रि । गृहीष्यमाणे ।

आदिः । पुं । प्रथमे । प्रागसत्त्वावस्थायाम् । नियतपूर्ववर्त्तिकारणे । उत्पत्तौ हेतौ । आदिशब्दः पदान्ते तु गणस्य सूचको मतः । यथा गर्गादिः । सामीप्ये व्यवस्थायां प्रकारेऽवयवे तथा । आदिशब्दन्तु मेधावी चतुर्ष्वर्थेषु लक्षयेत् । आप्रथमं दीयते गृह्यते इदम् । उपसर्गे घोः किः । यद्वा । अदनम् । अद० । इणजादिभ्य इती ण् । पूर्वकालदृष्टिर्यस्यादित्वम् ।

आदिकरः । पुं । प्रथमकर्त्तरि । आदेः कर्त्तरि । आदिं करोति । दिवाविभेतिटः ।

आदिकविः । पुं । ब्रह्मणि । वाल्मीकिमुनौ । प्राचेतसे । आदौ कविः । कर्मधारयो वा ।

आदिकारणम् । न । पूर्वनिमित्ते । मूलहेतौ । निदाने । आदौ कारणम् । आदिः मुख्यं कारणम् ।

आदिगदाधरः । पुं । गयास्थदेवताविशेषे ।

आदिजिनः । पुं । ऋषभदेवे ।

आदितः । अ । आदावित्यर्थे । आद्यादिभ्य उपसंख्यानात् तसिः ।

आदितालः । पुं । तालविशेषे । यथा एकलघुयुक्त आदितालः स कथ्यते ।

गुरुस्तत् पुरतोवाच्यःप्रायेणैतन्निद र्शनमितिसङ्गीतदामोदरः ॥

आदितेयः । पुं । देवे । अदित्याः अपत्यम् । कृदिकारादक्तिन इतिङीषन्तात् स्त्रीभ्योढक् । तस्य एयादेशः ।

आदित्यः । पुं । सवितरि । सूर्ये ॥ देवे ॥ आदित्याद्वादशप्रोक्ताइतिवचनात् गणेबहुवचनान्तः । यथा । तत्रचद्वादशादित्याश्चैत्रादिषु तपन्ति ये । विष्णुर्यमविवस्वन्तोंशुमान् पर्जन्य इत्यपि । वरुणेन्द्रधातृमित्राःपूषा त्वष्टाभगःपरइति । विष्णौ । आदित्यमण्डलान्तस्थे हिरण्मयेपुरुषे । अर्कवृक्षे । अदिते रादित्यस्यवाअपत्यमित्यर्थे दित्यदित्येतिण्यः ॥ अदितेरखण्डितायामह्याः अयंपतिरित्यर्थेवा प्रत्ययः । पुनर्वसुनक्षत्रे द्विवचनान्तः । न । उपपुराणविशेषे ॥

आदित्यपत्रः । पुं । क्षुपविशेषे । अर्कपत्रे ॥

आदित्यपुष्पिका । स्त्री । लोहितार्के ।

आदित्यभक्ता । स्त्री । सुवर्चलायाम् । हुरहुरइति प्रसिद्धे शाके ।

आदित्यभवनम् । न । उदयाद्रौ । आदित्योऽस्मिन्भवति प्रादुर्भवति ।

आदित्यवर्ण । त्रि । सर्वजगतोऽवभासके स्वभानेऽन्यप्रकाशानपेक्षे । आदित्यःवर्णोऽस्य ।

आदित्यसूनुः । पुं । सुग्रीववानरे । यमे । कर्णे । शनौ । सावर्णिमनौ । वैवस्वतमनौ । आदित्यस्यसूनुः ॥

आदिदेवः । पुं । देवदेवे । महादेवे । नारायणे । विष्णौ । जगदुपादानादिगुणवति वासुदेवे । विधातरि । आदिःकारणम् सचदेवश्च ।

आदिपुरुषः । पुं । ब्रह्मणि । चतुर्वक्त्रे ।

आदिवराहः । पुं । विष्णौ । हरौ ।

आदिमम् । त्रि । आद्ये । प्रथमभववस्तुनि । आदौ भवम् । मध्यान्ताद्वेच्य वादेश्चेतिवचनात् मः । यद्वा । आदिपश्चाड्डिमच् ।

आदिमत । त्रि । कार्य्ये । सकारणे ॥ आदिर्विद्यतेऽस्य । मतुप् ॥

आदिराजः । पुं । पृथुसंज्ञके नृपे । आदौराजा । टच् ।

आदिशक्तिः । स्त्री । परमात्मशक्तौ ।

आदिष्टम् । त्रि । आदेशिते । उपदिष्टे । न । आघ्रसे । उच्छिष्टे । आदिश्यते । दिशः क्तः । आदिष्टमादेशितेपिषु । आघ्रसोच्छिष्टयोः क्लीबमिति मेदिनी ।

आदिष्टी । त्रि । आदेशकर्त्तरि । आदिष्टमनेन । इष्टादिभ्यश्चेति इनि.

आदिष्टी । पुं । ब्रह्मचारिणि । व्रतादेशनम् आदिष्टं तदस्यास्तीति इनिः ।

आदीनवः । पुं । दोषे । परिक्लिष्टे । दुरन्ते । आदानम् । दीङ् क्षये । भावे क्तः । स्यादय आदितः । ओदितश्चेति नत्वम् । आदीनं क्षयमवानम् । घञर्थे कइति बाहुलकात्कः ।

आदीपनम् । न । आलिम्पने । सन्दीपने ।

आदृतः । त्रि । कृतादरे । सादरे । अर्चिते । पूजिते । आद्रियतेस्म । दृङ् आदरे । क्तः ।

आदेशः । पुं । आज्ञायाम् । शासने । उपदेशे । शास्त्राचार्योपदेशगम्ये । वार्त्तासञ्चारे । ज्योतिःशास्त्रफले । वर्णस्यस्थाने वर्णान्तरोत्पत्तौ । प्रकृतिप्रत्ययोपघातिकार्ये । आदेशनम् । आदिश्यते येनवा । दिश॰ । घञ् ।

आदेशी । पुं । दैवज्ञे । गणके । त्रि । आदिशति । म॰ इनिः । उपदेशके । आदिशतितच्छीलः ।

आदेष्टा । पुं । आदेशकर्त्तरि । यतिनि । यजमाने । यागविषये सप्रेष्टसम्पादनाय यथार्थं कर्मकुर्वितिऋत्विजांप्रेरके । आदिशति ऋत्विजादीन् यागादिस्वेष्टसम्पादनाय प्रेरयति । दिश अतिसर्जने । तृच् ।

आद्या । त्रि । प्रथमे । आदिभवे । अद्वितीये । नां धान्ये । आदौभवः । दिगादिभ्योयत् ।

आद्यकविः । पुं । धातरि । वाल्मीकौ ।

आद्यमाषकः । पुं । माषकपरिमाणे । पिप्पगुञ्जासु । देकृष्णलेसमधृते विज्ञेयो द्विमाषिक इत्यपिदेशेनाष्टत । केचित् आद्यअस्मिन्कालेइत्याहुः । पूर्वन्तु माषकंसप्तकृष्णलादिति । अद्यते । अदभक्षणे हिंसायाम् । हलश्चेति घञ् । कः । आद्योमुख्यश्चासौमाषकश्च ।

आद्यवीजम् । न । आदिकारणे । निमित्ते । आद्यंमुख्यंवीजम् ।

आद्या । स्त्री । उमायाम् । दुर्गायाम् । काल्याम् । तारायाम् । त्रिपुरसुन्दर्याम् । भुवनेश्वर्याम् । प्रकृतौ । यथा । सत्येतुसुन्दरी आद्या त्रेतायांभुवनेश्वरी । द्वापरेतारिणी आद्याकलौ काली प्रकीर्त्तितेतिमुण्डमालातन्त्रम् । आदौभवा । दिगादित्वाद्यत् । टाप् ।

आद्याकाली । स्त्री । परायांप्रकृतौ । यथा । कालसङ्कलनात्कालीसर्वेषामादिरूपिणी । कालत्वादादिभूतत्वादाद्याकालीति गीयतइति श्रीमद्महानिर्वाणतन्त्रम् ।

आनन्द

दि: मद्ये । छन्दोभेदे । दंगणे । आदि गुरुर्निकलो । प्राक्पश्चिमोत्तरद्वार गृहे । आत्मनि । वृद्धादौ मतिवि स्मृतयाऽवस्थितस्य प्रियादिशब्दवा-च्यस्य आनन्दमयस्य कारणभूते । ब्रह्मणि । आनन्दनम् । टुणदिसमृद्धौ । भ्वा । ४८ वत्सरे । निष्पत्तिः सर्वसस्यानां सर्वशस्यसमर्घता । एतं तु समयाति आनन्देनन्दति प्रजाइति तत्फलम् । त्रि । आनन्दविशिष्टे । सुखिनि । हर्षयुक्ते । आनन्दः स्वरूपमस्य । आनन्दोस्ति अस्य अस्मिन् वा । अर्श आदिभ्योऽच् ।

आनन्दथुः । पुं । सुखे । आनन्दे । त्रि । सुखिनि । टुणदि° । द्वितोऽथुच् ।

आनन्दद्रः । पुं । मेहने ।

आनन्दनम् । न । गमनागमनसमये सुहृदादेरालिङ्गनारोग्यस्वागतादि प्रश्नादिद्वारानंदोत्पादने । सभाजने । आप्रश्ने । टुणदि° । ल्युट् ।

आनन्दपटः । पुं । न । नवोढावस्त्रे ।

आनन्दप्रभवम् । न । रेतसि । वीर्ये । आनन्दात् प्रभवोऽस्य ।

आनन्दभुक् । पुं । प्राज्ञे । यथा लोके निरायासे स्थितः सुखी आनन्दभुगुच्यते तथा सुषुप्तोपि आनन्दभुक् । अ-त्यन्तानायासरूपा हीयं सुषुप्तिरूपा आनन्दी । त्रि । सुखिनि । हृष्टे । आ

आनन्दी

स्थितिरनेन प्राज्ञेनानुभूयते तस्मादानन्दभुक् प्राज्ञः ।

आनन्दमयः । पुं । जीवे । आनन्दप्रचुरे । प्राज्ञे । मनसो विषयविषय्याकारस्पन्दनाभावाद् दुःखाभावादानन्दमयः । आनन्दमायः । प्राज्ञ उच्यते । कारणशरीरे सर्वोपरमत्वात् सुषुप्तौ स्थूलसूक्ष्मप्रपञ्चलयस्थानो । पञ्चमकोषे । काचिदल्पसुखवृत्तिरानन्दप्रतिबिम्बभाक् । पुण्यभोगे भोगशान्तौ निद्रारूपेणवर्त्तते । कादाचित्कत्वतो नात्मा स्यादानन्दमयोप्ययम् । प्राचुर्ये मयट् । त्रि । आनन्दप्रधाने । न । ब्रह्मणि ।

आनन्दसम्प्लवः । पुं । परमानन्दे । आनन्दसम्प्लवे लीनो नाप‍श्यसुभयं मुने ।

आनन्दा । स्त्री । विजयायाम् । आरामशीतलायाम् ।

आनन्दार्णवः । पुं । परमेश्वरे । याज्ञयोगान्तरे । यथा । स्वोऽत्रमूलत्रिको गास्तः सौम्यः पापविवर्जितः । आनन्दार्णवयोगोयं धर्मेणैवजयावह इति ।

आनन्दिः । पुं । कौतुके । हर्षे ।

आनन्दितः । त्रि । आनन्दयुक्ते । आह्लादिते । हृष्टे । आनन्दः सञ्जातोऽस्य । तारकादित्वादितच् ।

नन्दविशिष्टे ॥ सर्वसम्पदासमृद्धे । आनन्दोऽस्यास्ति । इनिः ॥

आनन्दी । स्त्री । आकनपाता इति गौडभाषाप्रसिद्धे हृक्षविशेषे ॥

आनमनम् । न । सर्वतोभावेन नमने ॥

आनमित: । त्रि । आवर्जिते ॥

आनय: । पुं । उपनयने ।

आनयनम् । न । स्थानान्तरात् स्थानान्तरानीते । लायो इति भाषा ॥

आनर्त्त: । पुं । दारकाइतिख्याते देशे । यथा । आनर्त्तान् सउपत्रज्य स्वृद्धान् जनपदान् स्वकान् । दध्मौ दरवरं तेषां विषादं शमयन्निवेति ॥ आनर्त्तदेशवासिनिजने । जले । रणे । नृत्यशालायाम् । आनृत्यन्त्यत्र त्रितीगात्रविक्षेपे हलश्चेति घञ् ॥

आनर्त्तपुरम् । न । द्वारावत्यां पुर्याम् ।

आनर्त्तित: । त्रि । कम्पिते ॥

आनाम्य: । त्रि । अभिभवनीये । आङ्पूर्वस्य नमतेरभिभवार्थः । पोरदुपधादिति यत् तिमासे निपातनात् ।

आनाय: । पुं । जाले ॥ नयनम् । णीञ् प्रापणे । श्रिणीभुवोनुपसर्गे इति घञ् । आसमन्तान्नायोऽनेन । यद्वा । आनयन्ति मत्स्याननेन । जालसमानाय इति घञन्तो निपातित: ॥



आनाय्य: । पुं । दक्षिणाग्नौ । आनीयते । णीञ् । आनाय्योऽनित्ये इति आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते दक्षिणाग्निविषये । दक्षिणाग्निर्हि गार्हपत्यादानीयते अनित्यश्च सततमप्रज्वलनात् ।

आनाह: । पुं । विण्मूत्ररोधकरोगे । विबन्धे । विष्टम्भे । तस्य सम्प्राप्तिरूपे यथा । आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन । प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्तीति निदानम् ॥ दैर्घ्ये । आनहनम् आनह्यतेऽनेन वा । णहबन्धने । भावे करणे वा घञ् ॥

आनिलि: । पुं । हनूमति । भीमे । अनिलस्यापत्यम् । अत इञ् ॥

आनिली । स्त्री । स्वातिनक्षत्रे । अनिलो देवता अस्या: । अण् । ङीप् ॥

आनीत: । त्रि । आहृते । आनीयते स्म । णीञ् । क्त: ॥

आनील: । पुं । नीलघोटके । त्रि । ईषन्नीले ॥

आनुकल्पिक: । पुं । अनुकल्पज्ञे । अनुकल्पमधीते वेद वा । उ० ठक् ।

आनुकूलिक: । त्रि । अनुकूले । अनुकूलं वर्त्तते । ततप्रत्यनुपूर्वमीपलोमकूलमिति ठक् ।

तिवाठक । अपूपेसाधुर्वा । गुडादि स्यष्टक् ॥

आपूप्यः । पुं । सक्तुषु । अपूपार्थकपिष्टादौ । चूर्णके ॥

आपूरितः । त्रि । अभिव्याप्ते । परिपूर्णे । यथा । आपूरितं महापात्रमिति ॥

आपूर्त्तिः । स्त्री । ईषत्पूरणे । सम्यक् पूरणे ॥

आपूपम् । न । रङ्गे । राँग इतिभाषा ॥

आपृच्छा । स्त्री । आलापे । आभाषणे । आपृच्छनम् । पृच्छ० । गुरोश्चक्षुष्यः ॥

आपृष्टः । त्रि । अनुज्ञाते ॥

आपोक्लिमम् । न । लग्नात्तृतीयषष्ठनवमद्वादशभवनेषु ॥

आप्तः । त्रि । प्रत्ययिते । विश्वासोपारे । प्राप्ते । लब्धे । सत्ये । रागद्वेषादिविजितेयथार्थवक्तरि ॥ विताप‍देष्टरि । युक्ते । भ्रमादिशून्ये । तत्त्वार्थवेदिनि ॥ पुं । भ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोषचतुष्टयरहितेऋष्यादौ । आप्यतेस्म । आप्‌व्याप्तौ । क्तः । स्वस्मिन् । क्लिन्ने ।

आप्तकामः । त्रि । प्राप्तस्वरूपानन्दतृप्ते । आप्तः कामोयेन ।

आप्तगर्भः । त्रि । प्राप्ताहङ्कारे ।

आप्तजनः । पुं । हिते । हितोपदेष्टरि । आप्तश्चासौजनश्च ।

आप्तवचनम् । न । आप्तश्रुतौ । शब्दे । आप्तस्यवचनम् । कर्मधारयोवा ॥

आप्तवाक्यम् । न । आगमे ।

आप्तवाक् । स्त्री । वेदे । कर्मधारयः ॥ बहुव्रीहिश्चामुनौ । पुं ।

आप्तश्रुतिः । स्त्री । आप्तवचने । वेदे । आप्ताचासौश्रुतिश्च ।

आप्ता । स्त्री । जटायाम् । इतिकोरा सुखी ।

आप्तिः । स्त्री । सम्बन्धे । योगे । लाभे । समाप्तौ । व्याप्तौ । आप्यते । आप्‌० । स्त्रियांक्तिन्नावादिभ्यः ॥

आप्तोक्तिः । स्त्री । शब्दे । सिद्धान्तवाक्ये ।

आप्यम् । न । कुष्ठौषधौ । त्रि । अम्मये । जलविकारे फेनादौ । कर्मभेषभूते मन्त्रादौ । प्राप्ये । अपां विकारः । तस्यविकारइत्यणन्ताश्चतुर्वर्गादित्वात् यार्थेष्यञ् । स्त्री । आप्या ।

आप्यायकः । पुं । पुष्टिकरे ।

आप्यायनम् । न । तर्पणे । तृप्तौ । प्रीणने । परिपूरके ।

आप्यायितः । त्रि । तृप्ते । प्रीते । पूरिते ।

आपृच्छनम् । न । आनन्दने । पृच्छ

त्रीप्सायाम् । आङ्पूर्वायमानन्दना
र्थः । ल्युट् ॥
आप्रदानम् । न । आदाने ॥
आप्रपदम् । न । पादाग्रपर्य्यन्ते ॥
आप्रपदीनम् । त्रि । पादाग्रपर्य्यन्तलम्ब
माने वस्त्रादौ । पादस्याग्रं प्रपदम्
। तन्मर्य्यादीकृत्य आप्रपदम् । आ
प्रपदंप्राप्नोतीत्यर्थे अनेन खः ॥
आप्लवणम् । न । उत्प्लवने । उद्धरणे ॥
त्रि । ईषदवनते ॥
आप्लवः । पुं । स्नाने । आप्लवनम् । प्लुङ्
गतौ । घञभावपक्षे ऋदोरप् ॥
आप्लवव्रती । पुं । स्नातके । समाप्तवेदा
ध्ययनकृतस्नाने । आप्लवते । प्लुङ्० ।
अच् । आप्लवश्चासौव्रतीच ॥ आप्लवः
स्नानम् । तत्रव्रती नित्यस्नायीतिमु
कुटः ॥
आप्लावः । पुं । स्नाने । आप्लवनम् । प्लुङ्
० । विभाषाडिश्व्योरितिवा घञ् ।
आप्लाव्यम् । न । आप्लवे । आप्लवते । प्लुङ्
० । भव्यगेयेतिसाधु ॥
आप्लुतः । त्रि । स्नाते । कृतस्नाने । पुं ।
स्नातके । आप्लवनम् । प्लुङ्० । क्तः ॥
आप्लुतव्रती । पुं । श्रुतेः पाठात् स्नाते ।
स्नातके । आच्यमान्तरमगते समाप्त
वेदव्रते । आप्लवते । प्लुङ्० । गत्यर्था
कर्मकेतिक्तः । सचासौव्रतीच । मुकु
टस्तु आप्लुतं स्नानं तत्रव्रती नित्य
स्नायीत्याह ॥
आप्वा । पुं । वायौ । आप्नोतिसर्वम् ।
आप्० । वेवयह्वेतिवन्प्रत्ययः ॥
आफूकम् । न । अहिफेने । आफूकंशो
षणंग्राहिश्लेष्मवातपित्तलम् । तथा
खसफलेद्भूतवल्कलप्रायमित्यपि ॥
आबद्धः । पुं । दृढबन्धे । प्रेम्णि ।
अलङ्कारे । भूषणे । पुं । योक्त्रे । त्रि
। आसेते । आबध्यतेस्म । बध० । क्तः ॥
आबन्धः । पुं । बन्धने । प्रेम्णि । योक्त्रे ।
आबध्यतेऽनेन । बन्धबन्धने । हलश्चे
ति घञ् ।
आबाधा । स्त्री । पीडायाम् । दुःखे ॥
भूखण्डे । त्रिकोणचेचमध्यरज्जुनिक्षे
पेण यत्खण्डद्वयं जायते तस्मिन् ॥
बाधृलोडने । आङ्पूर्वःगुरोश्चेत्यः ।
आबिलः । त्रि । अनच्छे । अप्रसन्ने । क
लुषे ॥ आबिलति । बिलभेदने । इ
गुपधेतिकः ॥
आबिलकन्दः । पुं । मालाकन्दे ॥
आबुत्तः । पुं । नाट्योक्त्या भगिनीपतौ
॥ आपनम् आप् । सम्पदादित्वात्
क्विप् । आपमुत्तनोति । अन्येभ्योपी
तिडः ॥
आभण्डनम् । न । निरूपणे ॥
आभरणम् । न । अलङ्कारे । भूषणे ॥

आभ्रियतेऽनेन । भृञ्‌ भरणे । ल्युट् ।

**आभा ।** स्त्री । उपमायाम् । कान्त्याम् । शोभायाम् । दीप्तौ । वबूले । आभा वबूलपर्यायः कथितः कैश्चिदेवमिहेति भावप्रकाशे वातव्याधौ त्रिकशूलचिकित्सा ॥

**आभातिः ।** स्त्री । छायायाम् ।

**आभाषणम् ।** न । आलापे । कथने । भाषव्यक्तायांवाचि । आङ्‌पूर्वः । ल्युट् ।

**आभाषितः ।** त्रि । अभिमुखीकृते ।

**आभासः ।** पुं । प्रतिबिम्बे । दीप्तौ । सदृशे ॥ आभिमुख्येनभासते । भास० । पचाद्यच् । ईषद्भासनं वा ॥

**आभास्वरः ।** पुं । चतुष्षष्टिसङ्ख्यकगणदेवताविशेषे ॥ आभास्वराश्चतुष्षष्टिरित्युक्तेः ॥ द्वादशसङ्ख्यकगणदेवताविशेषे ॥ आत्माज्ञाताद्मोदान्तः शान्तिर्ज्ञानंशमस्तपः । कामः क्रोधोमदोमोहोद्वादशाऽऽभास्वराइमे । आसमन्ताद्भासनशीलः । भास्दीप्तौ । स्थेशभासपिसकसोवरजितिवरच् ।

**आभिजात्यम् ।** न । कौलीन्ये । पाण्डित्ये । अभिजातस्यभावः । ष्यञ् ।

**आभिमन्यवः ।** पुं । परीक्षिति नृपे । अभिमन्योरपत्यम् । अण् ।

**आभिरः ।** पुं । गोपे । आसमन्तात् भिं भयं राति । रा दाने । आत इतिकः ।

**आभिरूप्यम् ।** न । अभिरूपत्वे ।

**आभीक्ष्णम् ।** न । भृशे । अत्यन्ते । अतिशये । निश्चये । त्रि । तद्युक्तक्रियायाम् ॥

**आभीक्ष्ण्यम् ।** न । पौनःपुन्ये । भृशार्थे । भावेष्यञ् ।

**आभीरः ।** पुं । अहीर इतिप्रसिद्धेगोपे । ब्राह्मणादम्बष्ठायामुत्पन्ने । वैद्यभेदएव आभीरोगवाद्युपजीवीतिस्वामी । देशविशेषे । यथा । श्रीकोङ्कणादधोभागेतापीतःपश्चिमेपरे । आभीरदेशोदेवेशिविन्ध्यशैलेव्यवस्थित इतिशक्तिसङ्गमतन्त्रम् ॥ न । मात्रावृत्तप्रभेदे । यथा । ऐकादशकलधारि कविकुलमानसहारि । इदमाभीरमवेहि जगणमन्तमनुधेहि । यथा । तरलनयनवलितेन मदमन्थरचलितेन । सुमुखिहृदयमभिलापि सपदिनकस्यकरोषीति ॥ आअभिईर्यति । ईरगतौकम्पनेच । पचाद्यच् ।

**आभीरपल्लिः ।** स्त्री । गोपग्रामे । गोपस्थानके । आभीराणांपल्लिः ।

**आभीरपल्ली ।** स्त्री । गोपग्रामे । घोषे । अहीरपाडा इति भाषा । आ

भीराणांपल्ली ।

आभीरी । स्त्री । महाशूद्राम् अहीरनी इति भाषा । आभीरस्त्री जातौ या वा । पुंयोगादितिजातेरिति च ङीष् ।

आभीलम् । न । कृच्छ्रे । दुःखे । त्रि । कष्टयुक्ते । भयानके । आसमन्तात् भियं लाति । ला० । कः ।

आभुग्नः । त्रि । ईषद्वक्रे । आकुञ्चिते ।

आभेरी । स्त्री । रागिणीविशेषे ।

आभोगः । पुं । वरुणस्य छत्रे । परिपूर्णतायाम् । यत्ने । आभोजनम् । भुज० । भावे अधिकरणे वा घञ् । कविनामयुक्तगानसमापककाव्ये । यथा । यत्रैव कविनाम स्यात् स आभोग इतीरित इति सङ्गीतदामोदरः ।

आभ्यन्तरः । त्रि । अभ्यन्तरभवे । तत्र भव इत्यण् ।

आभ्युदयिकः । त्रि । अभ्युदयनिमित्ते श्राद्धादिकर्मणि ।

आभ्रिकः । पुं । काष्ठकुद्दालेन खननकर्त्तरि । अभ्रया खनति । तेनदीव्यतीत्यादिना ठक् ।

आम् । अ । अङ्गीकारे । स्मान्ते । निश्चये । स्मृतौ । प्रतिवचने । आमयति । अमगत्यादिषु गण्यन्तः क्विप् ।

आमः । पुं । रोगमात्रे । रोगविशेषे । मलवैषम्यरोगे । न । षट्प्रकारजीर्णरोगमध्ये रोगविशेषे । आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात् । आमसंज्ञां स लभते बहुव्याधिसमाश्रयः । आममन्नरसं केचित् केचित्तु मलसञ्चयम् । प्रथमां दोषदुष्टिं वा केचिदामं प्रचक्षते । अपिच । अविपक्वमसंसक्तं दुर्गन्धि बहु पिच्छिलम् । सादनं सर्वगात्राणामाममित्यभिशब्दितम् । तेनामेन सदा युक्ता दोषा दूष्याश्च तादृशाः । तदुद्भवा आमया ये च सामा इति बुधैः स्मृताः । त्रि । अपक्वे । असिद्धे । पाकरहिते ।

आमगन्धि । न । अपक्वद्रव्यगन्धयुक्ते । विस्रे । अपक्वमांसादिगन्धाढ्ये ।

आमरण्डः । पुं । शुक्लैरण्डे ।

आमनस्यम् । न । पीडायाम् । व्यथायाम् । अमनसो भावः । ब्राह्मणादित्वात् ष्यञ् ।

आमन्त्रणम् । न । सम्बोधने । आनन्दने । निमन्त्रणे । कामचारानुज्ञायाम् । यस्याकरणे प्रत्यवायो न स्यात् । यथा । इह अधीत भवान् । मन्त्रगुप्तभाषणे । आङ् पूर्वः । ल्युट् ।

आमन्त्रणा । स्त्री । पृच्छायाम् ।

आमन्त्रितम् । न । सम्बोधनप्रथमायाम् । त्रि । निमन्त्रिते ।

आमन्दः । पुं । वासुदेवे ॥

आमन्दा । स्त्री । खड्गभेदे ।

आमयः । पुं । रोगे । आमरोगे । भावे घञ् । आमयात्यनेन । यामाप ण्। अन्येभ्योपीतिडः । यद्वा । आमयनमनेनवा । मीङ् हिंसायाम् । एरच् । शोवा । न । कुष्ठौषधे ॥

आमयावी । त्रि । रोगिणि । मन्दाग्नियुक्ते । विकृते । आमयोस्यास्ति । आमयस्योपसंख्यानंदीर्घश्चेति विनिः ॥

आमर्शनम् । न । स्पर्शे ।

आमर्षः । पुं । कोपे । मर्षणम् । मृष तितिक्षायाम् । घञ् । नञ् समासः । अन्येषामपीतिदीर्घः । निष्कोशं निरामर्षं निर्वीर्यमरिनन्दनमिति मघवेगः ।

आमलकः । पुं । मासकद्वये । न । धात्रीफले । चुद्रामलके । आमलते । मल । ञुन्शिल्पिसंज्ञयोः । आमलक्याः फलम् । फलेलुगितिविकारावयवप्रत्ययस्यलुक् । त्रि । धात्रीद्रुमे । तिष्यफलायाम् ।

आमलकी । स्त्री । अमृतायाम् । तिष्यफलाद्रुमे । आमलते । मलधारणे । कुन् । जातेरितिङीप् ।

आमवातः । पुं । स्वनामख्यातेरोगविशेषे । तल्लक्षणं यथा । युगपत्कुपितावेतौ । त्रिकसन्धिप्रवेशकौ । स्तब्धञ्चकुरुतो गात्रमामवातःसउच्यते । एतौवातकफौ । त्रिकसन्धिप्रवेशकौ वेदनयेतिबोद्धव्यौ ॥

आमश्राद्धम् । न । आमान्नविहितश्राद्धे । आपद्यनग्नौतीर्थेच चन्द्रसूर्यग्रहेतथा । आमश्राद्धंद्विजैःकार्यंशूद्रेणतुसदैवहि । अपत्नीकः प्रवासीच भार्यायस्यरजस्वला । आमश्राद्धंद्विजैःकार्यंशूद्रेणतुसदैवहीतिच ॥

आमातीसारः । पुं । षट्प्रकारातीसारमध्येरोगविशेषे ॥

आमात्यः । पुं । अमात्ये ।

आमानस्यम् । न । पीडायाम् ॥

आमान्नम् । न । अपक्वतण्डुलाद्यन्ने ।

आमाशयः । पुं । नाभिस्तनयोर्मध्यभागे अपक्वस्थाने ।

आमिक्षा । स्त्री । वैश्वदेव्याम् । तप्ते पकेचपयसि दधियोगतो जातायांदुग्धविकृतौ । तत्रघनीभूतः पिण्डआमिक्षा जलंवाजिनम् । आमिष्यते । मिषुसेचने । बाहुलकात्सक् । यद्वा । आमक्षति । मक्षरोषे सङ्घातेच । अच् । पृषोदरादिः ।

आमिक्षीयम् । न । आमिक्ष्ये । दधिनि । आमिक्षायैहितम् । विभाषाह

विरूपादिभ्यश्चेति ञः ।

आमिच्यम् । नं । आमिचीयै आमिचायै हितम् । यत् ।

आमिषम् । न । पुं । भोग्यवस्तुनि ॥ सम्भोगे ॥ उत्कोचे ॥ पलले । मांसे ॥ सुन्दराकाररूपादौ । लोभसम्बन्धे । लाभे । कामगुणे । रूपे । भोजने । लोभ्यवस्तुनि । विषये । आमिषति । मिषस्पर्द्धायाम् । मेषतिवा । मिषु सेचने । इगुपधेतिकः । यद्वा । अमति । अमगत्यादिषु । अमेर्दीर्घश्चेतिटिषच् ॥ यद्वा । आमिष्यते भुज्यते । मिषस्पर्धणे । घञ् । संज्ञापूर्वकत्वान्नगुणः । घञर्थे कः इतितुपरिगणनादयुक्तम् ।

आमिषप्रिय । त्रि । मांसाभिलाषिणि । पुं । कङ्कपक्षिणि ।

आमिषाशी । त्रि । मत्स्यमांसभोजनशीले । मांसले ॥ आमिषमश्नाति । अशभोजने । सुप्यजातौणिनि ।

आमीक्षा । स्त्री । आमिक्षायाम् । आङ्पूर्वान्मिहेर्दीर्घश्चेतिसः ॥

आमुक्त । त्रि । पिनद्धे । परिहितवस्त्रादौ । परिहितकवचेजने । आमुच्यतेस्म । मुच्लृमोक्षणे । क्तः ।

आमुषः । पुं । काष्टकयुक्तवंशविशेषे ।

आमुष्मिक । त्रि । स्वर्गसुखाद्यनुभवे । अमुष्मिन् परलोके भवः । ठक् ।

आमुष्यायण । त्रि । ख्यातवंशोद्भवे । सत्कुलजाते । अमुष्यापत्यम् । नडादित्वात्फक् । षष्ठ्याः अलुक् ॥

आमूलम् । न । मूलपर्यन्ते ।

आमोदः । पुं । अतिदूरगामिनिगन्धे । गन्धे । हर्षे । निश्वासगन्धे ॥ सुमहद्गन्धे । आमोदनम् आमोदयतिवा । मुदहर्षे । आङ्पूर्वः । भावे घञ् । स्वार्थण्यन्तः । पचाद्यच्वा ।

आमोदनम् । न । आमोदकरणे । ल्युट् ।

आमोदित । त्रि । आनन्दिते ॥ सहर्षे । सुगन्धिते । आमोदः सञ्जातोऽस्य तारकादित्वादितच् ।

आमोदी । त्रि । मुखवासने । कर्पूरादिनानाद्रव्यरचितमुखवासादिद्रव्ये । आमोदोऽस्त्यस्य अतिशयेनवा । इनि ।

आम्नातः । त्रि । अभ्यस्ते । यथा । अनाम्नातेष्वमन्त्रत्वमिति ।

आम्नायः । पुं । आगमे । निगमे । वेदे । सम्प्रदाये । गुरुपरम्परागतसदुपदेशे । आम्नायते । कुलक्रमे । अभ्यासे । यथा । तस्यसन्दिग्धे बुद्धिर्मुहुः सीतांमिरीक्ष्य च । अर्थायानाममयोगेनविद्यामभ्यसिता

मिवेति रामायणम् ॥ आम्रियते अ
भ्यस्यते । म्ना अभ्यासे । कर्म्मणि घञ्
म्याद्यवेतिणः । आम्नानम् । भावे
घञ् । आत इति युक् ॥
आम्बिकेयः । पुं । कार्त्तिकेये । स्कन्दे ।
धृतराष्ट्रराजनि । अम्बिकायाः अप
त्यम् । स्त्रीभ्योढक् ॥
आम्भसिकः । पुं । मत्स्ये । अम्भसावर्त्त
ते । ओजस्सहोम्भसावर्त्ततेइतिठक् ।
ठस्येकः ।
आम्रः । पुं । चूते । रसाले । अथाम्रपु
ष्पादीनां गुणाः । आम्रपुष्पमतीसा
रकफपित्तप्रमेहनुत् । असृग्दुष्टि
हरं शीतं रुचिकृद्ग्राहि वातलम्
॥ आम्रं बालं कषायाम्लं रुच्यं मारुत
पित्तकृत् । तरुणं तु तदत्यम्लं रूक्षं
दोषत्रयास्रकृत् ।*। आम्रमामं त्व
चा हीनं आतपे ऽतीव शोषितम् । अ
म्लं स्वादु कषायं स्याद्भेदनं कफवातजि
त् ।*। पक्वन्तु मधुरं वृष्यं स्निग्धं शुक्र
बलप्रदम् । गुरु वातहरं हृद्यं वर्ण्यं शी
तमपित्तलम् । कषायानुरसं वह्नि
श्लेष्मशुक्रविवर्द्धनम् ।*। तदेव वृक्ष
सम्पक्वं गुरु वातहरं परम् । मधुरा
म्लं सरं किञ्चित् भवेत् पित्तप्रकोपन
म् ।*। आम्रं कृत्रिमपक्वं यत्तद्भवे
त् पित्तनाशनम् । रसस्याम्लस्य हाने



स्तु माधुर्य्याच्च विशेषतः । चूषितं तत्
परं रुच्यं बलवीर्य्यकरं लघु । शीतलं-
शीघ्रपाकि स्याद्वातपित्तहरं सरम् ।*
। तद्रसो गालितो बल्यो गुरुर्वातहरः
सरः । अहृद्यस्तर्पणोऽतीव बृंहणः-
कफवर्द्धनः ।*। तस्य खण्डं गुरु परं रो
चनं चिरपाकि च । मधुरं बृंहणं बल्यं
शीतलं वातनाशनम् ।*। वातपित्तह
रं रुच्यं बृंहणं बलवर्द्धनम् । वृष्यं वर्ण
करं स्वादु दुग्धाम्रं गुरु शीतलम् ।*।
मन्दानलत्वं विषमज्वरञ्च रक्तामयं
बद्धगुदोदरञ्च । आम्रातियोगेन
नयनामयञ्च करोति तस्मादति तानि
नाद्यात् ।*। एतद्दुष्टाम्रविषये मधुरा
म्रे परं न तु । मधुरस्य परं नेत्रहितत्वा
द्गुणायतः ।*। शुण्ठ्यम्भसानुपा
नं स्यादाम्राणां भक्षणे । जीरकं
वा प्रयोक्तव्यं सह सौवर्च्चलेन च ।*।
आम्रबीजं कषायं स्याच्छर्द्यतीसार
नाशनम् । ईषदम्लञ्च मधुरं तथा ह
दयदाहनुत् ।*। आम्रस्य पल्लवं रुच्यं
कफपित्तविनाशनम् । पञ्चमञ्चन
दन्तम् । यस्य शाकमकारन्तु । स्वि
न्ना निष्पीडिताः कामकोकिलाप
र्पणाः । एतस्मिन्नुत्यसंसिद्धाद्या
नामठथासिताः । सर्व्विषाम्रण्डकुला
क्तेतस्मिराश्चाम्रपत्रयाः । मन्दाद्रैक

-सयुक्तामारीचैरुचिकारका:॥ अ-
स्यपल्लवमुकुलानां मकारस्तु । आम्र-
स्यचैवनवताम्ररुचिप्रवाला: खण्डी-
कृतालवणमिश्रितपिण्डिताश्च । मा-
ल्लीकधूपनजुषोघृतदुग्धसिद्धा:सन्दी-
पयन्ति पवनस्यसखंहिएते । मुकुल:
सहकारशाखिन: शृतखण्डीकृतसै-
न्धवान्वित: । दधिमथ्यमरीचसंस्कृत-
श्चिरयातामरुचिंछिनत्तिचि । कफ-
पित्तहरौहृद्यौमुखवैरस्यनाशनौ ।
वह्निसन्दीपनौरुच्यौ चूतजौ पुष्पपल्ल-
वौ । आम्रमामंजलस्विन्नंमर्द्दितं
हस्तपाणिना । सिताशीताम्बुसंयुक्तं
कर्पूरमरिचान्वितम् । प्रपानकमि-
दंश्रेष्ठंभीमसेनेननिर्मितम् । सद्योरु-
चिकरंबल्यंशीघ्रमिन्द्रियतर्पणमिति
। अम्यते । अमगत्यादौ । अमित-
म्योर्दीर्घश्चेतिरक्दीर्घश्च ।

आम्रगन्धक: । पुं । समष्ठिलायाम् । शा-
कविशेषे ।

आम्रपेशी । स्त्री । शुष्काम्रखण्डे ।

आम्ररसाकृति. । स्त्री । रसालाया: प्र-
भेदे । यथा । किञ्चित्कुङ्कुमसंयुक्तं
विमस्तुदधिगालितम् । सशर्करं भवे-
त् पीतापक्वाम्ररससन्निभा । पीता
शिखरिणीया साखण्डोवर्णवतीहि-
सा । सुरुच्यामधुरावल्यावातपित्तह-
रापरेति ।

आम्रवणम् । न । चूतवने । प्रनिरन्त:-
शरेत्यादिनावमनकारस्यणत्वम् ।

आम्रात: । पुं । आमड़ा अम्बाडाइति
विश्रुतेफलवृक्षविशेषे । कपीतने ।
पीतने । आम्रातमम्लंवातघ्नंगुरूष्णंरु-
चिकृत्परम् । पक्वन्तुतुवरं स्वादुरस-
पाकं हिमंस्मृतम् । तर्पणंश्लेष्मलंस्नि-
ग्धंवृष्यंविष्टम्भिबृंहणम् । गुरुबल्यंम-
रुत्पित्तक्षतदाहक्षयास्रजित् । अ-
मावट इतिख्याते आम्रातके । रा-
जाम्रे ।

आम्रातक: । पुं । आम्राते । कपीतने-
वृक्षे । अमौट इतिख्याते । आम्रावर्त्ते
। पक्वस्यसहकारस्यपटे विस्तारितो
रस: । घर्मशुष्कोमुहुर्दत्त आम्रात-
क इतिस्मृत: । आम्रमतति । अत
सातत्यगमने । कृञादिभ्यउन् ।

आम्रातकेश्वर: । पुं । सिद्धस्थानविशेषे
। आम्रातकेश्वरे सूक्ष्मासूक्ष्माख्याप-
रमेश्वरीत्यागम: । सूक्ष्माचाम्रात-
केश्वरे इति देवीगीताच ।

आम्रावर्त्त. । पुं । आम्रातके । अमावट
अमौट इतिभाषाप्रसिद्धे । आम्रा-
वर्त्तस्तृषाछर्द्दिवातपित्तहर:सर: ।
रुच्य:सूर्यांशुभि:पाकाल्लघुश्चसहि-
कीर्त्तित: ।

आम्रेडितम्। न। द्विस्त्रिरुक्ते ॥ यथा। सर्पःसर्प इति॥ आम्रेड्यते आधिक्येनो च्यतेस्म। म्रेड्डउन्मादे। क्तः॥

आम्लवेतसः। पुं। अम्लवेतसवृक्षे॥

आम्ला। स्त्री। अम्लिकायाम्। तिन्तिडीवृक्षे। श्रीवल्ल्याम्॥

आम्लिका। स्त्री। चिञ्चायाम्। अम्लोद्गारे॥

आयः। पुं। धनागमे। मासौ। लाभे। एकादशभवने॥ वास्तुविषये ध्वजाद्यष्टसु॥ आयाध्वजोधूम्रहरिश्वगोखरेभध्वाङ्क्षकाः इत्युक्तेः। ग्रामादिषु स्वामिग्राह्ये भागे। स्त्र्यगाररक्षके।

आयःशूलिकः। त्रि। तीक्ष्णकर्माणि। तीक्ष्णोपायेनयोऽन्विच्छेत्सआयःशूलिकोजनः। अयःशूलेन अर्थानन्विच्छति। अयःशूलदण्डाजिनाभ्यांठक्ठञावितिठक्॥

आयतः। त्रि। दीर्घे। लम्बा इति भाषा॥ आयम्यतेस्म। क्तः। आयतते या। यतीप्रयतने। पचाद्यच्। आकृष्टे॥ अतिप्रसक्ते।

आयतच्छदा। स्त्री। कदल्याम्। आयताश्छदाः यस्याः सा॥

आयतनम्। न। आश्रये। विश्रामस्थाने। यज्ञस्थाने। चैत्ये। देवस्थाने। आयतन्तेऽत्र। यती०। अधिकरणे ल्युट्॥

आयतिः। स्त्री। दैर्घ्ये। प्रभावे। कोषदण्डजे तेजसि। उत्तरकाले। आगामिकाले। फलदानकाले। प्रापणे। सङ्गे। संयमे। आयम्यते अनया करणभूता आयमनं वा। यमउपरमे। स्त्रियांक्तिन्। आयास्यतिवा। याते र्बाहुलकाड्डतिः॥

आयती। स्त्री। भविष्यत्काले। कृदिकारादिति ङीष्।

आयत्तः। त्रि। अधीने। वशीभूते। आयततेस्म। यती०। अकर्मकत्वात्कर्तरिक्तः॥

आयत्तिः। स्त्री। स्नेहे। वशित्वे। वासरे। वले। स्थाने। सामर्थ्ये। सीमनि। आयतनम्। यती०। स्त्रियांक्तिन्।

आयमनम्। न। आकर्षणे॥ यथाहद्ध्यधनुष आयमनमिति। आकृष्य दीर्घीकरणे।

आयशूकम्। न। उत्कण्ठायाम्॥ इति हेमचन्द्रः॥

आयसम्। न। लौहे। त्रि। अयसोविकारे। अयोनिर्मिते॥ अण्।

आयसी। स्त्री। लोहमयकवचे। अङ्गरक्षिण्याम्। जालिकायाम्। ङीप्।

आयस्तः । त्रि । तेजिते । शाणादिना-तीक्ष्णीकृते । क्षिप्ते । क्षेपिते । कुपिते । हते । उत्सुके । प्रयत्नं कुर्वाणे । यसुप्रयत्ने । कर्त्तरि क्तः ॥

आयस्थानम् । न । स्वामिग्राह्यो भागः आयः स यस्मिन्नुत्पद्यते तस्मिन् ।

आयातः । त्रि । आगते ।

आयानम् । न । स्वभावे । इति जटा-धरः ॥

आयामः । पुं । दैर्घ्ये । आयम्यते अने-न वा आयमनं वा । घञ् । यद्वा । आयाति । या० । अर्त्तिस्तुसुहुसृ इति मन् ॥

आयामवान् । त्रि । आयामिनि । आ-यामोऽस्ति अस्य अस्मिन् वा । वला-दिभ्यो मतुबन्यतरस्यामिति मतुप् ।

आयामी । त्रि । आयामवति । पक्षे इनिः ।

आयासः । पुं । व्यायामे । श्रमे । आय-सनम् । यसु० । घञ् ।

आयी । त्रि । लाभवति । मत्वर्थे इ-निः ।

आयुः । पुं । छान्दसः । मनुष्ये । एति । इण् । छन्दसीणः उण् । बहुलव-चनात् भाषायामपीति व्याख्यानं कृ-तं । जीवितस्याप्यकाले । आयुषि । वायुना जगदायुनेति वर्णविवेकः । आ-



यधिप्राजटायुं मामिति भट्टिः । तटी विन्ध्यस्याद्रेरभजतजटायोः प्रथमज इत्यादिप्रयोगास्त्वनुकूलास्तेषाम् । आयाति । या० । मृगय्वादिर्वा ।

आयुक्तः । त्रि । व्यापारिते । ईषद्युक्ते । कर्माध्यक्षे । नियोगिनि ।

आयुतः । त्रि । समन्तात् युक्ते ।

आयुधम् । न । शस्त्रमात्रे । आयुधानां त्रयोभेदः प्रहरणानि पाणिमुक्तानि यन्त्रमुक्तानि चेति । तत्र । प्रहरणानि खड्गादीनि । पाणिमुक्तानि चक्रादीनि । यन्त्रमुक्तानि अश्मशरास्त्रादीनि । आयुध्यन्तेऽनेन । युध सम्प्रहारे घञर्थे कविधानम् ।

आयुधधर्मिणी । स्त्री । जयन्तीवृक्षे ।

आयुधागारम् । न । अस्त्रगृहे । अत्र नियुक्तस्य लक्षणमुक्तं मात्स्ये १८८ अध्याये । स्थापनाजातितत्त्वज्ञः सततं प्रतिजागरः । राज्ञः स्यादायुधागारे दक्षः कर्म सुचोद्यत इति ।

आयुधिकः । पुं । अस्त्रजीविनि । शस्त्राजीवे । काण्डपृष्ठे । आयुधेन जीवति । आयुधाच्छ चेति चाट्ठन् ।

आयुधीयः । पुं । आयुधिके । आयुधेन जीवति । छः ॥

आयुर्द्रव्यम् । न । औषधे ।

आयुर्वेदः । पुं । अष्टादशविद्यान्तर्गत-

न्वन्तरिप्रणीतविद्याविशेषे। चिकित्साशास्त्रे। रोगोपशमपूर्वकानन्दफलके अष्टस्थानसंयुते अथर्ववेदस्योपाङ्गे। आयुःशरीरेन्द्रियसत्त्वात्मसंयोगः तदस्मिन् विद्यते। अथवा आयुरनेन विन्दतीत्यायुर्वेदः। ऋग्वेदस्योपवेदे। इति शौनकोक्तचरणव्यूहः॥

आयुर्वेदी। त्रि। आयुर्वेदज्ञे। चिकित्सके। वैद्ये॥

आयुर्योगः। पुं। औषधे॥

आयुष्मान्। त्रि। चिरंजीविनि। दीर्घायुषि। अतिशयितमायुरस्य। मतुप्। तस्मान्नर्थे॥ पुं। तृतीययोगे। तज्जातस्य फलं यथा। यस्यायुष्मान् जन्मकालेऽनुमान् याने यानं तस्य देशेषु कार्य्यम्। कुर्यान्नूनं क्रीडनं पुष्पधान्यदारैर्भोगैरन्वितोगर्वितश्चेति॥

आयुष्यम्। त्रि। पथ्ये। आयुषोनिमित्ते। आयुषेहिते॥ यत्॥

आयुः। न। जीवितकाले। परमायुषि। पथ्याशिनांशीलवतांनराणां सद्वृत्तिभाजांविजितेन्द्रियाणाम्। एवंविधानामिदमायुरत्रचिन्त्यंसदाष्टादशनिर्मयादः। इति। सप्तमभवने। एति। इणगतौ। एतेर्णिच्चेत्युसिः। णित्त्वाद्वृद्धीकृतायामायादेशः।

आयुस्करः। त्रि। परमायुर्जनके॥

आयोगः। पुं। गन्धमाल्योपहारे। व्यापृतौ। व्यापारे। रोधे। आयोजनम्। युजिर्०। घञ्॥

आयोगवः। पुं। शूद्राद्वैश्यायामुत्पन्ने जातिविशेषे। काष्ठतक्षणमस्य कर्म॥

आयोजनम्। न। आहरणे। द्रव्यासादने। यथा। क्वचित्तण्डुलासक्तिकचस्थालीकर्चेन्धनम्। तेषामायोजनं कुर्वन् सुखःकर्ताभियीयत इति॥

आयोधनम्। न। युद्धे। वधे। युधसमाहारे। भावे ल्युट्॥

आरः। पुं। मङ्गलग्रहे। शनिग्रहे। पित्तले। रैकल इति गौडभाषाप्रसिद्धे मधुराम्लफले। वृक्षविशेषे॥ न। सुघडलोहे। पित्तले। रीत्याम्॥ कोणे। प्रान्तभागे। ऋगतौ। भावे घञ्॥

आरकूटः। पुं। न। पित्तले। रीत्याम्। यथा। अकाञ्चनेकाञ्चननायिकाङ्के किमारकूटाभरणेन न स्त्रियइति। आरंकूटयते। कूटदाहे। पचादच्॥

आरब्धः। पुं। हस्तिकुम्भाधः स्थले। गजकुम्भसन्धौ। हस्तिशीर्षमर्मणि। सैन्ये॥ त्रि। रचके। रचयितरि।

। स्त्री । रक्षायाम् । आरक्षति । रक्षपालने । पचाद्यच् ।

आरग्वधः । पुं । धनवहेडा सोनालु गिरमालव अमलतास इतिभाषाप्रसिद्धे राजवृक्षे । व्याधिघाते । अस्य गुणाः । आरग्वधो गुरुः स्वादुः शीतलः स्रंसनोत्तमः । ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलनुत् । तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहम् । ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं परमिति ।

आरंगणम् । रोगशङ्कायाम् । सम्पदादित्वात् क्विप् । आरग्रोगशङ्कामपिहन्ति । कर्मण्यण् । बहुत्वं तथी तिहन्तेर्वधः अदन्तः । यद्वा । रुग्ररोगे । सम्पदादित्वात् क्विप् । आरुजं रोगशङ्कामपिहन्ति ।

आरट्टः । पुं । अश्वयोनौ देशविशेषे ।

आरट्टजः । पुं । आरट्टदेशोद्भवघोटके । पारसीके । आरट्टे जातः । जनी° । डः ।

आरणिः । पुं । पयसांभ्रमे । आवर्त्ते । कुण्डलके । इतिहारावली ॥

आरण्यः । त्रि । वनपश्विमृगादौ । अरण्ये भवः । अरण्याण्णः । गोमये । वा गोमयेषु ।

आरण्यकः । पुं । पथि । अध्याये । न्याये । विहारे । मनुष्ये । हस्तिनि । गजे । अरण्ये भवः । पथ्यध्यायन्यायें अरण्यान्मनुष्य इतिवुञ् । गोमये । वा गोमयेषु । न । काण्वानां माध्यन्दिनानाञ्च शाखाविशेषे । अरण्येऽनूच्यमानत्वात् तस्य । अरण्येऽध्ययनादेतदारण्यकमुदाहृतम् ।

आरण्यकुक्कुटः । पुं । वनकृकवाकौ । आरण्यकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः । वातपित्तक्षयवमीविषमज्वरनाशनः ।

आरण्यपशुः । पुं । अरण्यजातपशौ । स च सप्तधा । यथा । महिषः । वानरः । ऋक्षः । सरीसृपः । रुरुः पृषतः । मृगः । इतितिथ्यादितत्त्वे पैठीनसिः ॥

आरण्यमुद्गा । स्त्री । मुद्गपर्ण्याम् ।

आरण्यराशिः । पुं । मेषे । वृषे । सिंहे । मकरप्रथमार्द्धे ।

आरतिः । स्त्री । उपरमे । निवृत्तौ ।

आरमणम् । रमणक्रीडायाम् । त्तिन् ।

आरथः । पुं । सकाम्यगन्त्याम् ।

आरनालम् । न । काञ्जिके । आरनालन्तु गोधूमै रामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः । आर्च्छति । ऋगतौ । अच । नजति । यथाम्बे ज्वलतीतिपाः

त। आरो नालोस्य।

आरनालकम्। न। काञ्जिके। आरो नालोऽस्य। शेषादिभाषेतिकप्।

आरवी। स्त्री। आरबनाम्नोम्लेच्छविशेषदेशस्यभाषायाम्। अस्यपठनम् छूर्त्तःपारसीवदोषः।

आरब्धः। त्रि। कृतारम्भे। न। आरम्भे।

आरिबः। पुं। म्लेच्छदेशभेदे।

आरबिभाषा। स्त्री। आरबीभाषायाम्।

आरभटी। स्त्री। नाट्यवृत्तौ।

आरभणम्। न। आरम्भे।

आरम्भः। पुं। त्वरायाम्। उद्यमे। स्वार्थपरोपकारार्थंवाणिज्यचेष्टादिसम्पादनप्रयत्ने। वधे। दर्पे। प्रस्तावनायाम्। उपक्रमे। प्रथमकृतौ। प्रारम्भे। आरम्भणम्। रभरामस्य। घञ्। रभेरशब्लिटोरितिनुम्।

आरम्भवादः। पुं। तार्किकाणां मीमांसकानाञ्चवादे। सयथा। आत्माकाशाणुमुखतः कारणं पूर्वमिष्यते। मृत्स्वालादिषु दण्डतन्तुघटवज्जन्मनाशभाक्। पृथिव्यम्बोऽग्निवायूनांकर्मसंयोजितायथः। द्व्यणुकादिक्रमेणारम्भकद्रव्यमहदिति।

आरम्भवादी। पुं। वैशेषिके। त्रि। तन्मतवादिनि।

आरम्भसिद्धिः। स्त्री। कार्यसिद्धौ।

आरम्भी। पुं। आरम्भवादिनि। वैशेषिके। समवाय्यसमवायिनिमित्तकारणेभ्योभिन्नस्यकार्यस्योत्पत्तिं सर्वं योवक्तितस्मिन्निर्थः। सचवैशेषिकः।

आरवः। पुं। शब्दमात्रे। आरवणम्। रुशब्दे। विभाषाङिरुप्लुवोरितिघञ्भावेऽप्रत्ययः।

आरा। स्त्री। चर्मप्रभेदकारके। चर्मप्रभेदिकायाम्। आरयन्ति च्छिनत्ति। ऋगतौ। अच्। आर्यतेवा। भिदादिपाठाद्वाबोध्यामितिपाठात् साधुः। प्रतोदे। अर्यन्तेऽनयाऽश्वाः। आङ्पूर्वीऋगतौ आङोऽन्त्यस्य। उपसर्गादृतीति वृद्धिः।

आराग्रम्। न। अर्द्धचन्द्राद्यग्रमुखे। अर्द्धचन्द्रक्षुरप्रादिधाराग्रमुखमुच्यते। आराग्रन्तुखक्षुरप्रपुष्पदन्ताादिभेदतः। इतित्रिकाण्डः।

आरात्। ।। दूरे। समीपे। आराति। रादाने। बाहुलकादातिप्रत्ययः।

आराति। पुं। अरौ। शत्रौ।

आरातीय। त्रि। दूरस्थे। निकटस्थे। आराद्भवः जातः आगतोवा। दृश्यः।

आरात्रिकम् । न । नीराजनायाम् । नीराजननिमित्तदीपे । नीराजनार्थे । आदौ चतुष्पादतले च विष्णोर्द्वौ नाभिदेशे मुखमण्डले कम् । सर्वेषु चाङ्गेष्वपि सप्तवारानारात्रिकं भक्तजनस्तु कुर्यात् ॥

आराधनम् । न । पचने । साधने । अवाप्तौ । तोषणे । पूजने । असारसंसारविवर्त्तनेषु मा यात तोषं प्रसभं ब्रवीमि । सर्वत्र दैत्याः समतामुपेत सत्त्वमाराधनमच्युतस्येति प्रह्लादः ॥ असारोऽयं संसारस्तद्विवर्त्तनानि देवमनुष्यतिर्यगादिजन्मानि तेषु तत्तद्विचित्रैर्भोगैस्तोषं मा यात किन्तु सर्वत्र सर्वेषु भूतेषु समतां समदर्शितामुपेत प्राप्नुत । तदेवाच्युतस्याराधनमित्यर्थः । आराध्यतेऽनेन । राधसंसिद्धौ । भावकरणादौ ल्युट् ॥

आराधना । स्त्री । साधनायाम् । सेवायाम् । परिचर्यायाम् । टाप् ॥

आराधनीयः । त्रि । आराधयितुं योग्ये ॥

आराध्यः । त्रि । उपास्ये । सेव्ये ॥

आरामः । पुं । उपवने । कृत्रिमवने । क्रीडार्थवने ॥ आरमन्त्यत्र । रमक्रीडायाम् । हलश्चेति घञ् ॥

आरामशीतला । स्त्री । सुगन्धिपत्रविशेषे । आनन्द्याम् । गन्धाढ्यायाम् ।

आरालिकः । त्रि । पाचके । सूपकारे । जिह्मगामिनि ॥ अरालं कुटिलं चरति । चरतीति ठक् ॥

आरावः । पुं । आरवे । निनादे । निस्वने । आरवणम् । रु शब्दे । विभाषाऽऽङि रुप्लुवोरिति घञ् ॥

आरुः । पुं । वृक्षविशेषे । कर्कटे । शूकरे ॥

आरुणिः । पुं । उद्दालके । गौतमे । अरुणस्यापत्यम् । अत इञ् ॥

आरुणेयः । पुं । श्वेतकेतुमुनौ । आरुणेरपत्यम् । ढक् ॥

आरुरुक्षुः । त्रि । आरोढुमिच्छौ ॥

आरूः । पुं । तरोर्भेदे । कर्कटे । दंष्ट्रिणि । शूकरे । पिङ्गलवर्णे । त्रि । पिङ्गलवर्णवति । ऋच्छति । अर्यतेवा । ऋ गतिप्रापणयोः । खितकसिपद्यर्त्तिभ्यः ऊः ॥

आरूकम् । न । वीरसेनवचे । आडूइति भाषा । हिमाचलप्रसिद्धौषधीविशेषे । आड इति गौड़भाषा । स तपत्रपुष्यादिभेदतस्त्रिविधः ॥

आरूढः । त्रि । कृतारोहणे । उच्चस्थानगते । आङ्पूर्वाद्रुहेर्गत्यर्थेतिक्तः । ढत्वधत्वष्टुत्वढलोपदीर्घाः ॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आ

चामंन्वयमपेक्षते । साध्यंसाधनमितिकर्त्तव्यतांच । किम्भावयेत् केन भावयेत् कथंभावयेदिति ॥ तत्र साध्याकाङ्क्षायां स्वर्गादिफलंसाध्यत्वेनान्वेति । साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति । इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्त्तव्यतात्वेनान्वेति ॥

आर्द्रिकः । पुं । कृषके ॥

आर्द्रः । त्रि । सजलवस्तुनि । क्लिन्ने । स्तिमिते । भीजा गीला इतिभाषा । अर्द्यते । अर्द गतौ । अर्देर्दीर्घश्चेतिरक् ॥ आर्द्रं द्रव्यंद्विधाप्रोक्तं सरसंनीरसंतथा । सदुग्धंगुरसकंद्विधानीरसमुच्यते ॥ वास्तुकंशाकपंगाकंनिर्गुण्डीरण्डमार्षकम् । धत्तूराद्यमिदंसर्वमार्द्रं सरसमुच्यते ॥ वटाश्वत्थकरीरादिमार्द्रद्रव्यन्तुनीरसम् ॥ सदुग्धन्तुद्विधाप्रोक्तंस्नुहीक्षीरमितिक्रमात् । आन्तराव्जसीहुण्डवैरिरेण्याद्यास्तुलीक्षकाः । दुग्धिकार्कक्षीरिण्याद्यासदुग्धाःप्रकीर्त्तिताः ॥

आर्द्रकम् । न । मूलविशेषे । अगाकणाके । शृङ्गवेरे । अदरख इतिभाषा । आर्द्रिकाभेदिनीगुर्वीतीक्ष्णोष्णादीपनीचसा । कटुकामधुरापाके रूक्षावातकफापहा ॥ येगुणाःकथितानागरस्यतेपिसन्त्यार्द्रकेखिलाः । भोजनाग्रेसदापथ्यंलवणार्द्रकभक्षणम् । अग्निसन्दीपनंरुच्यं जिह्वाकण्ठविशोधनम् ॥ कुष्ठेपाण्ड्वामयेकृच्छ्रे रक्तपित्ते कफज्वरे । दाहेनिदाघेशरदिनैवपूजितमार्द्रकम् ॥ अपिच । चक्षुष्यंरोचनंस्वर्थ्यंविकाशिविशदंसरम् । स्तम्भाटोपानिलमललवणार्द्रकमग्रणम् ॥ गुडार्द्रकंवातहरंचक्षुष्यंपित्तनाशनम् । स्वरमंथातिदृष्यस्वरघ्नं भेदिकफापहम् ॥ त्वचारहितमक्कुरतःसततंचाखिलंविमलकेवहुतोयैः । मिश्रितंलवणनिम्बुपयोभिर्वालमार्द्रकमुपैतियोग्यताम् ॥ तैलसुरीरजनिसिन्धुजपङ्कसङ्गमस्यन्दमाननवनिम्बुरसप्रसक्तम् । स्वादुत्तरंशिशिरवासरभोजनेषु कस्यैतिवर्णनपथंखलुशृङ्गवेरम् ॥ रुच्योपीदीपनंहृद्यं सक्तहंलघुपाचनम् । रोचनंसर्पणमत्यंचार्द्रकंपरिकीर्त्तितम् । वातपित्तकफभग्नांशरीरसञ्चारिणाम् । एकएवतिहन्तास्ति लवणार्द्रकेश्वरी ॥ आर्द्रायांजातम् । पूर्वाह्णापराह्णार्द्रेति वुन् ॥ आर्द्रयतिजिह्वायांवा । कुन् । आर्द्रसंज्ञकंवा संज्ञायामितिकन् । ऋदंयतिक

फंवा । अर्द्दः । अर्द्देर्दीर्घश्चेतिरक् । । कः ॥

आर्द्रकषटः । पुं । मुस्ताद्रकषटे ।

आर्द्रता । स्त्री । पङ्किलत्वे ॥

आर्द्रपटवासाः । पुं । तापसविशेषे । आर्द्रपटवासश्छादनं यस्य ।

आर्द्रमाषा । स्त्री । माषाणीति गौड भाषा प्रसिद्ध माषपर्ण्याम् ।

आर्द्रशाकम् । न । आर्द्रके ।

आर्द्रा । स्त्री । षष्ठनक्षत्रे । तत्रजातस्य फलं यथा । क्षुधाधिकोऽकर्म्मपरी रक्तान्तिः कलिप्रियः कोपयुतोऽविनीतः । प्रसूतिकाले च भवेत्किलार्द्रा नचार्द्रचेताः शरणागतेऽपीति । टाप् ।

आर्द्रालुब्धकः । पुं । केतुग्रहे ।

आर्त्तिः । स्त्री । अस्थि । दरेः टी । स्त्री ।

आर्य्यः । पुं । स्वामिनि । वृद्धे । गुरौ ॥ सुहृदि । त्रि । श्रेष्ठकुलोत्पन्ने । सत्कुलोद्भवे । पूज्ये । श्रेष्ठे । सङ्गते । नाध्यात्मिकमन्त्रि । उदारचरिते । स्वच्छस्वान्ते । कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठतिप्रकृताचारे सतुआर्य्यइतिस्मृतः । ऋत्तुयोग्यः अर्य्यतेऽसौ । ऋगतौ । ऋहलो ण्यत् ।

आर्य्यकः । पुं । पितामहे । मातामहे । ने । पिण्डप्रदानादिपितृकार्य्ये । इति



त्रिकाण्डशेषः ॥

आर्य्यका । स्त्री । श्रेष्ठायांनार्य्याम् । उदीचामातइतिपक्षेह्रस्वाभावः ।

आर्य्यगृह्यः । त्रि । आर्य्यपक्षाश्रिते । आर्य्यैर्गृह्यते । पदास्वैरिबाह्यापक्ष्येषुचेतिग्रहेः पक्ष्येक्यप् ।

आर्य्यधर्म्मः । पुं । सदाचारे । त्रि । तदति ।

आर्य्यपुत्रः । पुं । भर्त्तरि । गुरुपुत्रे ।

आर्य्यमिश्रः । त्रि । गौरवयुते ।

आर्य्यलिङ्गम् । न । बलात्कारे ।

आर्य्या । स्त्री । उमायाम् । गौर्य्याम् । पार्वत्याम् । मात्रावृत्तभेदे । यथा । प्रथमेद्वादशविषमे मात्रास्चाष्टादशद्वितीयेहि । पञ्चदशचेततुरीये कथितागाथा तथैवार्य्या । सानवधा । पथ्या विपुला चपला मुखचपला जघनचपला च । गीत्युपगीत्युद्गीतय आर्य्यागीतिश्चनवधार्य्या ॥

आर्य्यावर्त्तः । पुं । देशविशेषे । पुण्यभूमौ । यथा । आसमुद्रात्तुवैपूर्व्वादासमुद्रात्तु पश्चिमात् । हिमवद्विन्ध्ययोर्मध्ये आर्य्यावर्त्तं मनुर्जगौ ॥ आर्य्याः आसमन्तात् वर्त्तन्ते पुनः पुनरुद्भवन्त्यत्र । वृतु० ॥ हलश्चेतिघञ् ।

आर्य्यिका । स्त्री । आर्य्यिकायाम् । उदीचामितिपक्षेह्रस्वः ।

आर्षः । त्रि । ऋषिप्रणीते । वेदोक्ते ॥ पुं । विवाहविशेषे । वरात् गोद्वयं गृहीत्वा तेनैवसह कन्यादाने ॥ यत्र त्वार्षस्तेनैव आर्षे आदाय गोयुगम् । चतुर्दशप्रथमजः पुनात्युत्तरजश्चषट् । इति याज्ञवल्क्यः । ऋषेरिदम् । अण् । ऋषिणाप्रोक्तम् तेनप्रोक्तमित्यण् ॥

आर्षधर्मः । पुं । मन्वत्रिविष्णुहारीत याज्ञवल्क्यादिप्रणीतेधर्मे ।

आर्षभिः । पुं । चक्रवर्त्तिनि । भरते । ऋषभस्यापत्यम् । अतइञ् ॥

आर्षभी । स्त्री । कपिकच्छ्वाम् ॥ नध्यम मार्गे नक्षत्र विशेषाणांसंज्ञाविशेषे ॥ यथा । तथाहेचापिफल्गुन्यैामघाचै- वार्षभीमतेति ।

आर्षभ्यः । पुं । षण्ढतायोग्यवृषे । ऋषभस्यप्रकृतिः । ऋषभोपानहोर्ञ्यः ।

आर्ष्टिषेणः । पुं । मुनिविशेषे ॥ ऋष्टिषेणस्यगोत्रापत्यम् । बिदाद्यञ् । अपत्यसामान्ये शिवाद्यण् ।

आर्हतः । पुं । सप्तपदार्थवादिनिजिन विशेषे । स्याद्वादिनि ।

आर्हन्ती । स्त्री । योग्यतायाम् ॥ अर्हतोभावः । ब्राह्मणादिषु अर्हतोनुम्चेतिनु मागमः ष्यञ्च । ङीप् । यलोपः ।

आर्हन्त्यम् । न । योग्यत्वे । अर्हतोभावः । नुम्ष्यञौ ॥

आलम् । न । हरिताले । त्रि । अनल्पे । आआलयति । अलभूषादौ । अच् । आलातिवा । ला० । आलस्वोमेतिकः ।

आलचितः । त्रि । घाते ।

आलगर्द्दः । पुं । जलगर्द्दे । स्वार्थेऽण् ।

आलभनम् । न । स्पर्शने ।

आलम्बः । पुं । अवलम्बे । आश्रये । घञ् ।

आलम्बनम् । न । आश्रये । विभावविशेषे । रुचिरसम्भंसने । आङ्पूर्वाद ल्युट् ॥

आलम्बितः । त्रि । धृते ।

आलम्बी । त्रि । आलम्बितुंशीले । सुपि० । सुपीतिणिनिः ॥

आलम्भः । पुं । वधे । मारणे । स्पर्शे । आलभनम् । डुलभष्प्राप्तौ । घञ् । लभेश्च । उपसर्गात् खल्घञोरितिनुम् ॥

आलभ्य । त्रि । बधार्हे ।

आलयः । पुं । गृहे । आलीयतेऽत्र । स्त्रीत्वेपणो । पुंसीतिघः ।

आलयम् । । । मोक्षपर्यन्ते । मर्यादायां दीक्षायाम् ।

आलयविज्ञानम् । न । अहङ्कारास्पदे

पूर्वापरानुसन्धातरि ।

आलवालम् । न । वृक्षमूलसेकार्थस्य त्पजलखाते । आवाले । आसमन्ताज्जललवमालाति । लाआदाने । मूलविभुजादित्वात्कः ॥

आलसः । त्रि । अलसे । क्रियामन्दे । आलसति । लसश्लेषणे । पचाद्यच् ॥

आलस्यम् । न । अलसत्वे । सतिसामर्थ्ये अवश्यकर्त्तव्यकरणानुत्साहत्वम् । कौसीदे । सत्त्यामप्यौदासीन्य प्रच्युतौ कफादिना तमसाच कायचित्तयोर्गुरुत्वे ॥ व्याधित्वेनाप्रसिद्धमपियोगविषये प्रवृत्तिविरोधिनि ॥ प्रवृत्त्यसामर्थ्यं रजः कार्यविरोधि आलस्यम् ॥ त्रि । अलसयुक्ते । तन्द्रपरिसृजे । मन्दे । आलसएव । स्वार्थेष्यञ् । अलसस्य कर्मभावोवा । ब्राह्मणादित्वात् ष्यञ् । आलस्यमस्यास्ति । अ० अच् ।

आलातम् । न । अङ्गारे ॥ स्वार्थेऽण् ॥

आलानम् । न । करिणो बन्धनस्तम्भे ॥ गजबन्धनरज्जौ । बन्धने ॥ आलीयते ऽत्र । लीङ्श्लेषणे । अधिकरणेल्युट् । विभाषालीयतेरित्यात्त्वम् ॥

आलापः । पुं । आभाषणे । कथोपकथने । सम्भाषणे । आलपनम् । घञ् ।



आलाप्यः । त्रि । आलापयोग्ये ।

आलावर्त्तम् । न । वस्त्रनिर्मितव्यजने ।

आलाबुः । स्त्री । } अलाबुः । तुम्ब्याम् ।
आलाबूः । स्त्री । }

आलास्यः । पुं । कुम्भीरे । इतिहेमचन्द्रः ॥

आलिः । पुं । भ्रमरे ॥ वृश्चिके । स्त्री । वयस्यायाम् । सख्याम् । सेतौ । च्छ्रिसेतौ । आगन्तुजलवारणार्थायां वृतौ । सस्यार्थजलधारणे । पङ्क्तौ । आरामस्थपुष्पादिगुल्मपङ्क्त्याम् । सन्ततौ । त्रि । विशदाशये । शुद्धान्तःकरणे ॥ अनर्थे । अलति दंशेसमर्थो भवति । अलेर्वाहुलकादिञ् । आलयति । अलभूषणे । अच इः । आ अलन्त्यस्मः । अलवारणे । सर्वधातुभ्यइन् । अल्यतेऽनयावा । अलभूषादौ । इजजादिभ्यः ॥ आलति । आङिइन् ।

आलिङ्गनम् । न । प्रीतिपूर्वकमिथोदेहसंश्लेषे । उपगूहने । परिरम्भे । कामशास्त्रे तत्सप्तधा । यथा । आमोदालिङ्गनम् । मुदितालिङ्गनम् । प्रेमालिङ्गनम् । आनन्दालिङ्गनम् । रुच्यालिङ्गनम् । मदनालिङ्गनम् । विनोदालिङ्गनमिति ।

आलिङ्गितः । त्रि । आश्लिष्टे ॥

आलिङ्गी । पुं । मृदङ्गविशेषे । आलिङ्ग्ये ।

आलिङ्ग्यः । पुं । यवाकृतिमृदङ्गे । गोपुच्छाकृतिरालिङ्ग्यः ॥ शब्दार्णवेतु । चतुरङ्गुलहीनोऽङ्गान्मुखेचैकाङ्गुलेनयः । यवाकृतिः सआलिङ्ग्य-आलिङ्ग्यसहितावाद्यते इत्युक्तम् । आलिङ्ग्यते । लिगिगतौ । कृत्य-ल्योर्ण्यत् ।

आलिञ्जरः । पुं । माट कुण्डा गोल जालाइत्यादि भाषाप्रसिद्धे मणिके । जलभाण्डे । अलिञ्जरएव । स्वार्थे अण् ॥

आलिन्दः । पुं । अलिन्दे । स्वार्थे प्र० अण् ।

आलिम्पनम् । न । मङ्गलालेपने । आतपेषे । मण्डोदके । इतित्रिकाण्डशेषः ॥

आली । स्त्री । आलिशब्दार्थे । कृदिकारादितिङीप् ।

आलीढम् । न । धन्विनःपादन्यासप्रभेदे । दक्षपत्सङ्कोचान्यपादप्रसारणे । दक्षिणजानुप्रसारणामपादसङ्कोचरूपावस्थानेच । लक्षणं यथा । नमितापूर्वजङ्घाच पश्चिमामगुणाभयेत् । अस्नोमध्यकायश्चस्यादालीढस्य लक्षणमिति । त्रि । अशिते । भुक्ते । घते । येनान्यमालीढमिवासुरास्त्रेरितिमतेलक्षम् । आलेहनम् । लिहेर्नपुंसकेभावे क्तः ।

आलीढकम् । न । तर्णकानांस्वजीपुक्रीडने ।

आलीनकम् । न । रङ्गे । रांग इतिभाषा ।

आलुः । पुं । कोकणदेशप्रसिद्धे कन्दविशेषे । कासकन्दे । कासालौ । विशालपत्रे । मेचके ॥ स्त्री । झारी इति भाषाप्रसिद्धे सनालजलपात्रे । कर्कर्याम् ॥ न । कचालु इत्यादिप्रसिद्धेषु मूलविशेषेषु । अथोच्यते । कन्दोबहुविधोलोकेआलुशब्देनभण्यते । कच्छालुचैवघटालुपिण्डालुशर्करादिकम् ॥ इत्थं गैर्यत्समानीतंखिलातीपदपूर्वकम् कोषादिषुनष्टंतत्भषितव्यायिनेकिभिः ॥ निघण्टौनास्यपर्यायानगुणाःपरिकीर्त्तिताः । आर्त्तैर्नैतद्यतःतमभक्ष्यंतद्धितार्थिभिः । सासूदानायथाऽभक्ष्यमर्थेतत्कार्यसंसुधीः । निजधर्म्मसत्रानङ्गिग्रंथीतंपार्थिवैर्गृध्येति । भेलके । आन्नाति । आ० । मितद्रुगादित्वात् डुः । इयर्त्ति ऋच्छतेवा । ऋ० । चोरस्वकस्तथचोरितिडित्वाट्टधातोरपि ॥

क्षेपात्तु शितिकेचित् ।

आलुकः । पुं । नागाधिपे । शेषनागे । कासालौ । न । मूलविशेषे । तद्विवरणं यथा । आलुकमप्यालूकं तत्कथितं वीरसेनश्च । काष्ठालुकशङ्खालुकहस्त्यालुकानिकथ्यन्ते । पिण्डालुकमध्वालुकरक्तालुकानिकथितानि । काष्ठालुकंकाठिन्ययुक्तंकटाक्ष । शङ्खालुकं श्वेततायुक्तंसाँखालु । हस्त्यालुकं दीर्घतयुक्तं महाशरीरम् । पिण्डालुकंवर्त्तुलं । सुथनी । मध्वालुकं मधुरतायुक्तं रोमान्वितदीर्घ सुथनी । रक्तालुकं रताल रतखडा इतिच । एषांगुणाः । आलुकं शीतलंसर्वविष्टम्भिमधुरं गुरु । सृष्टमूत्रमलंरूक्षंदुर्ज्जरंरक्तपित्तनुत् । कफानिलकरं बल्यंवृष्यंस्तन्यविवर्द्धनमितिभावप्रकाशः । एलवालुके ।

आलुकी । स्त्री । अरुई घुइया इतिख्याते । रक्तालुप्रभेदे । रक्तालुभेदैया दीर्घातन्वीचप्रथितालुकी । आलुकीवल्लकृत् स्निग्धागुर्वीह्लकफनाशिनी । विष्टम्भकारिणीतैलेतलिता तिक्तचिप्रदा ।

आलू । स्त्री । आलुशब्दार्थे । आलुनाति । लूञ ० । क्विप् ।

आलूकम् । न । आलुके । वीरसेने ॥

आलूकं शीतलंसर्वविष्टम्भिमधुरंगुरु । सृष्टमूत्रमलंरूक्षंदुर्ज्जरंरक्तपित्तनुत् । कफानिलकरं बल्यं वृष्यंस्तन्यविवर्द्धनम् । एलवालुके ।

आलूनः । त्रि । छिन्ने ।

आलेख्यम् । न । चित्रे ॥ नानार्थे ।

आलेख्यशेषः । त्रि । मृते ।

आलेपः । पुं । उपलेपे ॥

आलोकः । पुं । द्योते । प्रकाशे । चाँदनाइतिभाषा । दर्शने । देखना इति भाषा । वन्दिभाषणे । स्तुतावितियावत् । आलोकनम् । लोकृदर्शने । घञ ।

आलोकनम् । न । दर्शने । लोकृ० ल्युट् ।

आलोकितः । त्रि । दर्शिते ॥

आलोचनम् । न । दर्शने । विवेचने ।

आलोचितः । त्रि । विवेचिते । कृतालोचने । इतिकर्त्तव्यतयावधारिते ॥

आवनेयः । पुं । भौमग्रहे । त्रि । अवनीसम्भूते ॥

आवन्त्यः । पुं । व्राटधाने । व्रात्याद्ब्राह्मणात्सवर्णायामुत्पन्ने ॥

आवपनम । न । द्रव्यस्थापनपात्रे । भाण्डे । गोलखान । वपमस्मिन्धान्यादिनीयते तस्मान्नित्यर्थः । न्युप्यते निक्षिप्यते धान्यमत्र । डुवप्‌बी

। स्वार्थे संज्ञायांवाकन् ।

आवापनम् । न । सूत्रयन्त्रे । ताँत इति भाषा ॥

आवापस्थानम् । न । आहुतिप्रक्षेपस्थ देशे ।

आवारि । न । हट्टगालये । हट्टवेश्मनि । हाटघर, इतिभाषा । इत्युणादिकोषः ॥

आवारितः । त्रि । छादिते ।

आवासम् । अ । वासमभिव्याप्येत्यर्थे । आङ्मर्यादाभिविध्योरित्यव्ययीभावः ।

आवालम् । न । आलवाले । वृक्षमूलकृतजलाधारे । आवर्त्तते अम्भोनेन । वलसंवरणे । हलश्चेतिघञ् । आ, ईषत्वालात्वा: अत्रवा ।

आवासः । पुं । गेहे । वासस्थाने । आ, वसन्त्यत्र । वसेर्हलश्चेतिघञ् ।

आवाहनम् । न । आह्वाने । यथा । विनायकं तथादुर्गां वायुमाकाशमेवच । आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकाविति मत्स्यपुराणम् । निमन्त्रणे ।

आवाहनी । स्त्री । मुद्रायाम् द्राविशेषे ।

आविकः । पुं । कम्बले । त्रि । मेषस्यचिन्निर्मांसादौ । भेडीदुग्धे । आविकंलवणं स्वादुस्निग्धोष्णंचाश्मरीप्रणुत् । अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम् । गुरुकासेनिलोद्भिते केवलेचानिले वरम् ।

आविग्नः । पुं । करमर्दे । करौंदा इति भाषा । आविजतेस्म । ओविजीभयचलनयोः । आङ्पूर्वः । गत्यर्थाकर्मकेति क्तः । ओदितश्चेतिनिष्ठानत्वम् । भीते ।

आविद्धः । त्रि । कुटिले । पराहते । चिप्ते । मूर्खे । अभिभूते । विद्धे । आविद्ध्यतेस्म । व्यधः क्तः । संप्रसारणम् ।

आविद्धकर्णी । स्त्री । पाठायाम् ।

आविधः । पुं । वेधनास्त्रे । वेधसाधने सूच्यादौ । भ्रमरसूच्यादौ । भ्रमी इति भाषा । आविध्यन्त्यनेन आविध्यते येनवा । व्यधः । घञर्थेकः ।

आविध्यः । पुं । रावणमन्त्रिद्वे ।

आविः । अ । प्राकाश्ये । प्रादुः । अवते । उङ् शब्दे । इस् ।

आविर्भावः । पुं । प्रकाशे । प्रादुर्भावे । देषावतरणे । उत्पत्तौ ।

आविर्भूतः । त्रि । प्रकाशिते । प्रादुर्भूते । अवतीर्णे ।

आविष्कारः । पुं । प्रकाशे ।

आविष्कृतः । त्रि । प्रकटिते । प्रकटीकृते । आविः अकारि । डुकृञ् । क्तः

आविः क्रियते स्म वा ।

आविष्टः । त्रि । प्रेतवाहिते । भूतादिग्रस्ते । आवेशयुक्ते । निविष्टे । व्याप्ते ।

आविस् । अ । प्राकाश्ये । स्फुटत्वे । प्रादुः । अयं निपातः प्रकाशवाची ।

आवीतः । पुं । व्यतिरेकन्याये । यथा । यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वमवगम्य यन्नानित्यं न तत्कृतकमिति व्यतिरेक इति । विशेषेणाख्यष्टमिति वीतः स न भवतीत्यवीतः । अवीत एव आवीतः ।

आवीरचूर्णम् । न । फाग इति आवीर इति च भाषाविदिते फल्गुनि । यथा । चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ॥ आवीरचूर्णं रुचिरं दद्यात्तां परमेश्वरेति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८ अध्यायः ॥

आवुकः । पुं । नाट्योक्त्या जनके । अवति । अव० । बाहुलकादुण् । णित्त्वादुपधावृद्धिः ।

आवृत् । स्त्री । अनुक्रमे । परिपाट्याम् । आवर्त्तनमनया । आ+वृतु वर्त्तने । सम्पदादि क्विप् ।

आवृतः । त्रि । कृतावरणे । आच्छादिते । वेष्टिते । संवीते । आव्रियते स्म । वृञ् वरणे । क्तः । ब्राह्मणादुग्रकन्यायामुत्पन्ने ।

आवृतिः । स्त्री । आवरणे ।

आवृत्तः । त्रि । व्यावृत्ते । निवृत्ते । यथा । आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेदिति । कृतावरणे । आवर्त्तते स्म । वृतु० । क्तः ।

आवृत्तचक्षुः । त्रि । कार्यकारणभावादुपरतकरणग्रामे । आवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षूंषि करणानि येन चक्षुर्ग्रहणस्योपलक्षणार्थत्वात् । निवृत्तचक्षुषि ।

आवृत्तिः । स्त्री । अभ्यासे । पुनरुच्चारणे । आवर्त्तनम् । वृतु० । क्तिन् । ध्याने ।

आवेगः । पुं । त्वरायाम् । वेगे । आवेजनम् । ओविजी० घञ् ।

आवेगी । स्त्री । वृद्धदारकवृक्षे । आवेगोऽस्त्यस्याः । अर्श आद्यच् । गौरादिः ।

आवेदनम् । न । निवेदने । आङ्पूर्वात् विदेर्ल्युट् ।

आवेशः । पुं । अहङ्कारविशेषे । आटोपे । संरम्भे । अभिनिवेशे । सङ्गे । अनुप्रवेशे । ग्रहामये । भूतसञ्चारे । भूतादिना रोगे । अपस्माररोगे । आवेशनम् । विश० घञ् ।

आवेशनम् । न । शिल्पशालायाम् । गृहादन्यस्मिन् कारूणां कर्मस्थाने । भूतावेशे । प्रवेशे । कोपे । परिवेषे ।

आशक्तः

। सूर्यादिपरिधौ ॥ आविशन्त्यत्र । विशप्रवेशने ।करणेति ल्युट युच्वा ।

आवेशिकः । त्रि । अतिथौ । असाधारणे । स्वीये । अवेशे अशहेभवः । अध्यात्मादित्वाट्ठञ् ।

आवेशितः । त्रि । निवेशिते । स्थापिते । यथा । नमय्यावेशितधियां कामः कामायकल्पते । भर्जिता क्वथिताधाना: प्रायोबीजायनेष्यते इतिश्रीभागवतेश्रीकृष्णोक्तिः । मयि परमात्मनीत्यर्थः ।

आवेष्टकः । पुं । प्राचीरादौ । वेर इतिभाषा ।

आशंसा । स्त्री । इच्छायाम् । स्पृहायाम् । अप्राप्तप्राप्तीच्छायाम् ॥ आशंसनम् । शंसुस्तुतौ । गुरोश्चेत्यः । टाप् ।

आशंसितः । त्रि । वांछिते । आख्याते । उक्तेः । नपुंसके भावेक्तः ॥

आशंसिता । त्रि । इच्छावति । आकाङ्क्षाशीले । आशंसते । आङः शासुइच्छायाम् । तृन् ।

आशंसुः । त्रि । इच्छौ । इच्छाशीले । इष्टार्थप्राप्तीच्छौ । आशंसितरि । आशंसते । आङःशा० । सनाशंसेच्छः ।

आशक्त । त्रि । सम्यक्शक्तिविशिष्टे ।

आशा

आशङ्का । स्त्री । भये । त्रासे । सङ्कोचे । ईषदितर्के ।

आशनः । पुं । असनवृक्षे ।

आशयः । पुं । अभिप्राये । मनसे । आधारे । विभवे । अजीर्णे । चेतसि । वासनाख्ये संस्कारे । आफलविपाकाच्चित्तभूमौशेते इत्याख्यानात् । कोष्ठागारे । सन्ताने । आशयस्थाने । आशेरते ऽस्मिन्कर्मानुभववासना इत्यर्थात् । किम्पचाने । धर्माधर्मे । अदृष्टे । शयनेः ॥ आशयनम् । शीङ्स्वप्ने । एरच् । हृदेशे ॥ यथा । अहमात्मागुडाकेशसर्वभूताशयस्थित इति ।

आशयाश । पुं । पावके । वह्नौ । आशेरते ऽत्राशयः । एरच् । आधारः । तमश्नाति । कर्मण्यण् ।

आशयिता । त्रि । भोजयितरि । अशेर्ण्यन्तात् तृच् ।

आशरः । पुं । अग्नौ । राक्षसे । आशृणाति । शृहिंसायाम् । पचाद्यच् ।

आशा । स्त्री । दीर्घाकाङ्क्षायाम् । अप्राप्तोपायार्थविषयायां तृष्णायाम् । अनवगतोपायार्थविषयायां । लाभार्थेनायाम् । अप्राप्तवस्त्वाकाङ्क्षायाम् । अनिश्चितप्राप्तीष्टार्थप्रार्थनायाम् । आयतायांतृष्णायाम् ॥

यथा । पिशाचमोचनं तीर्थं कतिधानावगाहितम् । तथाप्याशा पिशाचीनामाशामिश्र्यंनमुञ्चतीति । इ-रिति दिशि ॥ आसमन्तादश्नुते अशूङ् व्याप्तौ । पचाद्यच् ।

आशापुरसम्भवः । पुं । भूमिजगुग्गुलौ । आसापुरीधूप इतिभाषा ।

आशाबन्धः । पुं । समाश्वासे । मर्कटजालके । दिग्बन्धे ॥ आशयाबन्धः । आशायाः बन्धोवा ॥

आशाम्बरः । त्रि । दिगम्बरे ॥

आशास्यम् । त्रि । आशंसनीये । आशीःसाध्ये ।

आशित । त्रि । अशिते । भुक्ते । आशयते स्म । णौतन्नूकरणे । क्तः । आशोरन्यतरस्यामितीत्वम् ।

आशितङ्गवीनम् । त्रि । पुरागोस्तृप्तिकृतस्थले । पहलेगायजहांचरी हैं इतिभाषा । त्रिष्वाशितङ्गवीनं तत् गावोयत्राशिताःपुरा ॥ आशिताःभोजिताः गावोयत्र । अषडक्षाशितङ्गव्वलमितिखः । निपातनात्पूर्वस्य मुम ।

आशितम्भवः । पुं । तृप्तौ । न । अन्नादौ । आशितो भवत्यनेन आशितस्य भवनंवेतिविग्रहे । आशिते भुवःकरणभावयोरित्याशितशब्दात् पदाङ्गवतेः करणभावयोः खच्प्रत्ययः । मुमागमः पूर्वपदस्य । यावताऽन्नेनातिथ्यादिर्भोजितो भवति सएवमुच्यते । भावे आशितम्भवम् ॥

आशिता । त्रि । अह्नारे । बहुभोजनशीले ।

आशिरः । पुं । अग्नौ । सूर्ये । राक्षसे । अश्नुते । अशूव्याप्तौ सङ्घाते च । अश्नातिवा । अशभोजने । अशेर्णिदितिकिरच् ।

आशीः । स्त्री । हितस्याशंसने । यस्य यदपेक्षितं तस्यतत्तद्भिवृद्धिप्रार्थने । आशीर्वादे ॥ सर्पतालुगदन्ते । आशीस्तालुगतादंष्ट्रा तयाविद्धोनजीवति । इति विषविद्या ॥ फलदंष्ट्रायाम् । अर्थसम्प्रार्थने । इङ्गिनाभौपधौ । आशासे इतिविग्रहे । आङःशासुइच्छायाम् । शासुअनुशिष्टौ । अस्मात् क्विप्चेति क्विप् । आशासःक्वौ उपधायाइत्वम् । यद्वा आशासनमनयावा । सम्पदादिः । आशासःक्वावितीत्वम् ।

आशीः । स्त्री । सर्पदंष्ट्रायाम् । सर्पविषे ॥ हिताशंसने ॥ आशीर्मिवक्रसा मिन्दोरितिराजशेखरोक्त्या ईकारान्तोयम् । आशीराश्यहिदंष्ट्रायामिति द्विरूपकोशाच्च ।

आशीर्वादः। पुं। आशीर्वचने। मङ्गलप्रार्थनायाम्। आशिषोवादः।

आशीविषः। पुं। विषधरे। सर्पे। आशिषि विषमस्य। पृषोदरादिः।

आशु। न। चिप्रे।

आशु। पुं। न। व्रीहिभेदे। वर्षाभव धान्ये षष्टिकादौ। पाटले व्रीहौ। न। द्रुते। शीघ्रे। शीघ्रक्रियाविशेषणत्वेक्लीवत्वम्। सत्वगामित्वे वाच्यलिङ्गम्। अश्नुते। अशूङ्व्याप्तौ। कृवापाजिमिस्वदिसाध्यशूभ्यउण् इत्युण्।

आशुगः। पुं। वायौ। वाणे। शरे। सूर्ये। त्रि। शीघ्रगामिनि। आशु गच्छति। अन्यचापीतिगमेर्डः।

आशुतोषः। पुं। महादेवे। महेश्वरे। त्रि। शीघ्रसन्तुष्टे। आशुशीघ्रतोषस्तुष्टिर्यस्य।

आशुपत्री। स्त्री। गजभक्ष्यायाम्। शल्लकीलतायाम्।

आशुव्रीहिः। पुं। आशुधान्ये। पाटले। आशुसंज्ञकोव्रीहिः।

आशुशुक्षणिः। पुं। अग्नौ। वायौ। आसमन्तात् शोष्टुमिच्छति। आङ् पूर्वाच्छुष्यतेःसन्नन्तात् आङिशुषेः सनश्छन्दसीत्यनि। छान्दसानाम् पिकचिह्नानामप्रयोगः।



आशेकुटी। पुं। पर्वते। इति शब्दमाला।

आशौचम्। न। अशुद्धौ। वर्णाश्रमविहितकर्मानुष्ठानसङ्कोचावस्थायाम्। अशौचमेव। स्वार्थे अण्।

आश्चर्यम्। न। अपूर्वे। अद्भुते। चित्रे। विस्मये। त्रि। अद्भुतवति। आङ्तिचर्यते अभिनीयते। आश्चर्यमनित्य इति अभूततद्भावेसुट्निपात्यते। यथा। आश्चर्यंयदिसभुञ्जीत। अद्भुतमित्यर्थः।

आश्मः। पुं। अश्मनोविकारे। तस्यविकारइत्यण्।

आश्मनः। पुं। अरुणे। सूर्यसारथौ।

आश्मरथ्यः। पुं। ऋषिविशेषे। अश्मरथस्य गोत्रापत्यम्। गर्गादिभ्यो यञ्।

आश्यान। त्रि। शोषिते।

आश्रम। पुं। न। ब्रह्मचारिणि। गृहिणि। वानप्रस्थे। भिक्षौ। यथा। ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तथा। एतेगृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः। सर्वेपिक्रमशस्त्वेते यथाकालंनिषेविताः। यथोक्तकारिणं विप्रंनयन्ति परमाङ्गतिमिति। अत्र कलौविशेषो यथा। ब्रह्मचर्याश्रमो नास्तिवानप्रस्थोपिनप्रिये। गार्ह-

स्थोभैक्षुकश्चैव आश्रमा द्वौ कलौ युगे इति ॥ वने । मठे ॥ मुनीनांवासस्थाने । आश्रमन्त्यत्रानेनवा । श्र मु तपसि खेदे च । घञ् । नोदात्तोपदेशस्येतिवृद्धिर्न । यद्वा । आसमन्तात्श्रमो ऽत्र स्वधर्मसाधनक्लेशात् ॥ परमात्मनि । आश्रमवत् सर्वेषां संसारारण्येभ्रमतांविश्रामस्थानत्वादाश्रमः परमात्मा । अस्यार्थः । आश्रमपदाश्रमः यथारण्येचरतामाश्रमस्थायादीनां विश्रामस्थानम् एवं संसारारण्येभ्रमतांप्राणिनां सुषुप्ते मोक्षेच विश्रामस्थानं भवति परमेश्वर इति ।

आश्रमधर्म्मः । पुं । आश्रमाणां ब्रह्मचारिप्रभृतीनां शास्त्रविहिते साधने । यथा । ब्रह्मचारिणः स्वाध्यायः । गृहस्थस्य दानंदमश्च यज्ञश्च । वानप्रस्थस्य तपः । परिव्राजकस्य अभयंसत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिरिति । यस्वाश्रमंसमाश्रित्य अधिकारःप्रवर्त्तते । सखल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा । यतीनान्तुशमो धर्मो नियमोवनवासिनाम् । दानमेवगृहस्थानांशुश्रूषा ब्रह्मचारिणामिति श्रुतिः । महानिर्वाणेतु । पूर्वेकथितं तावत्कलिसम्भवचेष्टितम् । तपःस्वाध्यायहीनानां नृणामल्पायुषामपि । क्लेशप्रयासाशक्तानां कुतो देहपरिश्रमः । ब्रह्मचर्याश्रमोनास्तिवानप्रस्थोऽपि न प्रिये । गार्हस्थोभैक्षुकश्चैवाश्रमौद्वौकलौयुगे । गृहस्थस्य क्रियाः सर्वाआगमोक्ताः कलौशिवे ॥ नान्यमार्गैः क्रियासिद्धिः कदापिगृहमेधिनाम् ॥ भैक्षुके प्याश्रमेदेवि वेदोक्तंदण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौत संस्कृतिः । शैवसंस्कार विधिनाव धूताश्रमधारणम् । तदेव कथितंभद्रेसंन्यासग्रहणंकलौ । विप्राणामितरेषाञ्चवर्णानां प्रबले कलौ । उभयत्राश्रमेदेविसर्वेषामधिकारिता । सर्वेषामेवसंस्काराः कर्माणिशैववर्त्मना । विप्राणामितरेषाञ्चकर्मलिङ्गंपृथक् पृथक् । इत्युक्ते रागमोक्त एव आश्रमधर्मः कलावनुष्ठेयः । सचतस्मादेवतन्त्रो त्समादनुसन्धेयः ।

आश्रमवित् । पुं । दक्षप्रभृतिषु । तैर्हि आश्रमाः परमार्था इतिसमर्थ्यन्ते । तदसत् । वेचस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गात् । जातेस्तद्धर्मिवेचनत्वात् । तन्मूलस्याश्रमस्यदर्शयितुमशक्यत्वात् । संस्कारस्यचदेहसमवायित्वे पारलौकिकत्वायोगात् । अस

ङ्गे चात्मनितदसम्भवात् ।

आश्रमिकः । त्रि । आश्रमयुते ।

आश्रमी । पुं । ब्रह्मचर्याद्याश्रमविशिष्टे । अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।

आश्रयः । पुं । व्यपदेशे । सामीप्ये । आधारे । अवलम्बे । यथा । परिजनस्य राजादिः । निकेते । आयतने । गृहे । राज्ञां सन्ध्यादिषड्गुणान्तर्गतगुणविशेषे । अरिणापीड्यमानस्य जिगीषोर्बलवदाश्रयणे । विषये । आश्रयणम् । श्रिञ् एरच् ।

आश्रयाशः । पुं । अग्नौ । पावके । चित्रकवृक्षे । त्रि । आश्रयनाशके । आश्रयध्वंसिनि । आश्रयमाधारमश्नाति भक्षयति अश भोजने । कर्मण्यण् ।

आश्रयासिद्धः । पुं । हेत्वाभासविशेषे । यथा । गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् इति । अत्र गगनारविन्दमाश्रय, सचनास्त्येव । आश्रयो असिद्धो यस्य सः ।

आश्रवः । पुं । अङ्गीकृतौ । क्लेशे । त्रि । प्रवृत्तिनिवृत्त्योर्विधातुं शक्ये । वचनस्थिते । आशृणोतिवाक्यम् । शु श्रवणे । पचाद्यच् । आङ्पूर्वाच्छृणोतेर्न्दीर्घश्च ।

आश्रितः । त्रि । आश्रयमाप्ते । शरणागते । आधेये । उपविष्टे । न्यायमते पदार्थानामाकाशादिनित्यद्रव्यभिन्नसर्वद्रव्याणामाश्रितत्वं साधर्म्यम् । आश्रयति आश्रीयते स्म वा । श्रिञ् । गत्यर्थेति कर्मणि वा क्तः ।

आश्रुतः । त्रि । अङ्गीकृते । स्वीकृते । कृतश्रवणे । आकर्णिते । आश्रूयते स्म । शु श्रवणे । क्तः ।

आश्लिष्टः । त्रि । आलिङ्गिते । श्लिष आलिङ्गने । गत्यर्थाकर्मकेति क्तः ।

आश्लेषः । पुं । आलिङ्गने । एकदेशसम्बन्धे । आश्लेषणम् । श्लिष । घञ् ।

आश्वम् । न । अश्वीये । अश्ववृन्दे । अश्वानां समूहः । छस्याभावे अण् । अश्वस्य कर्मभावयोः । भागभृज्जातित्वात् अञ् । त्रि । रथादौ । अश्वैरुह्यते । शेषइत्यण् ।

आश्वतराश्विः । पुं । बुडिलमुनौ । अश्वतराश्वस्यापत्यम् । इञ् ।

आश्वत्थम् । न । अश्वत्थवृक्षफले । अश्वत्थस्य फलम् । प्लक्षादिभ्योण् विधेर्न लुक् ।

आश्वयुजः । पुं । आश्विनमासे । आश्वयुजी पौर्णमास्यस्मिन्नस्ति । साश्विन् पौर्णमासीति अण् ।

आश्वयुजी । स्त्री । आश्विनपूर्णिमायाम् । अश्वयुजायुक्ता पौर्णमासी । नक्ष-

नक्षत्रेणयुक्तः कालः इत्यण् । टिड्ढेति- ङीप् ॥

आश्वलायनः । पुं । ऋषिविशेषे । अ- श्वलस्येगोत्रापत्यम् । नडादिभ्यः फक् ।

आश्वस्तः । त्रि । जातविश्वासे ।

आश्वासः । पुं । निर्वृतौ । आख्यायिका- परिच्छेदे । आश्वयप्रदाने । आश्व- सनम् । श्वसप्राणने । घञ् ।

आश्वासकः । त्रि । आश्वासकारिणि ।

आश्विनः । पुं । शरदः प्रथममासे । इषे । तत्रजातस्यफलम् । राजप्रियः का- र्य्यकुशलोविदग्धः स्त्रीङ्गसङ्गभोगप्रसृतो- र्णबुद्धिः । सुखीवदान्योबहुमान- शाली सक्तो भवेदाश्विनमासजन्मे- ति । अश्विन्यायुक्ता पौर्णमासी अ- स्मिन्नस्ति । साश्विनपौर्णमासीत्यण् । रवेः कन्याराशिस्थितिकाले ।

आश्विनेयौ । पुं । अश्विनीकुमारयोः । स्वर्वैद्ययोः । अश्विन्याः अपत्ये । स्त्री- भ्योढक् । नित्यद्विवचनान्तः ।

आश्वीनः । त्रि । एकाह्नैकाश्वगम्य- मार्गे । अश्वेनैकाह्नेनातिक्रम्यते । अश्वस्यैकाहगम इति खञ् ।

आषाढः । पुं । ग्रीष्मद्वितीयमासे । शु- चौ । आषाढीपौर्णमासी अस्मिन्- साश्विन् पौर्णमासीत्यण् । तत्र-



जातस्यफलम् । अनल्पजल्पोप्रमदा- भिलाषी प्रमादशीलो गुरुवत्सलश्च । बहुव्ययो मन्दहुताशनः स्यादाषा- ढमासप्रभवो मनुष्य इति । व्रतिनां पालाशदण्डे । आषाढीपूर्णिमास्या- येजिनमस्य विशाखाषाढादण् म- न्थदण्डयोरित्यण् । मलयाचले । रवेर्मिथुनराशिस्थितिकाले ।

आषाढकः । पुं । आषाढमासे ।

आषाढभवः । पुं । भौमग्रहे । त्रि । आषाढजाते ।

आषाढभूः । पुं । कुजे । मङ्गलग्रहे ॥

आषाढा । स्त्री । पूर्वाषाढायाम् । उ- त्तराषाढायाम् ॥

आषाढाभूः । पुं । मङ्गलग्रहे ।

आषाढिः । पुं । रतिदेव्याः स्थाने ॥

आषाढी । स्त्री । आषाढमासस्य पूर्णि- मायाम् । आषाढयायुक्ता पौर्णमा- सी । नक्षत्रेणयुक्तः कालइत्यण् । त- तो ङीप् ।

आषाढीयः । त्रि । आषाढायांजाते । श्रविष्ठाषाढाभ्यांछण् वक्तव्यः ।

आष्टम् । न । आकाशे । नियति । अ- नुते अभ्यासे सङ्घातेच । अश्ना- तिवा । अशभोजने । अस्जिगमिन- मीत्यादिना ष्ट्रन् वृद्धिश्च ।

आस । । स्मरणे । अपाकरणे । को-

पतञ्जलिः । सुखेनैव भवेद्यस्मिन्नज स्रं ब्रह्मचिन्तनम् । आसनं तद्विजानीयान्नेतरत्सुखनाशनमिति पूज्यपादाः । आस्यतेऽनेन आस उपवेशने करणे ति ल्युट् । शृङ्गारासनानि मन्मथशब्दे द्रष्टव्यानि ।

आसनबन्धः । पुं । उपवेशने ।

आसना । स्त्री । स्थितौ । आस्यतेऽस्या म् । आस० ण्यासश्रन्थो युच् ।

आसनी । स्त्री । विपणौ । स्थितौ ।

आसन्दः । पुं । वासुदेवे । श्रीकृष्णे ।

आसन्दी । स्त्री । क्षुद्रखट्वायाम् । पीठिकायाम् । सभामध्यवेदिकायाम् । आस्यतेऽस्याम् । आस० । अव्ययादयश्चेति साधुः ।

आसन्नः । त्रि । निकटे । उपस्थिते । आसीदति स्म । गत्यर्थेति क्तः । आसाद्यते स्मेति वा । क्तः ।

आसन्यः । पुं । प्राणे । त्रि । आस्यभवे । आस्यभवः । यत् । पद्दन्नित्यास्यन्नादेशः प्रभृतिग्रहणस्य प्रकारार्थत्वात् ।

आसवः । पुं । मद्यमात्रे । मद्यविशेषे । मैरेये । शीधौ । शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्लसंहितमिति भावप्रकाशः । पक्वापक्वयोः पार्थक्येन भेदः कृतः । आयुर्वेदमते तु । सुरासवमाध्वीकाः पुष्पासवफला सवाः । वासचूर्णश्च विविधैर्दृष्टाः संसृष्टाः पृथक् पृथगित्युक्तम् । कुल्लूकभट्टस्तु । आसूयते इत्यासवो मद्यानामवस्थाविशेषः सद्यः कृतसंसाधनः सन्धानमित्यभावत्याह । यदुपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः । आसूयते । पुं । अभिषवे । ऋदोरप् ।

आसवद्रुः । पुं । तालवृक्षे ।

आसादनम् । न । सन्निधापने । स्थापने ।

आसादितः । त्रि । प्राप्ते । लब्धे । आलिङ्गनं शोधिते । कामकेलीपरे । किं मया सादितं मानमारोपितम् । आचीर्णिते सन्निधापिते । आसाद्यते स्म । पद्० । णयन्तः । क्तः ।

आसारः । पुं । धारासम्पाते । वेगवद्वृष्टौ । सुहृद्बले । प्रसरणे । सैन्यानां सर्वतो व्याप्तौ । अन्वागच्छद्बले । आसरणम् । आस्रियतेऽनेन वा । स्वगतौ । घञ् ।

आसिकः । त्रि । खड्गधारिणि । असिः प्रहरणमस्य । प्रहरणमिति ठक् ।

आसिका । स्त्री । आसने । आस उपवेशने । धात्वर्थनिर्देशे ण्वुल् ।

आसिक्तः । त्रि । ईषत्सिक्ते ।

आसितम् । न । स्थानविशेषे । आस्यतेऽस्मिन् । आस० । क्तोऽधिकरणे च

आसुर | आसुरी

धिकरणोक्तः ॥

आसीनः। त्रि। उपविष्टे। बैठा इतिभाषा। आसनेोपविष्टे। अचले। बुद्ध्यभिव्यक्तविज्ञानप्रकाशने। आस्।आस०। लटःशानच्। ईदासः।

आसीनप्रचलायितम्। न। उपविश्य निद्रावशेनदोलने। ऊंघना इतिभाषा॥

आसुतिः। पुं। अभिषवे। मद्यसन्धाने। मदचुवानादतिभाषा। पुंस्त्रीलिङ्गे।

आसुतीवलः। पुं। कन्यापाले। शूद्रजातिविशेषे। यज्वनि। शौण्डिके। आसुति रस्यास्ति। रजःकृष्यासुतिपरिषदोवलच्। वले इति दीर्घः।

आसुरः। पुं। असुरेणप्रचारेण। ब्राह्मादष्टविवाहाङ्गगतविवाहविशेषे। आसुरोद्रविणादानादितिया। वल्क्यः। ज्ञातिभ्योद्रविणंदत्त्वा कन्यायै चैवशक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरोधर्म उच्यते इतिमनुः। अयमानुषङ्गविधिसंज्ञा। शुल्केनमानुषदतिशरीतसूत्रात्। असुराणामिवायम्। अण्। न। विड्लवणे। असुरस्यकर्मभावोवा। त्रि। असुरसम्बन्धिनि। अण्।

आसुरनिश्चयः। पुं। वेदार्थविरोधिनिनिश्चये। आसुरो विपर्यासरूपोवेदार्थविरोधीनिश्चयोयस्य॥

आसुरभावः। पुं। हिंसान्नतादिस्वभावे। आसुराणामसुरप्रकृतीनां भावःस्वभावः।

आसुरत्वम्। न। अयज्वनाधने। यागादिशून्यानांवित्ते। अयज्वनान्तुयद्वित्त मासुरस्वं तदुच्यते इतिमनुः। आसुरायां स्वम्॥

आसुरिः। पुं। कपिलमुनेःशिष्ये ब्राह्मणे॥

आसुरी। स्त्री। राजिकायाम्। छेदभेदाद्यात्मिकायां चिकित्सायाम्। असुरस्येयम्। तस्येदमित्यण्। अस्त्रतिवात्। असेस्वरन्। प्रज्ञाद्यण्। टिड्ढेति ङीप्॥

आसुरीप्रकृतिः। स्त्री। शास्त्रनिषिद्धज्ञातविषयभोगहेतुरागप्रधानायां राजस्यां प्रकृतौ। वैदिकनिषेधातिक्रमेण स्वभावसिद्धरागद्वेषानुसारिसर्वानर्थहेतुप्रवृत्तिहेतुभूतायां राजस्यां प्रकृतौ। विषयभोगप्राधान्येन रागमयत्वादासुरीत्वम्॥

आसुरीसम्पत्। स्त्री। असुरत्वसहेतुभूतायां रजस्तमोमय्यां सम्पदि। अशुभवासनासन्ततौ। यथा। दम्भोदर्पोभिमानश्च क्रोधःपारुष्यमेवच। अज्ञानंचाभिजातस्य पार्थसम्पदमासुरीमिति। शरीरारम्भकालेपापकर्मभि

रभिव्यक्ता मभिलक्ष्यजातस्यक्कुपुरुष स्यदश्माद्या अम्रानान्तादोषास्वभव न्ति नक्लभयाद्यागुणाइत्यर्थः।

आसेकः। पुं। आसेचने॥

आसेक्यः। पुं। नपुंसकविशेषे। तल्ल क्षणंयथा। पित्रोस्तुस्वल्पवीर्यत्वादा सेक्यः पुरुषो भवेत्। स शुक्रंमाश्य लभते ध्वजोन्नतिमसंशयमिति॥

आसेचनः। त्रि। अतृप्तिकृति। असे चनके। न आसिच्यतेमनोऽत्र। षि चक्षरणे। करणेतिल्युट्।

आसेचनकम्। त्रि। असेचनके। आसे चने॥ संज्ञायांकन्। तदासेचनकं तृप्तेर्नास्त्यन्तोयस्यदर्शनात्।

आसेदिवान्। त्रि। आसन्ने।

आसेधः। पुं। राजाज्ञया ऽवरोधे।

आसेवनम्। न। पौनः पुन्ये॥

आसेवा। स्त्री। स्वारसिक्यां प्रवृत्तौ।

आस्कन्दनम्। न। तिरस्कारे। रणे। संशोषणे। स्कन्दिर्गतिशोषणयोः भावे ल्युट्।

आस्कन्दितम्। न। अश्वगतिविशेषे। उत्तेरितारव्येवेगे॥ स च सम्यग्गति। आस्कन्दने। स्कन्देः स्वार्थणयन्तात् भावेक्तः। आस्कन्द. सञ्जातोऽस्य। तारकादित्वादितज्वा।

आस्कन्दितकम्। न। आस्कन्दिते। स्वा नांपञ्चमगतौ। उत्तेरिते। उप कण्ठे।

आस्तः। त्रि। क्षिप्ते।

आस्तरः। पुं। करिकम्बले। प्रस्ताया स्तरणे॥

आस्तरणम्। न। हस्तिपृष्ठस्थितचित्र कम्बले। प्रवेणयाम्। झूल इतिभा षा। आस्तीर्यते ऽनेनवा। स्तृञ् आ च्छादने। कर्मणि करणेवा ल्युट्।

आस्तारकः। पुं। माषपर्पटीप्रभृति खाद्यद्रव्यसिद्ध्यर्थं स्थालीस्थजलोप रिदीयमाने तृणादौ। थर इति- भाषा॥

आस्तावः। पुं। यज्ञीयदेशविशेषे। या चिकानां संवाददेशे॥ आगत्य स्तु वन्त्यस्मिन्। ष्टुञ्स्तुतौ। घञ्।

आस्तिकः। पुं। मुनिविशेषे। सतुजर त्कारुमुनेः पुत्रः। तत्पिता गर्भस्थं तं त्यक्त्वा अस्तीत्युक्त्वा गतइत्यस्मा दास्तिकः। इतिमहाभारतम्॥ आ स्तिके॥ त्रि। नास्तिकभिन्ने। वेद प्रमाणवादिनि। श्रद्धालौ। अस्तिप रलोक इत्येवं मतिर्यस्यसः। अस्ति नास्तिदिष्टंमतिरिति अस्तीतिनिपा तात् यद्वा वचनसामर्थ्यात् दृष्टोक्त्या ख्यातात् ठक्।

आस्तिकार्थदः। पुं। जनमेजयेराज्ञि।

आस्तिक्यम् । न । श्रद्धायाम् । आस्तिकस्य कर्म भावो वा । पुरो॰ यक् ।
आस्तीकः । पुं । मनसापुत्रे आस्तिकमुनौ ।
आस्तीकजननी । स्त्री । मनसादेव्याम् ।
आस्था । स्त्री । आलम्बनायाम् । स्थाने । यत्ने । अपेक्षायाम् । आस्थान्याम् । आतिष्ठन्त्यस्याम् आस्थानं वा । छा॰ । आतश्चोपसर्ग्गे अङ् । टाप् । तात्पर्येणावर्त्तने ।
आस्थानम् । न । सभायाम् । निवासस्थाने । आतिष्ठन्त्यस्मिन् । छा॰ अधिकरणे ल्युट् । यत्ने ।
आस्थाननिकेतनाजिरम् । न । सभामण्डपाङ्गने ।
आस्थानी । स्त्री । सभायाम् । आतिष्ठन्त्यस्याम् । छा॰ । अधिकरणे ल्युट् । ङीप् ।
आस्थानीधूर्त्तः । त्रि । सभाधूर्त्ते ।
आस्थितः । त्रि । आरूढे । प्राप्ते । आङ्पूर्वात्तिष्ठतेर्गत्यर्थेतिक्त । यति-स्तीतीत्त्वम् । अङ्गीकृतवति ।
आस्थितिः । स्त्री । आस्थायाम् । तात्पर्येणावर्त्तने ।
आस्पदम् । न । पदे । स्थाने । प्रतिष्ठायाम् । यथा । अनुयायमनुज्ञातु न विधेयमुदीरयेत् । नह्यस्यास्पदं किञ्चित्क्वचित् प्रतितिष्ठतीति । कृत्ये । प्रभुत्वे । दशमगृहे । आपद्यते ऽस्मिन् । आत्मनः पदं स्थानं वा । आस्पदं प्रतिष्ठायामितिनिपातनात् सुट् ।
आस्पन्दनम् । न । कम्पने । स्पन्दने ।
आस्फालः । पुं । हस्तिकर्णास्फालने । भक्षभक्षायाम् ।
आस्फालनम् । न । ताडने । आटोपे । प्रागल्भ्ये ।
आस्फुजित् । पुं । शुक्राचार्य्ये ।
आस्फोटः । पुं । अर्कद्रुमे । शूरादेर्वाह्वादिशब्दे । आस्फोटयति । स्फुटिर् विकसने । अच् ।
आस्फोटकः । पुं । खरोट इति भाषाप्रसिद्धे शैलपीलौ ।
आस्फोटनम् । न । मुद्गरे । निकारे । बाह्वादिशब्दे । स्फुटने । आ स्फुटे ल्युट् ।
आस्फोटनी । स्त्री । वेधनिकायाम् । मुक्तादिवेधिन्याम् । आस्फुट्यते ऽनया । स्फुटभेदनेचुरादिः । करणे-ल्युट् ।
आस्फोटा । स्त्री । नवमल्लाम् । वनमल्ल्याम् । आस्फोटयति । स्फुटिर॰ । पचाद्यच् ॥

ग्निते । आहन्यतेऽस्मिन् । हन्० ळः ॥
आहतलक्षण: । त्रि । कृतलक्षणे । गुणैः प्रसिद्धे । आहतमभ्यस्तं लक्षणं यस्य ॥
आहरः । पुं । उच्छ्वासे । अन्तर्मुखश्वासे ॥
आहरणम् । न । द्रव्याद्यानयने । आनीते ।
आहवः । पुं । युद्धे । यज्ञे ॥ आह्वानम् । आहूयते ऽस्मिन्निति वा । ह्वेञ् स्पर्धायामित्यस्य । आङ्युद्धे इत्यप् सम्प्रसारणञ्च ॥
आहवनम् । न । यागे ॥ आसमन्तात् जुहोत्यस्मिन् । ल्युट् ॥
आहवनीयः । पुं । यज्ञाग्निविशेषे । होमार्थे आहुत्यधिकरणे । गार्हपत्याग्नेरुद्धृत्य होमार्थं येऽग्निः संस्क्रियते तस्मिन् ॥ आहूयते प्रक्षिप्यते वा हविरत्र । कृत्यल्युट इत्यधिकरणे अनीयर् ॥ यद्वा । आहवनमर्हति । तदर्हतीतिछः ॥
आहा: । पुं । अभियोक्तरि ॥ आविद्दीते । ओहाङ्गतौ । विच् । विस्मापनमक्रिया ॥
आहारः । पुं । द्रव्यगलाधःकरणे । जेमने । भोजने । चर्व्यचोष्यलेह्यपेयात्मके इष्टफले । सात्त्विकराजसतामसभेदात्त्रिविधे ॥ आहरणम् । हृञ् । घञ् । यद्वा । आहरन्ति रसमस्मात् । अकर्तरिचेति घञ् ॥ आह्रियते इ० व्युत्० अस्मे । हारे । आहरणे ।
आहारसम्भवः । पुं । शरीरस्थरसधातौ ॥
आहार्यम् । त्रि । आगन्तुके । आहरणीये । आरोपणीये । आहर्तुं योग्यम् । हृञ् । ऋहलोर्ण्यत् । पुं । नाट्योक्ते भूषादिना रचिते अभिनयविशेषे ।
आहार्यशोभा । स्त्री । कृत्रिमशोभायाम् । चित्रभूषादिना अलंकृतौ ।
आहावः । पुं । निपाने । कूपसमीपे पश्वादीनां जलपानाय प्रस्तरादिनिर्मिते जलाशये । खेले इतिभाषा ॥ आह्वाने ॥ युद्धे । विग्रहे ॥ आहूयन्ते ऽत्र । ह्वेञ् स्पर्धायांशब्देच । निपानमाहाव इति ह्वेञः सम्प्रसारणमप्रत्ययश्चनिपाने निपात्यते ॥
आहिकः । पुं । पाणिनिमुनौ । केतुग्रहे ।
आहिण्डिकः । पुं । निषादेन वैदेह्यांजनिते अन्त्यजविशेषे । अस्य च बन्धनस्थानेषु वाद्यसंरक्षणादाहिण्डिकानामित्यौशनसेऽस्त्युक्तम् । कारावराहिण्डिकयोः समानमाताऽपि तुल्यत्वेऽपि वृत्तिभेदात् संज्ञाभेदः ॥
आहितः । त्रि । अर्पिते । निहिते । न्यस्ते । स्थापिते । संपादिते । कृते ।

यथा । आहितोजयविपर्ययोपिमे श्लाघ्य एव परमेष्ठिनात्वयेति रघुवंशे रामं प्रतिभार्गववाक्यम् । आधीयतेस्म । डुधाञ्० क्तः । दधातेर्हिः ॥

आहितलक्षणः । त्रि । सौन्दर्य्यादिगुण विशिष्टे । गुणैः प्रतीते । प्रख्यातगुणे । आहितानिलक्षणानि यस्मिन् ॥

आहिताग्निः । पुं । अग्निहोत्रिणि । साग्निके ॥ आहितः अग्निर्येन । वाहिताग्न्यादिः ॥

आहितुण्डिकः । त्रि । व्यालग्राहिणि । अहेस्तुण्डं मुखं तेन दीव्यति । तेन दीव्यतीति ठक् ॥

आहुकः । पुं । उग्रसेने ॥

आहुतम् । न । भूतयज्ञे । पञ्चमहायज्ञान्तर्गतन्यज्ञे । त्रि । हुतवस्तुनि । समिधादिहविर्भिराभिमुख्येन हुते ।

आहुतिः । स्त्री । देवयज्ञे । होमे । देवमुद्दिश्यमन्त्रोच्चारणपूर्वकाग्नौ हविर्निक्षेपे । तपविशेषो यथा । अल्पे रूक्षेसस्फुलिङ्गे वामावर्त्ते भयानके । आर्द्रकाष्ठैः समुत्पन्ने फुत्कारवति पावके । कृष्णार्चिषि सुदुर्गन्धे तथा लिहतिमेदिनीम् । आहुतिं जुहुयाद्यस्तु तस्यनाशोभवेद्ध्रुवमिति ।

आहुल्यम् । न । तरवट इ० काश्मीरा-



दिषु प्रसिद्धक्षुपविशेषे । काञ्चनपुष्पे । बिम्बीफले ।

आहूतः । त्रि । कृताह्वाने । ह्वयतेः कर्मणिक्तिसम्प्रसारणदीर्घौ ।

आहूतसम्प्लवः । त्रि । प्रलयकालपर्य्यन्ते । आहूतस्य विश्वस्य सम्प्लवः सलिले सम्यक् प्लवनं यत्र ।

आहूतिः । स्त्री । आह्वाने । आङ्पूर्वात् ह्वेञः स्त्रियांक्तिन्निति भावेक्तिन् । सम्प्रसारणम् ।

आहृतः । त्रि । आनीते ।

आहेयम् । त्रि । अहिसम्बन्धिविषास्थ्यादौ । अहेर्भवम् । इतिकुक्ष्यादिना ढञ् । स्त्री । आहेयी ।

आहो । अ । प्रश्ने । विकल्पे । विचारे । आहन्ति । हन्तेर्डो प्रत्ययः ।

आहोपुरुषिका । स्त्री । दर्पोत्थात्मसम्भावनायाम् । आत्मनि शक्त्याविष्करणे । अहो अहम्पुरुषः । गुणुपेतिसमासः अहोइति अद्भुतमित्यर्थे । मयूरव्यंसकादित्वात्समासः । अहोपुरुषस्यभावःमनो० वुञ् । आहोपुरुषिकादर्पाद्यास्यात् सम्भावनात्मनीत्यमरः ।

आहोस्वित् । अ । विकल्पे । आहो । आहो चस्वित्च ।

आह्नः । पुं । अह्नां समूहे । खण्डिका

इ

दित्वा टच् । अह्नष्टखोरेवेति नियमा
ल्लोपोन ॥

आह्निकः । दिननिर्वर्त्त्ये । दिनसाध्ये ।
दिनसम्बन्धिनि । न । प्रकरणसमू
हे । ग्रन्थभागे । भोजने । नित्यक्रि
यायाम् । अह्ना निर्वृत्तम् । तेननि
र्वृत्तमितिठञ् । आह्निकञ्चसन्ध्या-
न्तम्भवति ॥

आह्रादः । पुं । मेघशब्दे । स्तनने ।

आह्लादः । पुं । आनन्दे । हर्षे ।

आह्लादितः । त्रि । आनन्दिते । हृष्टे ।

आह्वयः । पुं । नामनि । आह्वयति-
इत्याह्वः । आतोनुपसर्गे इति के
प्राप्ते कविधौ सर्वत्रप्रसारणिभ्योड
इतिडः । तैर्यायते प्राप्यते । या० ।
घञर्थे कः ॥

आह्वा । स्त्री । नाम्नि । संज्ञायाम् ।
आह्वानमाह्वा । आतश्चोपसर्गे
इत्यङ् ॥

आह्वानम् । न । आवाहने । आका
रणे । हूतौ ॥ नामनि । आङ्पूर्वा
त् ह्वेञो ल्युट् ।

इः

इ । अ । भेदे । कोपोक्तौ । अपाकरणे ॥

इक्षुः

अनुकम्पायाम् । खेदे । सम्बोधने ।
जुगुप्सायाम् । विस्मये । प्रत्यक्षस
न्निधावितिकश्चित् ।

इः । पुं । कामदेवे । मदने । इकारे ।

इकोटः । पुं । इषाङ्कुरे ।

इक्कटः । पुं । तृणविशेषे । बहुमूले ।

इक्षवः । पुं । इक्षुमात्रे । इतिशब्दरत्ना
वली ॥

इक्षाणिका । स्त्री । अनिची ।

इक्षुः । पुं । इख इतिस्वनामप्रसिद्धेरसा
ले । मधुतृणे । गुडतृणे । असिपत्रे । स्व
र्णपुष्पे । अथगुणाः । इक्षवोरक्तपि
त्तघ्नाबल्याः स्निग्धाः कफप्रदाः । स्वादु
पाकरसाः स्निग्धागुरवोमूत्रलाहिमाः
॥ अस्यभेदाः । पौण्ड्रकोभीरुकश्चा
पिवंशकः शतपोरकः । कान्तारस्ता
पसेक्षुश्चकाण्डेक्षुः सूचिपत्रकः । नै
पालोदीर्घपत्रश्चनीलपोरोऽथकोश
कृत् । इत्येताजातयस्तेषांगुणान्वे
धाययास्थलम् ॥ पौण्ड्रेक्षुः कफक
र्य्यान्मेदोमेहकरस्तथा । पुसान्तुधा
तह्नत्स्वादुरीषत्तीक्ष्णश्चपित्तनुत्
। रक्तपित्तहरोवृद्धःचतहृद्बलवीर्य-
कृत् । मूलेतुमधुरोऽत्यर्थं मध्ये पि-
मधुरःस्मृतः । अग्रेग्रन्थिषुचैवेक्ष
षुः पटुरसोजनैः । * । दन्तनिष्पी
डितस्येक्षोरसः पित्तास्रनाशनः ।

शर्करासमवीर्यः स्यादविदाही कफप्रदः । मूलाग्रजन्तुग्रन्थ्यादिपीडनान्मलसङ्करात् । किञ्चित्कालं विधृत्याच विकृतिं याति यान्त्रिकः ॥ लस्यादविदाही विष्टम्भी गुरुः स्याद्यान्त्रिकोरसः । रसः पर्य्युषितो नेष्टोह्यम्लो वातापहो गुरुः । कफपित्तकरः शोषी भेदनश्चातिमूत्रलः ॥ * ॥ पक्वोरसो गुरुः स्निग्धः सुतीक्ष्णः कफवातनुत् । गुल्मानाहप्रशमनः किञ्चित्पित्तहरः स्मृतः ॥ * ॥ इक्षोर्विकारास्तृड्दाहमूर्च्छापित्तास्रनाशनाः । गुरवो मधुरा बल्याः स्निग्धा वातहराः सराः । वृष्या मोहहराः शीता बृंहणा विषहारिणः इति ॥ इष्यते । इषइच्छायाम् । इषेः क्सुः । षढोः कः सि । आदेशप्रत्यययोः । कषयोर्गेक्षः । अस्य विकाराः । रसो फाणित गुडखण्डमत्स्यण्डिकासिताः । निर्म्मलाश्चैते तराः शीतवीर्य्या यथोत्तरमिति ॥ कोकिलाक्षवृक्षे ।

इक्षुकाण्डः । पुं । मुञ्जे । काशतृणे ॥

इक्षुकुट्टकः । पुं । गौडिके । इक्षून्कुट्टयति । कुट्टच्छेदने । कुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥

इक्षुगन्धः । पुं । काशतृणे । क्षुद्रगोक्षुरे ।



इक्षुगन्धा । स्त्री । कोकिलाक्षे । क्रोष्ट्र्याम् । शुक्लविदार्य्याम् । कूष्माण्डभूमिकूष्माण्डे । काशे । गोक्षुरे । इक्षुगन्ध इव गन्धोऽस्याः । वा इक्षोः गन्धोऽस्याः । इक्षुशब्दस्तद्गन्धसदृशे गौणः ॥

इक्षुगन्धिका । स्त्री । भूमिकूष्माण्डे । इक्षुगन्धैव ।

इक्षुजः । पुं । फाणितादिषु । फाणितञ्चैवमत्स्यण्डी गुडः खण्डकमेव च । सितासितोपला चैते षड्भेदा इक्षुजा मताः ।

इक्षुतुल्या । स्त्री । आनाखुड़ति गौडभाषाप्रसिद्धे तृणविशेषे । इक्षुवालिकायाम् ।

इक्षुदर्भा । स्त्री । तृणविशेषे । तृणपत्रिकायाम् । सुदर्भायाम् ।

इक्षुनेत्रम् । न । इक्षुमूले ।

इक्षुपत्रः । पुं । जुन्हरी जुवार इति च प्रसिद्धे धान्ये । यावनाले ।

इक्षुमः । पुं । शरतृणे ॥

इक्षुवालिका । स्त्री । तालमखाना इति प्रसिद्धे क्षुरके । इक्षुगन्धिकायाम् । काशे ॥

इक्षुमती । स्त्री । सरिद्विशेषे ।

इक्षुमूलम् । न । मेरटके । वंशलेपे तृचे ।

इक्षुयन्त्रम् । न । कोल्हू बेलना इति च प्रसिद्धे इक्षुनिष्पीडनयन्त्रे ॥

इङ्गुदी । स्त्री । तापसतरौ । तनुपत्रे । विषकण्टे । तैलफले । हिंगोटा इतिभाषा । इङ्गुदाज्जातेरिति- ङीप् ।

इङ्गुलः । पुं । } इङ्गुदस्यार्थे ।
इङ्गुली । स्त्री । }

इङ्गेलः । पुं । लिखनलिने । लेखके । यथा । पूर्वाम्नाये नवशतंषडशीतिः मकीर्त्तिताः । फिरङ्गभाषयामन्त्रा स्तेषांसंसाधनात् कलौ । अधिपाम- ण्डलानाञ्च सङ्ग्रामे ऽपराजिताः । इङ्गेला नवषट्पञ्चलण्डजास्तापिभा विन इतिमेरुतन्त्रे २३ प्रकाशः ॥

इच्छकः । पुं । रुचके । टाबानेबू इति गौडभाषाप्रसिद्धे । त्रि । इच्छायुक्ते ।

इच्छा । स्त्री । मनोधर्मविशेषे । वाञ्छा याम् । लिप्सायाम् । सुखे तत्साधने चेदंमे भूयादिति स्पृहात्मा चित्तवृ- त्तिः कामइति रागइतिचोच्यते । न्या यमते ऽस्याः कारणम् । निर्दुःख त्वे सुखे चेच्छातज्ज्ञानादेवजायते । इच्छातुतदुपायेस्यादिष्टोपायत्व धीर्यदि । चिकीर्षाकृतिसाध्यत्वप्रका रेच्छातुयाभवेत् । तद्धेतुः कृतिसा- ध्येष्टसाधनत्वमतिर्भवेत् ॥ अस्याः- प्रतिबन्धः । बलवदनिष्टहेतुत्वमतिः स्यात् प्रतिबन्धिकेति भाषापरिच्छेदः ॥ इः । एषणमिच्छा । इच्छेतिसूत्रेण इषेः शप्रत्ययेनिपातितः ॥

इच्छावती । स्त्री । धनादीच्छायुक्तायां स्त्रियाम् । कामुकायाम् । इच्छास्त्य स्याः । मतुप् ।

इच्छावसुः । पुं । कुबेरे ।

इच्छितः । त्रि । वाञ्छिते । इच्छासं जाताऽस्य । तारकादित्वादितच् ।

इच्छुः । त्रि । इच्छाविशिष्टे । आकाङ्क्षा युक्ते ॥ इच्छाशीले । इच्छतितच्छी लः । इषइच्छायाम् । बिन्दुरिच्छु- रितिसाधुः ।

इज्जलः । पुं । हिज्जलवृक्षे । निचुले । एति । इण० । क्विप् तुक् । इत् जल मस्य ।

इज्यः । पुं । सुरगुरौ । बृहस्पतौ । पु ष्यनक्षत्रे । श्रीहरौ । येयजन्तिमखैः पुण्यैर्देवतादीन् बहूनपि । आत्मान मात्मनानित्यं विष्णुमेवयजन्ति ते । इतिहरिवंशः । त्रि । पूज्ये । योग्ये गुरौ ॥ इज्याऽस्यास्ति । अर्शआद्यच् ।

इज्या । स्त्री । दाने । अध्वरे । अर्चाया म् । सङ्गमे । गवि । कुट्टन्याम् । यजनम् । यजदेवपूजासङ्गतिकरण दानेषु । व्रजयजोर्भावेक्यप् । वचि स्वपीत्यादिनासम्प्रसारणम् । टाप् ।

इज्याशीलः । पुं । यायजूके । पुनः पुन

रात्मके जगति । सन्निकर्षे । सन्निधानादनन्तरोक्तमिदमेविग्रहः । एति । इणगतौ । इणोदमुगितिदम्पादीदृक्तिः । इन्दति । इदिपरमैश्वर्ये । इन्देःकमिर्नलोपश्चेतिदीक्षितः । पुं । प्रथमैकवचने ।अयम् । तथैतद्देशकालादौ इदशोयमितिकीर्त्यते । स्त्री । प्रथमैकवचने । इयम् ॥

इदङ्कार्य्या । स्त्री । दुरालभायाम् ।

इदानीम् । अ । सम्प्रत्यर्थे । वाक्यालङ्कारे । अस्मिन्काले । दानीञ्च । इदमद्य ॥

इदानीन्तनः । त्रि । आधुनिके । सम्प्रतिजाते । इदानीम्भवः । सायञ्चिरमित्यादिनाट्युः ।

इदावत्सरः । पुं । संवत्सरादिपञ्चान्तर्गतवत्सरविशेषे ।

इद्धम् । न । आतपे । दीप्ते । आश्चर्ये । त्रि । निर्मले । वर्द्धिते । जिइन्धीदीप्तौ । क्तीतःसङ्गतिवर्त्तमानेक्तः ।

इद्धशासनः । त्रि । अप्रतिहताज्ञे ।

इद्धा । अ । प्राकाश्ये । समिद्धमिद्धेशमन्तोदुदाति ।

इध्मम् । न । समिधि । अग्निसन्दीपनकाष्ठे । इध्यते अग्निरनेन । जिइन्धी॰ । इषियुधीतिमक् । अनिदितामितिनलोपः ।

इनः । पुं । अर्के । सूर्ये । पत्यौ । प्रभौ । नृपभेदे । एति ईयतेवा । इण॰ । इणषिजितिनक् ॥

इनानी । स्त्री । वटपत्रीवृक्षे ॥

इन्दम्बरम् । न । इन्दीवरे । नीलोत्पले ॥

इन्दिन्दिरः । पुं । भ्रमरे । षट्पदे ।

इन्दिरा । स्त्री । श्रियाम् । लक्ष्म्याम् ॥

इन्दिरामन्दिरम् । न । विष्णौ । इति राजवल्लभः ।

इन्दिरालयम् । न । पद्मे । इन्दिरायाआलयः । क्लीवत्वमभिधानात् ।

इन्दिरावरम् । न । नीलोत्पले । इन्दिरायावरम् प्रियमिष्टमितियावत् ।

इन्दिवरम् । न । नीलोत्पले । इन्दति । इदिपरमैश्वर्ये । इगुपधात् किदिति इन् । इन्दिः लक्ष्मीः तस्याःवरमिष्टम् ।

इन्दीवरम् । न । कुवलये । नीलाम्भोजे । इन्देरिन्नन्तात् कृदिकारादिति ङीप् । इन्दी लक्ष्मीस्तस्याः वरमिष्टम् ।

इन्दीवरिणी । स्त्री । उत्पलिन्याम् ।

इन्दीवरी । स्त्री । शतमूल्याम् । शतावर्य्याम् । इन्दीवरमस्त्यस्याः । अर्शआद्यच् । गौ॰ । ङीप् ॥

इन्दुः । पुं । चन्द्रमसि । कर्पूरे । मृगशिरोनक्षत्रे । एकाङ्के । उनत्ति अ-

मृतरसेन सर्वामपिभुवंक्लिन्नां करोति । उन्दीक्लेदने । उन्देरिच्चादेरित्युः ॥

इन्दुकः । पुं । अश्मन्तकवृक्षे ॥

इन्दुकमलम् । न । सितोत्पले ॥

इन्दुकलिका । स्त्री । केतक्याम् ॥

इन्दुकान्तः । पुं । चन्द्रकान्तमणौ ॥ इन्दुःकान्तोऽस्य ॥

इन्दुकान्ता । स्त्री । रजन्याम् ॥ इन्दुःकान्तोयस्याः ॥

इन्दुक्षयः । पुं । अमावास्यायाम् ॥

इन्दुजनकः । पुं । समुद्रे ॥ इन्दोःजनकः ॥

इन्दुजा । स्त्री । नर्मदायाम् । सोमोद्भवायाम् ॥

इन्दुपुत्रः । पुं । बुधग्रहे ॥ इन्दोःपुत्रः ॥

इन्दुपुष्पिका । स्त्री । विषलाङ्गला इति विषलाङ्गलिया इतिच गौडभाषाप्रसिद्धे कलिकारीवृक्षे । स्वर्णपुष्पयाम् ॥

इन्दुभम् । न । मृगशिरोनक्षत्रे ॥

इन्दुभा । स्त्री । कौमुद्याम् । ज्योत्स्नायाम् ॥

इन्दुभृत् । पुं । शिवे ॥ इन्दुंबिभर्त्ति । इन्दुभृञ्० । क्विप् ।

इन्दुमती । स्त्री । पूर्णिमायाम् ।

इन्दुरत्नम् । न । मुक्तायाम् ।

इन्दुलेखा । स्त्री । अमृतायाम् । गुडूच्याम् ॥ सोमलतायाम् ॥ शशिनःकलायाम् ॥ यमानिकायाम् ॥ इन्दोर्लेखेव ॥

इन्दुलोहकम् । न । रौप्ये ॥

इन्दुवल्ली । स्त्री । सोमलतायाम् ॥ गुडूच्याम् ॥

इन्दुव्रतम् । न । चान्द्रायणे ॥

इन्दूरः । पुं । मूषिके ॥

इन्द्रः । पुं । देवराजे । पुरन्दरे । शक्रे ॥ अन्तरात्मनि ॥ परमेश्वरे ॥ इन्द्रोमायाभिःपुरुरूपईयते इतिश्रुतौपरमेश्वरस्य प्रकरणात् ॥ आदित्यविशेषे ॥ कुटजवृक्षे ॥ रात्रौ ॥ भारतवर्षीयद्वीप विशेषे ॥ षड्ग्रामस्यचतुर्थेऽशेऽप्रभेदे ॥ ज्येष्ठानक्षत्रे ॥ विष्कम्भादिषु षड्विंशेयोगे ॥ तत्रजातस्यफलम् । प्रतापशीलोवलवान् गुणज्ञः क्षेमाधिकःश्रीकमलाभ्युपेतः । किलेन्द्रयोगे यदिजन्मकालेमहेन्द्रतुल्यःपुरुषः प्रसन्न इति । इन्दति । इदि० । ऋज्रेन्द्रेत्यादिनारन् ॥

इन्द्रकम् । न । सभागृहे ॥ इतिहेमचन्द्रः ॥

इन्द्रकीलः । पुं । हिमवतोदक्षिणेकुमारपीठसन्निहितेगिरिविशेषे ॥ मन्दरपर्वते ॥

इन्द्रकुञ्जरः । पुं । ऐरावते ॥ इन्द्रस्यकु

ज्वरः ॥

इन्द्रकोपः । पुं । मञ्चके । खट्वायाम् ॥

इन्द्रगोपः । पुं । तीज इति वीरवहुट्टी इतिच भाषाप्रसिद्धे वर्षाभवरक्तवर्ण कीटे । शक्रगोपे । अग्निके ॥ इन्द्रो गोपोऽस्य ॥

इन्द्रचन्दनम् । न । हरिचन्दने ॥

इन्द्रचिर्भिटी । स्त्री । लताविशेषे । युग्मफलायाम् । दीर्घवृन्तायाम् ॥

इन्द्रच्छदः । न । सप्तस्रगुच्छहारे ॥

इन्द्रजालम् । न । कुहके । जाले । कुसृतौ । मन्त्रौषधादिना यथास्थितस्ववस्तुनोऽन्यथाप्रख्यापने । मायाकर्मणि । भानुमतीकाखेल इतिभाषा । वृद्धास्तु । एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् । पर्य्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छतीत्याहुः ॥ इन्द्रेण योगविशेषेण जालम् । क्षुद्रोपायविशेषे ॥

इन्द्रजालिकः । पुं । कुहककारिणि । शौभिके । भानमती इतिभाषा ॥

इन्द्रजित् । पुं । रावणात्मजे । मेघनादे । इन्द्रमजैषीत् । जि० । क्विप् तुकौ ॥

इन्द्रजिद्विजयी । पुं । लक्ष्मणे ॥

इन्द्रतूलम् । न । आकाशेऽटड्डीयमानेतूले । ग्रीष्मह्रासे । वंशकफे ॥

इन्द्रतूलकम् । न । इन्द्रतूले ॥

इन्द्रदारु । न । देवदारुणि ॥

इन्द्रदिक् । स्त्री । पूर्वदिशि ॥

इन्द्रद्युम्नः । पुं । ऋषिविशेषे । मालवे ये । नृपतिविशेषे ॥

इन्द्रद्रुः । पुं । अर्जुनवृक्षे । कुटजवृक्षे ॥ इन्द्रस्यद्रुः ॥

इन्द्रधनुः । न । वक्रीभूतेरोहिते । शक्रधनुषि । रविकिरणा बहुवर्णाभाते नविलोडितानभसि । शक्रायुधसंस्थानादृश्यन्ते तत्तु इन्द्रधनुः ॥

इन्द्रध्वजः । पुं । राज्ञाहृष्ट्यर्थं क्रियमाणे उत्सवविशेषे । शक्रध्वजे । यथोक्तंभविष्योत्तरपुराणे । एवंयः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर । पर्जन्यः कामवर्षीस्यात्तस्मिन राज्येनसंशय इति ॥

इन्द्रनील । पुं । पन्ना इतिभाषाप्रसिद्धे मरकतमणौ ॥ क्षीरमध्येक्षिपेन्नीलंक्षीरंचेन्नीलतांव्रजेत् । इन्द्रनीलमितिख्यातमितिपरीक्षा ॥

इन्द्रपुष्पा । स्त्री । लाङ्गलिकीवृक्षे । विषलाङ्गला इतिगौडभाषा प्रसिद्धे ॥

इन्द्रपुष्पिका । स्त्री । विषलाङ्गलि

गौड भाषा प्रसिद्धे कलिकारीवृक्षे ॥

इन्द्रप्रस्थः । पुं । न । युधिष्ठिरनिर्म्मितपुरोत्तमे । वज्रराजधान्याम् ॥ पार्थनगरे । दिल्ली इतियवनभाषा ॥

इन्द्रप्रहरणम् । न । पवौ । वज्रे ॥ इन्द्रस्यप्रहरणम् ॥

इन्द्रभम् । न । ज्येष्ठानक्षत्रे ॥

इन्द्रभूतिः । पुं । अर्हतांगणाधिपभेदे ॥

इन्द्रभेषजम् । न । शुण्ठ्याम् ॥

इन्द्रमहकामुकः । पुं । कुक्कुरे ॥

इन्द्रयवः । पुं । न । इन्द्रजौ इतिभाषाप्रसिद्धेतिक्तबीजविशेषे । कलिङ्गे । भद्रयवे । कुटजबीजे ॥ ऐन्द्रंयवंत्रिदोषघ्नंसङ्ग्राहि कटुशीतलम् । ज्वरातिसाररक्तार्शःकृमिवीसर्पकुष्ठनुत् । दीपनंगुदकीलास्रवातास्रश्लेष्मशूलजित् । यवाकारबीजत्वात् यवम् । इन्द्रसंबन्धत्वाच्चास्य यवम् ॥

इन्द्रलुप्तः । पुं । केशनाशकरोगे । केशघ्ने । न । मस्तकोद्भवरोगविशेषे । खालित्ये । तस्यलक्षणम् । रोमकूपानुगंरक्तं पित्तेनसहमूर्च्छितम् । प्रच्यावयति रोमाणिततः श्लेष्मासशोणितः । रुणद्धिरोमकूपांस्तुततोन्येषामसम्भवः । तदिन्द्रलुप्तंखालित्यं रुज्येतिचविभाष्यते ॥ खालित्यंइन्द्रलुप्तपर्यायकथनम् । तथाचभोजः । तदिन्द्रलुप्तमित्याहुःखल्लीरुज्याञ्चकेचनेति । कार्त्तिकस्त्वाह । इन्द्रलुप्तंश्मश्रुणिभवति खालित्यंशिरोरुहेष्वेवरुज्यासर्वदेहेति आगमस्तन्नास्तीति निदानटीका ॥

इन्द्रलुप्तकम् । न । इन्द्रलुप्तरोगे ॥

इन्द्रलुप्तिकः । त्रि । इन्द्रलुप्तरुजान्विते ॥ निष्केशशिरसि ॥

इन्द्रवंशा । स्त्री । वर्णवृत्तविशेषे । वंशस्थचरणेयदिपूर्वमक्षरं दीर्घंप्रयुक्तंकवितावतारकैः । गौडावनीनाथकुलप्रकाशक स्यादिन्द्रवंशेत्यभिधानतस्तदा ॥

इन्द्रवज्रा । स्त्री । वर्णवृत्तविशेषे । कर्णेजौगण्डश्चगेन्द्रदारा राजन्तियस्याश्चरणोसमस्ते । तामिन्द्रवज्रामतिमात्रकान्तां भोगीन्द्रवक्त्राखमरन्दधाराम् । यथा । रक्ताम्बुदेनोदितसम्बमाला शीतांशुचण्डातपकुण्डलाभ्याम् । तारांशुतारावलिहारहारैः स्वीयांश्रियम्भूषयतीवसन्ध्येति ॥

[illegible] । पुं पर्वते ।

इन्द्रवारुणिका । स्त्री । इन्द्रवारुण्याम् ।

इन्द्रवारुणी । स्त्री । राखालससा इति गौडप्रसिद्धलतायाम् । विशालायाम् । पीतपुष्पायाम् । तोसतुंपी

कीजड लेन्धितवर्ण और अतिकड वीहोती है इन्द्रारुणीतिचभाषा ।

इन्द्रंवारयति। वृञ्०। चु०। कुवृद्दा दीतिवाहुलकख्युन्तादुनन्।

इन्द्रद्रुः। पुं। देवदारुणि।

इन्द्रवृद्दा। स्त्री। व्रणरोगविशेषे। तल्लक्षणम्। पद्मकर्णिकवृन्मध्येपिडकाभिः रुकाचिताम्। इन्द्रवृद्दान्तुतांविद्यो-द्वातपित्तोत्थितांभिषगिति।

इन्द्रव्रतम्। न। राजोचितव्रतविशेषे। यथा। वार्षिकांश्चतुरोमासान् यथेन्द्रोऽभिप्रवर्षति। तथाभिवर्षेत्स्वंराष्ट्रंकामै-रिन्द्रव्रतंचरन्निति।

इन्द्रशत्रुः। पुं। वृत्रासुरे। इन्द्रस्यशत्रुः शातयिता हन्तेतिषष्ठीसमासेन वृत्रस्येन्द्रहन्तृत्त्वम्। इन्द्रे। इन्द्रःशत्रुर्यस्येतिबहुव्रीहित्वेसयेन्द्रेणवध्यत्त्वात्।

इन्द्रसावर्णिः। पुं। चतुर्दशमनौ।

इन्द्रसुतः। पुं। जयन्ते। वालिनामवानरराजे। अर्जुनपाण्डवे। अर्जुनवृक्षे। इन्द्रस्यसुतः।

इन्द्रसुरसः। पुं। इन्द्रसुरिसे।

इन्द्रसुरिसः। पुं। निर्गुण्ड्याम्। सिन्दुवारे। म्यौंडी इति काशी भाषा। सभालूइतिभाषा। वनर्गो इतिपर्वतभाषा।

इन्द्रसूनुः। पुं। इन्द्रसुतस्यार्थे।

इन्द्रसेनः। पुं। प्रचद्दीपस्थेऽद्रिविशेषे।

इन्द्री। स्त्री। फणिज्झकेवृक्षे॥

इन्द्राचः। पुं। रूपभेदाघौ।

इन्द्राग्निधूमः। पुं। हिमे।

इन्द्राणिका। स्त्री। इन्द्रसुरिसे। निर्गुण्ड्याम्। इन्द्रस्यजन्या। इन्द्रवरुणेतिङीपानुकौ। जन्यजनकत्वयोर्मिथुंयोगस्तत्रप्रद्यते। कन्। ह्रस्वत्त्वञ्च। यद्वा। इन्द्रमानयति। आनेर्ण्यन्तात् कर्मण्यण्। ङीप्। कन्। ह्रस्वः।

इन्द्राणी। स्त्री। इन्द्रपत्न्याम्। शच्याम्। इन्द्रस्यस्त्री। इन्द्रवरुणेति ङीपानुकौ। दुर्गायाम्। यथा। ऐश्वर्यं परमंयस्याःसर्वेचै ससुरासुराः। इदिच परमैश्वर्ये इन्द्राणीतेनसाशिवेतिदेवी पुराणम्। इन्द्रसुरिसे। स्त्रीणांकरणे। नीलसिन्दुवारे। सूक्ष्मैलायाम्। स्थूलैलायाम्। मातृकाविशेषे॥

इन्द्रानुजः। पुं। विष्णौ।

इन्द्रायुधम्। न। इन्द्रधनुषि। शक्रायुधे।

इन्द्रारिः। पुं। असुरे। इन्द्रस्यअरिः।

इन्द्रावरजः। पुं। विष्णौ। इन्द्रस्यावरं जातः। अन्येष्वपीतिडः।

इन्द्राशनः। पुं। भङ्गायाम्। संविदि।

इन्द्रासनम्। न। पञ्चमात्रिकस्यप्रथमे

।ऽऽ प्रभेदे ।

इन्द्रियम् । न । विषयिणि । हृषीके । चक्षुरादिषु । सात्त्विकाहङ्कारोपादानानि इन्द्रियाणि । तानिच बुद्धीन्द्रियकर्मेन्द्रियभेदाद्द्विविधानि । उभयमपि इन्द्रस्यात्मनो विषयोपलब्धिकरणतया लिङ्गत्वादिन्द्रियमुच्यते । तत्र श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि ज्ञानेन्द्रियाणि भवन्ति । वाक्पाणिपादपायूपस्थानिच कर्मेन्द्रियाणिभवन्ति । उभयात्मकंमनः । मिलित्वैकादशानीन्द्रियाणि भवन्ति ॥ भूतप्रकृतिकानीन्द्रियाणीति नैयायिकाः । तथाच गौतमप्रणीतं सूत्रम् । घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणिभूतेभ्यः।१।१२। विषयग्रहणकार्यानुमेयंकरणमिन्द्रियम् । इन्द्रस्यात्मनो लिङ्गम् इन्द्रेणदृष्टं ज्ञातं ममचक्षुर्मम श्रोत्रमित्त्यादिकमेण इन्द्रेणसृष्टम् इन्द्रेणजुष्टम् प्रीणितं सेवितंवा इन्द्रेणदत्तं यथायथंविषयेभ्यः । इतिशब्दः सप्ते प्रकारे तेनइन्द्रेण दुर्जयम् इत्याद्यर्थेषु इन्द्रियमिन्द्रलिङ्गेत्यादिनिपातनादिन्द्रशब्दात्घच् । रेतसि । वीर्ये ।

इन्द्रियकर्म । न । प्राणानांश्रोत्रयागादीनामन्तरयोश्चमनोबुद्ध्योःकर्मसु । तानिचशब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि वचनादानगमनविसर्गानन्दाख्यानि सङ्कल्पाध्यवसायौच यथासङ्ख्यंभवन्ति ।

इन्द्रियग्रामः । पुं । इन्द्रियसमूहे ।

इन्द्रियनिग्रहः । पुं । विषयेभ्यश्चक्षुरादिवारणे । चक्षुश्श्रोत्रादिज्ञानेन्द्रियाणां वाक्पाण्यादिकर्मेन्द्रियाणाञ्च तत्तद्वोलनोपरोधमावेशहठान्निरोधइत्यर्थः ॥ इन्द्रियाणान्तु सर्वेषांयद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरतिप्रज्ञादृतेःपात्रादिवोदकम् ।

इन्द्रियवधः । पुं । एकादशविधे इन्द्रियाणाम्बधे । यथा । बाधिर्यंकुष्ठतान्ध्यत्वं जडताऽजिघ्रता तथा । मूकताकौण्यपङ्गुत्वक्लैव्योदावर्त्तमत्तताः । यथा सङ्ख्येकादशाना मेकादशवधाभवन्ति ॥

इन्द्रियवृत्तिः । स्त्री । श्रोत्रादीनांशब्दादिषु । वागादीनां वचनादिषु । मनोबुद्ध्योः सङ्कल्पाध्यवसाययोः ॥ यथाहुः साङ्ख्याः । शब्दादिषुपञ्चानामालोचनमात्र मिष्यतेवृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्चपञ्चा

नाम् ॥ बुद्धीन्द्रियाणांसम्मुग्धवस्तुमात्रदर्शनमालोचनमुक्तम् । यथाहुः । सम्मुग्धं वस्तुमात्रञ्च प्रागगृह्णात्यविकल्पितम् । तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणइति । तथा । अस्ति ह्यालोचनंज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशंशुद्धवस्तुजम् ॥ ततःपरंपुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते सापिप्रत्यक्षत्वेनसंमतेति ॥

इन्द्रियस्वापः । पुं । प्रलये ॥

इन्द्रियात्मा । पुं । इन्द्रियेषु ॥

इन्द्रियादिः । पुं । इन्द्रियाणांकारणे राजसाहङ्कारे ॥

इन्द्रियार्थः । पुं । शब्दस्पर्शरूपरसगन्धाख्ये । विषये । गोचरे ॥ गन्धरसरूपस्पर्शशब्दाःपृथिव्यादिगुणास्तदर्थाः । इति न्यायसूत्रम् । १ । १४ ॥ वैशेषिकाणां द्रव्यगुणकर्मसु अर्थशब्दाभिधेयत्वम् । अतःपञ्चानांगन्धादीनामेवकथंतत्त्वमित्याशङ्कांनिरासायतदर्थाइत्युक्तम् । तेषामिन्द्रियाणामर्थाविषयाउद्दिष्टा अपि तदर्थाइत्यन्वतदर्थत्वंलक्षणमितिमन्तव्यम् । तच्छब्देनयद्बहिरिन्द्रियाणिपरामृश्यन्ते । तथाच एकैकस्यबहिरिन्द्रियस्यानयाग्राह्यविशेषगुणत्वं यद्बहिरिन्द्रियद्वयाग्राह्यबहिरिन्द्रियग्राह्यगुणत्वंवातदर्थः । पृथिव्यादिगुणाइतिलक्ष्यनिर्द्देशः । केकेगुणाइत्याकाङ्क्षायांगन्धेत्यादि । पृथिव्यादीनांगुणाइतिषष्ठीसमासो भाष्यसम्मतः तेनगुणगुणिनोरभेदोनेतिसूचितम् ॥ इन्द्रियैरर्थ्यते । अर्थयाच्ञायाम् । कर्म्मणिघञ् ॥

इन्द्रियायतनम् । न । शरीरे ॥

इन्द्रियार्थसन्निकर्षः । पुं । प्रत्यक्षज्ञानहेतौ । सचषड्विधः । संयोगः । संयुक्तसमवायः । संयुक्तसमवेतसमवायः । समवायः । समवेतसमवायः । विशेषणविशेष्यभावश्चेति ॥

इन्द्रियेशः । पुं । आत्मनि । जीवे ॥

इन्द्रेज्यः । पुं । बृहस्पतौ । इन्द्रस्येज्यः ॥

इन्धनम् । न । वह्निसन्दीपनार्थंतृणकाष्ठयोः । पाकार्हकाष्ठे । एधसि । इन्ध्यतेऽग्निरनेन । ञिइन्धी० । करणेल्युट् ॥

इभः । पुं । गजे । हस्तिनि ॥ उत्तरपदस्थः श्रेष्ठे । अष्टमे । एति ईयतेवा । इण्० । एणः किदितिभः ॥

इभकणा । स्त्री । गजपिप्पल्याम् । इभस्यकणा ॥

इभदन्ता । स्त्री । नागदन्त्याम् । पर्वपुष्प्याम् । विषौषधौ ॥

इभनिमीलिका । स्त्री । भङ्ग्याम् ॥ छलमिषच्छवैदग्धीभङ्गिश्चेभनिमीलिकेतित्रिकाण्डशेषः ॥

इभपालकः । पुं । हस्तिपके ॥

इभभरः । पुं । गजसमूहे ॥ इभानांभरः ॥

इभमाचलः । पुं सिंहे ॥

इभया । स्त्री । स्वर्णक्षीरीवृक्षे ॥

इभाख्यः । पुं । नागकेशरवृक्षे ॥

इभोषणा । स्त्री । गजपिप्पल्याम् ॥

इभ्यः । त्रि । आढ्ये । धनवति ॥ पुं । राज्ञि ॥ हस्तिपके ॥ इभमर्हतीति । दण्डादित्वात्यत् ॥ यद्वा । एःकामात् भयसते । भ्यसभये । अन्येभ्योपीति डः ॥

इभ्यग्रामः । पुं । हस्तिपकानांसंवसथे ॥

इभ्या । स्त्री । शल्लकीवृक्षे ॥ करेण्वाम् । टाप् ॥

इभ्यिका । स्त्री । इभ्यायाम् ॥ इभ्यैव । स्वार्थेकन् । उदीचामितीत्वं । इत्वाभावपक्षे इभ्यका ॥

इयत् । त्रि । इदम्परिमाणविशिष्टे । एतावति ॥ इदम्परिमाणमस्य । किमिदम्भ्यांवोघ इति वतुप् वस्य च घः । इदङ्किमोरीश्की । यस्येतिलोपः । प्रत्ययमागमयशिष्यरो । पठन्तिचावैयाकरणाअपनिपदाश्च । उदितवतिपरस्मिन्प्रत्ययेशास्त्रयोनैगतवतिविलयश्चप्राकृतेपिमपश्चे । सपदिपदमुदीतं केवलं प्रत्ययोयत् तदियदितिमिमीतेकोहृद्दापखण्डतोपीति ॥ पुं । इयान् । स्त्री । इयती ॥

इयत्ता । स्त्री । सीमायाम् ॥ परिमाणे । संख्यायाम् ॥ इयतोभावः । तल् ॥

इरम्मदः । पुं । मेघज्योतिषि । वज्राग्नौ ॥ इराउदकम् तेनमाद्यतिदीप्यते अविन्धनत्वात् इत्यर्थे उग्रम्पश्येरम्मदेत्यादिनाखश् प्रत्ययोमुमागमश्चनिपातितः ॥ वाडवोपिइरम्मद इतिकेचित् ॥

इरा । स्त्री । भुवि ॥ वाचि । वारुण्याम् ॥ सुरायाम् ॥ इं कामंराति । रा दाने । आतोनुपेतिकः ॥ अम्बुनि । जले ॥ इण्गतौ । स्रति ईयतेवा । ऋज्रेन्द्राग्रेतिसाधुः । निपातनाद्गुणाभावः ॥ अन्ने ॥

इराचरम् । न । करकायाम् । वर्षोपले ॥ त्रि । भूचरे ॥ अम्बुचरे ॥ इरायांचरति । चरेष्टः ॥

इरजः । पुं । कन्दर्पे ॥

इरावती । स्त्री । वटपत्रीवृक्षे । पाषाणभेदीविशेषे ॥ परीक्षिन्नृपतेर्भार्यायाम् ॥

इरिणम् । न । ऊपरभूमौ । शून्ये । निराश्रये । ऋच्छति । ऋगतिमापणयोः । अर्त्तेः किदिच्चेतिइनन् ॥

इरिमेदः । पुं । अरिमेदे । विट्खदिरे । इरिमेदः कषायोष्णोमुखदन्तगदास्त्रजित् । हन्तिकण्डुविषश्लेष्मकृमिकुष्ठविषव्रणान् ।

इरिवेल्लिका । स्त्री । मस्तकोद्भवव्रणजन्यपीडाविशेषे । तल्लक्षणम् । पिडकामुत्तमाङ्गस्थांवृत्तामुग्ररुजाज्वराम् । सर्वात्मिकांसर्वलिङ्गांजानीयादिरिवेल्लिकामिति ॥

इरेशः । पुं । विष्णौ । वरुणे । वागीशे । राज्ञि । इरायाः ईशः ॥

इर्वारुः । स्त्री । कर्कट्याम् ॥

इर्वारुशुक्तिका । स्त्री । फूट इतिभाषाप्रसिद्धे इर्वारुविशेषे । निर्भिन्नकर्कट्याम् ॥

इलः । त्रि । प्रेरके ॥ इलति प्रेरणांकरोति । इलप्रेरणे । इगुपधज्ञाप्रीकिरः कः ॥

इलविला । स्त्री । पुलस्त्यभार्यायाम् । हविर्भुवि । कुबेरस्यजनन्याम् ॥

इला । स्त्री । सौम्यकलत्रे । बुधयोषिति ॥ धरित्र्याम् । गवि । वाचि । इलति । इलउत्क्षेपे । इगुपधेतिकः ॥

इलावृतम् । न । जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । तच्चसुमेरुसंवेष्ट्यास्ते । पश्चान्माल्यवतः प्राच्यांगन्धमादनशैलतः । इलावृतंनीलगिरेर्याम्यतोनिषधादुदक् ।

इलिका । स्त्री । अचलायाम् । भुवि । इलैव । स्वार्थेकः ॥

इली । स्त्री । ईल्याम् । करवालिकायाम् । कटारी छायछुरी इतिभाषा । इलगतौ क्षेपेच । इन् । कृदिकारादितिवाङीष् ॥

इलीशः । पुं । इल्लिशे । हिलशे माछ इतिगौडभाषाप्रसिद्धे मत्स्यविशेषे ।

इल्लिशः । पुं । इल्लीशे । इल्लिशोमधुरः स्निग्धोरोचनो वह्निवर्द्धनः । पित्तहृत्कफकृत किञ्चिल्लघुर्वृष्योनिलापहः ।

इल्लीशः । पुं । इल्लिशे ॥

इल्वकाः । स्त्री । इल्वलासु । नित्यंबहुवचनान्तः ॥

इल्वलः । पुं । वातापेर्भ्रातरि दैत्यविशेषे । मत्स्यभेदे । पक्षिविशेषे । इलति । इलस्वप्ने क्षेपणेच । सानसिवर्णसि पर्णसीत्यादिनावलच् गुणाभावश्च निपात्यते ॥

इल्वलाः । स्त्री । मृगशिरःशिरोदेशस्थतारकासु । मृगशिरःशिरस्थानां पञ्चानांस्वल्पतारकाणां यास्तारकास्तच्छिरोदेशेनिवसन्ति ताः इल्व

ला: । इखन्ति । इल० । निपातनाद लच गुणाभावश्च । नित्यबहुवचनान्तोऽयम् ॥

इव । अ । उपमायाम् । सादृश्ये । साम्ये । ईषदर्थे । उत्प्रेक्षायाम् । वाक्यालङ्कारे ।

इषः । पुं । आश्विनमासि । इषगतौ । एषणम् इट् यात्रा । भावेक्विप् । सोऽस्मिन्नस्ति जिगीषूणाम् । अर्श आद्यच् ॥

इषिका । स्त्री । गजाक्षिगोलके ॥ ईष्यते । ईषउञ्छे । ईषगतिहिंसादर्शनेषु । ईषेःकिद्ध्रस्वश्चेतीकन् । धातोर्ह्रस्वश्च । तूलिकायाम् ॥ इष्यते । इषगत्यादौ । कृञादिभ्योवुन् ।

इषितः । त्रि । अभिप्रेते । इष्टे ।

इषिरः । पुं । अग्नौ । इष्यति । इषगतौ । इच्छति वा । इषइच्छायाम् । इषमदीत्यादिना किरच् ।

इषीका । स्त्री । काशे । मुञ्जामध्यवर्त्तितृणे । सींक तृणी इतिभाषा । ईषति ईषते वा । ईषउञ्छे । ईषगतिहिंसादर्शनेषु । ईषेःकिद्ध्रस्वश्चेतिईकन् ॥ दर्भशलाकायाम् ।

इषुः । पुं । स्त्री । बाणे । सायके । पश्वसु । ईष्यतेऽनेन । ईषगत्यादौ । ईषते हिनस्ति वा । ईषेःकिच्चेत्युरादेरित्युः ।

इषुधिः । पुं । स्त्री । इषूणांस्थाने । तूणीरे । इषवोधीयन्तेऽत्र । डुधाञ्० । कर्मण्यधिकरणेचेतिकिः ॥

इषुपुङ्खा । स्त्री । शरपुङ्खायाम् ।

इषुमाला । स्त्री । शरावल्याम् ।

इषूपलयन्त्रम् । न । शरशिलाक्षेपके यन्त्रविशेषे ।

इष्टम् । त्रि । आशंसिते । पूजिते ॥ मित्रे । इष्यमाणे । इष्यते । इषइच्छायाम् । मतिबुद्धीतिक्तः । पुं । ससतन्तौ । यज्ञे ॥ एरण्डवृक्षे । न । संस्कारे । क्रतुकर्मणि ॥ क्रतुर्यज्ञः कर्मचदानादि तयोः समाहारः तदिष्टशब्दवाच्यम् । अतएव मनुः । एकाग्निकर्महवनं त्रेतायां यच्चहूयते । अन्तर्वेद्याञ्चयद्दानमिष्टन्तदभिधीयते इति । अग्निहोत्रंतपः सत्यंवेदानाञ्चानुपालनम् । आतिथ्यंवैश्वदेवञ्चमाहुरिष्टमिनाकदम् । यजनम् । यजदेवपूजादौ । नपुंसके भावेक्तः । अनुकूलवेदनीये देवादिलक्षणेयागादिफले । ईश्वराराधनादौ । एषणम् । इषेःक्तः । परमानन्दरूपत्वेन सर्वेषां प्रियत्वादिष्टः परमात्मैव ।

इष्टका । स्त्री । गृहादिनिर्माणार्थंदग्धमृत्खण्डविशेषे । ईंटइतिप्रसिद्धे । इष्यते । इष० । इष्यसिभ्यांतकन् ।

इष्टकेषीकामालानामितिनिर्देशात् प्रत्ययस्वादितिनेत्वम् ॥

इष्टकापथम् । न । इष्टकाभिर्निर्मितेपथि । उशीरे । वीरणमूले । इष्टकापथस्य अधोवायुकरत्वात् । यद्वा । इष्टकेव दृढः पन्थायस्य । इष्टकायामपि पन्थायस्येतिवा ॥

इष्टकामधुक् । त्रि । अभीष्टभोगप्रदे । इष्टानांकामधुक् ॥

इष्टकावः । त्रि । इष्टकावति । इष्टकाः सन्त्यस्यास्मिन् वा । अन्येभ्योपिदृश्य तइतिषप्रत्ययः ॥

इष्टगन्धः । त्रि । सुगन्धौ । नं । वालुके । इष्टस्यासौ गन्धश्च । इष्टोगन्धोयस्यय स्मिन् वा ।

इष्टा । स्त्री । शमीवृक्षे ॥

इष्टापूर्त्तम् । न । यज्ञखातादिकर्मणि ॥ यथा । अग्निहोत्रंतपः सत्यं वेदानाञ्चानुपालनम् । आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते । वापीकूपतडागादिदेवतायतनानिच । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते । इष्टञ्च पूर्त्तञ्च अनयोः समाहारः ।

इष्टार्थोद्युक्तः । त्रि । उत्सुके । उत्साहयुक्ते । इष्टस्यासावर्थश्च तत्रउद्युक्तः ।

इष्टिः । स्त्री । यागे । दर्शपूर्णमासेष्ट्याम् । अभिलाषे । लोकसङ्ग्रहे । एषणम् । इष० । क्तिन् । इज्यतेऽनयेति वा । यज० क्तिन् ॥

इष्टिकापथिकम् । न । लामज्जकतृणे । इतिराजनिर्घण्टः ॥

इष्टिपचः । पुं । दैत्ये । दनुजे ।

इष्टिमुट् । पुं । दैत्ये । इष्टिंमुष्णाति । मुषस्तेये । क्विप् ।

इष्टुः । स्त्री । इच्छाविशेषे ॥

इष्मः । पुं । कामे । वसन्ते । इष्यति । इषगतौ । इच्छतिवा । इषयुधीन्धिदसिश्याधूसूभ्योमक् ।

इष्यः । पुं । वसन्तर्त्तौ ॥

इष्वः । त्रि । उपदेष्टरि । इष्यतेऽसौ । इष० । सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वाअतन्त्रेइतिवन्गुणाभावश्च निपात्यते ॥

इष्वसनः । पुं । चापे । अस्यतेअनेनेष्वसनः । इषूनामसनः ।

इष्वासः । पुं । धनुषि । त्रि । इषुक्षेपके । धन्विनि । इषवो यस्मा अस्यन्तेअनेन । असु० । हलश्चेतिघञ् ।

ई० । अ । दुःखभावनायाम् । सन्तापे । कोपे ।

इह । अ । अस्मिन् । अत्र । अधिकरणे । व्यवहारभूमौ । अस्मिन् । इदमोहः । इदमइश् ।

इहत्यः । त्रि । इहभवे । इहजातादौ

न्ताः । इखन्ति । इख० । निपातनाद्लच गुणाभावश्च । नित्यवहुवचनान्तोयम् ॥

इव । अ । उपमायाम् । सादृश्ये । साम्ये । ईषदर्थे । उत्प्रेक्षायाम् । वाक्यालङ्कारे ।

इषः । पुं । आश्विनमासि । इषगतौ । एषयाम इट् यात्रा । भावेक्विप् । साऽस्मिन्नस्ति जिगीषूणाम् । अर्श आद्यच ॥

इषिका । स्त्री । गजाक्षिगोलके ॥ ईष्यते । ईषउञ्छे । ईषगतिहिंसादर्शनेषु । ईषेःकिद्ध्रस्वश्चेतीकन् । धातोर्ह्रस्वः । तूलिकायाम् ॥ इष्यते । इषगत्यादौ । क्वुनादिभ्योवुन् ॥

इषितः । त्रि । अभिप्रेते । इष्टे ।

इषिरः । पुं । अग्नौ । इष्यति । इषगतौ । इच्छतिवा । इषइच्छायाम् । इषमदीत्यादिना किरच् ॥

इषीका । स्त्री । काशे । मुञ्जामध्यवर्त्तितृणे । सींक तुखी इतिभाषा । ईषति ईषतेवा । ईषउञ्छे । ईषगतिहिंसादर्शनेषु । ईषेःकिट्टस्वश्चेतिईकन् ॥ दर्भशलाकायाम् ।

इषुः । पुं । स्त्री । वाणे । सायके । मन्त्रः । ईष्यतेऽनेन । ईषगत्यादौ । ईषेरेकिच्चेति उः । ईषेःकिच्चेत्युःा । टेरित्यच ।

इषुधिः । पुं । स्त्री । इषूणांस्थाने । तूणीरे । इषवोधीयन्तेऽत्र । डुधाञ्० । कर्मण्यधिकरणेचेतिकिः ॥

इषुपुङ्खा । स्त्री । शरपुङ्खायाम् ।

इषुमाला । स्त्री । शरावल्याम् ।

इषुप्रक्षयन्त्रम् । न । शरशिलाक्षेपके यन्त्रविशेषे ।

इष्टम् । त्रि । आशंसिते । पूजिते । प्रिये । इष्यमाणे । इष्यते । इषइच्छायाम् । मतिबुद्धीतिक्तः । पुं । ससतन्तौ । यज्ञे ॥ एरण्डवृक्षे । न । संस्कारे । क्रतुकर्मणि ॥ क्रतुर्यज्ञः कर्मचदानादि तयोः समाहारः तदिष्टशब्दवाच्यम् । अतएव मनुः । एकाग्निकर्महवनं त्रेतायांयच्चहूयते । अन्तर्वेद्यांच्यद्दानमिष्टन्तदभिधीयते इति । अग्निहोत्रंतपः सत्यंवेदानाञ्चार्थपालनम् । आतिथ्यंवैश्वदेवञ्चमाकृरिष्टश्चनाकदम् । यजनम् । यजदेवपूजादौ । नपुंसके भावेक्तः । अनुकूलवेदनीये देवादिलब्धयोगादिफले । ईश्वराराधनादौ । एषयम् । इषेःक्तः । परमानन्दरूपत्वेन सर्वेषां प्रियत्वादिष्टः परमात्मैव ।

इष्टका । स्त्री । गृहादिनिर्माणार्थदग्धमृत्खण्डविशेषे । ईंटइतिप्रसिद्धे । इष्यते । इष० । इष्यसिभ्यांतकन् ।

रीशकी ।

ईदृशः । त्रि । ईदृशि ॥ अयमिव दृश्यते । इदमिव पश्यति वा । दृशेस्त्यदादिष्विति कञ् । इदम ईश् ।

ईप्सा । स्त्री । आप्तुमिच्छायाम् ॥

ईप्सितः । त्रि । अपेक्षिते ॥ अभिप्रेते । इष्टे । आप्तुमिष्टम् । आप्लृव्याप्तौ । सन् । क्तः । आप्ज्ञप्यृधामीत् । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः ।

ईप्सुः । त्रि । आप्तुमिच्छौ ।

ईयिवान् । त्रि । उपगते । इण्० । उपेयिवाननाश्वाननूचानश्चेति लिटः क्वसुर्द्वित्वमभ्यासदीर्घत्वं यणोरिट्च निपात्यते । सूत्रे उपशब्दस्याविवक्षितम् ।

ईरणः । पुं । वायौ । ईरति ईरयति वा । ईर० । युच् । ल्युट् । न । चलने ।

ईरितम् । त्रि । प्रोक्ते । प्रेरिते ॥ क्षिप्ते । ईर्येतेस्म । ईरगतौ कम्पनेच । क्तः ।

ईरितात्मा । पुं । प्रकटितस्वरूपे ।

ईर्मम् । न । व्रणे । ईरति सुखम् । ईर गतिप्रेरणयोः । धातुभ्यःकान्मक् ।

ईर्या । स्त्री । ध्यानमौनादिकस्य भिक्षुव्रतस्यानुष्ठाने । चर्यायाम् ॥ चर्यान्त्वीर्यां विदुर्बुधाः । ईर्यते । ईरगतौ । ऋहलोर्ण्यत् ।

ईर्यापथः । पुं । ध्यानाद्युपाये । ईर्यायाः पन्थाः । ऋक्पूरित्यः ॥

ईर्वाकः । पुं । स्त्री । कर्कट्याम् । ईरणम् । ईर० । सं० क्विप् । ईरं वर्णोति वारयति वा । वृञ्० । धातुभ्यकादुण् ।

ईर्वा । स्त्री । अक्षमायाम् ।

ईर्षालुः । पुं । अक्षमे । ईर्षायुक्ते ॥

ईर्ष्यकः । पुं । दृष्टियोन्याख्यक्लीबे । दृष्ट्वाव्यवायमन्येषां व्यवायेयः प्रवर्तते । ईर्ष्यकः सतु विज्ञेयो दृष्टियोनिरच सम्मृतः ॥

ईर्ष्या । स्त्री । अक्षान्तौ । परोत्कर्षासहिष्णुत्वे । परोत्कर्षाऽक्षमेर्ष्यास्यादीर्ष्यायामन्युरोपिच । ईर्ष्यणम् । ईर्ष्यईर्ष्यायाम् । गुरोश्चहलः ॥

ईर्ष्यालुः । त्रि । अक्षान्तिशीले । क्रुद्धे । ईर्ष्ये । ईर्ष्यां लाति । ला । मितद्वादिभ्यउः ।

ईला । स्त्री । धरित्र्याम् । गवि ॥ वाचि । सौम्यकलत्रे ।

ईलि. । स्त्री । ह्रस्वगदाकारेकसदण्डे । करपालिकायाम् । कटारी कटार इत्यादिभाषा । ईर्ते ईर्यते वा । ईर० । इन् । कपिलकादिः । ईड्यते वा । ईड० । अनयोरभेदः ।

ईलितः । त्रि । स्तुते । ईड्यतेस्म । ई

। अव्ययात्यप् ॥

इहामुत्रार्थफलभोगविरागः । पुं । ऐहिकपारत्रिकविषयभोगेभ्यो नितरांविरतौ । मुक्तेर्द्वितीयसाधने । ऐहिकानांस्रक्चन्दनादिविषयभोगानां कर्मजन्यतया अनित्यत्ववत् आमुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरांविरतौ ।

इह्री । अ । तङ्गच्छेत्यर्थे । इत्यन्तमतिरूपकम् ।

## ई:

ई । अ । विषादे । दुःखभावने । अनुकम्पायाम् । क्रोधे । प्रत्यक्षे । सन्निधौ । सम्बोधने ॥

ई: । स्त्री । लक्ष्म्याम् । अस्य स्त्री । ङीष् ।

ईक्षणम् । न । दर्शने । चक्षुषि । दृशि । ईक्ष्यतेऽनेन । ईक्ष द° । ल्युट् ।

ईक्षणिकः । पुं । हस्तरेखाद्यवलोकनपूर्वकशुभाशुभफलकथनेनजीविनि । शुभाशुभयोरीक्षणमस्यास्ति ठन् ।

ईक्षणिका । स्त्री । दैवज्ञायाम् । सामुद्रादिना जनानांशुभाशुभनिरूपिकायाम् । म° ठन् । ईक्षते । ईक्ष दर्शनाङ्कनयोः । रवुसृत्वा ।

ईक्षणीयः । त्रि । शोभमाने । ईक्षितुं योग्यः । अनीयर् ॥ अवलोकनीये ।

ईक्षा । स्त्री । दृष्टौ । ईक्षणम् । ईक्ष° । गुरोश्चेत्यः । टाप् ।

ईक्षितः । त्रि । अवलोकिते । ईक्ष° । नपुंसके भावेक्तः ।

ईजानः । पुं । यजमाने । कर्मिणि । ईजते । ईज° । शानच् ।

ईडा । स्त्री । स्तुतौ । ईडनम् । ईड स्तुतौ । गुरोश्चेत्यः । टाप् ।

ईडितः । त्रि । स्तुते । कृतस्तवे । ईड्यतेस्म । ईड° । क्तः ।

ईड्यः । त्रि । स्तुत्ये । वन्द्ये । श्लाघ्ये । ईडितुंयोग्यः । ण्यत् ॥

ईतिः । स्त्री । डिम्बे । अजन्ये । उत्पाते । प्रवासे । कृषेः षट्प्रकारोपद्रवविशेषे । यथा । अतिवृष्टिरनावृष्टिः शलभामूषकाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः इति । ईयतेऽनया । ईङ् गतौ । क्तिन् ।

ईदृक्षः । त्रि । ईदृशे । इदमेवेतिदृश् ॥

ईदृक् । त्रि । ईदृशे । एतन्मेवाय इस मकार इतिभाषा । अयमिवदृश्यते । इदंविषयव्यतिया । दृगिरम्भे° । त्यदादिषुदृशइतिक्विन् । इदंकिमोः

रीभकी ॥

ईदृशः । त्रि । ईदृशि ॥ अयमिव दृश्यते । इदमिव पश्यति वा । दृशेस्त्यदादिष्विति कञ् । इदम ईश् ।

ईप्सा । स्त्री । आप्तुमिच्छायाम् ॥

ईप्सितः । त्रि । अपेक्षिते ॥ अभिप्रेते ॥ इष्टे । आप्तुमिष्टम् । आप्लृव्याप्तौ । सन् । क्तः । आप्ज्ञप्यधामीत् । अत्रलोपोऽभ्यासस्येत्यभ्यासलोपः ॥

ईप्सुः । त्रि । आप्तुमिच्छौ ॥

ईयिवान् । त्रि । उपगते । इण्० । उपेयिवाननाश्वाननूचानश्चेति क्विटः कसुर्द्वित्वमभ्यासदीर्घत्वं वसोरिट्च निपात्यते । सूत्रे उपइत्यविवक्षितम् ।

ईरणः । पुं । वायौ ॥ ईरति ईरयति वा । ईर० । युच् । ल्युर्वा । न । चलने ॥

ईरितम् । त्रि । प्रोक्ते । प्रेरिते ॥ क्षिप्ते । ईर्यतेस्म । ईरगतौ कम्पनेच । क्तः ॥

ईरितात्मा । पुं । प्रकटितस्वरूपे ।

ईर्म्मम् । न । व्रणे । ईरति मुखम् । ईरगतिप्रेरणयोः । बाहुलकान्मक् ॥

ईर्य्या । स्त्री । ध्यानमौनादिकस्य भिक्षुव्रतस्यानुष्ठाने । चर्यायाम् ॥ चर्य्यान्त्वीर्य्यांविदुर्बुधाः ॥ ईर्य्यते । ईरगतौ । ऋहलोर्ण्यत् ।

ईर्य्यापथः । पुं । ध्यानाद्युपाये । ईर्य्यायाः पन्थाः । ऋक्पूरित्यः ॥

ईर्वारुः । पुं । स्त्री । कर्कट्याम् । ईरयम् । ईर० । सं० क्विप् । ईरंइय्यांति वारयतिवा । वृञ्० । बाहुलकादुण् ॥

ईर्षा । स्त्री । अक्षमायाम् ॥

ईर्षालुः । पुं । अक्षमे । ईर्षायुक्ते ॥

ईर्ष्यकः । पुं । दृष्टियोन्यास्यक्लीबे । दृष्ट्वाव्यवायमन्येषां व्यवायेयः प्रवर्त्तते । ईर्ष्यकः सतुविज्ञेयोदृष्टियोनिश्चसम्मृतः ॥

ईर्ष्या । स्त्री । अक्षान्तौ । परोत्कर्षासहिष्णुत्वे । परोत्कर्षाऽक्षमेर्ष्यास्याद्वैर्य्यान्मन्युतोपिच । ईर्ष्यणम् । ईर्ष्यईर्ष्यायाम् । गुरोश्चेत्यः ॥

ईर्ष्यालुः । त्रि । अक्षान्तिशीले । कुढने । सेर्ष्ये । ईर्ष्यांलाति । ला । मितद्व्वादित्वाड्डुः ॥

ईला । स्त्री । धरित्र्याम् । गवि ॥ वाचि । सौम्यकलत्रे ॥

ईलिः । स्त्री । ह्रस्वगदाकारेहस्तदण्डे । करपालिकायाम् । कटारी कटार इत्यादिभाषा । ईर्त्ते ईर्य्यतेवा । ईर० । इन् । कपिलकादिः । ईड्यते वा । ईड० । डलयोरभेदः ॥

ईलितः । त्रि । स्तुते । ईड्यतेस्म । ई

ड०। क्त। डलयोरभेदात्तः॥

ईली। स्त्री। ह्रस्वगदाकारे हस्तदण्डे। करपालिकायाम्। कृदिकारादितिपाक्षिकोङीष्॥

ईट्। पुं। परमेश्वरे॥ ईष्टे। ईश ऐश्वर्ये। क्विप्॥

ईशः। पुं। महादेवे। सदाशिवे। ईशानकोणाधिपतौ। सर्वेषामीशितरि। विशुद्धसत्त्वप्रधानमायोपाधिके परमेश्वरे। हिरण्यगर्भे। त्रि। प्रभौ। स्वामिनि। एकादशसु। ईष्टे। ईश०। इगुपधेतिकः॥

ईशत्वम्। न। पाशुपतानां द्वितीये पाशे। ईष्टे स्वातन्त्र्येणेति ईशः। तदीयवर्त्मरोधशक्तिर्द्वितीयः पाशः। तथाचोक्तम्। तासांमाहेश्वरीशक्तिःसर्वानुग्राहिकाशिवा। धर्मानुवर्त्तनादेवपाशइत्युपचर्यतेइति॥

ईशसखा। पुं। कुबेरे। ईशःसखास्य॥

ईशा। स्त्री। पार्वत्याम्। दुर्गायाम्। ईष्टे। ईश०। कान्ताट्टाप्।

ईशानः। पुं। शिवे। महादेवे॥ एकादशरुद्रान्तर्गतरुद्रविशेषे॥ शिवाष्टमूर्त्यन्तर्गतसूर्यमूर्त्तौ। शमीवृक्षे। न। ज्योतिषि। त्रि। ईशितरि। नियन्तरि। स्वामिनि। ईष्टे तच्छीलः। ताच्छील्यवयोवचनशक्तिषु चानश्॥

ईशानी। स्त्री। स्कन्दमातरि। दुर्गायाम्। ईशानस्यस्त्री। पुंयोगलक्षणो ङीष्॥ शमीवृक्षे॥

ईशिता। स्त्री। ईशित्वे। अणिमाद्यष्टैश्वर्यान्तर्गतैश्वर्यविशेषे। प्रभुत्वे॥ येनस्थावराअप्याज्ञाकारिणो भवन्ति॥ ईशोऽस्यास्ति। अतइनिठनाविति इनिः। ईशिनो भावः। तस्य भावस्त्वतलाविति तल्॥

ईशिता। त्रि। ईश्वरे। अधिपतौ। प्रभौ। नियन्तरि। ईष्टे। ईश०। तृन् तृचौ॥

ईशित्वम्। न। ईशितायाम्। देवानामष्टैश्वर्यान्तर्गतैश्वर्यविशेषे॥ यत्रभूतभौतिकानां प्रभवव्यूहव्ययाना मीशिताभवति। ईशिनोभावः। त्वः॥

ईश्वरः। पुं। शिवे। मन्मथे। विशुद्धसत्त्वप्रधानाज्ञानोपहितचैतन्ये। ईशनादिशक्तियुक्ते जगदधिष्ठातरि। हिरण्यगर्भे। विविधशक्तित्वात् सर्वसमर्थे सर्वनियन्तरि नारायणे। उक्तञ्चदेवीगीतायाम्। तन्नयाप्रकृतिःप्रोक्तासाराजन् द्विविधामता। सत्त्वात्मिकातुमायास्यादविद्यागुणमिश्रिता। स्वाश्रयं यातु संरक्षेत् सा मायेतिनिगद्यते। तस्यां यत्प्रति

विम्बस्यादिम्भूतस्यचेशितुः। सर्वे- श्वरःसमाख्यातः स्वाश्रयज्ञानवान् परः ॥ तस्यां स्वाश्रयाव्यामोहकारि- ण्यां शुद्धसत्त्वप्रधानायां मायायामी- शितुःपरमात्मनोयत् प्रतिविम्बंपत- ति तत् प्रतिबिम्बमीश्वरः। सचेश्व- रः स्वाश्रयं व्यापकं ब्रह्मतज्ज्ञान वानभवति. माययातदाधारब्रह्मणो नावरणात्। सर्वज्ञः सर्वकर्त्ताचस- र्वानुग्रहकारकः। इति। देहेन्द्रिय सङ्घातस्यस्वामिनिजीवे ॥ ईशन- शीले। समर्थे। सर्वान्तर्यामिणि। क्लेशकर्मविपाकाशयैरपरामृष्टः पुरु- षविशेषईश्वरः इतिपतञ्जलिः। ईश्व- रमाजमप्यर्थंनचमामीशतेपरः। इ- दामिचसदैश्वर्यमीश्वरस्तेनकीर्त्ति- तः। प्रभवादिष्वेकादशेऽब्दे। सु- भिक्षंक्षेममारोग्यंकार्पाससमहार्घ- ता। लवणं मधुगव्यञ्चईश्वरेदुर्लभं प्रिये। त्रि। आढ्ये। स्वामिनि। ई- शितुं शीलमस्येति। स्थेशभासपिस कसोवरच् इतिवरच्। ईष्टे। ईश० ।वरच् ॥ यद्वा। अश्नुते। अश्नुव्या- सौ सङ्घातेच। अश्नोतेराशुकर्म णिवरट्चेतिवरट्। चादुपधाया ई- त्त्वम्।

ईश्वरप्रणिधानम्। न। शौचादिपञ्च- नियमेषु पञ्चमे नियमे। ईश्वरस्यमा- नसैरुपचारैरभ्यर्चने। सर्वकर्मणां- तस्मिन् परमगुरौफलनिरपेक्षत- याऽर्पणे ॥ ईश्वरे प्रणिधानम्।

ईश्वरभावः। पुं। प्रजापालनार्थमीशि- तव्येषु प्रभुशक्तिप्रकटीकरणे।

ईश्वररथचरणः। पुं। कालचक्रे। ईश्व- ररथस्यचरणः।

ईश्वरसेतुः। पुं। मर्यादायाम्। वर्णा- श्रमादिधर्मे। ईश्वरस्यसेतुरिव।

ईश्वरा। स्त्री। उमायाम्। श्रीवाण्या- दिशक्तिषु। वरजन्तादीश्वरशब्दात् टाप्। पुंयोगविवक्षाभावान्न ङीप्।

ईश्वरी। स्त्री। गौर्याम्। दुर्गायाम्। श्रीवाण्यादिशक्तिषु। अश्नुते वि- श्वम्। वरजन्तादीश्वरान् ङीप्। यद्वा। ईष्टे। ईश०। वनिप्। वनोर- चेतिङीपौ ॥ लिङ्गिनीवृक्षे। वन्ध्या कर्कोटक्याम्। रुद्रजटालतायाम्। नाकुलीकन्दे ॥

ईषत्। अ। अल्पे। किञ्चित्। ईषग- म। ईषगत्यादौ। अतमप्रत्ययः।

ईषत्करः। पुं। अत्यल्पे। अनुपन्धौ। गन्धे। लेशे। त्रि। ईषत्क्रियमाणे वस्तुनि। ईषत्क्रियते। ईषद्दुःसुषु कृ- तिभावे कर्मणिवा अकृच्छ्रार्थेषु खल्

लु प्रत्ययः॥

ईषत्पाण्डुः। पुं। धूसरवर्णे॥

ईषदुष्णम्। न। कवोष्णे। मन्दोष्णे। त्रि। तद्वति। ईषच्चतदुष्णञ्च॥

ईषद्धास्यम्। न। मन्दहास्ये। स्मिते। ईषच्चतद्धास्यञ्च। त्रि। तद्वति।

ईषद्रक्तः। पुं। अरुणे। त्रि। तद्वति।

ईषा। स्त्री। हलयुगयोर्मध्यस्थकाष्ठे। लाङ्गलदण्डे। ईषते। ईषगत्यादौ। इगुपधेतिकः। कर्म्मणि गुरोश्चेत्यो वा॥

ईषादन्तः। पुं। दीर्घदन्तगजे। उदग्रदन्ते। ईषेवदन्तावस्य।

ईषिका। स्त्री। अक्षिकूटे। गजाक्षिगोलके। ईषालाङ्गलकीलिका सेव। इवेप्रतिकृताविति कन्। तूलिकायाम्। अस्त्रविशेषे। यथा। सोऽभिमन्त्र्यशरेषीकां मौषिकास्त्रेणवीर्यवान्। काकंतमभिसन्धायससर्जपुरुषर्षभः॥ इतिरामायणम्॥ ईष्यते ईषतिवा। ईषगत्यादौ ईषउञ्छेवा। क्वुन्।

ईषिरः। पुं। अग्नौ। पावके॥

ईषीका। स्त्री। इषीकायाम्। तूलिकायाम्। ईषीकास्यादिषीकापीति द्विरूपकोषः। पर्फरीकादित्वान्न साधुः।



ईहः। पुं। कामदेवे। वसन्तर्त्तौ। ईषति ईषतेवा। ईषउञ्छे ईषगतिहिंसादर्शनेषु। इषियुधीत्यत्र ईषीति दीर्घादि पाठस्याप्युक्तत्वान्मक्।

ईहा। स्त्री। उद्यमे। चेष्टायाम्॥ वाञ्छायाम्॥ ईहचेष्टायाम्। गुरोश्चेत्यः। टाप्।

ईहामृगः। पुं। कृत्रिममृगे। नाटकरूपकभेदे। कोके। वृके। भेडिया इतिभाषा॥ ईहा मृगेष्वस्य। ईहां मृगयते वा। मृगअन्वेषणे। कर्म्मण्यण्॥ ईहाप्रधानो मृगोवा। शाकपार्थिवादिः।

ईहितः। त्रि। अभीप्सिते। न। उद्योगे। चरिते।

## उः

उ। अ। सम्बोधने। रोषोक्तौ। अनुकम्पायाम्। नियोगे। पदपूरणे। पादपूरणे। विस्मये। भवनम्। उङ शब्दे। क्विप्। तुङ्न।

उ। पुं। शम्भौ। चन्द्रमौलौ। शिवे। उकारे।

उकनाहः । पुं । पीतरक्तवर्णे तुरङ्गे ।

उक्तः । त्रि । कथिते । भाषिते । जल्पिते । अभिहिते । न । एकाक्षरार्था वृत्तौ । श्रीछन्दसि । उच्यतेस्म । वचपरिभाषणे । ब्रूञोवचिर्वा । क्तः । सम्प्रसारणम् ।

उक्तिः । स्त्री । व्याहारे । वचने । वच8 । क्तिन् । सम्प्रसारणम् ।

उक्थम् । पुं । यज्ञविशेषे । न । प्राणे । सामभक्तौ । सामवेदे । यज्ञायज्ञीयातपरेणयानिसामानिगीयन्ते तान्युक्थानि । महाव्रताख्यक्रतौ प्रधानभूतंशस्त्रमुक्थशब्दार्थः । उच्यते । थक् । पातृतुदीत्यादिनाथक् ।

उक्थशा8 । पुं । यजमाने । उक्थानि उक्थैर्वा शंसति । शंसुस्तुतौ । मन्त्रेश्वेतवहोक्थशस्पुरोडाशोणिवन्निच्च । श्वेतवहादीनांडस् पदस्येतिवक्तव्यम् । यत्रपदत्त्वंभावि तत्रडस् । उक्थशोभ्याम् । अन्यत्रखिः । उक्थशासौ उक्थशास इत्यादिबोध्यम् ।

उक्था । स्त्री । एकाक्षरच्छन्दसि । सादिविधा । श्रीः १ सर्वगुरुः । श्री स्ते साम् ॥ उः २ सर्वलघुः । उरवतु ।

उक्लेदः । पुं । यात्नौ ।

उक्षः । त्रि । सिक्ते । भीते ।

उक्षणम् । न । सेचने ।

उक्षतरः । पुं । तृतीयवयःप्राप्ते वृषे । तनुत्वेष्टरच् । वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वे इतिष्टरच् । ङीषि । उक्षतरी ॥

उक्षा । पुं । बलीवर्दे । वृषे । उक्षति उक्षसेचने । श्वन्नुक्षन्निति कनिन् । ऋषभौषधौ । त्रि । सेक्तरि ।

उक्षितः । त्रि । सिक्ते । क्लिन्ने ।

उखर्वलः । पुं । तृणविशेषे । भूरिपत्रे । सुतृणिः ।

उखलः । पुं । उखर्वले । तृणोत्तमे ।

उखा । स्त्री । पिठरे । स्थालीत्याख्याम् । हाँडी भरथिया भाडू इत्यादिभाषा । ओखति । उखगतौ । इगुपधेतिकः । उखन्त्यस्याम् । खनुखवदारणे । अन्येष्वपीतिडः । टाप् ।

उख्यम् । त्रि । पैठरे । उखायां पक्वे मांसादौ । उखायां संस्कृतम् । शूलोखाद्यत् ॥

उग्रः । पुं । महादेवे । रुद्रे । वायुमूर्त्तिरूपे । क्षत्रियाच्छूद्रायामूढायामुत्पन्ने । आगुरि इतिगौडभाषायामसिद्धे जातिविशेषे । क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् । क्षत्रशूद्रवपुर्जन्तुरुग्रोनामप्रजायते । सृगुग्रपुक्कसानान्तुबिलौकोवधबन्धनमिति मनुः । कार्ये सम्भाष्यवृत्ति भीगर्भनिर्मिता । शोभाङ्गनद्रुमे । केर

रुद्रेशे । याष्टीके ॥ न । क्रूरसंज्ञकनक्षत्रेषु । पूर्वोत्तरद्वारगृहे । वत्सनाभाख्यविषे । त्रि । उत्कटे । दारुणकर्मकर्त्तरि । उच्यति क्रुधासम्बध्यते । उचसमवाये । ऋज्रेन्द्रेत्यादिनारक् गश्चान्तादेशः ।

उग्रकर्मा । पुं । हिंस्रे । उग्रं कर्मास्य ॥

उग्रकाण्डः । पुं । कारवेल्ले ।

उग्रगन्धः । पुं । चम्पके । कट्फले । अर्जकवृक्षे । लशुने ॥ न । हिङ्गुनि । त्रि । उत्कटगन्धयुक्ते । उग्रोगन्धोऽस्य ।

उग्रगन्धा । स्त्री । अजमोदायाम् । वचायाम् । छिक्किकौषधौ । अजगन्धायाम् । यवान्याम् । उग्रोगन्धोऽस्याः ।

उग्रचण्डा । स्त्री । देवीविशेषे ।

उग्रतारा । स्त्री । देवीविशेषे । उग्रादपिभयात् त्राति यस्माद्भक्तान् सदान्विकेनिरुक्तिः ।

उग्रत्वम् । न । उग्रतायाम् । चण्डतायाम् । उग्रस्य भावः । त्वः ।

उग्रधन्वा । पुं । इन्द्रे । शत्रुवधायोद्यतधनुष्के । उग्रं धनुर्यस्य । धनुषश्चेति नङ् ।

उग्रनासिकः । त्रि । दीर्घनासाविशिष्टे ।

उग्रशेखरा । स्त्री । भीष्ममातरि । गङ्गायाम् ।

उग्रश्रवाः । पुं । रोमहर्षणसुते । सूते ।

उग्रसेनः । पुं । आहुके । कंसजनके ।

उग्रसेनसुतः । पुं । कंसे ॥

उग्रा । स्त्री । कनखलाधिष्ठात्र्याम्बायाम् । वचायाम् । यवान्याम् । छिक्किकौषधौ । उग्रजातेर्भार्यायाम् । धन्याके । मखरायांनार्याम् ॥ टाप् ।

उचितम् । त्रि । न्यस्ते । परिमिते । समञ्जसे । ग्राह्ये । उच्यते । वचपरिभाषणे । रुचिवचिकुचिकुटिभ्यःकितच् । युक्ते ॥ ख्याते । विदिते ।

उच्चः । त्रि । उन्नते । तुङ्गे । प्रांशौ ॥ उच्चिनोति । चिञ् ०। अन्येभ्योपीतिडः ॥ उच्चैस्त्वम् अस्ति अत्रवा । अर्श आद्यच् । अव्ययानामितिटिलोपः । नालिकेरे ।

उच्चकैः । अ । अतिशयोच्चे । उच्चैः । अव्ययसर्वनाम्नामितिप्रागिवीयेष्वर्थेषु टेः प्रागकच् ।

उच्चटा । स्त्री । दम्भे ॥ चर्य्यायाम् । लशुनप्रभेदे । गुञ्जायाम् । भूम्यामलक्याम् । नागरमुस्तायाम् । जटिकौषधौ । चूडालायाम् । मुस्ताविशेषे । श्वेतागुञ्जोच्चटामोत्तेतिभावप्रकाशः । उच्चटति । चटगतौ । अन्तर्भावितण्यर्थः । अच् ।

उच्चण्डः । त्रि । त्वरायुक्ते । अविलम्बिते ॥ प्रचण्डे । उच्चण्डनम् । चण्डिकोमे । घञ् ।

उच्चतरुः । पुं । नारिकेले ।

उच्चतालम् । न । पानगोष्ठ्यां नृत्ये ॥ इति हेमचन्द्रः ॥

उच्चदेवः । पुं । श्रीकृष्णे । गोविन्दे ।

उच्चन्द्र । पुं । रात्रिशेषे ।

उच्चयः । पुं । नीव्याम् । परिधानवस्त्रग्रन्थौ ॥ इति हेमचन्द्रः ।

उच्चलम् । न । मनसि । चञ्चले । पुं । ध्वजस्योर्द्ध्वकूर्चे ।

उच्चललाटा । स्त्री । उन्नतललाटस्त्रियाम् ।

उच्चलितः । त्रि । प्रस्थिते ॥

उच्चाटनम् । न । वैरिणः एकदेशेऽनवस्थाकरणे । उच्चाटनं स्वदेशादेर्भ्रंसनं परिकीर्त्तितमिति शारदातन्त्रम् ॥

उच्चारः । पुं । उच्चारणे । विष्ठायाम् । उच्चार्यते त्यज्यते । चरगतौ । एयन्तः । घञ् ॥

उच्चारणम् । न । कथने । शब्दप्रयोगे ।

उच्चारितः । त्रि । उदाहृते ॥ प्रकाशिते ॥

उच्चावच । त्रि । बहुविधे । नैकभेदे । उत्कृष्टापकृष्टे । उदक्च अवाक्च । मयूरव्यंसकादित्वात्साधुः ।

उच्चिकमिषा । स्त्री । उत्क्रान्तुमिच्छायाम् । उठवेकी इच्छा इतिभाषा ॥

उच्चिङ्गटः । पुं । दृणगडमत्स्ये । त्रि । कोपनपुरुषे ।

उच्चूडः । पुं । उच्चूले । अस्योच्चूडायचूडाख्याबुद्धिः मुखचूडकाविति च । लाङ्गेपुच्छलायुधः ।

उच्चूलः । पुं । ध्वजस्योर्द्ध्वकूर्चे । झब्बे कौपाघ इतिभाषा ॥

उच्चैःश्रवाः । पुं । श्वेतवर्णे समुद्रमन्थनोत्थिते इन्द्रस्यघोटके ।

उच्चैर्घुष्टम् । न । घोषणायाम् । उच्चैर्घुष्यतेस्म । घुषिर् विशब्दने । क्तः ।

उच्चैःश्रवाः । पुं । इन्द्राश्वे । अश्वानां मध्येभगवतोविभूतौ । अयंसमुद्रः । यथोक्तंभागवते । एकोनीतोऽश्वः समुद्रस्वयान्तमवलात्किलेति । उच्चैर्महान्श्रवोयस्य । उच्चैःश्रवसीयस्यासा । यद्वा । उच्चैःशृणोति । श्रुश्रवणे । असुन् । उच्चैःश्रवसंमन्तुमणिपत्यसमर्पितामिच्छन्नपूपो दरादिस्वादगमसेवीध्यः । आकाशस्थैर्दिवौकसैरितिबरियशोतिषत् । त्रि । बधिरे ॥

उच्चैः । अ । अत्यर्थे । महति । उन्नते ॥ उच्चीयते । चिञ् । उदिचेर्डैसिः ।

उच्छन्नम् । त्रि । नष्टे ।

उच्छलत् । त्रि । उत्पतति ।

उच्छशितः । त्रि । उल्लङ्घिते । शशप्लुतगतावित्यस्मात् । क्तः ।

उच्छादनम् । न । उत्सादने । उद्वर्त्तने । गन्धद्रव्यद्वाराशरीरनिर्मलीकरणे ।

उच्छास्त्रम् । त्रि । शास्त्रमतिषिद्धे । शास्त्रविरुद्धे । उद्गतं शास्त्रात् ।

उच्छिखः । त्रि । उद्गतज्वाले ।

उच्छित्तिः । स्त्री । उच्छेदे । उच्छेदनम् । क्तिन् ।

उच्छिन्नः । त्रि । नष्टे । उच्छेदिते । उच्छिद्यतेस्म । छिदिर्द्वैधीकरणे । क्तः ।

उच्छिलीन्ध्रम् । न । छत्राके । छत्रिकायाम् ।

उच्छिष्टः । त्रि । भुक्तावशेषे । जंठ जंठन जंठा इतिभाषा । त्यक्ते ।

उच्छिष्टभोजनम् । त्रि । देवनैवेद्यबलिभोजनकर्त्तरि । इति हेमचन्द्रः ।

उच्छिष्टमोदनम् । न । सिक्थके । मैन सिल्हा इतिभाषा ।

उच्छीर्षकम् । न । शिरःप्रदेशे । उपधाने । सिराहना इतिभाषा ।

उच्छूनः । त्रि । स्फीते । उन्नते । यदितेऽभवोदोदरन्ति प्राचीनाः । कामिन्याःकियदुच्छूनमुरः प्रेयानसमीघ

...ते । नवशालिमिवोत्पन्नमिति दीर्नीकूपीवलइति । उत्स्फीयतेस्म । टुओश्विगतिवृद्धयोः । क्तः । श्वोदितश्चेतितस्थनः । यजादित्वा त्सम्प्रसारणे पूर्वरूपेचहल इतिदीर्घः ।

उच्छूनता । स्त्री । जम्भये । भावेतल् ।

उच्छृङ्खलः । त्रि । अबाधे । बन्धनरहिते । अनियन्त्रितवस्तुनि । निरर्गले । उद्गतंशृङ्खलंनिगडंयस्य ।

उच्छेदः । पुं । विनाशे ।

उच्छेदी । त्रि । विनाशिनि ।

उच्छेषणम् । न । उच्छिष्टे ।

उच्छोषणः । त्रि । सन्तापकरे ।

उच्छ्रयः । पुं । द्रुमादीनामुन्नतायाम् । उत्सेधे । उच्छ्रयणम् । श्रिञ् सेवायाम् । वाहुलकादेरच् ।

उच्छ्रायः । पुं । उच्छ्रये । उच्छ्रयणम् । श्रिञ् ० । उद्श्रियतियैतीति घञ् । उत्कृष्टः श्रायोवा ।

उच्छ्रितः । त्रि । सञ्जाते । समुन्नद्धे । उन्नते । प्रवृद्धे । उच्छ्रयति उच्छ्रीयतेस्मवा । श्रिञोगत्यर्थेतिकर्माभिया क्तः ।

उच्छ्रित्य । अ । सन्तत्येत्यर्थे । निवर्त्येत्यर्थे ।

उच्छ्वसितः । त्रि । प्रफुल्ले । विकसिते । जीविते । स्फुरणे । फरकना इति

भाषा। उत्श्वसिति। श्वस० क्तः।

उच्छ्वासः। पुं। अन्तर्मुखश्वासे। आहरे। प्राणने। आख्यायिकापरिच्छेदे। आश्वासे। उच्छ्वसनम्। श्वसप्राणने। घञ्।

उज्जयिनी। स्त्री। विशालायांपुरि। अवन्त्याम्।

उज्जयन्तः। पुं। रैवतपर्वते।

उज्जयिनी। स्त्री। महाकालपुर्य्याम्। अवन्तिकायाम्।

उज्जासनम्। न। वधे। मारणे। जसुहिंसायाम्। स्वार्थण्यन्तः। भावे ल्युट्॥

उज्जृम्भः। त्रि। प्रफुल्ले। प्रस्फुटिते॥ इतिहेमचन्द्रः॥ उज्जृम्भणम्। जृम्भि०। घञ्॥

उज्जृम्भणम्। न। उज्जृम्भे॥

उज्जृम्भितः। त्रि। प्रफुल्ले। न। चेष्टायाम्। उज्जृम्भःसञ्जातोऽस्य। तारकादित्वादितच्।

उज्ज्वलः। पुं। शृङ्गाररसे। न। स्वर्णे। त्रि। दीप्ते। विशदे। विकाशिनि। उद्धैर्ज्वलति प्रकाशते। ज्वलदीप्तौ। अच्। नतुज्वलितीतिणः। तत्राऽनुपसर्गादित्यनुवृत्तेः।

उज्झः। पुं। त्यागे। विसर्जने।

उज्झितः। त्रि। उत्सृष्टे। त्यक्ते। वर्जिते।

उञ्। अ। सतर्के। सम्बोधने। पूरणे।

उञ्छः। पुं। उञ्छशिले। ऋते। धान्यकणोच्चये। कणशआदाने। अबाधितस्थानेषु पथिषु क्षेत्रेषुवा अप्रतिहतविकाशेषु यत्रयत्रौषधयो विद्यन्ते तत्रतत्राङ्गुलीभ्यामेकैककणं समुच्चयिन्वेतिबौधायनस्मृतेर्दर्शनात्। एकैकधान्यगुडकोच्चयनमुञ्छः। उञ्छनम्। उछिउञ्छे। घञ्॥

उञ्छनम्। न। आपणादिपतितकणोपादाने। उञ्छनमितिभाषा। ल्युट्।

उञ्छशिलम्। न। ऋतमस्यात् क्षेत्रच्युतस्यसञ्चये। ऋतवृत्तौ॥ उञ्छस्य शिलस्यैकसद्भावः।

उञ्छशीलः। त्रि। उञ्छजीविनि। उञ्छतस्यस्यशेपाहरणकर्त्तरि।

उटः। पुं। तृणपर्णादौ।

उटजः। पुं। न। मुनीनांतृणपर्णादिरचितालये। पर्णशालायाम्। उटाज्जायते। जनी०। अन्यत्रापीतिडः॥

उडु। न। भे। तारकायाम्। जले। उ रोषोक्तिपूर्वकं डयते। डीङ्‌वि०। मितद्र्वादित्वात् डुप्रत्ययः।

उडुः। स्त्री। नक्षत्रे। ऋक्षे। अवतीति उः। डयते डुः। डीङो-मितद्र्वादित्वात्डुः। उवर्णान्तोऽडु श्चेतिभिमत्रः। उडुः उडू। उडवः इत्यादि

धेनुवत्॥

उडुपः। पुं। न। प्लवे। कोले। भेले॥ चर्मावनद्धे यानपात्रे। पुं। चन्द्रे। उडुनोजलात् पाति। पारक्षणे। सुपिस्थइत्यत्र सुपीति योगविभागा त् कः। उडुनि जले पातीति वा॥

उडुपतिः। पुं। चन्द्रे। उडूनाम्पतिः॥

उडुपथः। पुं। आकाशे।

उडुराट्। पुं। चन्द्रे। उडुषु नक्षत्रेषु राजते। राजृ॰। क्विप्॥

उडूपः। पुं। न। उडुपे। पुं। चर्मन्द्रसि॥

उड्डयनम्। न। नभोगतौ। उडान इतिभाषा॥

उड्डामरः। त्रि। श्रेष्ठे। उद्भटे। पुं। तन्त्रविशेषे॥

उड्डीनम्। न। खगानामूर्द्धगतौ। उत्‌डीङ्‌ उयनम्। डीङ्॰। नपुंसके भावे क्तः। स्वादयओदितइत्योदित्त्वान्नि ष्ठानत्त्वम्।

उड्डीयमानः। त्रि। उड्डयनविशिष्टे खगे। उडन्त उडता इतिभाषा।

उड्डीशः। पुं। आगमग्रन्थविशेषे। च न्द्रीशे। शिवे।

उत्। अ। प्रश्ने। वितर्के। संशये। अ प्यर्थे। भृशे। ऊर्द्ध्वे। अवर्थे।

उत। अ। अप्यर्थे। विकल्पे। समुच्च ये। वितर्के। प्रश्ने। पदपूरणे। अ प्यर्थे। एवार्थे। जायते स्म। उत् शब्दे। क्तः।

उतम्। त्रि। स्यूते। बुना इतिभाषा॥ जायते स्म। वेञ्॰। क्तः। यजादि त्वात्सम्प्रसारणम्।

उतथ्यः। पुं। गौतमपितरि मुनिविशे षे। अङ्गिरसः श्रद्धायासुत्पन्नेवृहस्प तेर्ज्येष्ठभ्रातरि।

उतथ्यतनयः। पुं। गौतममुनौ।

उतथ्यानुजः। पुं। देवाचार्ये वृहस्प तौ।

उतथ्यानुजन्मा। पुं। वृहस्पतौ। जीवे।

उताहो। अ। परिप्रश्ने। विचारे। वि कल्पे। उतच आहोच अनयोः स माहारः।

उत्कः। त्रि। अन्यमनस्के। उन्मनसि। उत्‌संमनोऽस्य। उत्कउन्मनाइतिउ त्‌मनस्कशब्दस्योत्‌शब्दात् स्वार्थेक न्॥

उत्कटः। पुं। मत्तेभे। रक्तेषौ। शरे। न। त्वक्पत्रे। गुडत्वचि। तजाख्यौ- षधौ। दारचीनी इतिभाषा। अ- न्यत उतकटसुगन्धित्वात्स्वार्थे उत्‌श ब्दात् कटच्। त्रि। तीव्रे। मत्ते। विषमे। उद्‌गतःकटआवरणम् आ वरकोयस्य। यद्वा। उद्गतमदश्च- तोस्ति शब्दात्स्वार्थे सम्मोदश्चेतिक-

टच् ।

उत्कटकासनः । त्रि । विषमासने ॥

उत्कटा । स्त्री । सैंहलीलतायाम् ॥

उत्कण्ठः । पुं । शृङ्गारस्य षोडशबन्धान्तर्गतबन्धविशेषे । आसनइति यस्य प्रसिद्धिः । तल्लक्षणम् । नारीपादौ च हस्ताभ्यांधारयेद्गलके पुनः । स्तनार्पितकरःकामी बन्धश्चोत्कण्ठसंज्ञकः इति ॥

उत्कण्ठा । स्त्री । उत्कलिकायाम् । इष्टलाभे कालक्षेपासहिष्णुतायाम् ॥ उत्कण्ठनम् । कण्ठोक्ते । गुरोश्च लक्षणः ॥ आकाङ्क्षायाम् ॥

उत्कण्ठितः । त्रि । उत्सुके । उत्कण्ठायुक्ते ॥ उत्कण्ठासञ्जातास्य । तारकादित्वादितच् ॥

उत्कण्ठिता । स्त्री । स्वीयादिनायिकाभेदे ॥

उत्कता । स्त्री । गजपिप्पल्याम् । उत्कण्ठायाम् ॥

उत्करः । पुं । धान्यादिराशौ । स्तूपे । अवकरे । हस्तपादादिविक्षेपे । उत्कीर्यते । कृषिभेदे । कर्दोरप् ॥

उत्कर्षः । पुं । अतिशये । स्वकालात् परकालकर्तव्ये । इतिस्मृतिः । अधिकमानधर्मारोपे । उत्कर्षणम् । कृषविº । घञ् । त्रि । अतिशययुक्ते ॥

उत्कलः । पुं । ओड्रदेशे । उडीसाइति भा० । यथा । जगन्नाथप्रान्तदेशउत्कलःपरिकीर्त्तितइति । व्याधे । त्रि । भारवाहके । मोटिया इति भाषा ॥

उत्कलिका । स्त्री । उत्कण्ठायाम् । इष्टप्राप्तौकालक्षेपासहिष्णुत्वे । कामादिजातस्मृतौ ॥ कलिकायाम् ॥ हेलायाम् । सलिलतरङ्गे । उत्पूर्वात्कलेः कुत्वादिभ्योवुन् । कुत्वा ॥

उत्कलिकाप्रायम् । न । गद्यभेदे । यथा । भवेदुत्कलिकाप्रायं समासाढ्यंदृढाक्षरमिति यथा । प्रणिपातप्रवणसमस्तनाकेशसुरासुरादिवृन्दसौन्दर्यप्रकटकिरीटकोटिनिविष्टस्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्रविक्रमोद्दामवामपादाङ्गुष्ठनखशिखरखण्डितब्रह्माण्डविवरनिस्सरच्छरदम्बरतरकरभास्वरसुरवाहिनीप्रवाहपवित्रीकृतपिष्टपत्रितयकैटभारेक्रूरनरसंसारसागरनानाकारावर्त्तविवर्त्तमानविग्रहं मामनुगृहाणेति ॥

उत्कलितः । त्रि । उन्मनसि । ऋद्धिमति ॥

उत्कलितः । त्रि । उद्घृष्टे ॥

उत्का । स्त्री । उत्कण्ठितायां नायिकायाम् ॥

उत्कारः । पुं । धान्यस्योर्द्ध्वक्षेपणे । निकारे । धान्यस्य राशीकरणे । उत्कार

—णम् । क्षुविक्षेपे । क्षुधान्ये इतिपण्ड ।

उत्कारा । स्त्री । प्रतिवर्षमस्तुताया-

क्रवि- ॥

उत्कासिका । स्त्री । वमनव्याधौ ।

उत्किरः । त्रि । त्रि । क्षेपकर्त्तरि । उत्कि-

रति विक्षिपति । क्षा० इगुपधेतिकः ।

उत्कीर्णः । त्रि । उल्लिखिते । कृतवेधने ।

उत्कीर्य्यतेस्म । क्षा० । क्तः । नत्वम् ।

उत्कुटम् । न । उत्तानशयने ।

उत्कुणः । पुं । उद्दंशे । मत्कुणे ।

उत्कूटः । पुं । छत्रे । इतिहारावली ।

उत्कृतिः । स्त्री । षड्विंशत्यक्षरायां-

वृत्तौ ।

उत्कृष्टः । त्रि । प्रशस्ते । उत्तमे । अ-

तिशययुक्ते । उत्कर्षविशिष्टे । उत्कृ-

ष्यतेऽयम् । कृषेः कर्मणिक्तः ।

उत्कोचः । पुं । स्त्री । उपदायाम् । ढौ-

कने ।

उत्कोचकः । त्रि । कार्य्यिभ्योऽर्थं गृहीत्वा

अयुक्तकार्य्यकारिणि ।

उत्क्रमः । पुं । व्यतिक्रमे । व्युत्क्रमे ।

उत्क्रमणम् । न । उत्क्रान्तौ ।

उत्क्रान्तः । त्रि । निर्गते ।

उत्क्रान्तिः । स्त्री । उत्क्रमणे ।

उत्क्रोशः । पुं । स्त्री । पक्षिविशेषे । कु-

ररे । उत्क्रोशति । कुशश्चाह्वाने ।

पचाद्यच् ।

उत्क्लेदः । पुं । वमनोपस्थितावित्य-

र्थे । उकलाइ इति यस्य प्रसिद्धिः ।

उत्क्लेशः । पुं । पीडायाम् । वमनायो-

पस्थितौ । उकलाइ इतिभाषा । य-

था । कफोत्क्लेशः । कफस्य वमनायो-

पस्थितिः । उक्तञ्च । उत्क्लिश्यान्नं न

निर्गच्छेत्प्रसेकष्ठीवनेरितम् । हृदयं

पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेदि-

ति ॥ उत्क्लेशस्त्वेके ॥

उत्क्षिप्तः । पुं । धत्तूरफले ॥ त्रि । ऊ-

र्द्ध्वक्षिप्ते ।

उत्क्षिप्तिका । स्त्री । कर्णाभरणविशेषे

। खलाम्याम् । कर्णान्दौ । कानतड-

का इतिभाषा ।

उत्क्षेपः । पुं । ऊर्द्ध्वक्षेपणे । उछालना

इतिभाषा ॥

उत्क्षेपकः । त्रि । उत्क्षेपकर्त्तरि ॥

उत्क्षेपणम् । न । व्यजने । धान्यमर्द्दन-

वस्तुनि । षोडशपणे । उद्धने ।

ऊर्द्ध्वदेशसंयोगहेतौ । ऊर्द्ध्वक्षेपे । अ-

धःस्थितस्य वस्तुन ऊर्द्ध्वनयने । उत्

ऊर्द्ध्वक्षेपणम् ।

उत्खला । स्त्री । मुरानामगन्धद्रव्ये । ता-

लपर्ण्याम् ।

उत्खातः । त्रि । उन्मूलिते । उखाडा

इतिभाषा ।

उत्खातकेलिः । स्त्री । पङ्कक्रीडायाम् ।

यथा। उत्खातकेलिःशृङ्गाद्यैर्वप्रक्रीडामिश्यते इतिशब्दार्णवः ॥

उत्तः। त्रि। आर्द्रवस्तुनि। क्लिन्ने। भीजा इतिभाषा ॥ उनत्तिस्म। उन्दीक्लेदने। अकर्मकत्वात्कर्त्तरिक्तः। नुदविदेति मतेनत्वाभावः ॥

उत्तंसः। पुं। कर्णपूरे। कर्णाभरणे। शेखरे। शिरोभूषणे। उत्तंसयति उत्तंस्यतेनेनवा। तसिः भूषार्थः। पचाद्यच्। हलश्चेति घञ्वा ॥

उत्तप्तः। त्रि। सन्तप्ते॥ परिशुते। न। शुष्कमांसे। उत्तप्यतेस्म। तप०। क्तः॥ चञ्चले॥

उत्तब्धः। त्रि। उत्तम्भिते॥ उत् ऊर्द्धं स्तब्धः॥

उत्तभितम्। त्रि। उन्नमिते॥

उत्तमः। त्रि। उत्कृष्टे। अनुत्तमे। वरेण्ये॥ पुं। प्रियव्रतराजः पुत्रे तृतीयमनौ॥ वैशिकाख्यनायके॥ अतिशयेनउत्कृष्टः। उत्कृष्टार्थउत्शब्दात्तमप्। द्रव्यप्रकर्षार्थत्वान्नाम्। यद्वा। उत्ताम्यति। तमु। अच्॥ उत्तम्यतेवा। घञ्। नोदात्तेतिनवृद्धिः॥

उत्तमःश्लोकः। त्रि। पुण्ययशसि। श्रीहरौ॥ उद्गच्छतितमोयस्मात्सउत्तमाः। उत्तमाःश्लोकायशोयस्य।



उत्तमफलिनी। स्त्री। दुग्धिकाख्ये॥

उत्तमर्णः। पुं। ऋणदे। ऋणप्रदातरि। धनस्वामिनि। महाजन इति भाषा॥ उत्तमसृणमस्य। ऋणमाधमर्णे इतिसूत्रे आधमर्ण्यशब्देनव्यवहारविशेषो लक्ष्यते। तेनोत्तमर्णोपिसिध्यति। लक्षणायान्तु धारैकत्तमर्णइतिनिर्देशोलिङ्गम्। देवर्षिपितृणे॥

उत्तमश्लोकः। त्रि। पुण्ययशसि॥

उत्तमसङ्ग्रहः। पुं। सम्यक्सङ्ग्रहणे। निर्जने परभार्ययासह केशाकेशिपरस्पराश्लिङ्गनसहासनादिरूपमिथुनीभावे। इतिमिताक्षरा।

उत्तमसाहसः। पुं। दण्डविशेषे। साशीतिपणसाहस्रे। साशीतिपणसाहस्रो दण्डउत्तमसाहसः। इति याज्ञवल्क्योक्तेः। सहस्रपणमिते। यथाह मनुः। पणानांद्वेशतेसार्द्धे प्रथमःसाहसःस्मृतः। मध्यमः पञ्चविज्ञेयःसहस्रं त्वेवचोत्तम इति।

उत्तमा। स्त्री। उत्कृष्टायां नार्य्याम्। वरारोहायाम्॥ दुग्धिकौषधौ।स्त्रीयादिनायिकाप्रभेदे। अहितकारिण्यपिप्रिये हितकारिण्याम्।टाप्।

उत्तमाङ्गम्। न। मस्तके। उत्तमञ्चतदङ्गञ्च। सन्महदितिसमासः।

उत्तमाम्भः । न । नवविधासुतुष्टिषु तुष्टिविशेषे । नानुपहत्यभूतानिविषयोपभोगोभवतीति हिंसादोषदर्शनाद्विषयोपरमेसति यातुष्टिः सा पञ्चमी, उत्तमाम्भउच्यते ।

उत्तमारणी । स्त्री । इन्दीवर्य्याम् ।

उत्तम्भः । पुं । स्वतःफलतोवा तथाऽनर्थानुबन्धित्वशङ्कायाःप्रवृत्तिप्रतिबन्धिकाया विगमे ।

उत्तम्भनम् । न । वर्द्धने । उत्तम्भनम् । उदःस्थास्तम्भोः पूर्वस्य ।

उत्तम्भितः । त्रि । विधृते । उत्तम्भितः ।

उत्तरम् । न । प्रतिवाक्ये । बदल इति भाषाप्रसिद्धेप्रश्नस्य भञ्जने । प्रश्नस्त्वधियापृच्छा तस्यभञ्जनमुत्तरम् । उत्तीर्यते निस्तीर्यते मङ्क्ताभियोगोऽनेन । तस्यस्वरूपम् । पक्षस्यव्यापकं सारमसन्दिग्धमनाकुलम् । अव्याख्यागम्यमित्येवमुत्तरं तद्विदोविदुरिति । तस्यभेदाः । मिथ्यासम्प्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा । प्राङ्न्यायश्चोत्तराःप्रोक्ताश्चत्वारः शास्त्रवेदिभिः । इति नारदः । कात्यायनेनापिव्यवहारविषये चतुर्विधमुत्तरमुक्तम् । सत्यंमिथ्योत्तरञ्चैव प्रत्यवस्कन्दनंतथा । पूर्वन्याय विधिश्चैवमुत्तरंस्याच्चतुर्विधमिति ॥ सिद्धान्तानुकूलतर्कोपन्यासे । उत्तरणम् । रुद्रेऽरम् । पुं । सदाशिवे । हरौ । संसारसागरादुत्तारयतीति व्युत्पत्तेः । विराटराजसुते । त्रि । ऊर्द्ध्वे । उदीच्ये । प्रवरे । श्रेष्ठे । अनन्तरे । दिव्ये । वामभागे । उत्तरति । तृप्तवनंतरणयोः । पचाद्यच् । यदा । अतिशयेनोन्नतः । तरप् । द्रव्यप्रकर्षत्वान्नामुः ।

उत्तरकालः । पुं । भविष्यत्काले । गौणकाले । यथा । एवमागामियागीयमुख्यकालादधस्तनः । स्वकालादुत्तरोगौणःकालःपूर्वस्यकर्मण इति हरिहरपद्धतिः ।

उत्तरकुरुः । पुं । जम्बुद्वीपस्यनववर्षान्तर्गतवर्षविशेषे । रम्यकस्योत्तरं वर्षं तस्यैवान्तर्हिरण्मयम् । उत्तराः कुरवश्चैवयथावै भारतंतथा । उत्तरं मेरोः ।

उत्तरकोशला । स्त्री । अयोध्यायाम् । रामपुरि । साकेते । अवधपुरी इतिभाषा ।

उत्तरक्रिया । स्त्री । अन्तिमक्रियायाम् । सांवत्सरिकश्राद्धादिपित्र्यक्रियायाम् । यथा । प्रेतेपितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्तेयाः क्रि

उत्तर

याःपित्र्याःप्रोच्यन्तेतान्दमोत्तरा इति विष्णुपुराणम् ।

उत्तरङ्गम् । न । द्वारोर्द्ध्वकदारुणि । उत्तरतरङ्गे ।

उत्तरच्छदः । पुं । शय्याया उपर्यास्तरणवस्त्रे । निचोले ।

उत्तरणम् । न । नद्यादिपारगमने । उत्तरणा इतिभाषा ।

उत्तरतः । अ । उत्तरादित्यर्थे । दिग्देशकालेष्ववाच्ये । दक्षिणोत्तराभ्यामतसुच् । स्वार्थे । उत्तरतोवसन्त्याग्नतीरमणीयंवा ।

उत्तरपक्षः । पुं । विचारसिद्धान्ते । समाधाने । कृतान्ते । समाधौ । सिद्धान्तानुकूलतर्कोपन्यासे । उत्तरजवाब इतिभाषा ।

उत्तरपादः । पुं । चतुष्पाद्व्यवहारान्तर्गतद्वितीयपादे । उत्तरे ।

उत्तरपूर्वा । स्त्री । ईशानकोणे । उत्तरस्याः पूर्वस्याश्चदिशोरन्तरालम् । दिङ्नामान्यन्तराल इतिसमासः ।

उत्तरफल्गुनी । स्त्री । द्वादशेनक्षत्रे । अस्याःस्वरूपम् दक्षिणोत्तरमिलिततारकाद्वयम् । पर्यङ्करूपंतारकाद्वयञ्च । अस्यांजातस्यफलम् दाता दयालुः स्वजने सुशीलो । विशालकीर्त्तिः सुमतिः प्रधानः । धीरोनरो

उत्तर

ऽत्यन्तमृदुस्वभावः स्यादुत्तराफाल्गुनिकाप्रसूतिरिति ।

उत्तरफाल्गुनी । स्त्री । अर्यमदेवायाम् । उत्तरफल्गुन्याम् ।

उत्तरभाद्रपत् । स्त्री । उत्तरभाद्रपदायाम् ।

उत्तरभाद्रपदा । स्त्री । अहिर्बुध्न्यदेवतायाम् । प्रौष्ठपदायाम् । अस्याःस्वरूपम् । उत्तरेसुमुखिभारसूर्तिभृत्युग्ममिन्दुमिलितेदितारके । नीलचामरकचेन्दयुग्मते लोचनाञ्चलकलाः पताविता इति कालिदासः । पर्यङ्करूपमष्टतारात्मकमितिदीपिका । अस्यांजातस्यफलम् । धनी कुलीनः कुशलः क्रियावान् भूपाश्रितोन्यायबलावलम्बी । सत्कर्मकर्त्ता निजबन्धुभक्तो यस्योत्तराभाद्रपदाप्रसूतः इति ।

उत्तरमीमांसा । स्त्री । ब्रह्ममीमांसायाम् ।

उत्तरवादी । त्रि । उत्तरस्यवक्ता । आसामी इतिभाषा ।

उत्तरसाक्षी । त्रि । स्वपक्षसम्बन्धिसाक्ष्येपरिभाषता साक्षिणां यःस्वयंशृणोतिअर्थिनाश्राव्यतेवा सश्रुत्यर्थः । तथाच नारदः । साक्षिणामपियःसाक्ष्यंस्वपक्षंपरिभाषताम् । श्रवणाच्छ्रावणाद्वापिससाक्ष्युत्तरसंज्ञकइति ।

॥ परसाखी इतिगौड भाषा ॥

उत्तरसाधकः । पुं । साधकसहाये । स हकारिणि ॥

उत्तरा । अ । उत्तराहि अर्थे । उत्तराश्चेति पचेआच् ॥

उत्तरा । स्त्री । उदीच्यान्दिशि । कौबेर्याम् । उत्तरफाल्गुन्याम् ॥ परीक्षिन्मातरि । वैराट्याम् । उत् ऊर्द्ध तरत्यत्र । तृ० । ऋदोरप् ॥

उत्तरात् । अ । दिशि । देशे ॥ काले । उत्तरात् वसति आगतो रमणीयंवा । उत्तराधरदक्षिणादातिरितिस्वार्थे आतिः ॥

उत्तराधिकारी । त्रि । प्रथमाधिकारिणः पश्चादधिकारिणि । दायादे । अंसी इति भाषा ॥

उत्तरापथजन्मा । पुं । जातिविशेषे । यथा । उत्तरापथजन्मानःकीर्त्तयिष्यामितानपि । यौनकाम्बोजगान्धाराः किरातावर्बरैःसह । एतेपापकृतस्तात्चरन्तिपृथिवीमिमामिति ॥

उत्तरापोशानम् । न । हस्तावसेचने ॥

उत्तराभासः । पुं । दुष्टोत्तरे ॥ तथाच कात्यायनः।प्रकृतेनस्वसम्बन्धमप्रत्युत्पमतिभूरिच । पश्चैकदेशव्याप्येषतमनैवोत्तरं भवेदिति ॥

उत्तरायणम् । न । माघादिषण्मासात्मकेऽर्कस्योत्तरदिग्गमनकाले । देवानामहनि ॥ माघादिमासयुग्मैस्तु ऋतवःषट्क्रमादितः । उत्तरायणमाद्यैस्तैस्त्रिभिःस्याद्दक्षिणायनमित्युक्तेः ॥ मकरसंक्रान्तौ ॥

उत्तराशापतिः । पुं । कुबेरे ॥

उत्तराषाढा । स्त्री । एकविंशतितमे नक्षत्रे । वैश्वदेवे ॥ अस्यारूपम् । सूर्पाकृतितारचतुष्टयात्मकमिति- कालिदासः । गजदन्तवदष्टतारामयमितिदीपिकाटीका ॥ तत्रजातस्यफलम् । दाताद्यावान्विजयी विनीतःसत्कर्मचेताविभवैःसमेतः । कान्तासुतावाप्तसुखोनितान्तंवैश्वेसुवेशःपुरुषोमनीषीति ॥

उत्तरासङ्गः । पुं । प्रावारे । उत्तरीयांशुके । उत्तरेऊर्द्धभागे आसज्यते । पश्चसङ्गे । घञ् ॥

उत्तराहि । अ । उत्तरादर्थे । अस्तातिविषये उत्तराञ्चेत्याहिप्रत्ययः दूरे चेदयधिमान । उत्तराहि वसति रमणीयंवा ॥

उत्तरीयम् । न । संव्याने । उत्तरासङ्गे [illegible] तवस्त्रे । उत्तरेऽस्मिन् देहभागे भवम् । गहादित्वाच्छः ॥ यथावद्योपवीतं स्यादार्यतेयद्विलोमसैः । तथासन्धार्यतेयत्नादुत्तराच्छा

इतंशुभमितिस्मृतिः। एकस्मिन्द्वासेभ-
वति तस्योत्तरार्द्धेन प्रच्छादयतीति
भास्करः। नस्याकर्मणिकच्छुकी।

उत्तरेण। अ। उत्तरदिग्देशकालेषु।
एनबन्यतरस्यामदूरेऽपञ्चम्याः। इति
स्वार्थे एनप्। अदूरेचेदवधिमानवधे-
र्वर्त्तते। उत्तरेण वसति रमणीयेषा।

उत्तरेद्युः। अ। आगामिदिने। उत्त-
रस्मिन्नहनि इत्यर्थे सद्यःपरुदिति उ-
त्तरशब्दादेद्युस् प्रत्ययो निपाति-
तः। [illegible]

उत्तस्तितः। त्रि। उत्क्षिप्ते।

उत्तस्थूः। त्रि। उत्थिते॥

उत्तानः। त्रि। अगभीरे। ऊर्द्ध्वमुखश-
यिते॥ उद्गतस्तानोविस्तारोऽस्मात्॥

उत्तानकः। पुं। उच्चटायाम्।

उत्तानपत्रकः। पुं। रक्तैरण्डे।

उत्तानपादः। पुं। स्वायम्भुवमनोःपुत्रे
नृपतिविशेषे।

उत्तानपादजः। पुं। उत्तानपादस्यपुत्रे।
ज्योतीरथे। ग्रहाधारे। ध्रुवे॥

उत्तानशयः। त्रि। अतिशिशौ। डिम्भे
। स्तनपे। उत्तानःशेते। शीङ्स्व-
प्ने। पार्श्वादिषूपसंख्यानमितिच।

उत्तानशया। स्त्री। स्तनन्धयाम्। टा
प्।

उत्तापः। पुं। उष्णतायाम्। [illegible]।



: सन्तापे। उत्तापयति। तपेर्हेतुमति
पचाद्यच्॥

उत्तारः। त्रि। वहिर्निर्गतनेत्रे। मत्त-
त्ति। उद्भटे। उद्धारे।

उत्तारी। त्रि। अपटौ। इतिभूरिप्रयो-
गः। [illegible]

उत्तालः। त्रि। उत्कटे। श्रेष्ठे। विकरा-
ले। प्रवग्मे। त्वरिते। उन्नते।

उत्तिष्ठहोमः। पुं। वषट्कारप्रयोगा-
न्ते। याज्यापुरोनुवाक्यान्ते।

उत्तिष्ठमानः। त्रि। वर्द्धमाने।

उत्तीर्णः। त्रि। मुक्ते। पारगते।

उत्तुङ्गः। त्रि। उच्चे। उन्नते।

उत्तुण्डितः। त्रि। अनिर्गतशस्यमये।

उत्तुपः। पुं। भृष्टधान्ये। खाजिके। खा-
जोतु। खोय इतिभाषा॥

उत्तेजना। स्त्री। प्रेरणायाम्। व्यग्रकर-
णे।

उत्तेजितम्। न। अश्वचतुर्थगतौ। रे-
चिते। उत्तेजितंमध्यवेगयोर्नर्तनंय-
थस्त्रगयेरयुक्तेः। त्रि। प्रेरिते॥

उत्तेरितम्। न। अश्वपञ्चमगतौ। आ-
स्कन्दिते। उपकण्ठे। उत्तेरितोऽति-
वेगाद्धोनश्चणोतिनयत्यति।

उत्तोलनम्। न। ऊर्द्ध्वनयने। उठावना
इतिभाषा।

उत्तोलितः। त्रि। उदस्ते।

उत्क्षिप्तः । त्रि । ऊर्द्ध्वक्षिप्ते । परित्यक्ते ॥

उत्त्रासः । पुं । भये ॥

उत्थानम् । न । उद्यमे ॥ तन्त्रे । पौरुषे ॥ पुस्तके । रणे । प्राङ्गणे । उद्गमे । हर्षे । मलरोगे । मलोत्सर्गे । वास्तवन्ते । चैत्ये । सन्निविष्टोद्गमे ॥ उत्थीयतेऽत्र । ष्ठागतिनिवृत्तौ । अधिकरणे भावे वा ल्युट् ॥

उत्थानैकादशी । स्त्री । कार्त्तिकशुक्लैकादश्याम् ॥

उत्थापनम् । न । उत्तोलने ॥

उत्थितः । त्रि । उत्पन्ने ॥ मोद्यते । वृद्धिमति ॥ उत्तिष्ठतिस्म । ष्ठा० गत्यर्थेति क्तः ॥

उत्थिताङ्गुलिः । पुं । चपेटे । विस्तृताङ्गुलिकरतले । चपेटा थाप इतिभाषा ।

उत्पतः । पुं । खगे । पक्षिणि ।

उत्पतनम् । न । उत्पत्तौ । ऊर्द्ध्वगमने । कूर्द्दने ॥

उत्पतितः । त्रि । उद्गते । उत्पन्ने । उच्छ्रिते ॥

उत्पतिता । त्रि । ऊर्द्ध्वगमनशीले । उत्पतिष्णौ । उत्पतति तच्छील । पत्लृगतौ । तृन् ।

उत्पतिष्णुः । त्रि समुद्गते । उत्पतितरि । ऊर्द्ध्वपतनशीले । उत्पतति । पत्लृगतौ । अलङ्कृञिती ष्णुच् ।

उत्पत्तिः । स्त्री । देहसम्बन्धे । जन्मनि ॥ आविर्भावे । सत्कार्य्यवादिन्हि मृत्पिण्डे विद्यमानस्य घटस्याविर्भाव एवोत्पत्तिर्यथा तथैव कारणात्मना विद्यमानानां तत्त्वानामाविर्भाव एवोत्पत्तिर्विवक्षिता । उत्पदनम् । पदगतौ । क्तिन् ।

उत्पत्तिक्रमः । पुं । उत्पत्तेरनुक्रमे ॥ स यथा । आत्मन आकाशः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्सर्वाणि भूतानीति श्रुतिप्रसिद्धः ॥

उत्पत्तिमत् । त्रि । अनित्यवस्तुनि ॥

उत्पत्तिविधिः । पुं । कर्मस्वरूपमात्रबोधके विधौ ॥ यथा । आग्नेयोऽष्टाकपालोभवति । यथावा । अग्निहोत्रंजुहोतीति । अत्र च विधौ कर्मणः कर्त्तृत्वेनान्वयः । अग्निहोत्रहोमेनेष्टम्भावयेदिति । ननुयागस्य द्वे रूपे द्रव्यं देवताच । तयाच रूपाश्रवणे अग्निहोत्रंजुहोतीतिकथमुत्पत्तिविधिः अग्निहोत्र शब्दस्य तत्प्रख्यन्यायेन नामधेयत्वादितिचेन्न । रूपाश्रवणेप्यस्योत्पत्तिविधित्वात् । अन्यथारूपश्रवणाद्दैप्राजुहोतीत्य

यमे वोत्पत्तिविधिः स्यात् । तथाचा ग्निहोत्रं जुहोतीतिवाक्यमनर्थकं स्यात् ।

उत्पत्तिव्युत्क्रमः । पुं । उत्पत्तेर्विपर्यस्तक्रमे । अयमर्थः । पृथिवीगन्धतन्मात्रात्मिका रसतन्मात्रात्मिकाप्मात्रमभवति । आपश्चता रूपतन्मात्रात्मकतेजोमात्रं भवन्ति । तच्च तेजः स्पर्शतन्मात्रात्मकवायुमात्रं भवति । सच वायुः शब्दतन्मात्रात्मकाकाशमात्रं भवति । सचाऽऽकाशः स्वकारणभूताऽज्ञानोपहितचैतन्यमात्रं भवतीति ॥

उत्पन्नः । त्रि । प्राप्तजन्मनि । उद्भूते । जाते । उत्पद्यतेस्म । पद° । क्त । रदाभ्यामिति नत्वम् ॥

उत्पलम् । न । इन्दीवरे । नीलकमले । कुष्ठौषधौ । जलजपुष्पमात्रे । कुवलये ॥ जलजपुष्पविशेषे । कोंजि इतिभाषा ॥ त्रि । मांसशून्ये ॥ उत्पलति । पलगतौ । पचाद्यच् ॥

उत्पलगन्धिकम् । न । चन्दनविशेषे । कृष्णताम्रे । गोशीर्षे ।

उत्पलपत्रम् । न । कुवलयदले । स्त्री नखक्षते । तिलके ॥

उत्पलशारिवा । स्त्री । अनन्तायाम् । श्यामालतायाम् । उत्पलमस्यस्याः



उत्पलाकारपुष्पत्वात् । अर्शआद्यच ॥ यद्वा । उत्पलं पलमनया । उत्पला चासौशारिवाच ॥

उत्पलाक्षी । स्त्री । सुपर्णाख्यतीर्थदेव्याम् ॥

उत्पलिनी । स्त्री । कैरविण्याम् । छोटीकोकी इतिभाषा । पद्मसमूहे । उत्पलाकरे । उत्पलानि सन्त्यस्या । म् । पुष्करादिभ्योदेशे इति इनिः ॥

उत्पली । स्त्री । तुषचर्मण्याम् ।

उत्पटः । पुं । वृक्षनिर्यासे ॥ वैदिकोयम् ॥

उत्पवनम् । न । कुशपिण्डकायां पवित्रमध्येन जलादेरुत्क्षेपणे ॥

उत्पश्यः । त्रि । उन्मुखे । ऊर्द्ध्वदृष्टिविशिष्टे ॥

उत्पातः । पुं । योगविशेषे । यथा । रवौविशाखा सोमे पूर्वाषाढा भौमे धनिष्ठा बुधेरेवती गुरौरोहिणी शुक्रेपुष्या शनावुत्तराफाल्गुनी चेदुत्पातयोगः॥

उत्पाटनम् । न । उन्मूलने । उपाडना इति भाषा ।

उत्पाटिका । स्त्री । वृक्षस्थनीरसायां त्वचि ॥ वैदिकोयम् ॥

उत्पाटितः । त्रि । उन्मूलिते । उपाडा इतिभाषा ॥

उत्पातः

लैथैःमयुक्तानतेषांभवति दुरितपा-
कोदच्चिवाभिस्वद्दुःराष्ट्रेयस्यानग्निः
मदीप्यते दीप्यतेचनेन्धनवान् ।मनु-
जेश्वरस्यपीडा तस्यचराष्ट्रस्यविज्ञेया
॥ जलमांसार्द्रज्वलने न्पतिवधः प्रह
रणेरणोरौद्रः ।सैन्यग्रामपुरेषुच ना
शोवह्नेर्भयंकुरुते ॥ प्रासादभवनतो
रणाकेत्वादिषुचानलेनदग्धेषु । त
डितावापरमासात् परचक्रस्यागमो
नियमात् ॥ धूमोनग्निसमुत्थोरज-
स्तमसांजंमहाभयदम् । व्यभ्रेनि
श्युडुनाशोदर्शनमपिचाह्निदोषक-
रम् ॥ नगरचतुष्पादण्डजमनुजा
नांभयकरंज्वलनमाहुः । धूमाग्नि
विस्फुलिङ्गैः शय्याम्बरकेशगैर्मृत्युः ॥
आयुधज्वलनसर्पणस्वनाः कोशनि-
र्गमनवेपनानिवा । वैकृतानियदि
वायुधेषराणामाशुरौद्ररणसङ्कुलंवदे
त ॥ मन्त्रैराग्नेयैः क्षीरवृक्षात्समि
ड्भिर्होतव्योग्निःसर्षपैः सर्पिषाच ।
अग्न्यादीनां वैकृते शान्तिरेवंदेय-
ञ्चास्मिन् काञ्चनंब्राह्मणेभ्यः ॥ शा
खाभङ्गेऽकस्माद्वृक्षाणांनिर्दिशेद्रणो
द्योगम् । हसनेदेशभ्रंशंरुदितेच-
व्याधिबाहुल्यम् ॥ राष्ट्रविभेदस्त्वन्
तौ बालवधोतीवकुसुमितेबाले । वृ
क्षात्क्षीरस्रावेसर्वद्रव्यक्षयोभवति

उत्पातः

॥ मद्ये वाहननाशःसङ्ग्रामः शोणिते
मधुनि रोगः । स्नेहेदुर्भिक्षभयंमह
द्भयंनिस्सृतेसलिले ॥ शुष्कविरोहे
वीर्यान्नसङ्क्षयः शोषणेचविरूढाना
म् । पतितानामुत्थानेस्वयमभयंदैव
जनितञ्च ॥ पूजितवृक्षेह्यन्ततोकुसु
मफलं नृपवधायनिर्दिष्टम् । धूमस्त
स्मिन्ज्वालायवाभवेन्नृपवधायैव ॥
सर्पत्सुतरुषुजल्पत्सुवापिजनसङ्क्ष
योविनिर्दिष्टः । वृक्षाणांवैकृत्येदश
भिर्मासैःफलविपाकः ॥ स्रग्गन्धधू
पाम्बरपूजितस्यछत्रंविधायोपरि पा
दपस्य । कृत्वाशिवं रुद्रमपोनका
र्यारुद्रेभ्यइत्यत्रपडेवहोमाः ॥ पाय
सेनमधुनाच भोजयेद्ब्राह्मणान्घृत
युतेनभूपतिः । मेदिनीनिगदितात्र
दक्षिणावैकृतेतरुकृते द्विजातिभिः
॥ नालेऽब्जयवादीनामेकस्मिन्द्वि
त्रिसम्भवोमरणम् । कथयतितदधि
पतीनांयमलंजातंच कुसुमफलम् ॥
अतिवृद्धिः सस्यानांनानाफलकुसुम
सम्भवोवृक्षे । भवतिहियद्येकस्मिन्
परचक्रस्यागमोनियमात् ॥ अर्धेन
यदातैलं भवतितिलानामतैलता-
वास्यात् । अन्नस्यचवैरस्यंदातुर्विद्या
द्भयंसुमहत् ॥ विकृतकुसुमफलं
याग्रामाद्यवापुराद्बहिष्कार्यम् ।

सौम्योन्नचरुः कार्योनिर्वास्योवापशुः शान्त्यै ॥ सूर्येषट्टद्वाविकृतिंप्रदेयंत तत्त्वेनसेयंपद्यमंडिलेर्थ्यः । तंस्यैवम ध्येचरुमर्चंभीसंक्रत्वानदोषंसमुपै- तितज्ज्ञम् ॥ दुर्भिक्षमनावृष्टावति वृष्टौक्षुद्भयंपरभयञ्च । रोगोह्यन्तत्तु भवायांन्तप्रतिवधोऽनभ्रजातायाम् ॥ शीतोष्णविपर्यासेनोसम्यगृतुषुस- म्प्रवृत्तेषु । षण्मासाद्राष्ट्रभयंरोगभ यंदैवजनितञ्च ॥ अन्यर्त्तौसप्ताहंप्र वन्धवर्षेप्रधानन्तपमरणम्।रक्तेशस्त्रो द्योगोमांसास्थिवसादिभिर्मरकः ॥ ॥ धान्यहिरण्यत्वक्फलकुसुमाद्यैर्व र्षितेभयंविद्यात् । अङ्गारपांसुवर्षे विनाशमायातितन्नगरम् ॥ उपला विनाजलधरैर्विकृतावाप्राणिनोय दावृष्टाः । छिद्रंवाप्यतिवृष्टौसस्यानां मीतिसञ्जननम् ॥ यद्यमलेर्कैछाया नदृश्यते दृश्यतेप्रतीपावा । देशस्य तदासुमहद्भयमायातंविनिर्देश्यम् ॥ व्यभ्रेनभसीन्द्रधनुर्दिवायदादृश्यते थवारात्रौ । प्राच्यामपरस्यां वातदा भवेत्क्षुद्भयंसुमहत् ॥ सूर्येन्दुपर्ज न्यसमीरणानां योगः स्मृतोवृष्टिवि कारकाले । धान्यार्कगोकाञ्चनद क्षिणाश्च देयास्ततः शान्तिमुपैतिपा पम् ॥ अपसव्यंनदीनां नगराद्वि

रोधशून्यतांकुरुते । शोषाश्चाशोषा णामन्येषांवाह्रदादीनाम् ॥ स्नेहा सृङ्मांसवहाः सङ्कुलकलुषाः प्रती पगाश्चापि । परचक्रस्यागमनंनद्यः कथयन्तिषण्मासात् ॥ ज्वालाधूमक्वा थाः* रुदितोत्क्रुष्टानिचैवकूपानाम् । गीतप्रजल्पितानिचजनमरकायोप दिष्टानि ॥ सलिलोत्पत्तिरखाते- गन्धरसविपर्ययेचतोयानाम् । सलि लाशयानां विकृतौ महद्भयं तत्रशा- न्तिमिमाम् ॥ सलिलविकारेकुर्यात्पू जांवरुणस्य वारुणैर्मन्त्रैः । तैरेवचज पहोमंशममेवं पापमुपयाति ॥ प्र- सवविकारेस्त्रीणां द्वित्रिचतुष्प्रभृति सम्प्रसूतौवा । हीनातिरिक्तकाले- चदेशकुलसंक्षयो भवति ॥ वड- वोष्ट्रमहिषगोहस्तिनीषुयमलोद्भ- वेमरणमेषाम् । षण्मासात् सूति फलंशान्तोश्लोकौचगर्गोक्तौ ॥ ना- र्यःपरस्यविषयेत्यक्तव्यास्ताहितार्थि ना । तर्पयेच्चद्विजान्कामैः शान्ति- ञ्चैवात्रकारयेत् ॥ १ ॥ चतुष्पदाःस्व यूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनंयूथमन्यथातुविनाशयेत् ॥ २ ॥ परयोनावभिगमनं भवतिति- रश्चामसाधुधेनूनाम् । उक्षाणोवा- न्योन्यं पिबतिश्वावासुरभिपुषम् ॥

[* क्वाथः फेनः ।]

उत्पात:

मासत्रये वा विधात्तस्मिन्निः संशयं प-
रागमनम्। तत्र प्रतिघाताय तैः श्लो-
कौ गर्गेण निर्दिष्टौ ॥ त्यागो विवास-
नं दानं तत्सद्यः शुभं भवेत्। तर्पये
द्ब्राह्मणांश्च जपं होमञ्च कारयेत् ॥
१ ॥ स्थाली पाकेन धातारं पशुना-
च पुरोहितः। प्राजापत्येन मन्त्रेण
जेदत्त्वन्नं दक्षिणाम् ॥ २ ॥ यानं वाह
वियुक्तं यदि गच्छेन्न वजेद्वा प्रयुतम्।
राष्ट्रभयं भवति तदा चक्राणां सादे भङ्गे
च ॥ अनभिहततूर्यनादः शब्दो वाता
डितेषु यदि न स्यात्। स्युत्पत्तौ वा तेषां
परागमो नृपतिमरणं वा ॥ गीतरव
तूर्यशब्दानभसि यदा वाचरस्थिरान्य
त्वम्। मृत्युस्तदा गदा वा विस्वरतू-
र्ये पराभिभवः ॥ रोलाङ्गलयोः सङ्गे
दर्वीशूर्पाद्युपस्करविकारे। क्रोष्टुक
नादे च तथा शस्त्रभयं मुनिवचश्चेद-
म् ॥ वायव्येष्वेवं नृपतिर्वायुं सक्तुभि-
रर्चयेत्। आवायोरिति पञ्चर्चो जप्त
व्याः प्रयतैर्द्विजैः ॥ ब्राह्मणान् परमान्ने
न दक्षिणाभिस्तर्पयेत्। बह्वन्नद-
क्षिणो होमः कर्त्तव्यः प्रयत्नतः ॥ पुर
पक्षिणो वनचरा वन्या वा निर्भया विश
न्ति पुरम्। नक्तं वा दिवसचराः क्षपा
चरा वा चरन्त्यहनि ॥ सन्ध्याद्वयेपि
मण्डलमावध्नन्तो मृगा विहङ्गा वा।

उत्पात: -

दीप्तायां दिश्यथवा क्रोशन्तः संहता-
भयदाः ॥ श्वेनाः प्ररुदन्तश्च द्वारे क्रो-
शन्ति जम्बुकादीप्ताः। प्रविशेन्नरेन्द्रभ
वने कपोतकः कौशिको यदि वा ॥ कु
क्कुटरुतं प्रदोषे हेमन्तादौ च कोकि
लालापाः। प्रतिलोममण्डलचराः
श्येनाद्याश्चाम्बरे भयदाः ॥ गृहचैत्य-
तोरणेषु द्वारेषु च पक्षिसङ्घसम्पातः।
मधुवल्मीकाम्भोरुहसमुद्भवश्चापि ना
शाय ॥ श्वभिरस्थिशवावयवप्रवेशनं
मन्दिरेषु मरकाय। पशुशस्त्रव्याहा
रेनृपमृत्युं मुनिवचश्चेदम् ॥ मृग
पक्षिविकारेषु कुर्याद्धोमान् सदक्षि-
णान्। देवाः कपोत इति च जप्तव्याः प
श्चभिर्द्विजैः ॥ १ ॥ सुदेवा इति चैकेन-
देया गावश्च दक्षिणाः। जपेच्छाकुन
सूक्तं वा मनो वेदशिरांसि च ॥ २ ॥
शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभ-
ङ्गेषु। तद्वत्कपाटतोरणकेतूनां नरप
तेर्मरणम् ॥ सन्ध्याद्वयस्य दीप्तिर्धूमो
त्पत्तिर्वा काननेऽनग्नौ। छिद्राभावे भू
मेर्दरणं कम्पश्च भयकारी ॥ पाषण्डा
नां नास्तिकानाञ्च भक्तः साध्वाचारप्रो
ज्झितः क्रोधशीलः। ईर्ष्युः क्रूरो विग्रह
सक्तचेता यस्मिन् राजा तस्य देशस्य ना
शः ॥ प्रचरन्ति छिन्धिभिन्धीत्यायुधका
द्यास्यपाणयो बालाः। निगदन्त. प्रह-

न्तेतनापिभयं भवत्याशु ॥ अङ्गार गैरिकाद्यैर्विकृतप्रेताभिलेखनं यस्मिन् । नायकश्चिन्नितमथवाद्येच्च यंयातिनचिरेण । लूतापटाङ्गभवनसन्ध्ययोः पूजितं कलहयुताम् । नित्योच्छिष्टस्त्रीकञ्चयद्गृहं तत्क्षयं याति ॥ दृष्टेषुयातुधानेषुनिर्दिशेन्मरकमाशुसंप्राप्तम् । प्रतिघातायैतेषांगर्गःशान्तिञ्चकारेमाम् ॥ महाशान्त्योथवलयो भोज्यानिसुमहान्तिच । कारयेतमहेन्द्रञ्चमाहेन्द्रीञ्चसमर्चयेत् ॥*॥ अथयत्रकालेउत्पातादृष्टाविफलाभवन्तितत्प्रदर्शनार्थमाह ॥ नरपतिदेशविनाशेकेतोरुदयेथवाग्रहेर्केन्दो ॥ उत्पातानांप्रभवःस्वर्तुभवश्चाप्यदोषाय ॥ येचनदोषान्जनयन्त्युत्पातास्तांन्दतुस्वभावकृतान् । ऋषिपुत्रकृतैःश्लोकैर्विद्यादेतैःसमासोक्तैः ॥*॥ तत्रवसन्ते ॥ वज्राशनिमहीकम्पसन्ध्यानिर्घातनिःस्वनाः । परिवेशरजोधूमरक्तार्कास्तमयोदयाः ॥ द्रुमेभ्योन्नरसस्नेहबहुपुष्पफलोद्गमाः । गोपक्षिमदवृद्धिश्चशिवायमधुमाधवे ॥*॥ ग्रीष्मे ॥ तारोल्कापातकलुषंकपिलार्केन्दुमण्डलम् । अनग्निज्वलनंस्फोटधूमरेणुनिलाहतम् ॥ रक्तपद्मारुणासन्ध्यानभः

क्षुब्धार्णवोपमम् । सरितांचाम्बुसंशोषंदृष्ट्वाग्रीष्मेशुभंवदेत् ॥*॥ वर्षासु ॥ शक्रायुधपरिवेशौविद्युच्छुष्कविरोहणम् । कम्पोद्वर्त्तनवैकृत्यंरसनं दरणंच्छिदे ॥ सरोनद्युदपानानांवृद्ध्यूर्द्ध्वतरणप्लवाः । शरणंचाद्रिगेहानांवर्षासुनभयावहम् ॥*॥ शरदि ॥ दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् । ग्रहनक्षत्रताराणांदर्शनञ्चदिवाम्बरे ॥ गीतवादित्रनिर्घोषा वनपर्वतसानुषु । सस्यवृद्धिरपांहानिरपापाः शरदिस्मृताः ॥*॥ हेमन्ते ॥ शीतानिलतुषारत्वंनर्दनंमृगपक्षिणाम् । रक्षोयक्षादिसत्त्वानांदर्शनंवागमानुषी ॥ दिशोधूमान्धकाराश्च सनभोवनपर्वताः । उच्चैःसूर्योदयास्तौचहेमन्तेशोभनाःस्मृताः ॥*॥ शिशिरे ॥ हिमपाताऽनिलोत्पाताविरूपाद्भुतदर्शनम् । कृष्णाञ्जनाभमाकाशंतारोल्कापातपिञ्जरम् ॥ चित्रगर्भोद्भवाः स्त्रीषुगोजाश्वमृगपक्षिषु । पत्राङ्कुरलतानाञ्चविकाराः शिशिरेशुभाः ॥*॥ अत्रविशेषमाह ॥ ऋतुस्वभावजाह्येतेदृष्टाःस्वर्तौशुभप्रदाः । ऋतोरन्यत्रचोत्पातादृष्टास्तेचातिदारुणाः ॥ यच्चविशेषेणफलप्रदंभवतितदाह ॥ उन्मत्तानाञ्चया गाथाः शिशूनांयत्र

भावितम् ॥ स्त्रियोयत्रमभाषन्तेतस्य नातिक्रमः ॥ येनकारणेनैतत् सत्यरूपंभवति तत्प्रदर्शनार्थमाह ॥ पूर्वंचरतिदेवेषुपश्चाच्चरतिमानुषान् । नाचोदितावाग्वदति सत्याह्येषासरस्वती ॥ उत्पातशास्त्रस्य प्रभावमाह ॥ उत्पातान् गणितविद्भिर्ज्ञातोपिवृद्धाविख्यातो भवतिनरेन्द्र वल्लभश्च । एतत् तन्मुनिवचनंरहस्य मुत्पात्यज्ञात्वा भवतिनरस्त्रिकालदर्शी ॥ इतिवाराह्यांचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ अकस्मादायाति ॥ उत्पतनम् । पतॢगतौ । घञ् । उत्पतति वा । ज्वलतीतिणः ॥

उत्पातभम् । न । यस्मिन्नक्षत्रेउत्पातः सम्भूतस्तस्मिन् ॥

उत्पादः । पुं । उत्पादने ॥

उत्पादकः । पुं । पशुविशेषे । क्रुञ्चरारातौ । शरभे ॥ त्रि । उत्पादयितरि । जनके ॥ उत्पादयति । मद० । खुल् ॥

उत्पादनम् । न । उत्पन्नकरणे ॥

उत्पादना । स्त्री । क्रियायाम् । भावनायाम् ॥

उत्पादशयनः । पुं । स्त्री । टिट्टिभपक्षिणि ॥

उत्पादिका । स्त्री । देहिकानामकीटे ॥ पूतिकायाम् ॥ हिलमोचिकायाम् ॥

उत्पाद्यः । पुं । पुरोडाशादिकर्मविशेषे ॥ त्रि । उत्पादितुंयोग्ये ॥

उत्पाली । स्त्री । आरोग्ये । सुस्थतायाम् ॥

उत्पिञ्जलः । त्रि । भृशमाकुले । समुत्पिञ्जे । अतिशयव्याकुले ॥

उत्पित्सुः । त्रि । उत्पतितुमिच्छुः । पततेः सन्नन्तादुप्रत्ययः । सनिमीमेति सादेशः । अत्रलोपोऽभ्यासस्य ॥

उत्प्रासः । पुं । उपहासे ॥ उत्प्रासनम् । असत्यचेष्टयोः असगतिदीर्घादिनेपुणा । घञ् ॥

उत्प्रेक्षा । स्त्री । अनवधाने ॥ काव्यालङ्कारविशेषे ॥ यथा । सम्भावनमथोत्प्रेक्षाप्रकृतस्यसमेनयत् । अस्यार्थः । प्रकृतस्य उपमेयस्यसमेन उपमानेन यत्सम्भावनम् मिथ्यात्वेनवर्णनमिति । उदाहरणम् उन्मेषयोमममसदृशो जातिवैरी निशाया मिन्दो रिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः । नीतः शान्तिंप्रसभमनया वक्त्रकान्त्ये तिहर्षाल्लग्ना मन्ये ललित तनु ते पादयोः पद्मलक्ष्मीः ॥ लिम्पतीवतमोऽङ्गानिवर्षतीवाञ्जनंनभः । असत् पुरुषसेवेवदृष्टिर्निष्फलताङ्गता

द्रु० । यत्नः । स्युट् ॥

उत्सादितः । त्रि । कृतोत्सादने । उद्वर्त्तिते । निर्मांसीकृतशरीरे ॥

उत्सारकः । पुं । द्वारपाले ॥ त्रि । उत्सारणकर्त्तरि ॥

उत्सारणम् । नं । दूरीकरणे ॥ चालने ॥ स्थानान्तरप्रापणे ॥

उत्सारितः । त्रि । अपसारिते ॥

उत्साहः । पुं । उद्यमे । अध्यवसाये । इदं मया कर्त्तव्यमेवेति निश्चयात्मिक बुद्धावृत्तिहेतुभूते ॥ कर्त्तव्यार्थेषु स्थेयसि प्रयत्ने । उत्साहो मन्त्रमूलः स्यादितिनीतिविदां मतम् । प्रभुशक्ति मन्त्रमूलात्तस्मादुत्साहवान्भवेत् ॥ लोकोत्तरेषु कार्येषु स्थेयसि प्रयत्ने ॥ सूत्रे ॥ उत्सहनम् उत्सह्यते अनेन वा । षह० । हलश्चेति घञ् ॥ कर्मस्युकरप्रत्ययः इत्ययमकारको भावो वा उत्साहः ॥ सङ्गीतोक्ते युद्धविशेषे ॥

उत्साहवान् । त्रि । उत्साहविशिष्टे । उत्साहिनि ॥ उत्साहोऽस्यास्ति । यवादिभ्योमतुवन्यतरस्याम् ॥

उत्साहवर्द्धनः । पुं । उद्यमवृद्धौ । वीररसे ॥ उत्साहेन वर्द्धते । वृधु० । अनुदात्तेतश्च हलादेरिति युच् ॥ उत्साहं वर्द्धयतीति वा । ल्युः ॥

उत्साहशक्तिः । स्त्री । राज्ञां शक्तिविशेषे ॥ विक्रमबलमुत्साहशक्तिरित्युक्तेः ।

उत्साही । त्रि । उत्साहवति ॥ सत्सादिभ्योमतुवन्यतरस्यामिति पक्षे इनिः ॥

उत्सिक्तः । त्रि । उद्धते ॥ गर्विते ॥ वर्द्धिते ॥ उद्रिक्ते ॥ उपप्लुते ॥ त्यक्तमर्यादे ॥ उत्पूर्वात् सिचेः क्तः ॥ सिक्ते ।

उत्सिच्यमानः । त्रि । उद्रिच्यमाने । वृद्धिमति ॥

उत्सुकः । त्रि । ईप्सितकर्मोद्यते । इष्टार्थोद्युक्ते ॥ अद्यममगुरुरागमिष्यतीत्युत्कण्ठाविशिष्टे । उत्कण्ठिते ॥ उत् उद्योगं सुवति सौति सुनोति वा । षु प्रसवैश्वर्ययोः । षुञ० । विचिसंज्ञापूर्वकत्वात् गुणाभावः । क्विपि आगमशास्त्रस्यानित्यत्वात्तुगभावो वा । ततः संज्ञायां कन् ॥ यद्वा । उत्सुयति । षूप्रेरणे । मितद्ग्वादित्वाड्डुः । स स्वति क्रियया । कनि केयद्दतिह्रस्वः ॥

उत्सूरः । पुं । दिनावसाने ॥ इतिहेमचन्द्रः ॥

उत्सृष्टः । त्रि । कृतोत्सर्गे । त्यक्ते । विधृते ॥ यथा । आमं शूद्रस्य पक्वान्नं पक्वमुत्सृष्टमुच्यते इति ॥ उत्सृज्यते स्म । सृजवि० । क्तः ॥

ता ॥ उत्प्रेक्षणम् । ईषद्दर्शनाङ्कन-योः । गुरोश्चेत्यः । टाप् ॥

उत्प्रेक्षाव्यञ्जकम् । न । शब्दविशेषे ॥ यथा । मन्येशङ्के ध्रुवंनूनंकिंवा मायोनु वेद्मिच । ननुनानहिजानामि उत्प्रेक्षाव्यञ्जकानिचेति ॥

उत्प्लवनम् । न । उल्लङ्घने । फलाङ्ना इतिभाषा ॥

उत्प्लवा । स्त्री । नौकाभेदे ॥

उत्फालः । पुं । लम्फे ॥

उत्फुल्लः । त्रि । प्रफुल्ले । विकसितेपुष्पे । दलानामन्योन्यविश्लेषे ॥ उत्ताने ॥ न । स्त्रीणांकरणे ॥ उत्फलति । त्रिफला॰ । क्तीतः क्तः । आदितश्चेतीड्भावः । उत्फुल्लसम्फुल्लयोरुपसंख्यानमितिनिष्ठातस्यत्वः ॥

उत्सः । पुं । प्रस्रवणे । पर्वतात्स्रवज्जलस्यपातस्थाने ॥ स्रवज्जले ॥ गिरेरूपरिनिर्झराद्युत्थाम्बुसङ्घे ॥ उनत्तिजलेन । उन्दी॰ । उन्दिगुधिकुषिभ्यश्चेतिसः । किदित्यनुवृत्तेर्नलोपः ॥

उत्सङ्गः । पुं । अङ्के । क्रोडे ॥ त्रि । असङ्गे ॥

उत्सङ्गवर्त्ती । त्रि । क्रोडस्थिते ॥

उत्सत्तिः । स्त्री । उच्छेदे ॥

उत्सन्नः । त्रि । उद्गते ॥ नष्टे ॥

उत्सर्गः । पुं । सामान्ये ॥ सामान्यविधौ ॥ न्याये ॥ त्यागे ॥ दाने ॥ वर्जने ॥ सात्त्विककर्त्तव्यक्रियाविशेषे ॥ नीलोद्वाहादौ ॥ अपानवायोर्व्यापारे ॥ वाह्वृध्यद्दष्टस्यनलवत्त्वे ॥ उत्सर्जनम् उत्सृज्यतेवा । घञ् ॥

उत्सर्जन् । त्रि । शब्दंकुर्वति ॥

उत्सर्जनम् । न । अपवर्जने । विक्षेपिते । दाने । त्यागे ॥ उत्सृज॰ । ल्युट् ॥

उत्सर्पणम् । न । उल्लङ्घने ॥ उत्स्व्यपुरतोगमने ॥

उत्सर्पिणी । स्त्री । जिनानांकालचक्राऽवयवे ॥

उत्सर्पितः । त्रि । उपरिभावंप्रापिते ॥

उत्सर्पी । त्रि । ऊर्द्धंप्रसारिणि ॥

उत्सवः । पुं । नियताह्लादजनकव्यापारे उपनयनविवाहादौ । महे । उद्धवे । उत्सेके ॥ इच्छाप्रसरे ॥ कोपे ॥ उत्सुवति । षूप्रेरणे । पचाद्यच् ॥ यद्वा । उत्सवनम् । षूप्रसवैश्वर्ययोः । ऋदोरप् ॥

उत्सवसङ्केतः । पुं । पार्वतीयानांगणे ॥ यथा । गणानुत्सवसङ्केतानजयत्सप्तपाण्डव इतिमहाभारतम् ॥

उत्सादनम् । न । समुल्लेखे ॥ उद्वाहने ॥ उद्वर्तने ॥ उत्साद्यतेऽनेन । ष

कृ० । यन्तः । ल्युट् ॥

उत्सादितः । त्रि । कृतोत्सादने । उद्द-र्त्तिते । निर्मलीकृतशरीरे ॥

उत्सारकः । पुं । द्वारपाले ॥ त्रि । उत्सा-रणकर्त्तरि ॥

उत्सारणम् । न । दूरीकरणे ॥ चाल-ने ॥ स्थानान्तरप्रापणे ॥

उत्सारितः । त्रि । अपसारिते ॥

उत्साहः । पुं । उद्यमे । अध्यवसाये । इदमहङ्करिष्याम्येवेतिनिश्चयात्मिक-बुद्ध्याधृतिहेतुभूते ॥ कर्त्तव्यार्थेषुस्थे-यसिप्रयत्ने । उत्साहोमन्त्रमूलंस्या-दितिनीतिविदांमतम् । प्रभुशक्ति-र्मन्त्रमूलातस्मादुत्साहवान्भवेत् ॥ लोकोत्तरेषुकार्येषुस्थेयसिप्रयत्ने ॥ सूत्रे ॥ उत्सहनम् उत्सह्यते अने-न वा । षह० । हलश्चेति घञ् ॥ क-र्मसुसुकरप्रत्ययः इत्ययमकारको-भावोवाउत्साहः ॥ सङ्गीतोक्ते ध्रुव-कविशेषे ॥

उत्साहवान् । त्रि । उत्साहविशिष्टे । उत्साहिनि ॥ उत्साहोऽस्यास्ति । य-वादिभ्योमतुबन्यतरस्याम् ॥

उत्साहवर्द्धनः । पुं । उद्यमवृद्धौ । वी-ररसे ॥ उत्साहेन वर्द्धते । वृधु० । अनुदात्तेतश्चहलादेरितियुच् ॥ उ-त्साहंवर्द्धयतीति वा । ल्युः ॥

उत्साहशक्तिः । स्त्री । राज्ञांशक्तिविशे-षे ॥ विक्रमबलमुत्साहशक्तिरित्यु-क्ते ।

उत्साही । त्रि । उत्साहवति ॥ यवा-दिभ्योमतुबन्यतरस्यामिति पक्षे इ-निः ॥

उत्सिक्तः । त्रि । उद्धते ॥ गर्विते ॥ व-र्द्धिते ॥ उद्रिक्ते ॥ उपप्लुते ॥ त्यक्तम-र्यादे ॥ उत्पूर्वात् सिचेःक्तः ॥ सिक्ते ॥

उत्सिच्यमानः । त्रि । उद्रिच्यमने । वृद्धि-मति ॥

उत्सुकः । त्रि । ईप्सितकर्मोद्यते । इष्टा-र्थोद्युक्ते ॥ प्रद्यसमगुरुरागमिष्यती-त्युत्कण्ठाविशिष्टे । उत्कण्ठिते ॥ उत् उद्योगंसुवति सौतिसुनोतिवा । षु प्रसवैश्वर्ययोः षुञ्अ० । विचिसंज्ञा-पूर्वकत्वात् गुणाभावः । क्विपिआग-मशास्त्रस्यानित्यत्वात्तुग भावोवा । ततःसंज्ञायांकन् ॥ यद्वा । उत्सुवति । पूप्रेरणे । मितद्र्वादित्वाड्डु । स-त्स्वितिकिमर्था । कनिकेयप्रतिद्रस्य ॥

उत्सूरः पुं । दिनावसाने ॥ इतिहेम-चन्द्रः ॥

उत्सृष्टः । त्रि । कृतोत्सर्गे । त्यक्ते । वि-सृष्टे ॥ यथा । कामंगृहस्थपक्वान्नं प-क्वमुत्सृष्टमुच्यते इति ॥ उत्सृज्यते स्म । सृजविं० । क्त ॥

उत्सेकः । पुं । उत्सेचनेन शोषणे ॥ उद्गृ व्यवहितःसेचने ॥ उद्रेके ॥ उत्सेचनम् । पिचच० । घञ् ॥

उत्सेचनम् । न । ऊर्द्धसेके ॥

उत्सेधः । पुं । गिरिद्रुमादीनामुन्नतौ । उच्छ्राये ॥ न । शरीरे । संहनने ॥ उत्सेधनम् अनेनवा । षिधुग० । घञ् ॥

उत्स्वनः । पुं । उच्चशब्दे । चि । सर्वति ॥

उद् । अ । प्रकाशे ॥ विभागे ॥ मावल्ये ॥ अस्वास्थ्ये ॥ शक्याम् । माधान्ये ॥ बन्धने ॥ भावे ॥ मोक्षे । लाभे ॥ ऊर्द्ध्वकर्मणि ॥ ऊर्द्ध्वे ॥ उत्कर्षे ॥ प्राकाश्ये ॥ नैकव्ये ॥

उदम् । न । जले । जगत्त्रयात्सदधिस सप्नवोदेनारायणस्योदितस्यखना-न्नादितिभागवतोक्तेः ॥

उदकम् । न । जले । वारिणि ॥ उन-त्ति । उन्दीक्लेदने । उदकमित्युणादि सूत्रेणसाधु ॥

उदककुम्भः । पुं । उदकुम्भे ॥ उदकस्य कुम्भः ॥

उदकपरीक्षा । स्त्री । दिव्यविशेषे ॥

उदकलोलः । चि । जलप्रिये ॥

उदकिलः । चि । उदकवति ॥ उदकम स्त्यस्य अस्मिन्वा ॥ पिच्छादित्वादि लच् ॥



उदकीर्यः । पुं । महाकरञ्जे ॥

उदकीर्य्यः । पुं । डालकरमञा इहर करञ्ज इतिगौडभाषायामसिद्धे करञ्ज विशेषे ॥

उदकुम्भः । पुं । जलकलशे ॥ उदकस्य कुम्भः । एकहलादादित्युदादेशः ॥

उदक्तम् । चि । कूपादिभ्यउच्छितेर्जला दौ ॥ उत्पूर्वादञ्चतेः क्तः ॥

उदक्या । स्त्री । ऋतुमत्याम् । रजस्व लायाम् ॥ उदकमर्हति । संज्ञाया मितियत् ॥ चि । जलार्हे ॥ दण्डादि त्वाद्यत् ॥

उदगद्रिः । पुं । हिमालयपर्वते ॥

उदगयनम् । न । उत्तरायणे । देवानां दिवसे ॥

उदगाहः । पुं । जलावगाहने । उदक स्यगाहः अवगाहनम् । मन्थौदनेत्या दिनोदादेशः ॥

उदग्भूमः । पुं । उत्कृष्टस्थाने । संज्ञैवा ॥ कृष्णोदकपाण्डुसंख्यापूर्वाभूमे-रजिष्यते ॥

उदग्रः । चि । उन्नते ॥ उद्गतमग्रमस्य ॥

उदग्रदन् । पुं । उच्चदन्तेहस्तिनि ॥ चि । वृद्धदन्तयुक्ते । उदग्रौदन्तावस्य । अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चेतिद न्तस्यदत्र ॥

उदङ्कः । पुं । चर्ममयेघृतादिपात्रे ॥ उ

दच्यते उद्धियतेऽस्मिन् । अच्मु० । उदङ्कोऽनुदकइतिघञ् । तैलोदङ्कः घृतोदङ्कः ॥

उदक् । अ । उदग्दिग्भवे ॥ उदग्देशो द्भवे ॥ उदक्कालोत्पन्ने ॥ उदीच्यां दिशि उदीच्याःदिशः उदीचीदिग्वा । दिक्शब्देभ्यःसप्तमीपञ्चमीप्रथमा भ्योदिग्देशकालेष्वस्तातिः ॥ अञ्चेर्लु गित्यस्तातेर्लुक् । एवंदेशेकालेच ॥

उदङ् । पुं । दिशि ॥ देशे ॥ काले ॥ त्रि तद्भवे ॥ उत्कृष्टमञ्चति । अच्मु० । र्त्विग्गितिक्विन् । नलोपः । नुम् । संयोगान्तलोपः । कुत्वम् ॥

उदजः । पुं । पशुप्रेरणे ॥ उदजनम् । अज० । समुदोरजःपशुष्वित्यप् । अ घञपोरितिपर्युदासाद्वीभावोन ॥

उदञ्चनः । पुं । भाण्डे ॥ न । पिधानार्थपात्रे । ढकना ढकनी इतिभाषा ॥ उदञ्चतेऽस्मिन् । अञ्चु० । ल्युट् । उदकोदञ्चनम् ॥ ऊर्द्ध्वक्षेपणे ॥

उदञ्चितः । त्रि । ऊर्द्ध्वक्षिप्ते ॥ पूजिते । उतऊर्द्ध्वमञ्चितम् ॥

उदण्डपालः । पुं । मत्स्यविशेषे ॥ सर्पभेदे ॥

उदन्या । स्त्री । तैलपिपीलिकायाम् ॥

उदधिः । पुं । समुद्रे । उदकानिधीयन्ते च । कर्मण्यधिकरणेचेतिधाञःकिः ॥ घटे ॥

उदधिमलः । पुं । समुद्रफेने ॥

उदधिमेखला । स्त्री । पृथिव्याम् ॥

उदन्तः । पुं । वार्त्तायाम् । वृत्तान्ते ॥ साधौ ॥ उद्गतोन्तोयस्य ॥

उदन्तकः । पुं । उदन्तार्थे ॥ स्वार्थेकन् ॥

उदन्तिका । स्त्री । तृप्तौ ॥

उदन्या । स्त्री । पिपासायाम् ॥ उदन्यति उदकस्येच्छा वा । सुपआत्मनःक्यच् । अशनायोदन्येति ईत्त्वाभावःक्यचि उदकस्यउदन्भावश्चनिपात्यते । अप्रत्ययादित्यः ॥

उदन्वान् । पुं । उदधौ । पारावारे । समुद्रे ॥ उदकानिसन्त्यत्र । उदन्वानुदधौचेत्युदकस्योदन्भावो निपातितो मतुपि ॥ ऋषिविशेषे ॥

उदपानः । पुं । न । कूपे ॥ क्षुद्रजलाशये ॥ उदकंपिबन्त्यस्मिन् । अधिकरणेल्युट् । उदकस्योदः ॥

उदमानः । पुं । आढकस्यपञ्चाशत्तमेभागे ॥ कुल्यास्यादष्टभिर्द्रोणैर्द्रोणपादेनचाढकः । अतोद्वैपञ्चाशद्विभागउदमानउदाहृतइत्युक्तेः ॥

उदमेयः । त्रि । उदकंमेयंयस्यतस्मिन् ॥ उदकस्योदः संज्ञायाम् ॥

उदयः । पुं । पूर्वपर्वते । उदयाचले ॥ उदयाऽचलसम्बन्धे । लग्ने ॥ वैयंत्रद

श्यते भास्वान् सतेयामुदयः स्मृतः । तिरोधानञ्च यच्चैति तदेवास्तमनं रवेः ॥ नैवास्तमनमर्कस्य नोदयः सर्वदा सतः । उदयास्तमनेनाम दर्शनादर्शने रवेः ॥ उदयन्ति यदा अस्मात् इत्यण् । एरच् ॥ वृद्धौ । समुन्नतौ ॥ महिम्नि ॥ उत्पत्तौ ॥

उदयनः । पुं । वत्सराजे । वत्सेशे ॥ अगस्त्ये । घटोद्भवे ॥ कुसुमाञ्जलिग्रन्थकर्त्तरि । उदयनाचार्ये ॥ न । उदये ॥

उदयसन्ध्या । स्त्री । अर्द्धार्कोदयात् मातर्घटिकात्रये ॥

उदरम् । न । जठरे । तुन्दे । कुक्षौ । नाभिस्तनयोर्मध्यभागे ॥ अन्तःसुषिरे ॥ युधि । रणे । पुं । उदररोगे । उत् दृणाति । दृगतौ ॥ अच् ॥ यद्वा । उद्दृणाति । उद्द्रियते वा । दृङ् गतौ । अच् ॥ यद्वा । दृणाति । दृ विदारणे । उदिदृणातेरजलौ पूर्व्वपदान्त्यलोपश्च ॥

उदरग्रन्थिः । पुं । गुल्मरोगे ॥

उदरत्राणम् । न । उदरबन्धवस्त्रादौ । नागोदरे । पेटी कमरबन्ध इति भाषा ॥ उदरस्य त्राणं येन ॥

उदरधिः । पुं । समुद्रे ॥ पितृष्यायी । सूर्य्ये ॥ उत् गच्छति उदयते वा ।

कृ० । उदयत्त्वादिति गर्थेन ॥

उदरपिशाचः । त्रि । सर्व्वान्नभक्षके । सर्व्वान्नीने ॥ इति हेमचन्द्रः ॥

उदरभेदी । त्रि । आत्मघ्नि ॥

उदरम्भरिः । त्रि । स्वोदरमात्रपूरके । आत्मम्भरौ ॥ उदरम्बिभर्त्ति इति विग्रहे उदरस्य मुमागमोऽभूत् इन् प्रत्ययश्च निपातसिद्धः ॥

उदररोगः । पुं । जठरव्याधिविशेषे । पेटरोग उदरी इति भाषाप्रसिद्धे ॥

उदरव्याधिः । पुं । उदररोगविशेषे ॥ यथा । कदलीयवक्षारन्तुपानीयेन प्रसाधितम् । तदास्वादनान्नश्यन्ति उदरव्याधयोऽखिलाः इति गारुडे १९४ अध्यायः ॥

उदरशाण्डिल्यः । पुं । उपनिषत्प्रसिद्धे अतिधन्वनः शिष्ये ऋषिविशेषे ॥

उदरामयः । पुं । अन्नगन्धौ । अतिसाररोगे ॥

उदरावर्त्तः । पुं । नाभौ । तुन्दकूपिकायाम् ॥

उदरिकः । त्रि । उदरिले ॥ ठक् ॥

उदरिणी । स्त्री । गर्भवत्याम् ॥

उदरी । त्रि । तुन्दिले । पिचिण्डिले ॥ अतिशयितमुदरमस्य । तुन्दादिभ्य इलच्चेति चकारादिनिः ॥

उदरिलः । त्रि । वृहत्कुक्षौ । उदरिणि

॥ अतिशयितसुंदरमर्थ्य । तुन्दादिभ्यइलच्श्चेतिइलच् ॥

उदर्कः । पुं । भव्यत्कालीनफले । भाविनिकर्मफले ॥ मयनफल इतिप्रसिद्धे मदनवृक्षस्य कण्टके ॥ उदर्च्यते । अर्कस्तवने । घञ् ॥ उदर्च्यते वा । अर्चपूजायाम् । उद्र्च्यतेवा । रुच्धस्तुतौ । घञ् ॥ भविष्यत्काले ॥

उदर्चिः । पुं । अग्नौ ॥ शिवे । हरे ॥ कन्दर्पे । दर्पके ॥ त्रि । उत्प्रभे ॥ उद्गते ऊर्द्धमर्चीरश्मियर्थस्यसः ॥

उदर्दः । पुं । रोगविशेषे ॥ तल्लक्षणम् । वरटीदष्टसंस्थानः शोथःसंजायतेबहिः । सकण्डुस्तोदबहुलश्छर्दिज्वरविदाहवान् ॥ उदर्दमितितंविद्याच्छीतपित्तमथापरे । वाताधिकंशीतपित्तमुदर्दस्तुकफाधिकमिति ॥

उदलावणिकम् । त्रि । लवणाक्तसासिद्धेव्यञ्जनादौ ॥

उदवसितम् । न । आलये । भवने । गृहे ॥ उतऊर्द्धमवसीयते स्म । षोऽन्तकर्मणि षिञ्बन्धनेवा । क्तः । द्यतिस्यतीतीत्वम् ॥

उदश्वित् । न । अर्द्धजलयुक्ते घोले ॥ तक्रंह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बुनिर्जलमित्युक्तेः ॥ छच्छिकायाम् ॥ उदकेनश्वयतिवर्द्धते । टुओश्विगतिवृद्ध्योः । क्विप् तुक् । उदकस्योदः संज्ञायाम् । उदश्वितइतिनिर्देशादसम्प्रसारणम् ॥ उदश्वित्कफकृद्बल्यं श्रमघ्नंपरमंमतम ॥

उदसनम् । न । अपनयने ॥ उत्क्षेपणे ॥

उदस्तः । त्रि । उत्तोलिते ॥ उत्क्षिप्ते ॥

उदाजः । पुं । पशुभिन्नानांप्रेरणे ॥ उदजनम् । अज० । घञ् । अघञपोरित्युक्तेर्वीभावोन ॥

उदात्तः । पुं । स्वरप्रभेदे ॥ उच्चैरुदात्तइतितत्स्वरूपम् । उत् उच्चैरादीयतेस्म । क्तः । अचउपसर्गात्त इतितादेशः ॥ काव्यालङ्कारविशेषे । उदात्तंवस्तुनः सम्पत् । समृद्धिमद्वस्तुवर्णनमुदात्तः । इत्यलङ्कारलक्षणम् ॥ त्रि । दयात्यागादिसम्पन्ने ॥ महति ॥ हृद्ये ॥ दातरि ॥

उदानः । पुं । कण्ठदेशस्थेवायौ । कण्ठस्थानीये ऊर्द्धगमनवत्युत्क्रमणवायौ । स्पन्दयत्यधरंवक्त्रं नेत्रभागप्रकोपनम् । उद्वेजयति मर्म्माणिउदानोनाम मारुतः ॥ उदानोहृत्कण्ठताल्भ्रूमध्यमूर्द्धसुस्थितोवायुः ॥ ऊर्द्धेन अनिति अनेन । अन० । हलश्चेति घञ् ॥ उदरावर्त्ते ॥ भुजङ्गमविशेषे ॥

उदायुधः । त्रि । गृहीतशस्त्रे ॥

उदारः । त्रि । दातरि ॥ महति ॥ दक्षे ॥ आर्य्ये ॥ दक्षिणे ॥ सरले ॥ गम्भीरे ॥ असाधारणे । उत्कृष्टमासमन्तात् राति । रा ॥ आतश्चेतिकः ॥ उदर्य्यते ऊर्द्ध्वगतिप्रापणयोः कर्मणि यत्वा ॥ उदुच्चैरासमन्तात् ऋच्छति । पचाद्यच् ॥ पुं ।

उदारधीः । त्रि । महाबुद्धौ ॥ उदारा धीर्यस्य ॥

उदावत्सरः । पुं । संवत्सरादिपञ्चान्तर्गतवत्सरविशेषे ॥

उदावर्त्तः । पुं । रोगविशेषे । गुदग्रहे ॥ मलमूत्रवायुरोधकरोग इतिस्पष्टार्थः ॥ यतोऽयं जायते घोर उदावर्त्तः सचिकित्सकैः । उदावर्त्त इतिप्रोक्तो व्याधिस्तत्रानिलः प्रभुः । अपि च । वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः । [*] क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भवः ॥ नवावर्त्तः ।

उदावृतः । त्रि । ऊर्द्ध्वनीते ।

उदासः । पुं । उत्क्षेपे । उद्भावे ।

उदासीनः । त्रि । परतरे । शत्रुमित्रभिन्ने । शत्रुमित्राभ्यां परस्मिन् राजनि ॥ विजिगीषोः शत्रुमित्रभूमिरोव्यवहिते ॥ अयमप्रियत्वादेव नोपकारी नाप्यपकारीकिंतु सूर्द्धमासीनइव । इतिभरतः ॥ अतुल्यशुभाशुभे । विवदमानयोरुभयोरप्युपेक्षके । योन कस्यचिन्मित्रादेः पक्षं भजते मध्यस्थे ॥ उदास्ते । आस० । लट् । शानच् । ईदासइतिईत्वम् ॥ विषयानन्तरो राजा शत्रुर्मित्रमतः परम् । उदासीनः परतरो ज्ञेयः कार्यविशारदैः ॥

उदास्थितः । पुं । द्वारपाले । प्रतीहारे ॥ अध्यक्षे । पञ्चवर्गान्तर्गतचारविशेषे । प्रव्रज्यावसिते प्रव्रज्यारूढपतिते । नष्टसन्न्यासे । प्रव्रज्यारूढपतितउदास्थितः । तं लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं वृत्त्यर्थिनं सत्कृत्य रहसि राजा ब्रूयात् । यस्मदुष्टं पश्यसि तत् तदानीमेव मयि वक्तव्यमिति । तस्य बहुत्पत्तिकमठे स्थापयेत् । प्रचुरसस्योत्पत्तिकभूम्यन्तरञ्च तद्वृत्त्यर्थमुपकल्पयेत् । सचान्येषामपि प्रव्रजितानां राजचारकर्मकारिणां ग्रासाच्छादनादिकं दद्यात् ॥ २ ॥ उदाङ्पूर्वात् स्थाधातोर्गत्यर्थाकर्मकेति क्तः । द्यतिस्यतीतीत्त्वम् ॥

उदाहरणम् । न । उपोद्घाते । दृष्टान्ते । एकदेशप्रसिद्ध्याऽशेषप्रसिद्ध्यर्थं यदुदाह्रियते तस्मिन् ॥ उदाङ्पूर्वाद्धरतेर्ल्युट् ॥

उदाहारः । पुं । उपोद्घाते । उदाहृतौ ॥ उदाहरणम् । घञ् ॥

[ * तृप्यर्थे तृतीया । ]

उदाहृतः । त्रि । उच्चारिते ॥

उदाहृतिः । स्त्री । उदाहरणे ॥ उदा उपूर्वात् हृञः स्त्रियांक्तिन् ।

उदितः । त्रि । उक्ते ॥ उद्यतेस्म । वद-व्य० । क्तः । इट् । वचिस्वपीतिसम्प्रसारणम् ॥ उद्गते । उन्नते ॥ यथा । उदिते जगतीनाथे य. कुर्याद्दन्तधावनम् । सपापिष्ठःकथंब्रूते पूजयामि जनार्दनमिति । वृद्धे ॥ ऊर्जिते ॥ उदयतेस्म । दो अ० । क्तः । द्यतिस्यतीतीत्वम् ।

उदितोदितः । त्रि । शास्त्रज्ञे ।

उदीची । स्त्री । उत्तरदिशि । उत्उत्तर मञ्चत्यर्कम् । उत्क्रान्तेदृष्टिपथमञ्चतिसूर्यैया । उदईदित्यञ्चेरलईकारः । ऋत्विगादिनाक्विन् । उगितश्चेतिङीप् ।

उदीचीनः । त्रि । उदग्भवे । उदक् । विभाषाञ्चेरिति खः ।

उदीच्यः । पुं । शरावत्याःपश्चिमोत्तरदेशे ॥ अथोदीच्यदेशाः । बाह्लीका वाटधानाश्चआभीराः कालतोयकाः । परन्ध्राश्चैवशूद्राश्च पह्लवाश्चात्मखण्डिकाः । गान्धाराजवनाश्चैव सिन्धुसौवीरमद्रकाः । शकाद्रुह्याःपुलिन्दाश्चपारदाहारमूर्त्तिकाः ॥ रामठाः कण्टकाराश्च केकयादेशमानिकाः । क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानिच ॥ आत्रेयोथभरद्वाजःप्रस्थलाः सदशेरकाः । लम्पकास्तलगानाश्चसैनिकाःसहजाङ्गलैः ॥ एतेदेशाउदीच्यास्तुपुराणेमत्स्यसंज्ञके ॥ न । वालेनामगन्धद्रव्ये । ह्रीवेरे ॥ त्रि । उदग्भवे ॥ उदीचिजाते ॥ उदीच्यांभवःजातःआगतोवा । द्युप्रागपागुदक्प्रतीचोयत् ॥

उदीरणम् । न । कथने । उच्चारणे ॥

उदीरितः । त्रि । उक्ते ॥ उद्दीपिते ॥ उद्दीपिते ॥ उक्ते ॥ उदीर्यतेस्म । ईर् । क्तः ॥

उदीर्णः । त्रि । उदारे । महति ॥

उदुत्तमः । त्रि । अतिशयेनोत्तमे ॥ उत् उच्चै उत्तमः ॥

उदुम्बरः । पुं । जन्तुफलवृक्षे । यज्ञाङ्गे । हेमदुग्धे । डुमरइतिभाषा । उदुम्बरोहिमोरूक्षोगुरुः पित्तकफास्रनुत् । मधुरस्तुवरोवर्ण्योव्रणशोधनरोपणः ॥ देहल्याम् । गृहावग्रहण्याम् ॥ षण्डके । नपुंसके ॥ कुष्ठविशेषे ॥ न । ताम्रे ॥ यथा । यद्दुदुम्बरवर्णानां घटीनां मण्डलंमहत् । पीतं नगमयेत्स्वर्गंकिन्तत्क्रतुगतं नयेदिस्यर्यंश्लोकः कौशाम्बणीयाग-सुरापानस्य दुष्टत्वमुद्घाटयति । तत्र

महाभाष्यकारश्चाह । प्रमत्तगीतए व: तत्रभवतोयस्त्वप्रमत्तगीतस्तत् प्रमाणमिति । प्रमत्तगीतइति । प्रमादेनविप्रतिपन्नत्वेनगीत इत्यर्थइतिकैयटः । विप्रतिपन्नत्वेन वेदविषयविप्रतिपत्त्याश्रयत्वेन तत्त्वंत्वस्मिन्वारोप्य दैन्यनाशाय पूज्यस्यापिभगवतईश्वरस्यतथोक्तिरिति, सन प्रमाणमितिभाव इतिविवरणकारः ॥ उं-शम्भुंवृणोति । वृञ्० । संज्ञायांभृतॄवृजीतिखच् । अरुर्द्विषदितिमुम् । उत्कृष्टम् उम्बरम् । प्रादिसमासः । उल्लङ्घितमम्बरमनेन ॥ उदतिशये-नाम्बते वा । अविशब्दे । बाहुलका दरन् । पृषोदरादिः ॥ अशीतिरक्तिकापरिमिते । कर्षे ॥

उदुम्बरदला । स्त्री । दन्तीवृक्षे ॥ उदुम्बरस्येवदलान्यस्याः ॥

उदुम्बरपर्णी । स्त्री । दन्तिकौषधौ ॥ उदुम्बरस्येवपर्णान्यस्याः । पाककर्णेति ङीष् ॥

उदूखलम् । न । तण्डुलादिकण्डनार्थं काष्ठादिनिर्मिते कण्डनसाधने । उलूखले । ऊखल इतिभाषा ॥ गुग्गुले । गुग्गुलौ ॥ ऊर्द्ध्वंखंतस्खम्व । ऊर्द्ध्वं खाति । खन० । आतोनुपेति-कः । पृषोदरादिः ॥

उदूढः । त्रि । ऊढे ॥ स्थूले ॥ उदुह्यते स्म । वह० । क्तः ॥

उद्गतः । त्रि । उत्पन्ने । उदिते ॥ ऊर्द्ध्वंगते ॥ उद्वान्ते । छर्दितवस्तुनि ॥ निसृते ॥ यथा । मदनोद्गतावाणी । उद्गम्यते स्म । गम्लृ० । क्तः ॥

उद्गता । स्त्री । विषमवृत्तविशेषे ॥ सजसादिमेसलघुकेच नसजगुरुकेष्वथोद्गता । अंघ्रिगतभनजलागयुताः सजसाजगौचरणमेकतः पठेत् । इति तल्लक्षणम् ॥

उद्गमः । पुं । आविर्भावे । उदये । ऊर्द्ध्वंगमने ॥ उद्गमनम् । गम्लृ० । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥

उद्गमनम् । न । ऊर्द्ध्वंगमने ॥ ल्युट् ॥

उद्गमनीयम् । न । प्रक्षालितांशुकद्वये ॥ उद्गम्यते अभिलप्यते । गम्लृ० । अनीयर् । द्वयद्रत्यविवक्षितम् । गृहीतवन्त्युद्गमनीयवस्त्रे । इतिदर्शनात् ॥ त्रि । ऊर्द्ध्वंगम्ये ॥

उद्गरणम् । न । उद्गारे ॥

उद्गाढम् । न । अतिशये । अत्यर्थे ॥ त्रि । अतिशययुक्ते ॥ उद्गाह्यतेस्म । गाहूवि० । क्तः ॥ क्रियाविशेषणत्वे क्लीवत्वम् । द्रव्यविशेषणत्वेतुवाच्यलिङ्गता ॥

उद्गाता । पुं । सामवेदज्ञर्त्विजि ॥ उद्गा

थतिसाम । गैशब्दे । ष्टन्‌ष्ठिवौशंसि चदादिभ्यः संज्ञायाञ्चानिटौ ॥

उद्गारः । पुं । उद्वमने ॥ उद्गार इतिभाषाप्रसिद्धनागवायोः कर्म्मणि । कण्ठगर्जने ॥ उद्गरणम् । गॄशब्दे । उद्ग्रो ग्रंद्रति घञ् ॥

उद्गारशुद्धिः । पुं । सधूमान्तोद्गाराभावे ॥

उद्गारशोधनः । पुं । कृष्णजीरके ॥

उद्गिरणम् । न । ऊर्द्ध्वमुखस्य वायोः क्रियायाम् । छर्द्दौ ॥ टृषमउद्गिरणे इतिधातुपाठेन निपातनात् गिरसे. कृतद्दत्वम् । अन्यथागुणेसति उद्गरणमिति स्यात् । यद्यप्यर्थनिर्द्देश आधुनिकः तथासति पृषोदरादित्वंबोध्यम् ॥

उद्गीतम् । त्रि । उच्चैर्गीते ॥

उद्गीतिः । स्त्री । उच्चैर्गाने ॥ आर्य्याभेदे ॥ यथा । नारायणस्यसन्ततमुद्गीतिः संस्मृतिर्भक्त्या । अर्च्चायामासक्तिर्दुस्तरसंसारसागरे तरणिरिति ॥ उदुच्चैर्गीतिः गानम् ॥

उद्गीथः । पुं । प्रणवे ॥ सामानुगाने ॥ सामविशेषे ॥ पाञ्चभक्तिकस्य साम्नो द्वितीयायां तृतीयायां वा भक्तौ ॥ उद्गीयतेऽसौ । गस्थोदीति थक् ॥

उद्गीर्णः । त्रि । उद्वमिते ॥ भक्षितस्या



प्रकर्षेण ॥

उद्गूर्णः । त्रि । उद्यते । उत्तोलिते । उत्तोल्यधृतेऽस्त्रादौ । उद्गूर्य्यतेस्म । गूरी उद्यमे । क्तः ॥

उद्गन्यः । त्रि । उत्सुके ॥

उद्ग्रहणम् । न । उद्ग्राहे । ऊर्द्ध्वग्रहणे ॥ उपसंहरणे ॥ उत्‌ऊर्द्ध्वंग्रहणम् ।

उद्ग्राहः । पुं । वादप्रभेदे । विद्याविचारे ॥ उद्ग्रहणे । ऊर्द्धीकृत्यकस्यचिद्ग्रहणे ॥ उद्ग्रहणम् । ग्रहउपादाने । उदिग्रहइति घञ् ॥

उद्ग्राहमल्लः । त्रि । वादसमर्थे ॥ उद्ग्राहेमल्लइव ॥

उद्ग्राहिणी । स्त्री । पाशाख्यरज्जौ । फांसा इतिभाषा ॥

उद्ग्राहितः । त्रि । उपन्यस्ते । बद्धे ॥ उद्धीर्णे ॥ ग्राहिते ॥ प्रत्यायिते ॥

उद्घः । पुं । हस्तपुटे ॥ वह्नौ ॥ श्लाघायाम् ॥ उद्धन्यते उत्कृष्टोज्ञायते । हन्तेःकर्म्मणिअप् टिलोपादत्वञ्चनिपातनात् ॥ देहवायौ ॥ त्रि । प्रकाण्डे । प्रशस्ते ॥ उद्घन्तिनीचताम् । उत्पूर्वाद्धन्तेः सद्भावौ गणमयंसयोरितिनिपातितः । मनुष्योद्घः । अस्यरूढिशब्दत्वात् प्रशंसावचनैश्चेतिसमासः । प्रशस्तोमनुष्यइत्यर्थः ॥

उद्घनः । पुं । काष्ठतक्षणसाधने । अधः

काष्ठे ॥ निधायतक्ष्यते यत्रकाष्ठे का ष्ठंसउद्घनः । ऊर्द्धंहन्यते ऽस्मिन् । उद्घनोत्याधानमिति अधिकरणेअप्॥

उद्घर्षः । पुं । घर्षणे । झामकेन गात्रादिघर्षणे ॥

उद्घर्षणम् । न । झामकेन पादादिगात्रघर्षणे ॥ इष्टकयोद्घर्षणे गुणाः । कण्डुकोठनाशित्वम् त्वग्गताग्निदीपनत्वम् । शिरासुखकारकत्वञ्च ॥

उद्घसम् । न । मांसे ॥ इतिहारावली ॥

उद्घाटः । पुं । उद्घाटने ॥ गृहविशेषे । चैाकीकाघर इतिभाषा ॥

उद्घाटकम् । न । पुं । कूपाज्जलोद्धृत्यर्थयन्त्रविशेषे । घटीयन्त्रे । अरहट इतिभाषा । घिर्नी इतिच ॥

उद्घाटनम् । न । कूपाज्जलोत्तोलनार्थयन्त्रे । घटीयन्त्रे । अरघटरहँटइतिभाषा । कूपात्सलिलमुद्घाट्यतेऽनेनवा । घटसङ्घाते । शब्दकः । ल्युट् ॥

उद्घाटितः । त्रि । अपावृते । कृतोद्घाटने । उघाडाखुलाइतिभाषा ॥ गृहेऽनुद्घाटितद्वारेनाहूतः प्रविशन्नरः । वारितोथप्रयकापिपञ्चाक्रमशनंत्यलेदितितन्त्रशास्त्रम् ॥ घटेः क्तः । इट् ॥

उद्घाटिताङ्गः । पुं । माघे ॥ त्रि । अनावृतगात्रे ॥ उद्घाटितानिअङ्गान्यस्य ॥

उद्घातः । पुं । पादस्खलने ॥ समुपक्रमे ॥ पवनाभ्यासयोगाय कुम्भकादिवेधे । पवनाभ्यासयोगस्यकालभेदे ॥ नाभिमूलात् प्रेरितस्यवायोर्विविच्यमानस्यशिरस्यभिहनन मुद्घातइत्युच्यतेसेयंकालपरीक्षा । प्राणेनप्रेर्यमाणेनअपानःपीड्यतेयदि । गत्वाचोर्द्धंनिवर्त्तेत एतदुद्घातलक्षणम् । उत्तुङ्गे ॥ मुद्गरे ॥ आरम्भे ॥ शस्त्रे ॥ ग्रन्थपरिच्छेदे ॥ उत्हननम् । हन० । घञ् । हनस्तोचिण्णलोः ॥ पाषाणादिभिःप्रतिघाते । ठोकरखाइत्यादिभाषाप्रसिद्धे ॥ यथा । ययावनुद्घातसुखेन मार्गमितिरघुः ॥

उद्घुष्टः । त्रि । उद्घोषिते । नादिते ॥

उद्घोषः । पुं । उद्घोषणे ॥ घुषघुष्टौ । घञ् ॥

उद्घोषितः । त्रि । उद्घुष्टे ।

उद्दंशः । पुं । उत्कुणे । मत्कुणे । कोणक्कुणे । किटिभे ॥ उत्कृष्टोदंशः ।

उद्दण्डपालः । पुं । सर्पविशेषे ॥ मत्स्यप्रभेदे ॥

उद्दन्तुरः । त्रि । उत्तुङ्गे ॥ कराले ॥ उच्चाटदन्ते ॥

उद्दानम् । न । बन्धने ॥ उत्पूर्वात्दधातेर्भावेल्युट् ॥

उद्दान्तः । त्रि । उत्कृष्टदमिते ॥

उद्दामः । पुं । प्रचेतसि । वरुणे ॥ पञ्चचत्वारिंशदक्षरायांवृत्तौ ॥ त्रि । अप्रतिबद्धे । बन्धरहिते ॥ स्वतन्त्रे ॥ महति ॥ यथा । उद्दामदन्तुरबिगुलुदन्दघातैः । इतिप्रव्रज्या ॥ गम्भीरे ॥

उद्दामगीः । त्रि । प्रगल्भवाचि ।

उद्दालः । पुं । बहुवारके । लसौडा इतिभाषा ॥ वनकोद्रवे ॥ उद्दालस्तु भवेदुग्रोग्राहीवातकरोभृशम् ॥ उद्दालयति । दलविदारणे । णिजन्तादच् ॥

उद्दालकः । पुं । वेदादिषुप्रसिद्धे ऋषिविशेषे । श्वेतकेतोःपितरि ॥ बहुवारकवृक्षे । स्वार्थे कः ।

उद्दालकपुष्पभञ्जिका । स्त्री । क्रीडाविशेषे ॥ यथा । विधिविष्णुमुखामरोदयस्थितिनाशेषुशिवोप्यनीश्वरः ॥ जगदम्बतवत्त्वयङ्क्रमः यथामुद्दालकपुष्पभञ्जिकेति ॥ उद्दालकस्यश्लेष्मातकस्यपुष्पाणिभज्यन्तेयस्यांक्रीडायांसा । संज्ञायामितिण्वुल् ॥ नित्यंक्रीडाजीविकयोरिति षष्ठीसमासः ॥

उद्दिष्टः । त्रि । उपदिष्टे ॥

उद्दीपकः । त्रि । उद्दीपनकर्त्तरि ।

उद्दीपनम् । न । प्रकाशने ॥ विभावविशेषे ॥

उद्दीपितः । त्रि । प्ररोचिते ॥ व्यक्ते ॥

उद्दीप्तम् । त्रि । अतिप्रकाशिते ॥ उद्दीप्यतेस्म । दीपीदीप्तौ । क्तः ॥

उद्देशः । पुं । अनुसन्धाने । अन्वेषणे ॥ सोपपत्तिकस्वरूपसङ्क्षेपे ॥ कीर्त्तने ॥ यथा । नवने नन्दनोद्देशे नचैत्ररथसंश्रये । इतिरामायणोपयोगः ॥ उद्दिश्यते । दिशअतिसर्जने । हलश्चेतिघञ् ॥

उद्देशकः । त्रि । उद्देशकर्त्तरि ॥ उदाहरणे ॥

उद्देशतः । अ । एकदेशेन ॥ सार्वविभक्तिकस्तसिल् ॥

उद्देश्यः । त्रि । उद्देष्टव्ये । उद्देशनीये । प्रयोजने ॥ यमुद्दिश्यविधेयस्यप्रवृत्तिर्भवति ॥

उद्देहिका । स्त्री । कीटविशेषे । उपजिह्विकायाम् ॥

उद्योतः । पुं । प्रकाशे ॥ उद्द्योतनम् । द्युत० । घञ् ॥

उद्द्रावः । पुं । पलायने । सन्द्रावे ॥ उद्द्रवणम् । द्रुगतौ । उदित्ययतियैतिपूद्रुषद्गति घञ् ॥

उद्धतः । पुं । राजमल्ले ॥ त्रि । चञ्चले । वाक्पाणिपादचापलवति । अविनी

काष्ठे ॥ निधायतक्ष्यते यत्रकाष्ठे का
ष्ठंसउद्घनः । ऊर्द्ध्वंहन्यते ऽस्मिन् । उ
द्घनोत्याधानमिति अधिकरणेअप्॥

उद्घर्षः । पुं । घर्षणे । झामकेन गात्रा
दिघर्षणे ॥

उद्घर्षणम् । न । झामकेन पादादिगा
त्रघर्षणे ॥ इष्टकयोद्घर्षणे गुणाः ।
कण्डुकोठनाशित्वम् त्वग्गताग्निदी
पनत्वम् । शिरासुखकारकत्वञ्च ॥

उद्घसम् । न । मांसे ॥ इतिहारावली॥

उद्घाटः । पुं । उद्घाटने ॥ गृहविशेषे ।
चौकीकाघर इतिभाषा ॥

उद्घाटकम् । न । पुं । कूपाज्जलोद्धृत्य
र्थेयन्त्रविशेषे । घटीयन्त्रे । अरहट
इतिभाषा । घिर्नी इतिच ॥

उद्घाटनम् । न । कूपाज्जलोत्तोलनार्थे
यन्त्रे। घटीयन्त्रे । अरहटरहंटइतिभ
भाषा । कूपात्सलिलमुद्घाट्यतेऽ
नेनवा । घटसङ्घाते । गणः । ल्युट्॥

उद्घाटितः । त्रि । अपावृते । कृतोद्घा
टने । उघाडा खुलाइति भाषा ॥ स
ठेऽनुद्घाटितद्वारिणोद्धृतः प्रविशन्न
र । वारितार्थेप्रयतापिपश्चात्कमश
नंत्यजेदितितन्त्रशास्त्रम् ॥घटेः क्तः
। इट् ॥

उद्घाटिताङ्गः । पुं । मात्ये ॥ त्रि । अना
वृतगात्रे॥उद्घाटितानिअङ्गान्यस्य॥

उद्घातः । पुं । पादस्खलने ॥ समुप
क्रमे ॥ पवनाभ्यासयोगायकुम्भकादि
त्रये । पवनाभ्यासयोगस्यकालभेदे
॥ नाभिमूलात् प्रेरितस्यवायोर्विवि
च्यमानस्यशिरस्यभिहननमुद्घात
इत्युच्यतेसेयंकालपरीक्षा । प्राणेन
प्रेर्यमाणेनअपानःपीड्यतेयदि । ग
त्वाचोर्द्ध्वंनिवर्त्तेत एतदुद्घातलक्ष
णम् । उत्सुके ॥ मुद्गरे ॥ आरम्भे ॥
ग्रन्थे ॥ ग्रन्थपरिच्छेदे ॥ उत्हनन
म् । हन० । घञ् । हनस्तोचिण्णलोः
॥ पाषाणादिभिःप्रतिघाते । ठोकर
खानाइत्यादिभाषाप्रसिद्धे ॥ यथा
। ययावनुद्घातसुखेन मार्गमितिर
घुः ॥

उद्घुष्टः । त्रि । उद्घोषिते । नादिते ॥

उद्घोषः । पुं । उद्घोषणे ॥ घुषघुष्टौ
। घञ् ॥

उद्घोषितः । त्रि । उद्घुष्टे ।

उद्दंशः । पुं । उत्कुणे । मत्कुणे । कोत
क्षणे । किटिभे ॥ उत्कृष्टोदंशः ।

उद्दण्डपालः । पुं । सर्पविशेषे ॥ मत्स्य
प्रभेदे ॥

उद्दन्तुरः । त्रि । उन्नते ॥ कराले ॥ उ
त्कटदन्ते ॥

उद्दानम् । न । बन्धने ॥ दतपूर्मात्रच
मेनोपैत्युट् ॥

सूर्यमिव । इवार्थेकन् ॥

उपसूर्य्यकमण्डलम् । न । परिवेषे ॥

उपसृत्यः । त्रि । गम्ये ॥

उपसृष्टम् । न । मैथुने । सुरते ॥ त्रि । उपसर्गयुक्ते । विसृष्टे ॥

उपसेकः । पुं । सेचनेन मृदुकरणे ॥

उपसेचनम् । न । रसे ॥ उपसिच्यते- ऽभिन्नकरणे । ल्युट् ॥

उपस्करः । पुं । कटकमुण्डखड्गारादौ ॥ वेसवारे । व्यञ्जनादिसंस्कारार्थं धन्याकसर्षपादिपिष्टे ॥ इमदुपस्कर- पादौ । गृह्योपकरणकुण्डसम्मार्जन्यादौ ॥ उपकरोति व्यञ्जनेन समवैति ॥ डुकृञ्° । समवायेचेतिसुट् ॥

उपस्करणम् । न । प्रतिकरे ॥

उपस्कृतः । त्रि । मण्डिते ॥

उपस्तरणम् । न । आस्तरणे ॥ उपस्तीर्यते । स्तृञ्° । ल्युट् ॥

उपस्थः । पुं । न । लिङ्गे । शेफसि ॥ भगे । मदनागारे ॥ क्रोडे ॥ त्रि । समीपस्थे ॥ उपतिष्ठते । ष्ठा° । सुपीतिकः । अर्द्धर्चादिः ॥

उपस्थपत्रः । पुं । भाण्डीरे । वटे ॥

उपस्थाता । त्रि । भृत्ये । सेवके ॥

उपस्थानम् । न । नमस्कारणे ॥ उपेत्य स्थानम् ॥ उपस्थीयते । ष्ठा° । ल्युट् ॥ सङ्गतौ ॥

उपस्थितः । त्रि । आगते ॥ निकटस्थिते । उपसन्ने ॥ प्राप्ते ॥ उपपूर्वात्- तिष्ठते गत्यर्थाकर्मकेति क्तः । स्थति- स्यतीतीत्वम् ॥

उपस्पर्शः । पुं । स्पर्शमात्रे ॥ स्नाने ॥ आचमने ॥ उपस्पर्शनम् । स्पृशस्पर्शे । घञ् ॥ उपस्पृश्यन्ते खान्यत्र । हल- श्चेत्यधिकरणे घञ्वा ॥

उपस्पर्शनम् । न । उपस्पर्शे ॥ स्पृशे ल्युट् ॥

उपस्पृष्टः । त्रि । आचान्ते ॥ सन्निधिमात्रेण सेविते ॥ उपस्पृशेः क्तः ॥

उपस्वत्वम् । न । उत्पन्ने लाभे । तद्भिन्ने, ततस्तत्रोपजाते स्वत्वास्पदीभूतभूम्यादिसर्व्वधनादौ ॥

उपहतः । त्रि । तिरस्कृते ॥ विप्लुते ॥ अशुद्धद्रव्ये ॥ उत्पातग्रस्ते ॥ नष्टे ॥ प्रिया । कृत्वाप्रस्तनिभीषिकां कति पयग्रामेषु दीनाः प्रजा सम्यग्गोविठजलिते स्वपहताः क्षोणीभुजस्ते किल । विद्वांसोऽपि वयं किल त्रिजगतां सर्गस्थितिव्यापदामीशस्तत्परिचर्यया नगगिरेस्तैरेपनारायणः इति ॥

उपहसितम् । न । हास्यभेदे ॥

उपहारः । पुं । उपायने । भेट इतिभाषा ॥ नैवेद्यादिपूजासामग्र्याम् ॥ उपह्रियते । हृञ्° । घञ् ॥

उपहारपाणिः । त्रि । उपायनहस्ते ॥ उपहारः पाणौ यस्य ॥

उपहालकः । पुं । कुन्तलाख्यदेशे ॥

उपहासः । पुं । परीहासे । निन्दार्थवाक्यादौ । हांसी ठट्टा इति भाषा ॥ उपहासाय किं न स्यादसक्तश्रीमनीषिणाम् ॥

उपहितः । त्रि । आहिते ॥ उपधीयतेस्म ॥ उधाञ् क्तः । दधातेर्हिरिति मकृतेर्हिरादेशः ॥

उपहृतः । त्रि । समर्पिते ॥

उपह्वरः । पुं । रथे ॥ न । एकान्ते । रहसि ॥ निकटे ॥ उपह्वरे गन्तव्येसमीपदेशेइतिवेदभाष्यम ॥ उपह्वरन्त्यत्र । ह्वृ कौटिल्ये । पुंसीतिघः ॥

उपांशु । अ । विजने । रहसि ॥ अप्रकाशोच्चारणे ॥

उपांशुः । पुं । जपविशेषे ॥ यत्समीपस्थोपिपरो नशृणोति तदुपांशुरित्युच्यते । यत्तदोरुच्चारणमथः । जिह्वौष्ठौचालयेत् किञ्चिद्देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः सजपः स्मृतः ॥ विधियज्ञाज्जपयज्ञो विशिष्टोदशभिर्गुणैः । उपांशुः स्याच्छतगुणः ॥ उपगताः अंशवोयत्र ॥

उपाकरणम् । न । श्रुतेः संस्कारपूर्वग्रहणेस ॥ स्कार उपनयनं पूर्वंयत्र तत् तस्यतत्र ग्रहणञ्च । संस्कारपूर्वग्रहणंस्या ॥ दुपाकरणंश्रुतेरित्यमरः ॥ श्रावण्यादिविधातव्ये संस्कारविशेषे ॥ प्रारम्भे ॥ संस्कारपूर्वपशूनां हनने ॥ उपाक्रियतेऽनेन तत् । कृञो ल्युट् ॥

उपाकर्म । न । उपाकरणे ॥

उपाकृतः । पुं । अध्वरेऽभिमंत्र्यहतेपशौ ॥ उपद्रवे ॥ त्रि । उपद्रुते ॥ प्रारब्धे ॥ उपाक्रियतेस्म । कृञ् हिंसायाम् । क्तः ॥

उपाख्यः । त्रि । प्रत्यक्षतउपलब्धे । प्रत्यक्षे ॥ उप आख्यायते । ख्या । आतश्चोपसर्गइत्यङ् ॥

उपाख्यानम् । न । आख्याने । पुराणादिप्रथितवार्त्तायाम् । वर्णने ॥ उपाङ्पूर्वात् ख्यातेर्ल्युट् ॥ विशेषकथने ॥

उपागमः । पुं । समीपगमने ॥ स्वीकारे ॥ उपागमनम् । गम्लृ० । ग्रहवृद्रित्यादिना अप् ॥

उपाङ्गः । पुं । तिलके । तमालपत्रके । पत्रलेखायाम् ॥

उपाजे । अ । दुर्बलस्यसामर्थ्याधाने ॥ समीभतिरूपकोयं निपातः ॥

उपाजेकृत्य । अ । दुर्बलस्यबलमाधायेत्यर्थे ॥ उपाजेऽन्वाजे इतिगतिसंज्ञा । कुगतीतिसमासः ॥

उपाजेकृत्वा । अ । उपाजेशब्दार्थे ॥

उपाञ्जनम् । न । उपलेपने ॥

उपात्तः । पुं । निर्मदहस्तिनि ॥ त्रि । गृहीते । स्वीकृते ॥ प्राप्ते ॥ यथा । चयंकेऽपि दुपात्तस्य दुरितस्य प्रचक्षते ॥

उपात्ययः । पुं । प्राप्तौ लोकव्यवहारोल्लङ्घने ॥ व्यतिक्रमे ॥ अतिक्रमे । क्रमोल्लङ्घने ॥ उपात्ययनम् । इ । ण० । एरच् । उपगतस्यातिक्रम्यायनं वा ॥

उपादानम् । न । स्वस्वविषयेभ्य इन्द्रियाणां विकर्षणे । प्रत्याहारे ॥ हेतौ ॥ ग्रहणे ॥ अननुष्ठितस्यानुष्ठाने ॥ समवायिकारणे ॥ प्रवृत्तिजनकज्ञाने ॥ उत्पादके । उत्पत्तिस्थितिनाशाय कारणे ॥ उपादानो ल्युट् ॥ आरम्भे ॥

उपादानाख्या । स्त्री । तुष्टेः प्रभेदे ॥ यातु प्रकृत्यापि विवेकख्यातिः न सा प्रकृतिमात्राद्भवति मा स्मभूत् सर्वस्य सर्वदा तन्मात्रस्य सर्वान् प्रत्यविशेषात् । प्रव्रज्यायास्तु सा भवति तस्मात् प्रव्रज्यामाददीथाः कृतं ते ध्यानाभ्यासेनेत्यायुष्मन्नित्युपदेशे या आध्यात्मिका तुष्टिः सा उपादानाख्या नामद्वितीया सलिलमुच्यते ॥ उपादानमिति व्याख्यायस्याः ॥

उपादिकः । पुं । कीटविशेषे । वल्मीकदेहिकायाम् ॥

उपादेयः । त्रि । उत्कृष्टे । उत्तमे । ग्राह्ये ॥



उपाधिः । पुं । धर्मचिन्तायाम् ॥ कुटुम्बव्यापृते ॥ छले ॥ विशेषणे ॥ यथा । धर्मादेर्वस्य विप्रस्य वर्माऽभाता च भूभुजः । भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेदिति ॥ यः स्वधर्ममन्यनिष्ठतया भासयति सः उपाधेः प्रतिबिम्बपक्षपातित्वं न बिम्बपक्षपातित्वम् । लक्षणन्तु । यावत्कार्यमवस्थायिभेदहेतावुपाधिरिति ॥ अयथार्थव्याप्तौ ॥ साध्यव्यापकत्वे सति हेतोरव्यापके ॥ यथा । धूमवान् वह्निरित्यत्र आर्द्रकाष्ठमुपाधिः । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धन संयोग इति नास्ति अयोगोलके आर्द्रेन्धनाभावात् । अस्य प्रयोजनम् । व्यभिचारस्यानुमानम् ॥ समीपआधेः । उपपन्नआधिर्वा । आधानेमाधिः । उपसर्गयोः क्विः । उपगत आधिम् । अत्यादय इति समासः । उपधीयतेऽनेनेति वा ॥

उपाध्यायः । पुं । अध्यापके ॥ वेदैकदेशाध्यापके ॥ यथाह मनुः । एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते इति ॥ उपेत्यास्मादधीयते इति वि-

ग्रहः । इङश्चेति घञ् ॥

उपाध्याया । स्त्री । उपाध्यायाम् । स्वयंविद्योपदेशिन्याम् ॥ उपेत्याधीयतेऽस्याः । इङश्चेतिसूत्रे अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्चवाङीपितिघञ् । टाप् ॥

उपाध्यायानी । स्त्री । उपाध्यायपत्न्याम् ॥ उपाध्यायस्य स्त्री । मातुलोपाध्याययोरानुग्वा ।

उपाध्यायी । स्त्री । उपाध्यायायाम् । स्वयंविद्योपदेशिन्याम् ॥ उपेत्यअस्या अधीयतेइति विग्रहे यातुस्वयमेवाध्यापिका तत्रवाङीपवाच्य इति इङश्चेतिसूत्रस्थवार्त्तिकात् घञ्पचे ङीष् ॥ उपाध्यायान्याम् ॥ उपाध्यायस्य स्त्री । मातुलोपाध्याययोरानुग्वेत्यानुगभावः ॥

उपानत् । स्त्री । पत्रध्याम । पादुकायाम । चर्मादिनिर्मितपादकोषे ॥ अस्या धारणविधिर्यथा । यथोतपादिके छत्री दण्डी रात्र्यटवीषु च । शरीरत्राणकामोवै सोपानत्कः सदाभवेदिति ॥ गुणायथा । पादुप्रधारणं धृष्यमोजस्यं चक्षुषोर्हितम् । सुखप्रचाररमायुष्यं वल्यंपादरुजापहमिति ॥ पादे उपनह्यते बध्यते । पादम् उपनह्यतिवा । णहबन्धने । सम्पदादि



त्वात् क्विप्चेतिवाक्विप् । नहिवृति दधोतिपूर्वपदस्य दीर्घः ॥

उपान्तः । त्रि । निकटे ॥ प्रान्ते ॥

उपान्त्यम् । त्रि । अन्त्यसमीपे ॥ उत्तर भाद्रपदायाम् ॥

उपायः । पुं । राजादीनामरिवशीकरणहेतौ । सामादिचतुष्टये । भेदाद्गडः सामदानमित्युपायचतुष्टयमित्युक्ते ॥ क्वचित् सप्तोपाया अप्युक्ताः । यथा । सामदानञ्चभेदश्चदण्डश्चेतिचतुष्टयम् । मायोपेक्षेन्द्रजालञ्चसप्तोपायाः प्रकीर्त्तिताइति ॥ शृङ्गारेतुपराविद्भिरुपायौद्वौ प्रकीर्त्तितौ ॥ यथा । उपायौद्वौप्रयोक्तव्यौ कान्तासु सुविचक्षणैः । सामदानाविति प्राहुः शृङ्गाररसकोविदाः ॥ भेदे प्रयुज्यमानेऽपि रसाभासस्तुजायते । निग्रहेरसभङ्गः स्यात्तस्मात्तौदूषितौबुधैः ॥ भेदेकपटस्यावश्यंजायमानत्वात् कपटंविनाभेदासम्भवात् सतितस्मिन्कपटे रसाभास एव ॥ उपगतौ ॥ स्वार्थसम्पादके ॥ साधने ॥ पुरुषकारे ॥ उपायतेऽनेन ॥ अय० ॥ इलश्चेति घञ् ॥

उपायज्ञः । त्रि । कार्यसाधनकुशले ॥

उपायनम् । न । तोषकारिणि । उपहारे ॥ व्रतादिप्रतिष्ठायाम् ॥ उपगमने ॥

॥ उपेयते उपाय्यतेवा । इणगतौ अयगतौवा । कर्मणि ल्युट् ॥

उपारतः । त्रि । सन्निवृत्ते ॥

उपार्ज्जनम् । न । उद्योगादिना उर्थसङ्ग्रहे । अर्ज्जने ॥ स्वत्वेहेतुभूतव्यापारे इतिस्मृतिः ॥

उपार्ज्जित. । त्रि । कृतोपार्ज्जने ॥

उपार्लब्धः । त्रि । अधिक्षिप्ते ॥

उपालम्भः । पुं । दुर्वचने । दुर्वाक्ये ॥ निसचगुणाविष्करणेन स्तुतिपूर्वकः । यथा । महाकुलस्य भवत किमिदमुचितमिति । निन्दापूर्वकश्च । यथा । अन्यकीर्त्तितस्य भवत स्तदिदमुचितमिति ॥ भरतपद्धदूषणे ॥ उपालभ्यते । लभ० । घञ् । उपसर्गात् खल्घञोरितिनुम ॥

उपावृत्त. । त्रि । श्रमशान्त्यर्थं मुहुर्भूमौ लुठितेऽश्वे । लुठिते ॥ पुनरागते ॥ निवृत्ते ॥ उपावृत्तस्य पापेभ्य. पापेभ्यो निवृत्तस्येत्यर्थात् ॥ उपावर्त्ततेस्म । वृत० । क्त ॥

उपाश्रय. । पुं । आश्रये ॥ उपाश्रयणम । श्रिञ० । एरच् ॥

उपाश्रितः । त्रि । एकान्तप्रेमभक्त्या शरणागते ॥ उपाश्रयति उपाश्रीयतेस्म वा । श्रिञ० । गत्यर्थेतिकर्म्मणिक्तः ॥

उपासकः । पुं । स्त्री । शूद्रे । सेवके ॥ त्रि । उपासनाकर्त्तरि ॥ शाक्ताः शैवा वैष्णवश्च सौराःगाणपतास्तथा । द्विध्योपीरःपशुश्चैव तेषु भावा स्त्रयो मताः ॥ सात्त्विकादिविभेदेन पुनश्चैते विभेदिताः ॥ उपास्ते । उप आस० । ण्वुल् ॥

उपासङ्गः । पुं । तूणीरे ॥ उपासज्यन्ते शराः अत्र । षञ्ज सङ्गे । हलश्चेति घञ् ॥

उपासनम् । न । शराभ्यासे ॥ उपक्रमुचेपणे । भावे ल्युट् ॥ उपास्तौ ॥ आसने ॥ सगुणब्रह्मविषयकमानसव्यापाररूपे शाण्डिल्यविद्यादौ ॥ शुश्रूषानसंस्कारादिप्रयोगेषु सेवने ॥ भावनायाम् ॥ लौकिकात्माभिमानवत । यावत्तत्तद्देवतादिस्वरूपात्माभिमानाभिव्यक्ति स्तावल्लौकिकात्मव्यवधानेन स्वेष्टदेवतादिरूपं मनसोपगम्य आसनं चिन्तनमित्यर्थः ॥ नकैवल्यमुपासनात् ॥ आसउपवेशने । भावेल्युट् ॥

उपासना । स्त्री । परिचर्य्यायाम् । शुश्रूषायाम् । परिचर्य्यायाम् ॥ देवाराधने । देवताचिन्तने ॥ यथोक्तं श्रीदेवीभागवते । न विष्णूपासना नित्या वेदेनोक्तातुकुत्रचित । नविष्णुदीक्षानित्यास्ति शिवस्यापितथैव

च ॥ गायत्र्युपासनानित्यासर्ववेदैः समीरिता । ययाविना त्वधः पातो ब्राह्मणस्यास्तिसर्वथा ॥ तावता कृतकृत्यत्वं नान्यापेक्षाद्विजस्यहि । गायत्रीमात्रनिष्णातो द्विजो मोक्षमवाप्नुयात् ॥ कुर्यादन्यन्नवा कुर्यादितिप्राहमनुःस्वयम् । विहायतान्तुगायत्रीविष्णूपास्तिपरायणः ॥ शिवोपास्तिरतोविप्रोनरकंयातिसर्वथा । तस्मादाद्ययुगेराजन् गायत्रीजपतत्पराः ॥ देवीपादाम्बुजरता आसन्सर्वद्विजोत्तमाः ॥ इति ॥ उपासना प्रयोजनं चित्तैकाग्र्यम् सूक्ष्मार्थावधारणसमर्थत्वम् । सत्यलोकप्राप्तिरुपासनाया अवान्तरफलम् ॥ उपासनम् । आस० ग्रश्चेतियुच् । टाप् ॥ उपासितः । त्रि । वरिवसिते । सेविते । कृतोपासने ॥ उपास्यते स्म । आस० । गत्यर्थेति क्तः ॥ उपासीनः । त्रि । समीपस्थे ॥ उपसमीपे आसीनः ॥ कृतोपासने ॥ उपास्तिः । स्त्री । सेवायाम् । तात्पर्येणानुष्ठाने ॥ उप आस० क्तिन् ॥ उपास्यः । त्रि । आराध्ये ॥ ध्येये ॥ उपासितुं योग्यः । ण्यत् ॥ उपास्यं यन्ततत्त्वमित्येपडिण्डिमः ॥ उपाहतम् । त्रि । ताडिते ॥ उपाहन्य



ते स्म । हन् । क्तः ॥ उपाहितः । पुं । अग्नेर्लोत्पाते । उल्कापातादौ । अग्न्युत्पाते ॥ उपआसन्नमाहितंफलंयस्य ॥ त्रि । आरोपिते ॥ संयोजिते ॥ उपाधीयते स्म । दधातेर्हिः । क्तः ॥ उपाह्वयः । पुं । उपनामनि ॥ उपेक्षकः । त्रि । द्वयोर्विवदमानयोः जयपराजयासंसर्गिणि । तत्कृतहर्षविषादाभ्यामसंस्पृष्टे । उदासीने ॥ प्रतीकारवर्जिते ॥ उपेक्षणम् । न । त्यजने । वर्जने ॥ उपेक्षा । स्त्री । चुद्रोपायभेदे । त्यागे ॥ अयत्नयुद्धविषये ॥ औदासीन्ये ॥ अनपेक्षणे ॥ यथा । अपुण्यवत्सु चौदासीन्यमेवभावयेन्नानुमोदनं नद्वेषम् ॥ उपेक्षणम् । ईक्ष० । गुरोश्च हलः । टाप् ॥ उपेक्षिता । त्रि । उपेक्षायाः कर्त्तरि ॥ उपेक्ष्यः । त्रि । उपेक्षाबुद्धिविषये । यथेष्टादेषयो रभावस्तस्मिन् ॥ उपेतः । त्रि । युक्ते ॥ अनुगते ॥ उपेता । पुं । उपायेनोपेयस्य साधकेऽत्मनि ॥ उपेन्द्रः । पुं । केशवे । विष्णौ ॥ इन्द्रमुपगतोऽनुजत्वात् । कुगतीतिसमासः ॥ इन्द्रलोकादप्युपरिलोकेवर्त्त

मानत्वाद्वा । ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण त्वां गास्यन्ति दिवि देवताः । इति हरिवंशः ॥ न । इन्द्रसन्निधौ ॥ अव्ययार्थे ॥

उपेन्द्रवज्रा । स्त्री । त्रिष्टुब्भेदे । एकादशाक्षरच्छन्दोविशेषे ॥ यथा । यदीन्द्रवज्रा चरणाद्यवर्णा नरेन्द्र सर्वे लघवो भवन्ति । उपेन्द्रतुल्यामलशीलशालिन्नुपेन्द्रवज्राभिहिता तदानीम् ॥ यथा । उपेन्द्रवज्रादिमणिच्छटाभिर्विभूषणानां छुरितं वपुस्ते । स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थमिति ॥

उपेयः । त्रि । उपायसाध्ये । प्राप्तव्ये ॥

उपेयिवान् । त्रि । उपगते ॥ उपेयिवाननाश्वाननूचानश्चेति क्वसुप्रत्ययान्तो निपातः ॥

उपेयुषी । स्त्री । सङ्गतायाम् ॥ क्वसुप्रत्ययान्ता दुगितश्चेति ङीप् ॥

उपोढः । पुं । बलविन्यासे । व्यूहे ॥ त्रि । निकटे ॥ ऊढे । विवाहिते ॥ वहेः कर्त्तरि क्तः ॥

उपोती । स्त्री । पूतिकायाम् । पोईशाक ॥

उपोत्तमम् । न । अन्त्यस्य समीपे ॥

उपोदकी । स्त्री । पूतिकायाम् ॥

उपोदिका । स्त्री । पोतक्याम् । मोहन्याम् । पोई इति प्रसिद्धे पत्रशाके ॥ यथा । एकाहं षड्रसोपेता किमन्यैर्व्यञ्जनान्तरैः । तण्डुलैरानतव्यालैर्दत्तस्येषा उपोदिका ॥ कटपत्रवच्छुभपर्णिका परितप्ततैलसुधूपिता । नवहिङ्गुवाससुवासिता परिभोक्तृचित्तविकासिका ॥ सुतप्ततैलविधाचिता सुघनाम्लतक्रविपाचिता । सुपेशिकान्यविभर्जिता भोक्तृरागुरसनाग्रनर्त्तकी ॥ मोदिका शीतलावल्या श्लेष्मला वातपित्तहा । पथ्या च दोषशमनी निद्रापुष्टिकरी मतेति ॥ उपाधिकमुदकमस्याम् । उत्तरपदस्य चेत्युदकस्योदादेशः । कप् । टाप् ॥

उपोदीका । स्त्री । पोतक्याम् ॥

उपोद्घातः । पुं । उदाहारे । प्रकृतोपपादके । प्रकृतस्यार्थं वर्णयितुमर्थान्तरवर्णने । प्रस्तोष्यमाणोपपादके । प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य तदर्थमर्थान्तरवर्णने । युक्त्या सार्थनिदर्शने ॥ चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ॥ उपसमीपे उद्धननं चापनम् । घञ् ॥ निर्दिष्टोपपादकत्वमुपोद्घात इति जगदीशतर्कालङ्कारः ॥

उपोषणम् । न । उपवासे । अभोजने

॥ उपदाहे । ल्युट् ॥

उपोषितम् । नं । उपवासे ॥ उपवसन म् । वसंनिवासे । भावे गत्यर्थेति क्तः । वसतिक्षुधोरितीट् । शासिव सीति षः ॥ त्रि । कृतोपवासे ॥

उप्तः । त्रि । कृतवपने । बोया । इति भाषा ॥ अवकीर्णे । बखेरा । इति भाषा ॥ उप्यते । टुवप० । क्तः ॥ मु ण्डिते ॥

उप्तकृष्टम् । त्रि । सवीजकृष्टक्षेत्रे । वीजवपनानन्तरं कर्षितक्षेत्रे । वीजाकृते ॥ उप्तञ्च तत् कृष्टञ्च । पूर्वकालेति समासः ॥

उप्तिः । स्त्री । वपने ॥ टुवप् । क्तिन् ॥

उभौ । त्रि । द्वयोः ॥ द्वित्वविशिष्टस्य वाचकोनित्यद्विवचनान्तोयंशब्दः ॥

उभय । त्रि । द्विवचनोज्झितद्वयोः । युगले । दो इतिभाषा ॥ उभौ अवयवौ अस्य । तयप् । उभादुदात्तोनित्यमितितयपोऽयजादेशः । कथमुभये देवमनुष्यादति यतोबहूनामुभावयवौ नघटतः । नैषदोष. । अत्रहि द्वौ राशीसमुदायस्यावयवौ । एकोदेवानाम् अपरोमनुष्याणामिति ॥ उभादुदात्तोनित्यमितिनित्यग्रहणस्येदम्प्रयोजनम् वृत्तिविषये उभशब्दप्रयोगोमाभूत उभयशब्दस्यैव यथा स्यादिति ॥

उभयतः । अ । पार्श्वद्वये ॥ सर्वतः ॥ उभयस्मात् । तसिल् ॥

उभयथा । अ । उभयप्रकारे ॥ उभयैः प्रकारैः । प्रकारवचनेथाल् ॥

उभयद्युः । अ । उभयदिने । उभयोरह्नोः ॥ द्युश्चोभयाद्वक्तव्यइतिसाधुः ॥

उभयेद्युः । अ । दिनद्वये । उभयोरह्नोः ॥ सद्यःपरुदिति उभयादेद्युस् निपातितः ॥

उम् । अ । रोषे ॥ अङ्गीकृतौ ॥ प्रश्ने ॥ अवनम् । उङ् शब्दे । डुम् प्रत्ययः ॥

उमा । स्त्री । कात्त्यायन्याम् । दुर्गायाम् ॥ श्रीमन्हेशस्य मा लक्ष्मीः ॥ उमेति माता तपसेनिषिद्धत्वाद्वा । आकारान्तादपिटाप् । टायामिति भाष्यप्रयोगात् । अजादित्वाद्वा ॥ उं शिवं माति । मामाने क्मिमीतेर्वा । माङ्माने शब्देच । आतोनुपसर्गेतिकः । अजादित्वाट्टाप् ॥ अवति त्रायते वो । उङ् शब्दे । विभाषातिलमापोमेतिनिपातनात् मक् ॥ अतस्याम् ॥ हरिद्रायाम् ॥ कीर्त्तौ ॥ कान्त्याम् ॥ शान्तौ ॥

उमाकटम् । न । हरिद्रादिरजसि ॥ उमायारजः । अलावूतिलेतिकटच् ॥

उमागुरुः । पुं । हिमालयाचले ॥

उमाचतुर्थी । स्त्री । ज्येष्ठशुक्लचतुर्थ्याम् ॥ यथोक्तं ब्रह्मपुराणे । ज्येष्ठशुक्लचतुर्थ्यान्तुजाता पूर्वमुमासती । तस्मात्सातत्रसम्पूज्या स्त्रीभिः सौभाग्यवृद्धये इति ॥

उमाधवः । पुं । सदाशिवे ॥ उमायाः धवः ॥

उमापतिः । पुं । शिवे ॥ उमायाःपतिः

उमावनम् । न । वाणपुर्य्याम् । शोणितपुरे । देवी कोटे ।

उमासुतः । पुं । } कार्त्तिकेये ॥ षष्ठी
उमासूनुः । पुं । } समासः ॥

उमेशः । पुं । } महादेवे । ईश्वरे ॥
उमेश्वरः । पुं । } षष्ठीसमासः ॥

उम्बरः । पुं । द्वारोर्द्धकाष्ठे॥ देहल्याम्॥

उम्बी । स्त्री । उम्बीतिलोकप्रसिद्धे च र्णके ॥ मञ्जरीन्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेनसम्भृष्टा बुधैरुम्बीतिसास्मृता ॥ उम्बीकफप्रदा बल्यालघ्वीपित्तानिलापहा ॥

उम्यम् । न । उमाक्षेत्रे । औमीने ॥ उमानां भवनंचेदम् । विभाषातिलमाषोमेतियत् ॥

उरःसूचिका । स्त्री । मुक्ताकृतहारविशेषे ॥ उरसः सूचमिव । इवेप्रतिकृताविति कन् ॥

उरगः । पुं । वासुकिप्रभृतौ पन्नगे ॥ उरसागच्छति । उरसोलोपश्चेति । डप्रत्ययः सकारलोपश्च ॥ सीसके ॥ खले ।

उरगस्थानम् । न । पाताले ॥

उरगाशनः । पुं । गरुडे ॥ उरगानश्नाति । अश० । ल्युः ॥ उरगा अशनमस्येतिवा ॥

उरणः । पुं । मेषे ॥ ऋच्छति अर्य्यतेवा । ऋगतौ । अर्त्तेः क्युरुश्चेति क्युरादेशः ॥

उरणाक्षः । पुं । पद्माटोषधौ । दद्रुघ्ने ॥ उरणस्य मेषस्याक्षिरिवाक्षि यस्य तत्तुल्यपुष्पत्वात् । अक्ष्णोदर्शनादिषच ॥

उरणाख्यः । पुं । पद्माटे । चक्रमर्दके । पमांड इतिभाषा ॥ उरणस्यमेषस्याख्या आख्याऽस्य ॥

उरभ्रः । पुं । स्त्री । मेषे ॥ उरुभ्रमति । भ्रमुचलने । अन्येभ्योऽपीतिडः । पृ० ॥ यद्वा । उनागमुनारभ्यते । रभराभस्ये । बाहुलकाद्रक् ॥

उररी । अ । अङ्गीकृतौ ॥ विस्तारे ॥ ऋयतेर्वाहुलकात् ररीक् । सम्प्रसारणञ्च ॥

उररीकारः । पुं । अङ्गीकारे ॥

उररीकृतम् । वि । अङ्गीकृते । स्वीकृते ॥ विस्तृते ॥ उररीक्रियतेस्म । क्तः ॥

उरश्छदः । पुं । कवचे ॥ उरश्छाद्यते ऽनेन । छद अपवारणे । पुंसीतिघः । छादेर्घेद्व्युपसर्गस्येतिह्रस्वः ॥

उरः । न । वक्षःस्थले । वक्षसि ॥ श्रेष्ठे ॥ इयर्त्ति । ऋगतौ । अर्त्तेर्बश्चेत्य- सुन् । उरादेशः किच्च ॥

उरसिजः । पुं । स्तने ॥ उरसिजाय ते । जनी० । सप्तम्यांजनेर्डः । हल दन्तादित्यलुक् ॥

उरसिलः । त्रि । प्रशस्तवक्षोयुक्ते । उर स्वति ॥ प्रशस्त मतिशयितंवा उरो ऽस्त्यस्य । पिच्छादित्वादिलच् । उ रसावलं लक्ष्यते इतिस्वामी ॥

उरस्कटः । पुं । वाससामुत्तरीयविशे षे । वामयज्ञोपवीतके । पञ्चवटे । सुकुवाछाड इतिगौडभाषाप्रसिद्धे । गाती इतिभाषा ॥

उरस्त्रम् । न । उरश्छदे ॥

उरस्त्राणम् । न । नागोदरे । वक्षस्त्रा णकवचे ॥

उरस्यः । त्रि । औरसेपुत्रे । स्वजाते ॥ उरसानिर्मितः पुत्रः । उरसोऽणचे तियत् ॥ उरसा एकदिक्षा । उरसो यच्चेतियत् ॥ वाऽऽसिः । उरस्तः ॥ उरस्यवा । गाव्यादिभ्योयः ॥

उरस्वान् । त्रि । उरसिले ॥ प्रशस्तम तिशयितंवा उरोऽस्यास्ति विशालवक्षस्त्वात् । मतुप् । मादुपधाया इतिवः ॥

उररी । अ । अङ्गीकारे ॥ विस्तारे ॥ व यतेरीक् । सम्प्रसारणञ्च बाहुल कात् ॥

उरीकारः । पुं । स्वीकारे ॥ विस्तारे ॥

उरीकृतः । त्रि । स्वीकृते ॥ विस्तृते ॥ उरीक्रियतेस्म । क्तः ॥

उरुः । त्रि । विशाले । विपुले । महति । बडे ॥ ऊर्णोति । ऊर्णुञ्० । मह तिह्रस्वश्चेति कुप्रत्ययो नुलोपो ह्र स्वश्च ॥

उरुकालः । पुं ।<br>उरुकालकः । पुं । } महाकालनतायाम् ॥

उरुक्रमः । त्रि । भगवति ॥ उरुर्महान् क्रमः शक्तिर्यस्य ॥

उरुगायः । पुं । श्रीकृष्णे ॥ बहुकीर्त्ति मति ॥

उरुचक्षाः । त्रि । विस्तीर्णतेजसि ॥

उरुमानः । पुं । पूजायाम् ॥

उररी । अ । अङ्गीकारे ॥ विस्तारे ॥

उरुवुकः । पुं । रक्तैरण्डे ॥

उरुवूकः । पुं । एरण्डे ॥ रक्तैरण्डे ॥ उरुं महान्तं वायति । ओवैशोषणे । उल्रूकादयश्चेत्यूकः ॥ कार्येऽस्यमूलं ग्राह्यम् ॥

उरुव्यचाः । पुं । राघवे ॥

उरोजः । पुं । स्तने ॥

नुपेति कः ॥

उलूखलकम् । न । उलूखलार्थे ॥ स्वार्थे कः ॥

उलूतः । पुं । अजगरसर्प्पे ॥

उलूपी । पुं । शिशुके । ओ्रॅशु इतिप्रसिद्धे मत्स्यप्रभेदे ॥ चुलुम्पिनि । गौड़भाषायाम् उपल इतिप्रसिद्धे अतिचञ्चलेमत्स्यविशेषे ॥ शिशुमाराकृतौमत्स्यविशेषे ॥ उ विस्मयजनकंरूपमस्यास्ति । अतइनिः । रलयोरैक्यम् । ओः शम्भोः रूपमस्यास्तीतिवा ॥

उलूपी । स्त्री । अर्जुनभार्य्यायाम् । कौरव्यनाम्नो नागस्य कन्यायाम् ॥

उलूलुः । पुं । उत्सवकालिके गौडादिदेशप्रसिद्धे स्त्रीभिःक्रियमाणे शब्दविशेषे ॥

उल्का । स्त्री । अग्निनिर्गतज्वालायाम् ॥ अनले ॥ तेजःपुञ्जे । रेखाकारेऽन्तरीक्षात् पतन्त्यांतिपि ॥ अस्यास्वरूपमदर्शनन्तु । दिविभुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः । धिष्योल्काशनिविद्युत्तारा इतिपञ्चधाभिन्नाः ॥ अस्यालक्षणम् । उल्काशिरसिविशाला निपतन्ती वर्द्धतेमतनुपुच्छा । दीर्घाचभवति पुरुषं भेदावहेमयन्त्यस्याः ॥ कात्यमोपि । एकचिद्रवाचछम्माया रक्तानोज्वलां । पैतामहीयप्रमाणेन उल्कानानाविधास्मृता । इति ॥ ओषति । उषदाहे । अर्थतेवा । ऋगतौ । शुकवल्कोल्का इति साधुः ॥

उल्कापातः । पुं । अग्निशिखावत्तेजःपाते ॥ उल्कायाःपातः ॥

उल्कामुखी । स्त्री । शिवा । लोमाशिकायाम् । दीप्तजिह्वायाम् । लोमडीइतिभाषा ॥ उल्कामुखेऽस्याः ॥

उल्मुकम् । न । अङ्गारे । अलाते ॥ ओषति । उष० । उल्मुकदर्वीतिनिपातनात्साधुः । षस्थलः मुकप्रत्ययश्च ॥

उल्लङ्घनम् । न । अतिक्रमणे ॥ अन्यथाकरणे ॥ उत्लङ्घेल्युट् ॥

उल्लल: । त्रि । रोमशे । बहुरोमयुक्ते ॥

उल्ललन् । त्रि । उत्प्लवमाने ॥

उल्ललितः । त्रि । आन्दोलिते । तरलिते ॥ चलिते ॥

उल्लसन् । त्रि । शोभमाने ॥

उल्लसनकम् । न । रोमाञ्चे ॥

उल्लसितः । त्रि । उद्वृत्ते ॥ उद्गते ॥ विचित्रिते ॥

उल्लाघः । त्रि । शुचौ ॥ कृष्णे । मरिचे ॥ दक्षे ॥ गदान्निर्गते । नीरोगे ॥ उल्लाघतेस्म । लाघसामर्थ्ये । गत्यर्थेतिक्तः । उल्लाघ्यतेस्म । अनुपसर्गा

त् फुल्लचीवेतिवा साधुः॥

उल्लापः। पुं। काकुभाचि। शोकरोगादिनाध्वनेर्विकारे॥

उल्लापनम्। न। वर्त्तिकादिकृजुकरणे॥

उल्लासः। पुं। ग्रन्थपरिच्छेदे॥ प्रकाशे॥ आह्लादे॥ वृद्धौ॥ उल्लसनम्। लसश्लेषणक्रीडनयोः। घञ्॥ अलङ्कारविशेषे। एकस्यगुणदोषाभ्यामुल्लासोऽन्यस्यतौ यदि॥

उल्लिखितः। त्रि। उत्कीर्णे॥ तनूकृते॥ उपरिलिखिते॥ चित्रिते॥

उल्लिङ्गितः। त्रि। भङ्गिभिरेवसम्यग्वचाते॥

उल्लेखः। पुं। उच्चारणे। कथने॥ अलङ्कारविशेषे। बहुभिर्बहुधोल्लेखादेकस्योल्लेखइष्यते। एकेनबहुधोल्लेखोऽप्यसौविषयभेदतः॥ स्त्रीभिः कामोऽर्थिभिःस्वर्द्रुः कालः शत्रुभिरैचि सः। गुरुर्वचस्यर्जुनोऽयंकीर्त्त्याभीष्मः शरासने॥ उल्लेखनम्। उत् लिखेर्घञ्॥

उल्लेखनम्। न। वमने॥ खनने॥ उच्चारणे॥ यथा। मासपक्षतिथीनाञ्चनिमित्तानाञ्चसर्वशः। उल्लेखनमकुर्वाणोनतस्यफलभाग्भवेदिति॥ लिखः। ल्युट्॥

उल्लोचः। पुं। विताने। चन्द्रातपे। चंदोआ इतिभाषा॥ ऊर्द्ध्वं लोचति। लोचृमासने। अच्॥ ऊर्द्ध्वं लोच्यते वा। लोचृदर्शने। घञ्॥ कुत्वन्तुनिष्ठायामनिट इतिवचनात्। अस्य तुतत्र सेट्त्वात्॥

उल्लोलः। पुं। कल्लोले। महोर्मौ। वडढेउ इतिगौडभाषा॥ उत्तोलयति। लोडृउन्मादे। णिच्। पचाद्यच्। डलयोरेकत्वम्॥

उल्बम्। न। जरायौ। गर्भवेष्टनेच चर्मणि॥ कमले॥ गर्भे॥ उल्वीयते। वीङ्श्लेषणे। उलूखलादयश्चेतिसाधु। यद्वा। ओलति उल्यतेवा। उचूषौषोदाहे। बल्यते वा बलप्राणने। अथवा उष्यतिउच्यते समवैत्यनेन वा। उचसमवाये। प्राग्वत्॥

उल्बणः। त्रि। व्यक्ते। स्पष्टे॥ उल्वयति वणशब्दे। पचाद्यच्। पृषोदरादिः॥

उशन्। त्रि। कामयमाने॥

उशत्तमः। त्रि। कमनीये॥

उशना। पुं। भार्गवे। शुक्रे॥ वष्टि। वशकान्तौ। वशेः कनसिः। ग्रह्यादित्वात् सम्प्रसारणम्। ऋदुशन-स्पुरुदंस इत्यनङ्। उशना उशनसौ। अस्य सम्बुद्धौ वा अनङ् नलोपश्चवा। हे

उषा

सूत्रे . स्ववसुस्वतवसोर्मासउषसश्च तइष्यते इतिवार्त्तिकस्य समुपक्षिरिष्युदाहरणं विवृण्वद्भिर्हरदत्तादिभिरयं पाठः पुरस्कृतः॥ स्त्री। द्वियोदुहितरि देवतायाम् ॥

उषसी। स्त्री। पिहुप्रस्थाम्। सायंसन्ध्यायाम्॥

उषस्तिः। पुं। ऋषिविशेषे। चाक्रायणे॥

उषस्यम्। न। हविर्विशेषे॥ त्रि। तद्देवताकद्रव्ये॥उषस् शब्दोदिवोदुहितरं देवता माचष्टे।सा देवता अस्य विवाय्वृतुपितुषसो यत्॥

उषा। अ। रात्री॥ रात्र्यन्ते॥ ओषति। उष०। का प्रत्ययः॥ सातु नष्टतेजः परिहानिमारभ्य भानोरुदयं यावद्भवति। यथाह वराहः। अर्द्धोस्तमयात् सन्ध्याव्यक्तीभूता न तारकायावत्। तेजः परिहानि मु पाभानोरर्द्धोदयं यावदिति॥

उषा। स्त्री। बाणासुरसुतायाम्। अनिरुद्धस्य भार्य्यायाम्॥ रात्रौ। धेनौ॥ सायंसन्ध्यायाम्॥ ओषति। उष०। इगुपधेतिकः। टाप्॥ यत्नामुष्टर्यान्तरे॥ यथा। प्रभ्रष्टयुतितारकास्फुटतटी प्राचीभवे विसंत्वा त्वौ पद्गतविलोहितात्मवचादेनैःसदा

उष्णगौ

वाच्छिता। नो वारं न तिथिं न योगककरणं लग्नञ्च नामेच्यते हन्ता दोषसहस्रसञ्चयमुषा नूनं करोत्युन्नतिमिति॥

उषाकलः। पुं। कुक्कुटे। ताम्रचूडे॥ उषायां कलोऽस्य॥

उषापतिः। पुं। अनिरुद्धे। कामात्मजे॥ उषाया पतिः॥

उषारमणः। पुं। अनिरुद्धे। कन्दर्पतनये॥ उषायाः रमणः॥

उषितः। त्रि। व्युषिते। पर्युषिते। वुसादतिभाषा॥ प्लुष्टे। दग्धे॥ स्थिते। कृतनिवासे॥ त्वरिते॥ उष्यतेस्म। उष०। क्तः॥ वसेर्गत्यर्थाकर्मकेतिक्तः। यजादि। अनुदात्तत्वादिट् प्रतिषेधे प्राप्ते वसतिक्षुधोरितीट्॥

उषेशः। पुं। अनिरुद्धे॥

उष्ट्रः। पुं। क्रमेलके। लम्बोष्ठे॥ ओषति उष्यतेवा। उष०। उषिखनिभ्यां कित्। उप्राण्या। वाहरथे॥ इतिधरणी॥

उष्ट्रकाण्डी। स्त्री। रक्तपुष्प्याम्। कार्य्पुष्प्याम्॥ऊँटाटोइतिगौडभाषा॥

उष्ट्रगोयुगम्। न। उष्ट्रयोः॥ द्वासुष्ट्रौ। द्विगोयुगच॥

उष्ट्रगोष्ठम्। न। उष्ट्रशालायाम्॥ उष्ट्र

गोस्थानम् । गोष्ठञ्च ॥

उष्ट्रधूसरपुच्छिका । स्त्री । विछाती वि चिटीति गौडभाषाप्रसिद्धे वृक्षवि शेषे ॥

उष्ट्रपादिका । स्त्री । मदनमालीतिगौ डभाषाप्रसिद्धे वृक्षविशेषे । भूमि मल्लिकायाम् ॥

उष्ट्रशिरोधरम् । न । उष्ट्रग्रीवसंज्ञे भ गन्दररोगविशेषे ॥ तस्य लक्षणम् । प्रकोपणैः पित्तमतिप्रकोपितं करो तिरक्तांपिटकांगुदागताम् । तदाशु पाकाह्विमपूतिवाहिनी भगन्दरन्तू ष्ट्रशिरोधरं वदेतिनिदानम् ॥

उष्ट्रिका । स्त्री । मृद्भाण्डप्रभेदे । मद्यभाण्डे ॥ करभयोषिति । ऊं टिनीइतिभाषा ॥ वृश्चिकालीवृक्षे॥

उष्ट्री । स्त्री । मृद्भाण्डविशेषे॥ करभ्याम् । याम्याम् ॥ उषेःष्ट्रन्तात्ङीष् ॥

उष्णः । पुं । ग्रीष्मर्त्तौ । निदाघे ॥ आतपे ॥ पलाण्डौ ॥ नरकान्तरे ॥ त्रि । अशीते ॥ ओषति । उष० । इग्युपधज्ञाप्रीकिरः क इतिनक् ॥ निरालस्ये । चतुरे । दक्षे ॥ उष्णस्पर्शोपकारित्वमस्यास्ति । अर्श-आद्यच् ॥

उष्णकः । पुं । निदाघे ॥ ज्वरे ॥ त्रि । क्षिप्रकारिणि ॥ आतुरे ॥ उष्णमिव उष्णम् । तंकरोति । शीतोष्णाभ्यांकारिणीतिकन् ॥ उष्णं कार्यमस्य । कालप्रयोजनाद्रोगे इतिकन् ॥ यावादिषु स्मृता पुष्णशीतइतिस्वार्थेकन्वा ॥

उष्णगुः । पुं । सूर्य्ये ॥ उष्णागावोऽस्य॥

उष्णनदी । स्त्री । वैतरिण्याम् ॥

उष्णरश्मिः । पुं । सूर्य्ये ॥ उष्णारश्मयोऽस्य ॥

उष्णवातः । पुं । मूत्राघातविशेषे ॥

उष्णवारणम् । न । आतपत्रे । छत्रे ॥

उष्णवीर्य्यः । पुं । शिशुमारे ॥ त्रि । वीर्योष्णवस्तुनि ॥ उष्णं वीर्यमस्य ॥

उष्णा । स्त्री । क्षयव्याधौ ॥ सन्तापे ॥ पित्ते ॥

उष्णांशुः । पुं । सूर्ये ॥

उष्णागमः । पुं । निदाघकाले ॥ उष्णस्य आगमो यस्मिन् ॥

उष्णालुः । त्रि । उष्णपीडिते ॥ उष्णं नसहते । शीतोष्णेत्यालुः ॥

उष्णासहः । पुं । हेमन्तर्त्तौ ॥

उष्णिका । स्त्री । यवाग्वाम् । जाउ इतिगौडभाषा ॥ अल्पमन्नमस्याम् । ब्राह्मणकोष्णिकेसंज्ञायामितिकन् । निपातनादन्नशब्दस्योष्णादेशः ॥ द्यायाम् ॥

उष्णिक् । स्त्री । सप्ताक्षरायांवृत्तौ ॥ यथा । रङ्गे बाहुविस्फुरणात् कुम्भीन्द्रा

न्मदलेखा । लम्बाभून्मुरशत्रोः कस्तूरीरसचर्चा इति ॥ उत् स्निह्यति । स्निह प्रीतौ । ऋत्विगित्यादिना उत्पूर्वात् स्निहेः क्विन् । निपातनादुपसर्गान्तलोपः षत्वञ्च । क्विन्प्रत्ययान्तत्वात् कुत्वेन हस्य घः ॥

उष्णीषः । पुं । न । शिरोवेष्टनवस्त्रे । पाग पगडी इतिभाषा ॥ अस्य गुणा यथा । उष्णीषं कान्तिकृत् केश्यं रजोवातकफापहम् । लघु चेच्छस्यते यस्माद्गुरुपित्ताक्षिरोगकृदिति भावप्रकाशः ॥ किरीटे ॥ लक्षणान्तरे ॥ उष्णमीषते हिनस्ति । ईष गतिहिंसादर्शनेषु । इगुपधेति कः । शकन्ध्वादिः ॥

उष्णोदकम् । न । तप्तजले ॥ क्वाथ्यमानपादांशशेषार्द्धावशेषपादहीनजले । अस्य गुणाः । तत्पादहीनं यत्तन्नं मध्यहीनन्तु पित्तनुत् । कफघ्नं पादशेषस्थं पानीयं लघुदीपनमिति ॥ उष्णञ्च तत् उदकञ्च ॥

उष्णोपगमः । पुं । निदाघे ॥ उष्णः उपगमोऽत्र ॥

उष्मः । पुं । निदाघे ॥ आतपे ॥ वसन्तकाले ।

उष्मकः । पुं । ग्रीष्मर्त्तौ । ऊषति रुजति । ऊष रुजायाम् । अन्येभ्योऽपीति मनिन् । श्वादित्वात् कन् ॥

उष्मपाः । पुं । पितृगणविशेषे ॥ उष्मपास्तु कवेः सुताः ॥ उष्माणं पिबन्ति । पा पाने । क्विप् ॥ यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः इति स्मृतिः ॥

उष्मागमः । पुं । आतपे । निदाघे ॥ ओषतीत्युष्मा । अन्येभ्य इति मनिन् । आगच्छतीत्यागमः । अच् । उष्मातापस्यागमोऽत्र ॥

उस्रः । पुं । वृषे ॥ मयूखे । किरणे ॥ वसन्ति रसा अस्मिन् । वस० स्फायितञ्चीति रक् । यजादित्वात् सम्प्रसारणम् । नरपरेति षत्वाभावः ॥

उस्रा । स्त्री । अर्जुन्याम् । गवि ॥ उपचित्रायाम् ॥ वसति क्षीरमस्याम् । उस्राष्टाप् ॥

उह । अ । सम्बोधनार्थ ॥ एवार्थे ॥ उ च ह चेति विग्रहः ॥

उहह । अ । सम्बोधने ॥ उहश्च हश्च ॥

उहानः । पुं । देशविशेषे ॥

उह्यमानः । त्रि । आकृष्यमाणे ॥ वहनेन प्राप्यमाणे ॥ वह्नेः कर्मणि शानच् ॥

उह्रः । पुं । अनडुहि ॥ वहति । वह० । दशपाद्यां स्फायितञ्चीतिसूत्रे दम्भिवचिवसीतिपाठात् रक् ॥

ऊः

ऊ। अ। वाक्यारम्भे ॥ रक्षायाम् ॥ अनुकम्पायाम् ॥ सम्बोधने ॥

ऊः। पुं। महेश्वरे ॥ चन्द्रे ॥ प्रापिते ॥ अवति। अवरक्षणादौ। कर्त्तरि क्विप्। ज्वरत्वरेत्यूठ् ॥ ऊकारे ॥

ऊढः। त्रि। विवाहिते ॥ वहनकर्मणि। कृतवहने ॥ धृते ॥ उह्यतेस्म। वह। क्तः ॥

ऊढकङ्कटः। त्रि। वर्म्मिते। सन्नद्धे। वसनाच्छे ॥ ऊढो धृतः कङ्कटः कवचो येन ॥

ऊढा। स्त्री। भार्यायाम् ॥ टाप् ॥

ऊतः। त्रि। स्यूते ॥ ऊयतेस्म। ऊयी तन्तुसन्ताने। क्तः ॥

ऊतिः। स्त्री। रक्षणे ॥ स्यूतौ। सिमाइ इति भाषा ॥ लीलायाम् ॥ अवनम्। अव०। ऊतियूतीत्यादिना क्तिन्। ज्वरत्वरेत्यूठ् ॥

ऊधन्यम्। त्रि। ऊधसे हिते ॥ गवादिषु ऊधसोनङ् चेतियत् ॥

ऊधः। न। आपीने। क्षीराशये ॥ बहति उनस्तिया। वहप्रापणे उन्दीक्लेदने वा। असुन्। ऊधसोनङितिनि — ङ्देशात् ऊधादेशः ॥

ऊधस्यम्। न। दुग्धे। ऊधसि भवम्। यत् ॥

ऊनः। त्रि। न्यूने। हीने। असम्पूर्णे ॥ ऊनयति। ऊनपरिहाने। पचाद्यच् ॥

ऊम्। अ। रोषोक्तौ ॥ पृच्छायाम् ॥ ऊयते। ऊयी०। मूलविभुजादित्वात् कः ॥

ऊममम्। न। नगरे ॥ अवति। अव०। अविसिवीत्यादिना मन् कित् ॥

ऊररी। अ। अङ्गीकारे ॥ ततौ। विस्तारे ॥ ऊयते। ऊयी०। बाहुलकात् अरीक् ॥

ऊरव्यः। पुं। वैश्ये ॥ ब्राह्मण ऊरोर्जाता। शरीरावयवाद्यत्। गुणावादेशौ ॥ त्रि। ऊरुसमुद्भवे ॥

ऊरी। अ। अङ्गीकृतौ ॥ विस्तारे ॥ ऊयते। ऊयी०। बाहुलकाद्रीक् ॥

ऊरीकृतः। त्रि। अङ्गीकृते ॥ तते। विस्तृते ॥ ऊरीक्रियतेस्म। क्तः ॥

ऊरुः। पुं। जानूपरिभागे। सक्थिनि ॥ ऊर्णूयते आच्छाद्यते। ऊर्णुञ्०। ऊर्णोतेर्नुलोपश्चेति कर्मणि कुः ॥

ऊरुजः। पुं। वैश्ये ॥ ऊरोर्जातः। जनी०। पञ्चम्या मजातावितिडः ॥

ऊरुपर्वा। पुं। न। जानुनि। अष्ठीवति। घोंटू घुटना इति भाषा ॥ ऊरोः पर्व ॥

ऊररी । अ । अङ्गीकारे ॥ विस्तारे ॥

ऊरुस्तम्भः । पुं । रोगविशेषे ॥ तस्य रूपम् । परकीया विषगुरुस्यातामतिशयव्यथौ । ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राछर्द्यरुचिज्वरैः ॥ संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे इति ॥

ऊरुस्तम्भा । स्त्री । कदलीवृक्षे ॥

ऊर्क् । न । बले ॥ अन्ने ॥ ऊर्ज्जस्त्वक्स्रजादिषु भ्राजभासेति क्विप् ॥ अम्नतशब्दाभिधेयोऽत्यन्तसारभूतः स्वच्छोदरस ऊर्गुच्यते इति मीमांसकाः ॥

ऊर्ज्जः । पुं । कार्त्तिकमासे ॥ उत्साहे ॥ बले ॥ प्राणने ॥ कार्त्तिकनाम्निवर्षविशेषे ॥ न । जले । पानीये ॥ ऊर्जयति उत्साहयति जिगीषून् । ऊर्ज्ज बलप्राणनयोः । ण्यन्तात् पचाद्यच् ॥ असुनि सान्तोप्ययम् ॥

ऊर्ज्जस्वलः । त्रि । बलाधिके । ऊर्जस्विनि ॥ अतिशयितः ऊर्जो बलमस्यास्ति । ज्योत्स्नातमिस्रेति ऊर्जसो यलच् । अदन्त ऊर्जशब्दाद्वलचि सगपि निपात्यः ॥ अलङ्कारविशेषे ॥ रसभेदतदाभासतत्प्रशमानानिबन्धनेन रसवत् प्रेयः ऊर्जस्वसमाहितालङ्कार इति सूत्रात् । तत्प्रशमानबन्धने समाहितालङ्कार इत्यर्थः ॥

ऊर्ज्जस्वी । त्रि । बलाधिके । ऊर्जस्वले ॥ अतिशयित ऊर्जो बलमस्यास्ति । ज्योत्स्नातमिस्रेति विनिः । अदन्तात् विनिकृते सगपि निपात्यः ॥ न । अलङ्कारविशेषे ॥ ऊर्ज्जस्विरूढाहङ्कारमिति तस्य लक्षणम् । साहङ्कारवस्त्वभिधानमित्यर्थः ॥

ऊर्ज्जितः । त्रि । बलाद्यतिशययुक्ते । बलप्रकर्षशालिनि ॥ बलार्थादूर्जशब्दात्तारकादित्वादितच् ॥ बलार्थादूर्जेर्गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तो वा ॥

ऊर्ज्जितशासनः । पुं । नारायणे ॥ श्रुतिस्मृतिलक्षणमूर्जितं शासनमस्य । यथा । श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोपि न वैष्णवः ॥ इति भगवद्वचनम् ॥

ऊर्ज्जितिः । स्त्री । उत्कर्षे ॥

ऊर्णनाभः । पुं । मर्कटके । लूतायाम् । तन्तुसर्जने प्रसिद्धजीवे । मकडी इतिभाषा ॥ ऊर्णेव तन्तुर्नाभावस्य । अजितियोगविभागादच् । ङ्यापोरिति ह्रस्वः ॥

ऊर्णनाभिः । पुं । लूतायाम् ॥ ऊर्णा-नाभावस्य ॥

ऊर्णा। स्त्री। मेषादिलोम्नि। ऊनइति भाषा॥ भ्रुवोरन्तरावर्त्ते॥ सतुभ्रूंद्वयमध्येसृणालतन्तुसूक्ष्मः शुभायतएकःप्रशस्तावर्त्तो महापुरुषलक्षणम्। चक्रवर्त्यादीनां महायोगिनाञ्चभवति॥ ऊर्णोति। ऊर्णु॰। अन्येभ्योपीतिडः। ऊर्णोतेर्डइतिडेवा॥

ऊर्णायुः। पुं। चर्णभक्ते। ऊर्णनाभे॥ मेषे॥ मेषलोमकम्बले। पट्टूदेवडु लोई मक्खी इतिभाषा॥ ऊर्णाऽस्यास्ति। ऊर्णायायुस्। सिच्वात्पदत्वम्। तेनयस्येतिलोपोन॥

ऊर्दरः। पुं। राक्षसे॥ शूरे॥ ऊर्ज्जमुद्दृणाति। दॄ॰। ऊर्जिद्दृणातेरलमौपूर्वपदान्त्यलोपश्च। अलचोःस्वरे भेदः॥

ऊर्द्धः। त्रि। उच्छ्रिते॥ तुङ्गे॥ उपरिष्टात्। उपर्य्यर्थे॥ दण्डवत्स्थिते॥ ऊर्द्धशब्दो दीर्घादिर्निर्विकारः सवकारश्चदृश्यते॥

ऊर्द्धकः। पुं। मृदङ्गविशेषे॥ यवमध्याकृतिरूर्द्धकः॥ शब्दार्णवस्तु। ऊर्द्धकोगोपुच्छवत्सवितालोऽष्टाङ्गुलोमुखे। पृष्ठोर्द्धेवाद्यते तेषांवादनंदुर्जननना॥ इतिना॥ अपिच। हरीतक्याकृतिस्त्वङ्कुस्तथालिङ्ग्योयवाकृ

तिः। ऊर्द्धकोदण्डतुल्यः स्यान्मुरजाभेदतोमताः॥ ऊर्द्धःकायति। कै शब्दे। सुपीतिकः॥

ऊर्द्धकर्णी। स्त्री। महाशतवीर्य्याम्॥

ऊर्द्धगमः। पुं। ऊर्द्धस्थे॥ इतित्रिकाण्डशेषः॥

ऊर्द्धजानुः। त्रि। उपरिभागेस्थूलजानुके। ऊर्द्धज्ञौ॥ ऊर्द्धेजानुनीयस्य॥

ऊर्द्धज्ञः। त्रि। ऊर्द्धजानुनि॥

ऊर्द्धज्ञुः। त्रि। ऊर्द्धजानुनि॥ ऊर्द्धेजानुनीयस्य। ऊर्द्धाद्विभाषेतिपक्षेज्ञुः॥

ऊर्द्धदेवः। पुं। विष्णौ। हरौ॥

ऊर्द्धपादः। पुं। शरभे॥

ऊर्द्धपुण्ड्रः। पुं। तिलकविशेषे॥ सतुब्राह्मणललाटे पुण्ड्रेक्षुवत् चन्दनादिनाकृतोर्द्धरेखात्रयरूपः। यथा। ऊर्द्धपुण्ड्रेत्रिपुण्ड्रंस्यात् त्रिपुण्ड्रेनोर्द्धपुण्ड्रकमिति। ऊर्द्धपुण्ड्रंद्विजःकुर्य्याद्वारिमृद्भस्मचन्दनैरित्यादिचवह्वः। ऊर्द्धपुण्ड्रंसदाकुर्य्यात् त्रिपुण्ड्रं भस्मनासदा। तिलकंवैद्विजःकुर्य्याच्चन्दनेनयदृच्छया॥ ऊर्द्धपुण्ड्रंद्विजःकुर्य्यात् क्षत्रियस्तुत्रिपुण्ड्रकम्। अर्द्धचन्द्रन्तुवैश्यश्च वर्त्तुलंशूद्रयोनिजः॥ इतिब्रह्माण्डपुराणम्। अशुचिर्वाप्यनाचारोमनसापापमाचरे-

त्। शुचिरेवभवेन्नित्यमूर्द्ध्वपुण्ड्राङ्कितो नरः॥ ऊर्द्ध्वपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित्। श्वपाकोऽपि विमानस्थो मम लोके महीयते॥ इति॥ वैदिकातिरिक्त एवास्याधिकारी॥ यथोक्तं देवीभागवते श्रीनारायणेन। ऊर्द्ध्वपुण्ड्रं त्रिशूलं वा वर्त्तुलं चतुरस्रकम्। अर्द्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत्॥ जैनो नास्तमजातिस्तु वेदपन्थानमाश्रितः। पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत्॥ ख्यातिकान्त्यादिसिद्ध्यर्थं चापि विष्णवागमादिषु। स्थितं पुण्ड्रान्तरं नैव धारयेद्वैदिको जनः॥ इत्यादि॥ ऊर्द्ध्वश्चासौ पुण्ड्रश्च॥

ऊर्द्ध्वम्। अ। ऊर्द्ध्वशब्दार्थे॥

ऊर्द्ध्वमानम्। न। उन्माने॥ यथादिशब्दवाच्येन पाषाणादिना तुलादावारोपितेन येन सुवर्णादेर्गुरुत्वमुन्मीयते तदूर्द्ध्वारोपणादूर्द्ध्वमानमिति शब्देन विवक्षितम्। वट्ट पाट इति च यस्य भाषा॥ कर्षादौ॥ ऊर्द्ध्वविस्थितेन येन मीयते तत्। प्रथमस्य द्वितीयस्य ऊर्द्ध्वमाने मतौ ममेति मथाभाष्योक्तेः। प्रथमद्वितीयौ द्वयसज्दघ्नौ॥

ऊर्द्ध्वमुखम्। न। नक्षत्रविशेषेषु। यथा। आर्द्रा पुष्या धनिष्ठा च शतताख्या श्रवणा तथा। रोहिणी चोत्तराश्चैव नवैवोर्द्ध्वमुखाः स्मृताः इति॥

ऊर्द्ध्वमूलः। पुं। संसारवृक्षे॥ ऊर्द्ध्वमुत्कृष्टं कारणं कार्यापेक्षया परमव्याकृतं मूलमस्येति। अस्मिन् संसारस्य मूलम्। नेदृशं मूलं भविष्यतीति श्रुतेः॥

ऊर्द्ध्वरेताः। पुं। महादेवे। सदाशिवे॥ मुनिविशेषे। सनकादिषु॥ भीष्मे॥ सन्न्यासिनि॥ ऊर्द्ध्वं रेतो यस्य सः। न पतति वीर्यं यस्येत्यर्थः॥

ऊर्द्ध्वलिङ्गः। पुं। महेशे। देवदेवे। शिवे॥

ऊर्द्ध्वलोकः। पुं। दिवि। स्वर्गे॥

ऊर्द्ध्वस्थः। त्रि। उपरिस्थिते॥ ऊर्द्ध्वं तिष्ठति। स्था॰। सुपिस्थ इति कः॥

ऊर्द्ध्वस्थितिः। स्त्री। उपरिस्थितौ॥ ऊर्द्ध्वापर्ष्णे॥ स तु अश्वस्य पृष्ठस्थानम्॥

ऊर्द्ध्वासितः। पुं। तरमुञ्जे॥ कारवेल्ले॥ त्रि। ऊर्द्ध्वोपवेशिते॥ ऊर्द्ध्वमवसितः आसितो वा॥

ऊर्म्मिः। पुं। स्त्री। वीच्याम्॥ प्रकाशे॥ वेगे॥ भङ्गे। स्वल्पतरङ्गे॥ वस्त्रसङ्कोचरेखायाम्॥ वेदनायाम्॥ पीडायाम्॥ उत्कण्ठायाम्॥ बुभुक्षादिषट्सु। बुभुक्षा च पिपासा च मा

स्यमनसः स्मृतौ । शोकमोहेश्व रीरस्य जरामृत्यू षडूर्मयइत्यु क्तेः ॥ ऋच्छति । ऋगतौ । अर्त्तेरुदेति मिः । अर्त्तेरुरादेशः ॥ अश्वगति-विशेषे ॥ यथा । पङ्क्तीकृतानां मश्वानांनमनोन्नमनाकृतिः । अतिवेग-समायुक्तांगतिरूर्मिरुदाहृतेतिवैज यन्ती ॥

ऊर्म्मिका । स्त्री । अङ्गुलीये ॥ वस्त्रभ ङ्गे ॥ तरङ्गे ॥ उत्कण्ठायाम् ॥ भृङ्ग-नादे ॥ ऊर्मिरिव । इवेप्रतिकृताविति कन् । ऊर्मिं प्रकाशं कायति वा । कै० । आतोनुपेतिकः ॥

ऊर्म्मिमान् । त्रि । वक्रे । अराले । वाँ कादृतिभाषा ॥ तरङ्गिणि ॥ ऊर्मि रस्यास्ति । मतुप् । यवादिः ॥

ऊर्म्मिमाली । पुं । समुद्रे । अकूपारे ॥ ऊर्मीणांमालासाअस्तिअस्य । इनिः ॥

ऊर्म्मिला । स्त्री । सरिति ॥ लक्ष्मण-भार्यायाम् ॥ काचमालायाम् ॥ ऊ र्मिंलाति । आतोनुपेतिकः ॥

ऊर्व्वरा । स्त्री । उर्वरायामसौ ॥

ऊर्व्वसी । स्त्री । नारायणोरुनिर्भिन्नस म्भूता वरवर्णिनीतिहरिवंशप्रसिद्धा यां स्वर्गवेश्यायाम् । उर्वश्याम् ॥ ऊ रौउषितेति । वसनि० । ऊर्वसी दीर्घादिदन्त्यान्तापृषोदरादिषु व्यु त्पादिता ॥

ऊर्व्यङ्गम् । न । गोमयच्छत्रिकायाम् । शिलीन्ध्रके ॥

ऊषः । पुं । चारमृदि ॥ प्रभाते ॥ प्रा तःसन्ध्यायाम् ॥ रन्ध्रे ॥ चन्दनाद्रौ ॥ अवेविले ॥ ऊषति । ऊषरुजायाम् । इगुपधेतिकः ॥

ऊषकम् । न । ऊषे । स्वार्थेकन् ॥

ऊषणम् । न । मरिचे ॥ पिप्पलीमूले ॥ शुण्ठ्याम् ॥ पुं । चित्रके ॥ ऊष ति । ऊषणवाहुलकात्क्युन् ल्युड्वा ॥

ऊषणा । स्त्री । पिप्पल्याम् ॥ चव्ये ॥ टाप् ॥

ऊषरः । पुं । चारभूमौ । ऊषवति ॥ यत्रबीजमुप्तंनप्ररोहति तस्मिन्नि-त्यर्थः ॥ ऊषोस्त्यस्मिन् । ऊषसुषी तिरः ॥ रेणुकादिनवतीर्थेषु ॥ य था । रेणुका सूकरः काशी काली कालेश्वरौ बटेश्वरौ । कालिञ्जरोमहा कालऊषरानवमुक्तिदा इति वराह पुराणम् ॥

ऊषरजम् । न । पांशवलवणे ॥ रोमक नामायस्कान्तभेदे ॥ इतिराजनिर्घ ण्टः ॥

ऊषवान् । त्रि । ऊषरे ॥ मतुप् ॥

ऊषा । स्त्री । बाणसुतायाम् ॥

ऊष्मा । पुं । निदाघे ॥ ऊष्माणः शषस

हाः । ऊष्मायायुस्तत्प्रधाना इत्यर्थः।
एतच्चसोष्माणइत्यस्य वायुनासहव
र्त्तन्तइत्यर्थ इति प्रातिशाख्यभाष्ये-
स्पष्टम् ॥

ऊष्मा । स्त्री । ऊष्मणि ॥ टाबन्तः । ऊ
ष्मया साहमूष्मा पीतिदिरूपः ॥

ऊहः । पुं । अध्याहारे । तर्के ॥ अपूर्वा
त्मेचके इतिजैमिनिः ॥ आगमाऽ
विरोधिना न्यायेन आगमार्थपरी
क्षणे ॥ परीक्षणञ्च संशय्य पूर्वपक्षनि
राकरणेनोत्तरपक्षव्यवस्थापनम् ।
तदिदं मननमाचक्षते आगमिनः
सा तृतीया सिद्धिः तारतारमुच्यते
। अन्येतुव्याचक्षते । विनोपदेशादि
नाप्राग्भवीयाभ्यासवशात् तत्त्वस्य
स्वय मूहनंयत् सा सिद्धिरूहइति ।
विमर्शात्मकतर्के ॥ समूहे ॥ असम



वेतार्थकपदत्यागपूर्वकसमवेतार्थ-
कपदसमभिव्याहारकरणे॥ साका
ङ्क्षवाक्यस्य पदान्तरेणाकाङ्क्षापूर-
णे ॥ आरोपे ॥ ऊहनम् । ऊहवि-
तर्के । भावे घञ् ॥

ऊहत्वम् । न । मानसत्वव्याप्ये जाति
विशेषे । तर्कयामीत्यनुभवसिद्धे ॥
अन्यथाश्रुतस्यशब्दस्य अन्यथा लि
ङ्गवचनादिभेदेन विपरिणमनमू-
ह स्तस्यभावे ॥

ऊहनम् । न । ऊहे ॥

ऊहनी । स्त्री । शोधन्याम् । सम्मार्ज-
न्याम् ॥

ऊहा । स्त्री । अध्याहृतौ ॥ ऊहनम् ।
ऊह० । गुरोश्चहलइत्यप्रत्ययः ।
टाप् ॥

ऋः

ऋ । अ । गर्हणे ॥ वाक्ये ॥ मन्त्रस्तोभवचने ॥ ऋकारे ॥ स्त्री । देवमातरि याम् ॥ पुं । स्वर्गे ॥

ऋक्थम् । न । धने ॥ स्वर्णे ॥ ऋच्यते-ऋच्शब्दे । बाहुलकात् थक् ॥

ऋक्षः । पुं । गिरिविशेषे ॥ तापीपयोष्णीनिर्विन्ध्याप्रमुखा ऋक्षसम्भवाः ॥ भल्लूके ॥ शोणके । श्योनाकप्रभेदे ॥ पुं । न । नक्षत्रे । भे ॥ मेषादिराशौ ॥ त्रि । कृतवेधने ॥ ऋक्ष । ऋषति । ऋषीगतौ । सुत्रश्चिकृत्यृषिभ्यःकिदिति क्सो जातौ सः । षढोःकःसि ॥ यद्वा । ऋक्ष्णोति । ऋक्ष्हिंसायाम् । अच् ॥

ऋक्षगन्धा । स्त्री । ऋषिजाङ्गलिकायाम् । ऋषिजाङ्गल इति गौडभाषाप्रसिद्धायाम् ॥ क्षीरविदार्याम् । महाश्वेतायाम् ॥ छ्छदारकौ छगलाख्याम् । वीरताड इति गौडभाषा ॥ ऋक्षान् गन्धयति । गन्धअर्दने । मूलविभुजादित्वात्कः ॥ यद्वा । ऋक्षोगन्धोऽस्याः । ऋक्षशब्दस्तद्गन्धसदृशेगौणः । ऋक्षस्येवगन्धोस्याः । समासान्तस्यानित्यत्वात् उपमानाच्चेतिनेकारः ॥

ऋक्षगन्धिका । स्त्री । क्षीरविदार्याम् ॥ श्वेतभूकुष्माण्डे ॥ ऋक्षगन्धार्थे ॥ ऋक्षगन्धैव स्वार्थेकन् ॥

ऋक्षगिरिः । पुं । ऋक्षाभिधे कुलाचले ॥

ऋक्षरः । पुं । ऋत्विजि ॥ न । वारिधारायाम् ॥ ऋषति । ऋषीगतौ । तन्यृषिभ्यां क्सरन् ॥ ऋक्षरःकण्टक-इति वेदभाष्यम् ॥

ऋक्षराजः । पुं । जाम्बवति ॥ चन्द्रे ॥ ऋक्षाणां राजा । टच् ॥

ऋक्षवान् । पुं । नर्मदातीरस्थे पर्वतविशेषे ॥ ऋक्षाःसन्त्यस्मिन् । मतुप् ॥

ऋक्षविडम्बी । पुं । नक्षत्रसूचके ॥

ऋक्षहरीश्वरः । पुं । सुग्रीवे ॥

ऋक्षेशः । पुं । चन्द्रमसि । सोमे ॥

ऋक्षोदः । पुं । पर्वतविशेषे ॥

ऋग्वेदः । पुं । देवदैवत्ये ऋग्भ्रान्तसमुदाये । ऋचि ॥

ऋग्वेदाधिपतिः । पुं । गुरौ । बृहस्पतौ ॥ यथा । ऋग्वेदाधिपतिर्जीवः सामवेदाधिपःकुजः । यजुर्वेदाधिपःशुक्रः शशिजोऽथर्ववेदराट् । इति ॥

ऋक् । स्त्री । नियताक्षरपादयुते देवदैवत्ये एकविंशतिशाखात्मके वेदभागे । समानाक्षरपादमन्त्रसमन्विते-मन्त्रविशेषे ॥ तस्यलक्षणम् । यथा

र्थवशेन पादव्यवस्थितिः । अस्यार्थः । यत्रार्थवशेन एकान्वयित्वेनानुष्टुवादिपादस्थितिः । इति जैमिनिः ॥–ऋच्यन्ते स्तूयन्ते देवा अनया । ऋच स्तुतौ । क्विप् ॥

ऋचीषम् । न । पिष्टपचनपात्रे ॥ ऋचति । ऋचशब्दे । बाहुलकात् कीषन् ॥

ऋच्छरा । स्त्री । वेश्यायाम् ॥ ऋच्छति । ऋच्छगतीन्द्रियमलयमूर्त्तिभावेषु । ऋच्छेररः ॥

ऋजिमा । पुं । आर्जवे ॥ ऋजोर्भावः । इमनिच् ॥

ऋजीकः । त्रि । दुष्टे ॥ तमोघने ॥ अर्जते । ऋजगतिस्थानार्जनोपार्जनेषु । ऋजेश्चेति ईकन् ॥ यद्वा । ऋजोः कीकन् । ऋजीक इन्द्रो धूमश्चेति कौमुदी ॥

ऋजीषम् । न । कटाहिकातम्बिकादौ पिष्टभर्जनपात्रे । पिष्टपचने ॥ धने ॥ उद्धृतरसे सोमलतायाः शेषे । एतन्मन्त्रभाष्ये स्पष्टम् ॥ नरकविशेषे ॥ अत्रपिष्टपचन प्रभेदः ॥ अर्ज्यते । अर्जअर्जने । अर्जे ऋज्च्चेतिर्ईषन् ॥

ऋजुः । त्रि । अवक्रे । अजिह्मे । प्रगुणे । प्राञ्जले । सीधा इतिभाषा ॥ चरजवे त्रिग्राह्मणा नेतरेस्वभावतः ॥ अ



र्जति । अर्जअर्जने । अर्जिदृशीति साधुः । अर्जयति गुणान् वा ॥

ऋजुकायः । पुं । काश्यपमुनौ ॥ त्रि । अवक्रशरीरे ॥ ऋजुः कायोस्य ॥

ऋज्वः । त्रि । गतिमति ॥ ऋज्वाश्वइति मन्त्रे ऋज्वा गतिमन्तोऽश्वायस्येति वेदभाष्यात् ॥ नायके ॥ अर्जयते अर्जयतिवा । ऋजगत्यादिषु । ऋज्वेन्द्रेतिरन् । निपातनाद्गुणाभावः ॥

ऋञ्जसानः । पुं । मेघे ॥ ऋञ्जते । ऋञ्जिभर्जने । ऋञ्जिवृधीति असानच् कित् । वेदभाष्येतु यौगिकार्थ एव पुरस्कृतः ॥

ऋणम् । न । अधमर्णेनोत्तमर्णात् पुनर्देयतयास्वीकृत्यगृहीतेधने । पर्युदृष्णे । उद्धारे । उधार इतिभाषा ॥ जले ॥ दुर्गे ॥ दुर्गभूमौ ॥ अर्यतेस्म । ऋगतौ । क्तः । ऋणमाधमर्ण्ये इति णत्वम् ॥

ऋणत्रयम् । न । त्रिविधे ऋणविशेषे ॥ यथा । देवानाञ्च पितॄणाञ्च ऋषीणाञ्चतथानरः । ऋणवान् जायते यस्मात् तन्मोचे यतेतसदा ॥ तत्परिशोधनन्तु । देवानामनृणो जन्तुर्यज्ञैर्भवति मानवः । कल्पविषयपूजाभिरुपवासव्रतै स्तथा ॥ श्राद्धेनप्रजयाचैव पितॄणामनृणो भवेत् । ऋषीणां

ब्रह्मचर्य्येण श्रुतेन तपसा तथा ॥ इति विष्णुधर्मोत्तरम् ॥

ऋणमत्कुणः । पुं । } प्रतिभुवि । यस्य
ऋणमार्गणः । पुं । } के । जामिन् जमान इति च भाषा ॥

ऋणमुक्तिः । स्त्री । विगणने । ऋणपरिशोधने ॥ ऋणस्य ऋणाद्वा मुक्तिः ॥

ऋणमोचः । पुं । ऋणमुक्तौ ॥

ऋणहर्त्ता । पुं । भौमे ॥ ऋणस्य हर्त्ता ॥

ऋणादानम् । न । उत्तमर्णेनाधमर्णात् सत्लाभधनग्रहणे । व्यवहारविशेषे ॥ तत् सप्तविधम् । यथा । ईदृशमृणं देयम् १ । ईदृशमदेयम् २ । अनेनाधिकारिणा देयम् ३ । अस्मिन् समये देयम् ४ । अनेन प्रकारेण देयम् ५ । इत्यधमर्णे पञ्चविधम् । उत्तमर्णे तु दानविधिः ६ । आदानविधिश्च ७ । इति द्विविधम् । तथा च नारदः । ऋणं देयमदेयञ्च येन यत्र यथा भवेत् । दानग्रहणधर्म्माश्च ऋणादानमिति स्मृतम् ॥ अदेयमिति यदुक्तं तदाह कात्यायनः । न स्त्रीभ्यो दासबालेभ्यः प्रदद्यात् किञ्चिदुद्धृतम् । दाता न लभते तत्तु तेभ्यो दत्तन्तु तद्वसु ॥ तत्र विशेषमाह बृहस्पतिः । परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् । लेख्यारूढं साक्षिमद्वा ऋणं दद्या द्धनी सदा ॥ इति विवादार्णवसेतुः ॥

ऋणान्तकः । पुं । कुजे । मङ्गलग्रहे ॥

ऋणापनोदनम् । न । ऋणापनयने ॥

ऋणिकः । त्रि । अधमर्णे ॥

ऋणी । त्रि । ऋणवति । अधमर्णे । ऋणग्रस्ते ॥

ऋणोद्ग्राहणम् । न । अधमर्णगृहीतर्णग्रहणे ॥

ऋतम् । न । ब्राह्मणस्योत्तमवृत्तौ । उञ्छशिले ॥ ऋतमुञ्छशिलं ज्ञेयमित्युक्तेः ॥ जले ॥ सत्ये ॥ मोक्षे ॥ कर्मफले ॥ सूनृतायां वाचि ॥ यथाशास्त्रे यथाकर्त्तव्ये बुद्धौ सुपरिनिश्चितेऽर्थे ॥ अवितथस्वभावे परमार्थभूतवस्तुनि ॥ मानसतत्त्वे ॥ त्रि । दीप्ते ॥ पूजिते ॥ अर्य्यते स्म ऋच्छतिवा । ऋगतौ । निष्ठेति गत्यर्थेतिवा ऽर्त्तौ क्तः ॥

ऋतजित् । पुं । यज्ञविशेषे ॥

ऋतधामा । पुं । विष्णौ ॥ ऋतं सत्यं धाम अस्य ॥

ऋतपः । पुं । संसारिणि जीवे ॥ ऋतं कर्मफलं पिबति । पा० । कः ॥

ऋतपर्णः । पुं । राजर्षिविशेषे ॥ यथा । कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति महाभारतम् ॥

ऋतम् । अ । सत्यमित्यर्थे ॥

ऋतम्भरा । स्त्री । प्रज्ञाविशेषे ॥ ऋतं । सत्यमेव बिभर्त्ति न तत्र विपर्यासग न्धोऽप्यस्तीति यौगिकी चेयं समाख्या ॥ प्रत्यदीपस्थ नदीविशेषे ॥

ऋतव्यम् । त्रि । ऋतुदेवताके हविरादौ ॥ ऋतुर्देवताऽस्य । वाय्वृतुपित्रुषसो यत् । गुणावादेशौ ॥

ऋतिः । स्त्री । कल्याणे ॥ वर्त्मनि ॥ जुगुप्सायाम् ॥ स्पर्द्धायाम् ॥ गतौ ॥ अशुभे ॥ ऋगतौ । क्तिन् ॥

ऋतीया । स्त्री । आर्त्तने । जुगुप्सायाम् ॥ ऋति.सौत्रः । ईयङ्प्रत्ये । आयादयइत्यः । टाप् ॥

ऋतुः । पुं । कालविशेषे ॥ स तु शिशिरादिभेदात् षड्विधः । यथा । मासद्वयात्मकः कालऋतु प्रोक्तोविचक्षणैरिति । मलमासेतु मासद्वयात्मक एकोमासः तेन मासद्वयात्मकत्वमविरुद्धम् । षष्ट्यांतु दिवसै र्मासः कथितो बादरायणैरित्युक्तेः ॥ शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिम. । माघादिमासयुग्मैस्तु ऋतवः षट्क्रमादिमे ॥ उत्तरायणमाद्यैस्तैस्त्रिभि.स्याद्दक्षिणायनमिति ॥ ऋतूनांव्यत्यये जाते यदुक्तंतच्चशिखरे । यथा । शीतोष्णताविपर्यासेऋतूनांरिपुजं भयम् । पुष्पेफलेचविकृते राज्ञोमृत्युंतथा दिशेदिति ॥ सत्रिविधोऽपि । कार्त्तिकाग्रहायणपौषमाघाः शीतः १ । फाल्गुनचैत्रवैशाखज्येष्ठाः ग्रीष्मः २ । आषाढश्रावणभाद्राश्विनाःवर्षाः ३ ॥ द्विविधोऽपि । कार्त्तिकादिषण्मासाः शीतः । १ । वैशाखादिषण्मासाः ग्रीष्मः । २ । इति स्मृतिः ॥ स्त्रीपुष्पे । आर्त्तवे । रजसि । शोणितदर्शनोपलक्षिते, गर्भधारणयोग्ये स्त्रीणामवस्थाविशेषे ॥ ऋतुःस्वाभाविकःस्त्रीणां रात्रयःषोडशस्मृताः । चतुर्भिरितरैःसार्द्धं,मह्नोभिः सद्विगर्हितैः ॥ दीप्तौ ॥ सुवीरे ॥ मासे ॥ इयर्त्ति गच्छति असाधारणं लिङ्गम् । ऋगतौ । अर्त्तेश्चतुरितितुः । चात्कित्त्वम् । ऋच्छतिवा ॥

ऋतुमासः । त्रि । फलितरौ । फलेग्रह्यै । अवन्ध्यवृक्षादौ । ऋतुःप्राप्तोनेन ॥

ऋतुमती । स्त्री । रजस्वलायाम् । उदक्यायाम ॥ ऋतुरस्त्यस्या. । मतुप् । ङीप् ॥

ऋतुराजः । पुं । वसन्ते ॥ ऋतूनांराजा । राजाहःसखिभ्यष्टच् ॥

ऋतुवृत्तिः । पु । वर्षे । संवत्सरे ॥ ऋतुपुवृत्तिरस्य ॥

ऋतुसन्धिः । पुं । ऋतुद्वयसन्धिकाले । ऋत्वोरन्त्यादिसप्ताहयोः ॥ आह चवाग्भटः । ऋत्वोरन्त्यादिसप्ताहा वृतुसन्धिरितिस्मृतः । तत्रपूर्वो विधिस्त्याज्यः सेवनीयःपरोविधिरिति ॥

ऋतुस्नानम् । न । रजस्वलायाश्चतुर्थाहकर्त्तव्यस्नाने॥ तत्स्नानानन्तरं भर्त्तुर्मुखंद्रष्टव्यम् । नान्यस्य॥ भर्त्तसन्निधाने भर्त्तारं मनसि ध्यात्वा सूर्यं विलोकयेदितिकाशीखण्डम् ॥

ऋते । अ । वर्जने । विना ॥ ऋतीयते । ऋतिःसौत्रोधातुः । ततःके प्रत्ययः ॥

ऋत्विक् । पुं । पुरोहिते । याजके ॥ ऋतैयजति ऋतुंयजति ऋतुप्रयुक्तो वायजति । रूढिरेषा यथाकथंचिद्व्युत्पाद्या । यजदेवपूजादौ । ऋत्विगादिनाक्विन्नन्तो निपातितः ॥ अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् । यःकरोतिवृतोयस्य सतस्यर्त्विगिहोच्यते इतिमनुः ॥ तेचयज्ञे षोडश भवन्ति । तेषांनामानि यथा । अध्वर्युः १ । प्रस्थाता २ । नेष्टा ३ । उन्नेता ४ । ब्रह्मा ५ । ब्राह्मणाच्छंसी ६ । अग्नीध्रः ७ । पोता ८ । उद्गाता ९ । प्रस्तोता १० । प्रतिहर्त्ता ११ । सुब्रह्मण्यः १२ । होता १३ । मैत्रावरुणः १४ । अच्छावाकः १५ । ग्रावस्तुत् १६ । इति ॥

ऋद्धम् । न । आवसिते धान्ये । सम्पन्नधान्ये ॥ परिपक्वमर्द्दितधान्ये ॥ सिद्धान्ते ॥ त्रि । सुसमृद्धे ॥ ऋध्यतिस्म । ऋधुवृद्धौ । क्तः ॥

ऋद्धिः । स्त्री । समृद्धौ ॥ देवताविशेषे । पार्वत्याम् ॥ अष्टवर्गान्तर्गतौषधिविशेषे । लक्ष्म्याम् । सिद्धौ ॥ अस्याःस्वरूपम् । यथा । ऋद्धिर्वृद्धिश्चकन्दौ द्वौ भवतः कोशयामले । श्वेतलोमान्वितःकन्दोलताजातः सरन्ध्रकः ॥ सएवऋद्धिर्वृद्धिश्चभेदमप्येतयोर्ब्रुवे । तूलग्रन्थिसमा ऋद्धि र्वामावर्त्तफला चसा ॥ वृद्धिस्तु दक्षिणावर्त्त फलाप्रोक्ता महर्षिभिः ॥ ऋद्धिर्बल्यात्रिदोषघ्नी शुक्रला मधुरा गुरुः । प्राणैश्वर्यकरीमूर्च्छारक्तपित्तविनाशिनी ॥ औषधकरणे ऋद्धिवृद्ध्योः स्थाने वाराहीकन्दो बला वा देया ॥ ऋध्नोति । ऋधुवृद्धौ । क्तिच् । यद्वा । करणे क्तिन् ॥

ऋधक् । अ । सत्ये ॥ वियोगे ॥ शीघ्रे ॥ सामीप्ये ॥ लाघवे ॥

ऋनामा । स्त्री । अदितौ । देवमातरि ॥ ऋ नाम यस्याः । डाबुभाभ्याम्

न्यतरस्यामितिडाप् ॥

ऋभुः । पुं । देवे । सुरे ॥ ऋशब्दवाच्यः स्वर्गः अदितिर्वा । स्वरादित्योद्व यम् । तत्र ततो वा भवति इति ऋ पूर्वाद्भवतेर्मितद्वादिभ्य उपसंख्यान मितिडुः । उपपदसमासः । क्विपि ऋभूरपि ॥ ब्रह्मणः पुत्रे परमहंसप रिव्राजके ॥

ऋभुचाः । पुं । वज्रे ॥ स्वर्गे । ऋभवो- देवाः क्षियन्त्यस्मिन् । क्षिनिवासग- त्योः । अन्येभ्योपीतिडः ॥ इन्द्रे ॥

ऋभुक्षाः । पुं । इन्द्रे ॥ पाकशासने ॥ ऋभवोदेवाः क्षियन्तिनिवसन्त्यत्र । वेदेः । ऋभुक्ष. स्वर्गः । सोऽस्यास्ती ति इनिः । ऋभुक्षाः पथिवत् ॥ य द्वा । ऋच्छति इयर्त्तीति वा । अर्त्ते -र्भुक्षिनक् प्रत्ययः ॥

ऋषः । पुं । मृगविशेषे ॥ ऋच्छति इय र्त्तिवा । ऋगतौ । वाहुलकातप क् ॥

ऋषभः । पुं । वृषे ॥ वर्षाश्च्रे ॥ कुम्भीर पुच्छे ॥ उत्तरस्थः श्रेष्ठे ॥ अद्रिवि- शेषे ॥ भगवदवतारविशेषे । आदि जिने ॥ अयञ्चसत्ययुगे अग्नीध्रसु तस्यनाभेः पुत्रः । अस्यपुत्रोजडभर त ॥ आहचसः । इदंशरीरं मम दुर्विभाव्यं सत्त्वंहिमे हृदयं यत्रधर्मः।



। पृष्ठे कृतो मे यदधर्म आराद्‌तोहि मामृषभं प्राहुरार्य्या इति ॥ तन्त्री समुत्थितेकण्ठोत्थिते च सप्तस्वरान्त गतेद्वितीयस्वरे ॥ ऋषोत्पत्तिः । नाभिमूलाद्यदावायुरुत्थितः कुरुते ध्वनिम् । ऋषभस्येव निर्यातिहेल या ऋषभः स्मृतइतिसङ्गीतदामोद रः ॥ ऋषति वलीवर्द्दकृतस्वरसादृ श्यं गच्छति । ऋषी गतौ ॥ ऋषिवृ षिभ्यांकिदिन्यभच् । गावोनर्दन्ति चर्षभम् ॥ कर्णवर्गान्तर्गतौषधिवि शेषे । शृङ्ग्याम् । विषाणाम् । क कुद्मत्याम् ॥ पश्य गुणान् जीवके ॥ कोलपुच्छे ॥

ऋषभगजविलसितम् । न । अष्टिसंज्ञ कषोडशाक्षरवृत्तिप्रभेदे ॥ यथा । भ्रनिनगैः ऽ। ऽ।ऽ।।।।।।ऽ स्वराङ्कऋष भगजविलसितम् । यथा । योहरि दश्चखान हरतरनखशिखरे दुर्जय दैत्यसिंहमुविकटहृदयतटम् । कि ञ्चिद्विदितसिमत इखिलमपहृतवतः कंसनिदेशहृद्यम् ऋषभगजविल सि तमिति ॥

ऋषभतरः । त्रि । मन्दशक्तौभारस्यवो ढरि ॥ तनुऋषभः । इत्तोचात्मर्थ भेव्यसतनुत्वइतिष्टरच् । ङीपि । ऋषभतरी ॥

ऋषभध्वजः । पुं । चन्द्रमौलौ । सदाशिवे ॥ ऋषभोऽस्यो ध्वजश्चिह्नमस्य ध्वजे अस्यर्था ॥ प्रथमजिनेन्द्रे ॥

ऋषभी । स्त्री । नराकारयोषिति ॥ शूकशिंब्याम् ॥ शिरालायाम् ॥ विधवायाम् ॥

ऋषिः । पुं । वेदे ॥ दीधितौ । किरणे ॥ मन्त्रद्रष्टरि । शास्त्रकृदाचार्ये । सत्यवाचि । भृगुवशिष्ठादिमुनौ । गोत्रप्रवर्त्तके कश्यपभरद्वाजशाण्डिल्यादौ ॥ सप्त ब्रह्मर्षिदेवर्षिमहर्षिपरमर्षयः । काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः इति रत्नकोषः ॥ तत्र ब्रह्मर्षयो वशिष्ठाद्याः१ । देवर्षयः कणादयः२ । व्यासाद्या महर्षयः३ । भेलाद्याः परमर्षयः४ । जैमिन्याद्याः काण्डर्षयः५ । सुश्रुताद्याः श्रुतर्षयः६ । ऋतपर्णादयो राजर्षयः ७ । एते पुराणप्रसिद्धाः । इति त्रिकाण्डशेषः ॥ सूक्ष्मवस्तुविवेचनसमर्थे । सन्न्यासिनि ॥ मन्त्रे ॥ ज्ञानिनि । तत्त्वज्ञाननिष्ठे ॥ वल्मपुत्रे । अवगतपरमार्थे ॥ ऋषति जानाति पश्यति सर्वान्मन्त्रान् । ऋषी गतौ । इगुपधात्किदितीन् ॥

ऋषिकः । पुं । ऋषीके ॥



ऋषिकुल्या । स्त्री । नदीमात्रे ॥ शुक्तिमत्पादोद्भवायां नद्याम् ॥ ऋषिकुलहितायाम् ॥ ऋषीणांकुल्या ॥

ऋषिजाङ्गलम् । न । ऋषिजाङ्गलिकाम् ॥

ऋषिजाङ्गलिकी । स्त्री । ऋष्यगन्धानाम् । ऋषिजाङ्गलवृचे ।

ऋषिपुत्रः । पुं । आचार्यविशेषे ॥

ऋषिप्रोक्ता । स्त्री । माषपर्ण्याम् ॥

ऋषियज्ञः । पुं । ब्रह्मयज्ञे । स्वाध्याये ॥

ऋषिसर्गः । पुं । सर्गविशेषे ॥

ऋषीकः । पुं । काव्याद्यृषिपुत्रे ॥

ऋष्टिः । पुं । असौ । खड्गे ॥ उभयतो धारे खड्गे ॥ ऋषति । ऋषी गतौ । क्तिच् ॥

ऋष्यः । पुं । मृगविशेषे ॥ ऋष्यो नीलाण्डकौ लोके सरोभ इति कीर्त्तितः ॥ ऋषति । ऋषी गतौ । अघ्न्यादित्वात् साधुः ॥

ऋष्यकेतनः । पुं । अनिरुद्धे ॥

ऋष्यकेतुः । पुं । अनिरुद्धे । कामदेवपुत्रे ॥ कामदेवे ॥ ऋष्यो मृगः केतुरस्य ॥

ऋष्यगता । स्त्री । ऋष्यप्रोक्तायाम् । शतमूल्याम् ॥

ऋष्यगन्धा । स्त्री । ऋषिजाङ्गलिक्याम् ॥ वृद्धदारके ॥

ऋष्यप्रोक्ता ॥ स्त्री । शतावर्याम् ॥ अति बलायाम् ॥ शूकशिंब्याम् ॥ ऋष्यै र्मुनिभिः प्रोक्ता । ऋषिभिरप्रोक्ता वा ॥

ऋष्यमूकः । पुं । अद्रिविशेषे ॥ ऋष्यमूक स्तु पम्पायाः पुरस्तात्पुष्पितद्रुमः । सुदुःखारोहणो नाम शिशुनागाभि रक्षितः ॥ अथवा वालिभयात् सुग्रीवा दयः पञ्च वानराः स्थिता आसन्नि ति रामायणम् ॥

ऋष्यशृङ्गः । पुं । विभाण्डकसुते मु निविशेषे ॥ अस्य भार्या लोमपादरा जकन्या शान्ता । इति रामायणम् ॥

ॠ:

ॠ । अ । वाक्यारम्भे ॥ रक्षायाम् ॥

ॠ । न । वचसि ॥ पुं । भैरवे ॥ दनुजे ॥ ॠकारे ॥ स्त्री । देवमातायाम् ॥ दनौ ॥ स्मृतौ ॥ गतौ ॥

ऌः

ऌ । अ । देवतात्मायाम् ॥ देवमातरि ॥ भुवि ॥ कुम्भे ॥ पर्वते ॥ मन्त्रस्तोभ वचने ॥ ऌकारे ॥

ॡः

ॡ । अ । देवनायाम् ॥ नार्यात्मनि ॥ मातरि ॥ पुं । महादेवे ॥ ॡकारे ॥ स्त्री । दैत्यभार्यायाम् ॥ दनुजमा तरि ॥ कामधेनुमातरि ॥ इत्येका क्षरकोषः ॥

एः

ए । अ । स्मृतौ ॥ असूयायाम् ॥ अनु कम्पायाम् ॥ आमन्त्रणे ॥ हूतौ । आ ह्वाने ॥

एः । पुं । विष्णौ ॥ एकारे ॥

एकः । त्रि । प्रथमसङ्ख्यायाम् ॥ सङ् ख्येये । यथैको विप्रः । नतु विप्रस्यैका ॥ एकाकिनि । केवले ॥ एकादाकि निच् चासहाये । चात्पचेलुक् ॥ श्रेष्ठे ॥ सूर्तरस्मिन् ॥ सत्ये । अद्वि तीये । सजातीयविजातीयादिभे दशून्ये । गुणगुणिभावशून्ये । अनु

मर्मे ॥ एकोऽन्यार्थे प्रधानेच द्वितीयेकेवले तथा । साधारणे समानेऽल्पेसङ्ख्यायाञ्च प्रयुज्यते ॥ इति । इणगतौ । इणभीकापाशल्यतिमर्चिभ्यःकन्निति कन् ।

एककः । त्रि । असहाये । एकाकिनि । एकल इतिभाषा ॥ एकादाकिनिञ्चासहाय इत्यत्र चकारात् पचेकन् ॥

एककार्य्यः । पुं । परस्परस्मारके अन्तेवासिप्रभृतिगणे ॥ एकंकार्य्यमस्य ॥

एककार्य्यत्वम् । न । सङ्गतिविशेषे । एककार्यकारित्वे ॥

एककालः । त्रि । अभिन्नसमये ॥ एकःकालोयस्य ।

एककालिकः । त्रि । समानकालभवे ॥ एककालेभवः । कालाट्ठञ् ॥

एककालीनः । त्रि । एककालिके ॥

एककुण्डलः । पुं । बलरामे ॥ कुबेरे ॥ एकंकुण्डलमस्य ॥

एकगम्यः । त्रि । निर्विकल्पकज्ञानग्राह्ये ॥

एकगुरुः । पुं । सतीर्थ्ये ॥ सतीर्थ्यास्त्वेकगुरवः ॥ एकोगुरुर्येषांते परस्परमेकगुरवोभवन्ति ॥

एकचक्रम् । न । सुखपुर्य्याम् । हरिगृहे ॥ पुं । असुरविशेषे ॥

एकचक्रा । स्त्री । पुरीविशेषे ॥

एकचरः । पुं । हिंस्रपशुविशेषे । गण्डके ॥ त्रि । एकाकिचारिणि । सर्पादौ ॥ व्याघ्रादौ ॥ एकस्मिन्चरस्य । एक एवचरतिवा । चरः प्रचाद्यच् ॥ एकचर्य्या । स्त्री । असहायगमने ॥

एकचारी । पुं । बुद्धसहचारिणि ॥ एकके ॥

एकचित्तः । त्रि । अनन्यमनसि ॥ एकम् अनन्यविषयं चित्तं यस्यसः ॥

एकजटा । स्त्री । उग्रतारायाम् ॥

एकजन्मा । पुं । मण्डलेशे । भयोपद्रे ॥ शूद्रे ॥ एकं जन्मास्य ।

एकजातिः । पुं । शूद्रे ॥ यथा । ब्राह्मणः क्षत्रियो वैश्यस्त्रयोवर्णाद्विजातयः । चतुर्थ एकजातिस्तु शूद्रो नास्तितुपञ्चमइतिस्मृतिः ॥ एका जातिर्जन्म अस्य ।

एकजातीयः । त्रि । तुल्यजातीये ॥ एकः प्रकारः । प्रकारवचनेजातीयर् ॥

एकजीववादी । त्रि । एकञ्चैतन्यमेकयैवाविद्ययावद्धं संसरति तदेव कदाचिन्मुच्यते नास्य दादीनां बन्धमोक्षौस्तः इत्येवंवदनशीले । अयञ्च वादःश्रुतिबहिष्कृतत्वान्मुमुक्षुभिरनुपादेयः ॥

एकतमः । त्रि । बहूनांमध्ये एकस्मिन् ॥ एकाद्बहूनामितिडतमच् । क

तमो भवतां साधुः ॥

एकतरः । त्रि । द्वयोर्मध्येएकस्मिन् ॥ एकाच्चप्राचामितिडतरच् । कतरो भवतोर्देवदत्तः ॥

एकतः । अ । एकस्मात् ॥ तसिल् ॥

एकता । स्त्री । एकत्वे ॥ एकस्यभावः । तल् ॥

एकतानः । त्रि । अनन्यवृत्तौ । एकविषयासक्तचित्ते । तनोतेः ॥ एकं तानयति । तनुश्रद्धोपकरणयोः । कर्मण्यण् । एकस्तानो विस्तारो यस्येतिवा ॥

एकतानकः । पुं । एकाग्रे । अनन्यहृदये ॥ स्वार्थेकः ॥

एकतालः । पुं । समन्वितलये । नृत्यगीतवाद्यानांयत्साम्यं तचेतियावत् । विच्छेदरहिते ॥ एकः सम स्तालोसामस्येति ॥

एकत्र । अ । एकस्मिन् ॥ त्रल् ॥

एकत्वम् । न । एकतायाम् । अभेदे । भेदव्यावर्त्तके ॥ सायुज्यमुक्तौ ॥ एकस्यभावः । तस्यभावस्त्वतला वितित्वः ॥ एकवचने ॥ यथा । एकत्वं न प्रयुञ्जीतगुरावात्मनिचेश्वरे इति ॥

एकदंष्ट्रः । पुं । गणेशे । विघ्नराजे ॥ एकादंष्ट्रा यस्य ॥

एकदण्डी । पुं । विदिततत्त्वे सन्यासिनि ॥ यथा । यद्रातुविदितं तत्त्वं परमब्रह्मसनातनम् । तदैकदण्डं सङ्गृह्य सोपवीतां शिखांत्यजेत् ॥ मौनं योगासनं योगस्तितिचैकान्तशीलता । निस्पृहत्वं समत्वञ्च सप्तैतान्येकदण्डिन इति ॥ एकंदण्डमस्यास्ति । इनिः ॥

एकदन्तः । पुं । विनायके । गणेशे ॥ एकोदन्तोऽस्य स्कन्देनोत्पाटितदन्तत्वात् ॥

एकदा । अ । युगपत् ॥ एकस्मिन् काले । सर्वैकान्यकिंयत्तदः कालेदा ॥

एकदृक् । पुं । काके ॥ शम्भौ । मघादेवे ॥ त्रि । काणे ॥ एकादृकयस्य ॥

एकदेशः । पुं । अवयवे । प्रतीके ॥ एकश्चासौदेशश्च ॥

एकदेशी । पुं । अवयविनि ॥ एकदेशशब्दोऽवयवेरुढः । सोस्यास्ति । अत इनिः । यद्यपीह एकशेपूर्वादिति ठञ प्राप्तस्तथापि पूर्वापराधरोत्तरमेकदेशिनेतिनिर्देशादिनिः ॥

एकदेहः । पुं । चन्द्रजे । बुधग्रहे ॥

एकधा । अ । एकप्रकारे ॥ प्रकारे धा ॥

एकधुरः । त्रि । एकधुरीणे । एकभारवाहके गवादौ ॥ एकाचासौधूश्च । ऋक्पूरब्धूः समासान्तः । परवल्लिङ्गतस्त्रीत्वम् । टाप् । एकधुरां वह

ति । एकधुराद्भुकचेतिखस्तुक् ॥

एकधुरावहः । त्रि । एकधुरे । एकभारिके ॥ वहतीति वहः ॥ अच् । एकधुरायावहः ॥

एकधुरीयः । त्रि । एकधुरे ॥ एकाधूः । पूर्वकालैकेतिसमासः । खः कधूरित्यः । एकधुरां वहति । एकधुराद्भुकेति चकारेण खस्यानुकर्षणसामर्थ्यात् पक्षे श्रवणम् ॥

एकनटः । पुं । कथके । मुख्यनटे । नाटकवर्णनकर्त्तरि ॥

एकपचः । त्रि । अनन्यगे ॥ सहाये ॥ एकःपचोयस्य ॥

एकपत्नी । स्त्री । सपत्न्याम् ॥ साध्व्याम् ॥ एकः पतिर्यस्या इतिविग्रहे निर्त्यसपत्न्यादिष्विति एकपतिशब्दस्य नकारान्तादेशे ऋन्नेभ्य इतिङीप् ॥

एकपत्रिका । स्त्री । गन्धपत्रायाम् ॥

एकपदम् । न । तत्काले ॥ पुं । शृङ्गारबन्धविशेषे । तल्लक्षणम् । पादमेकं हृदिस्थाप्यद्वितीयं स्कन्धसंस्थितम् । रमेनैषस्त्वारमेत् कामीबन्धस्त्वेकपद,स्मृतइति ॥

एकपदी । स्त्री । पथि ॥ एकःपादोऽस्याम् । कुम्भपदीषुचेतिनिपातः ॥ यद्वा । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोप । पादोन्यतरस्यामितिङीप् । स्वाङ्गाच्चेतिङीषवा । पाद्,पत् ॥

एकपदे । अ । अवसादित्यर्थे ॥

एकपात् । पुं । शिवे ॥ विष्णौ ॥ एकः पादोऽस्य । सङ्ख्यासुपूर्वस्येति अन्तलोपः । पादोस्थेतिश्रुतिः ॥

एकपिङ्गः । पुं । कुवेरे । धनाधिपे ॥ साक्षूयं गौरीनिरीक्षणे तत्प्रभावात् वामेचक्षुपिनष्टे रुद्रानुनयात् तत् पिङ्गिमचिह्नं देव्या दत्तम् । अतएकं पिङ्गमस्य ॥

एकपिङ्गलः । पुं । गुह्यकेश्वरे । कुवेरे ॥ एकपिङ्गलाति । ला० । आतोनुमेतिकः ॥

एकभक्तव्रतम् । न । रात्रिभोजनाभावविशिष्टे दिवाभोजने ॥ तदुक्तंस्कन्दपुराणे ॥ दिनार्द्धसमयेऽतीते भुज्यते नियमेनयत् । एकभक्तमितिप्रोक्तं रात्रौतन्नकदाचनेति ॥

एकमूला । स्त्री ॥ शालपर्ण्याम् ॥ अतस्याम् ॥

एकयष्टिका । स्त्री । हारविशेषे । एकावल्याम् । एकलडीकाहारइतिभाषा ॥

एकरजः । पुं । भृङ्गराजे । भंगरा । इतिभाषा ॥

एकराट् । पुं । चक्रवर्तिनि ॥

एकरूप । त्रि । समानाकारे ॥ एकंरूपं यस्य सः ॥

एकर्षिः । पुं । सूर्य्ये ॥ एक एव ऋषति गच्छति । इन् ॥

एकलः । त्रि । एकाकिनि । असहाये ॥ इतिपद्यावली ॥ अनवयवे ॥

एकलिङ्गः । पुं । कुवेरे । त्र्यम्बकसखे ॥ न । साधनस्थलविशेषे ॥ तथाचागमः । पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते । तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमेति ॥

एकवचनम् । न । येन पदेनैकोर्थ उच्यते तस्मिन् । एकस्यार्थस्य वचनम् । वचेः करणेल्युट् ॥ कर्म्मणिषष्ठीसमासः ॥

एकवर्णा । स्त्री । वाद्यप्रभेदे । करतालयाम् । कङ्कमाखायाम् ॥

एकवर्षिका । स्त्री । एकहायन्यांगवि ॥ एकःवर्षोयस्याः । एकवर्षेव । कः । इत्त्वम् ॥

एकवाद्यः । पुं । डिण्डिमवाद्ये ॥

एकविंशतिः । स्त्री । एकाधिकविंशतौ ॥ यथा । नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः । समेत्य पशुतां याति सम्भवानेकविंशतिमितिमनुः ॥ नैयायिकमते एकविंशतिदुःखानियथा । षडिन्द्रियाणि षड्रूपाद योविषयाः षड्रूपादिज्ञानानि सुखम् दुःखम् शरीरञ्चेति । एकविंश तिदुःखनिरुत्तिर्मुक्तिरिति ॥



एकवीरः । पुं । वृक्षविशेषे । महावीरे । सद्वीरे ॥ हैहये । कृतवीर्यपितरि ॥

एकवृक्षः । पुं । स्थानविशेषे ॥ यथा । चतुष्क्रोशान्तरे यत्र न वृक्षान्तरमीक्ष्यते । एकवृक्षःसविज्ञेयः इत्यागमः ॥

एकशफः । पुं । अश्वे ॥ एकखुरेजन्तुमात्रे ॥ यथा । खरोश्वोश्वतरोगौरः शरभश्चमरीतथा । एतेचैकशफाःचत्तः शृणु पञ्चनखान्पशूनि ति श्रीभागवतम् ॥

एकशृङ्गः । पुं । हरौ ॥ एकशृङ्गे पशौ ॥

एकशेषः । पुं । समासप्रभेदे ॥

एकश्रुतिः । स्त्री । उदात्तानुदात्तस्वरितानामविभागेनोच्चारणे ॥ एकाचासौश्रुतिश्च ॥

एकषष्टिः । स्त्री । सङ्ख्यासङ्ख्येयविशेषे ॥ एकाधिकाषष्टिः ॥

एकसर्गः । त्रि । अनन्यमनसि । एकताने । एकाग्रे ॥ एकः एकस्मिन्वा सर्गो निश्चयोऽस्य ।

एकसूत्रः । पुं । डमरुवाद्ये ॥

एकस्थः । त्रि । एकत्रस्थिते ॥ एकस्मिन् तिष्ठति । ष्ठा । कः ॥

एकहायनी । स्त्री । एकाब्दायांगवि ॥ एकःहायनोयस्याः । दामहायनान्ता

इति ङीप् ॥

एका । स्त्री । आर्यायाम् । कोट्टव्याम् । पार्वत्याम् ॥ इतित्रिकाण्डशेषः । यथा । एकैवाहंजगत्यत्रेति । एकै वशक्तिः परमेश्वरस्य भिन्ना चतुर्द्धा व्यवहारकाले । भोगे भवानी पुरुषे षुविष्णुःकोपेषु कालीसमरेषुदुर्गेति च ॥

एकाकी । त्रि । एकके । एकले ॥ एका दाकिनिञ्चासहाये ॥

एकाक्षः । पुं । काके ॥ त्रि । काणे ॥ एकमक्षि यस्य । षच ॥

एकाक्षरम् । न । प्रणवे ॥ एकञ्चतदक्षरञ्च ॥

एकाग्रः । त्रि । अनाकुले ॥ विषयान्तराव्याक्षिप्तचित्ते । एकताने । विक्षेपरहिते ॥ एकम् एकस्मिन्वा अग्रम स्य । अग्रंपुरोगतंश्रेयमितिस्वामी ॥ चित्तस्य चतुर्थ्यांभूमौ । एकाग्रचित्ते ॥ एकविषयकधारावाहिकवृत्तिसमर्थात्सत्त्वोद्रेकेण तमोगुणकृततन्द्रादिरूपलयाभावादात्माकारावृत्तिः साच रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैवेति शुद्धे सत्त्वे भवति चित्तमेकाग्रम् । अस्यां भूमौ सम्प्रज्ञातसमाधिः तत्रध्येयाकारावृत्तिरपि भासते ॥

एकाग्र्यम् । त्रि । एकाग्रे ॥ एकमग्र्यमस्य ॥

एकाङ्गः । पुं । बुधग्रहे ॥ न । चन्दने ॥

एकाङ्गीसुगन्ध । पुं । कर्पूरादीनाङ्गणे । सुगन्धिगणे ॥

एकात्मा । पुं । परमात्मनि विष्णौ ॥ एकः केवलोऽद्वितीयश्चासावात्माचेत्येकात्मा । जीवेश्वरभेदस्य जीवानां परस्परभेदस्य जडतद्भेदस्यच मिथ्यात्वात् ॥ आत्मैवेदं तथाभ्राता वितथं भाति मायया । विचार्यमाणे वितथे आत्मैवैकोऽवशिष्यते इतिश्रीमहानिर्वाणतन्त्रोक्तेश्च ॥ आत्मनोऽन्यद्विजानीहि सर्वं च्युवचागमादिष्वुक्तेश्च ॥

एकादशः । त्रि । एकादशानाम्पूरणे ॥ तस्य पूरणेडट् ॥

एकादशकः । पुं । इन्द्रियाणाङ्गणे ॥

एकादश । त्रि । एकाधिकदशसङ्ख्यायाम् । ११ ॥ सङ्ख्येये ॥ यथा । एकादशेन्द्रियाणीति । तत्र बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि । वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥ उभयात्मकमत्र मनः ॥ मनोधिष्ठितानामेवहि चक्षुरादीनां वागादीनाञ्च स्वस्वविषये प्रवृत्तेः । एकादशसु इन्द्रियेषु मध्ये मन उभयात्मकम् ॥

एकादशद्वारम् । न । शरीराख्यपुरे ॥ एकादशद्वाराणि अस्य । सप्तशीर्षण्यानि नाभ्यासहावाङ्विचीणि शिरस्थे कम् । तैरेकादशद्वारम्भवति शरीराख्यम्पुरम् ॥

एकादशी । स्त्री । हरिदिने । हरिवासरे ॥ सातु शुक्लपक्षे सूर्य्यमण्डलात् चन्द्रमण्डलस्य निर्गमरूपैकादशकलाक्रियारूपा । कृष्णपक्षेसूर्यमण्डले चन्द्रमण्डलस्यप्रवेशरूपैकादशकलाक्रियारूपा ॥ तत्रजातस्यफलम् ॥ क्रोधोत्कटः क्लेशसहः सुभाषी यागादिकर्त्तास्वजनैकभर्त्ता । महामतिर्देवगुरुप्रियः स्यादेकादशी जो मनुजोऽतिहृष्टः ॥ एकादशानां पूरणी । डडन्तान्ङीप् ॥

एकाद्नविंशति. । त्रि । एकोनविंशत्याम् ॥ एकेन न विंशतिः । एकादिश्चैकस्य चादुक् ॥

एकानंशा । स्त्री । पार्वत्याम् ॥

एकान्तम् । न । अत्यन्ते । अतिमात्रे । निर्भरे ॥ नियते ॥ क्रियाविशेषणत्वेऽस्यक्लीवत्त्वम् । द्रव्यविशेषणेतु वाच्यलिङ्गत्वम् ॥ त्रि । निर्जने । जनैरनाकीर्णे ॥ एकःअन्त'निश्चयोऽत्र । एकस्मिन्नेव अन्त'समाप्तिर्यस्यवा ॥

एकान्ततः । अ' । अव्यभिचारिणि ॥

एकान्तवादी । पुं । सप्तपदार्थवादिनि नास्तिकविशेषे ॥

एकान्ती । त्रि । विष्णुभक्तविशेषे ॥ यथा । एकान्तेनासमो विष्णुर्यस्मादेषां परायणः । तस्मादेकान्तिनः प्रोक्तास्तद्भागवत चेतसः इत्यादिगारुडे १३१ अध्यायः ॥

एकान्नः । त्रि । एकभक्ते ॥

एकान्नविंशतिः । त्रि । एकोनविंशतौ ॥ एकेन नविंशतिः । नञोविंशत्या समासेकृते एकशब्देनसह तृतीयेति योगविभागात् समास. । अनुनासिकविकल्प' ॥

एकापारम् । न । तुष्टे प्रभेदे ॥ सेवादयोऽर्जनोपायाः तैचसेवकादीन् दु.खोकुर्वन्ति । इत्यदुरीश्वरद्वारस्थदण्डिदण्डाद्यैचन्द्रजाम् । वेदनां भावयन् प्राज्ञ क. सेवासु प्रसज्यते ॥ एवमन्ये पर्जनोपायाः दु.खा इति विषयोपरमे या शास्त्रातुष्टिः सा एकापारमुच्यते ॥

एकाब्दा । स्त्री । एकहायन्यांगवि ॥ एक' अब्दोयस्या.सा ॥

एकाम्बरम् । न । पुरुषोत्तमक्षेत्रसन्निधौ वर्त्तमाने भुवनेश्वरनाम्ना विश्रुते परमतत्वप्रतिष्ठिते पवित्रस्थाने ॥

एकायन । त्रि । एकाश्रये ॥ एकताने

॥ एकमयन मस्य ॥ न । नीतिशास्त्रे ॥

एकायनगतः । त्रि । एकाग्रे । एकताने ॥ एकञ्च तदयनञ्च । एकायनंगतः । एकस्मिन्नयने गतं ज्ञानमस्येति वा ॥

एकावली । स्त्री । एकयष्टिकाख्ये हारे ॥ एकयङ्ख्याम् ॥ अर्थालङ्कारप्रभेदे ॥यथा । गृहीत मुक्तरीत्यार्थश्रेणिरेकावली मता । नेत्रे कर्णान्तविश्रान्ते कर्णौ दोस्तम्भदोलिनौ ॥ दोस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ । जानुनी रत्नमुकुराकारे तस्य हि भूभुजः ॥ उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः पूर्वपूर्वस्योत्तरोत्तरविशेषणाभावो वा गृहीतमुक्तरीतिः । तनाद्यः प्रकारउदाहृतः । द्वितीयो यथा । दिक्कालात्मसमैव यस्य विभुता यस्तत्रविद्योतते यस्मामुष्य सुधी भवन्ति किरणा राशेः स यासामभूत् । यस्तत्त पित्तमुप सुयोस्य हविर्य यस्तस्य जीवातवे वोढा यद्गुणमेषमन्मथरिपोस्ताः पान्तु वोमूर्त्तयः ॥ अपिच । स्वाम्यतेऽमोद्यतेवापि यथा पूर्वपरम्परम् । विशेषणतया यत्रवस्तु सैकावली द्विधा ॥ पूर्वंपूर्वं प्रतियचोत्तरोत्तरस्य वस्तुनोवीप्सया विशेषणभावेन यत् स्थापनं निषेधोवासम्भवति सा द्विधा बुधै रेकावली भण्यते । क्रमेणोदाहरणम् । पुराणियस्यां सवराङ्गनानि वराङ्गनारूपपुरस्कृताङ्ग्यः । रूपंसमुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥ नतज्जलं यत्र सुचारुपङ्कजं न पङ्कजंतद्यदलीनषट्पदम् । नषट्पदोसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहारयन्मनः ॥ पूर्वत्रपुराणां वराङ्गनास्तासामङ्गविशेषणमुखेन रूपं तस्य विलासास्तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधे ध्येवंयोज्यम् ॥ एकाचासौ आवली च ॥

एकाश्रयः । त्रि । अनन्यगतौ । अनन्यगतिके ॥

एकाश्रितगुणः । पुं । एकवृत्तिधर्मे ॥ यथा । रूपम् १ रसः २ गन्धः ३ स्पर्शः ४ एकत्वम् ५ एकपृथक्त्वम् ६ परिमाणम् ७ परत्वम् ८ अपरत्वम् ९ बुद्धिः १० सुखम् ११ दुःखम् १२ इच्छा १३ द्वेषः १४ यत्नः १५ गुरुत्वम् १६ द्रवत्वम् १७ स्नेहः १८ संस्कारः १९ अदृष्टम् २० शब्दः २१ ॥ इतिसिद्धान्तमुक्तावली ॥

एकाष्ठीलः । पुं । बकपुष्पे । शिवमल्लाम ॥ एकमस्थि लाति । ला० । कः । सुषामादित्वात्षत्वम् । दीर्घत्वञ्च ॥

एकाष्ठीला । स्त्री । पाठायाम् । वनतिक्तिकौषधौ ॥ टाप् ॥

एकाहः । पुं । एकदिने ॥

एकाहगमः । त्रि । एकाहगम्यमार्गे ॥ एकाह्नेन गम्यते । कर्तृकरणे कृतेतिसमासः ॥

एकाहारः । पुं । एकदिनवृत्त्येकवारभोजने ॥ यथा । एकाहारः सदा कार्यो न द्वितीयः कदाचन । पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिमितिस्मृतिः ॥ त्रि । तद्वति ॥

एकीभावः । त्रि । विवेकानर्हत्वेनाविशेषतां प्राप्ते ॥

एकीयः । त्रि । एकपक्षे । सहाये ॥

एकेन्द्रियसंज्ञा । स्त्री । वैराग्यविशेषे । इन्द्रियप्रवृत्त्यसमर्थतया पक्वानां कषायाणामौत्सुक्यमात्रेण मनसि व्यवस्थाने ॥ अथवा दृष्टानुश्रविकविषयप्रवृत्तेर्दुःखात्मकत्वबोधेन बहिरिन्द्रियप्रवृत्तिमजनयन्त्या अपि तृष्णाया औत्सुक्यमात्रेण मनस्यवस्थाने ॥

एकोद्दिष्टम् । न । प्रेतोद्देश्यकश्राद्धे ॥ एकोद्दिष्टविधिकर्तव्ये ॥ एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते ॥

एकोशिका । स्त्री । पाठायामोषधौ ॥

एजनम् । न । कम्पने ॥ पुं । वह्नि भ्रमे ॥ त्रि । कम्पके ॥

एडः । पुं । मेषे ॥ त्रि । बधिरे ॥ इलति । इलस्वप्ने । अच् । डलयोरैक्यम् ॥ यद्वा । आसर्वतः ईड्यते । ईड स्तुतौ । घञ् । अच् वा ॥

एडक । पुं । वनच्छगले ॥ एडकस्य च र्म्मोर्णं मेषामिषसमं गुणैः ॥ पृथुशृङ्गे मेषे । मेढ्रे । उरभ्रे ॥ इलति । एलयति वा । इलस्वप्नक्षेपणयोः । ण्वुल् । डलयोरेकता ॥

एडका । स्त्री । मेष्याम् ॥ अजादित्वात् टाप् । क्षिपकादित्वान्नेत्वम् ॥

एडगजः । पुं । दद्रुघ्ने । चक्रमर्द्दके ॥ एडो मेष एव गजो यस्य भञ्जकत्वात् ॥ यद्वा । एलनम् । ईलचेष्टे स्वप्ने च । घञ् । डलयोरेकता । एडं स्वप्नं गजति । गजमदेशब्दे च । अच् ॥

एडमूकः । त्रि । वाक्श्रुतिवर्जिते ॥ शठे ॥ एडो बधिरश्चासौ मूकश्च ॥

एडुकम् । न । एडूके ॥

एडूकम् । न । अन्तर्न्यस्तकीकसे कुड्ये ॥ ईड्यते । ईड स्तुतौ । उलूकादयश्चेतिसाधु ॥

एडोकम् । न । एडूके ॥ इतिद्विरूपकोषः ॥

एणः । पुं । कृष्णवर्णे मृगे । हरिणजातिविशेषे ॥ अस्यमांसगुणाः । ए

सः कषायो मधुरः पित्तास्रकफवातहृत्। सङ्ग्राही रोचनो वल्यो ज्वरप्रशमनः स्मृत इति ॥ अपिच। एणो निलकफध्वंसी किञ्चित् पित्तकरो लघुः। उष्णो ग्राही रसेस्वादु बल्यो ज्वरहरः स्मृत इति ॥ एति। बाहुलकात्तुः ॥

एणकः। पुं। एणे ॥ स्वार्थे कः ॥

एणतिलकः। पुं। चन्द्रमसि ॥ एणस्तिलकमिव यस्य ॥

एणभृत्। पुं। चन्द्रे ॥

एणी। स्त्री। मृग्याम् ॥ एणस्य स्त्री। पुंयोगादिति ङीप् ॥

एणीनयना। स्त्री। मृगाक्ष्याम् ॥ एण्याः नयने इव नयने यस्याः। एणीनयने केलीकलहे प्रेयान् यद्किं किं नो कुरुते। धन्या रमणी सर्वं सहते दुःखं सुखवत् स्वान्ते मनुते ॥

एतः। पुं। कर्बुरवर्णे ॥ त्रि। आगते ॥ कर्बुरवर्णयुक्ते ॥ एति वर्णान्। इण्०। हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति एतेस्तन् ॥

एतद्। त्रि। आसन्नबुद्धिस्थे। पुरोवर्त्तिवाचके सर्वनामनि ॥ एति इण्०। एतेस्तुट्चेत्यदिः ॥ निस्यापरोक्षात्मनि ॥

एतनः। पुं। निश्वासे ॥

एतर्हि। अ। सम्प्रति। इदानीम् ॥ अस्मिन्काले। इदमोर्हिल्। एतेतौ रथोः ॥

एतशः। पुं। द्विजोत्तमे। ब्राह्मणे ॥ एति। इण्०। इणस्तशन्तशसुनाविति तशन् ॥

एतशाः। पुं। ब्राह्मणे ॥ एति। इण्०। इणस्तशन्नितितशसुन् ॥ अत्वसन्तस्येतिदीर्घः। एतशसौ। एतशसः ॥

एता। स्त्री। आगतायाम् ॥ कर्बुरवर्णायाम् ॥ वर्णादनुदात्तात् तोपधात् तोनेति पाक्षिकोङीप् तत्सन्नियोगशिष्टस्तकारस्य नकारादेशश्च न ॥

एतावान्। त्रि। एतत्परिमाणविशिष्टे ॥ एतत् परिमाणमस्य। यत्तदेतेभ्यः परिमाणेमतुप। आसर्वनाम्नः ॥ एतावान् साङ्ख्ययोगाभ्यां स्वधर्मपरिनिष्ठया। जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥

एध। पुं। इन्धने। ईंधन इति भाषा ॥ इध्यतेऽनेनाग्निः। ञिइन्धीदीप्तौ। हलश्चेति करणेघञ्। अचोदेधोद्भ्यन्थश्लिमन्थ्या इति घञिनलोपोगुणश्चनिपातितः ॥

एधतुः। पुं। पुरुषे ॥ वन्हौ ॥ एधते। एध०। एधियहोस्तुः ॥

एधः। न। वह्निसन्दीपनार्थे काष्ठे।

समिधि। इन्धने॥ एधतेऽनेन। एध॰। असुन्॥

एधा। स्त्री। समृद्धौ॥ एधनम्। एध॰। गुरोश्चेत्यः। टाप्॥

एधितः। त्रि। प्रवृद्धे। वर्द्धिते॥ एधते। गत्यर्थेति क्तः॥

एनः। न। पापे॥ अपराधे॥ एतिग च्छति प्रायश्चित्तेन। इणो आगसी त्यसुन् नुडागमश्च॥

एनी। स्त्री। एतायाम्॥ अनपाचिको ङीप् तकारस्य नकारादेशश्च॥

एरका। स्त्री। निर्ग्रन्थितृणविशेषे। एरकागुन्द्रमूलाच शिम्बी गुन्द्रा शरी तिचैतन्नामान्तराणि। पटेरा इति भाषा॥ एरका शिशिरा वृष्या चक्षुष्या वातकोपिनी। मूत्रकृच्छ्राश्मरी दाहपित्तशोणितनाशनी॥

एरङ्गः। पुं। अरङ्गा रङ्गा इतिगौडेषु प्रसिद्धे मत्स्यविशेषे। एरङ्गो मधुरः स्निग्धोविष्टम्भी शीतलो गुरुरिति चास्यगुणाः।

एरण्डः। पुं। अरण्ड इतिभाषाप्रसिद्धे वृक्षविशेषे। उरुवूके॥ अस्यगुणा यथा। एरण्डयुग्मं मधुरं सुष्णं गुरु विनाशयेत्। शूलशोथकटीवस्तिशिरः पीडोदरज्वरान्॥ ब्रध्नश्वास कफानाहकासकुष्ठाममारुतानिति। एरण्डयुग्मम् शुक्लरक्तैरण्डौ॥ एरण्डपत्रं वातघ्नं कफकृमिविनाशनम्। मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोपणम्॥ वातार्यग्रदलं गुल्मवस्तिशूलहरम्परम्। कफवातकृमीन् हन्ति वृद्धिंसप्तविधामपि॥ एरण्डफलम-त्युष्णंगुल्मशूलानिलापहम्। यकृत् प्लीहोदरार्शोघ्नं कटुकं दीपनं परम्॥ तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहः इति॥ कार्येऽस्यमूलसंश्रा द्यमिष्याङ्कुरपरेजनाः॥ आ ईरय ति वायुम्। ईरगतौ कम्पनेच। वाहुलकादण्डच्॥

एरण्डकः। पुं। एरण्डे॥ स्वार्थेकः॥

एरण्डतैलम्। न। एरण्डस्यस्नेहे॥ स्नेहेतैलच्॥ गुणा यथा। एरण्डतैलंतीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिवलप्रदम्॥ कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्। विस्रंस्वादुरसं पाके सतिक्तं कटुकं सरम्॥ विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलहृत्। हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान्॥ वातशोणितविड्बन्धब्रध्नशोथाश्मविद्रधीन्॥ आमवातगजेन्द्रस्य शरीरवनचारिणः। एकएवनिहन्तायमेरण्डस्नेहकेशरीति॥

एरण्डपत्रिका । स्त्री । दन्तीवृक्षे ॥

एरण्डफलम् । न । रेंडीइतिप्रसिद्धे ए रण्डस्य फले । ऐरण्डे ॥ ऐरण्डं कोमलं ग्राह्यं फलं सकोण स्वेदितम् । पाचितं कटुतैलेन हिङ्गुनाति सुवासितम् ॥ कफानिलहरं रुच्यं रूक्षम्-ग्राह्य पित्तलम् । अग्निसन्धननं रुच्यं गुरुपाकेति पिच्छिलम् ॥

एरण्डफला । स्त्री । लघुदन्त्याम् ॥

एरण्डा । स्त्री । } पिप्पल्याम् ॥ इति
एरण्डी । स्त्री । }

शब्दचन्द्रिका ॥

एर्वारुः । पुं । कर्कटीप्रभेदे । लोमशायाम् । हस्तिदन्तफलायाम् ॥ आईरणम् । ईरण सम्पदादित्वात् क्विप् । एरं इयर्त्ति वारयतिवा । उण्० । बाहुलकादुण् ॥

एलकः । पुं । मेषे ॥ इतिराजनिर्घण्टः ॥

एलङ्गः । पुं । मत्स्यविशेषे । गौडभाषायां रायकडा रायखोंडा एलाङ्गा इति च ख्याते ॥ एलङ्गो मधुरो वृष्यः संग्राही कफवातहा । मेधाग्निपुष्टिकारीच शीतलोगुरुरेवच ॥ श्लेष्मसादन प्रोक्तोनिघण्टे राजपूर्वके ॥

एलवालुकम् । न । सुगन्धिद्रव्यविशेषे । वालुके । ऐलेये । वालुका इतिगौडभाषा ॥ एलति । इलप्रेरणे । पचाद्यच् । टाप् । एलाइव वलते । वलप्राणे । बाहुलकादुण् । स्वार्थेकन् । ङ्यापोरितिह्रस्वः ॥

एला । स्त्री । इलायचीति भाषासिद्धायां बहुलगन्धायाम् । ऐन्द्र्याम् ॥ सा द्विविधा । सूक्ष्मास्थूलेति भेदात् ॥ सूक्ष्मोपकुञ्चिका तुत्थाकोरङ्गी त्रिपुटा त्रुटि रित्यादिनामभिः प्रसिद्धा ॥ स्थूलातु । पृथ्वीका चन्द्रबालाच निष्कुटिर्बहुलात येत्यादिभिःख्याता ॥ कल्याणकास्तु । सूक्ष्मैलायां स्थूलैलायाञ्चद्रष्टव्याः ॥ एलयति । इलप्रेरणे । पचाद्यच् । टाप् ॥

एलापत्र । पुं । नागविशेषे ॥

एलापर्णी । स्त्री । सुवहायाम् । रास्नायाम् । युक्तरसायाम् । कांठाआ मरुली एलानी इति गौडभाषा ॥ एलायाइव पर्णान्यस्याः । पाककर्णेति ङीप् ॥

एलावालुकम् । न । ऐलेये । एलवालुके ॥ ह्रस्वाभावः मक्षिप्रापूर्ववत् ॥

एलीका । स्त्री । सूक्ष्मैलायाम् ॥

एलवालु । न । एलवालुके ॥ एलवालु कटुकं पाके कषायं शीतलं लघु । हन्ति कण्डूव्रणच्छर्दि तृट्कासारुचिहृद्रुजः ॥ मलासविषपित्तास्रकुष्ठमूत्र-

गन्दकमीन् ॥

एव । अ । औपम्ये ॥ अनवक्लृप्तौ । अनियोगे ॥ वाक्यपूरणे ॥ अवधारणे ॥ चार्‌नियोगे ॥ विनिग्रहे ॥ एवकारस्त्रिविधः । विशेष्यसङ्गतः विशेषणसङ्गतः क्रियासङ्गतश्चेति । तत्र विशेष्यसङ्गतस्यैवकारस्य अन्ययोगव्यवच्छेदोऽर्थः । पार्थएव धनुर्द्धर इत्यादौ विशेषणे धनुर्द्धरे पार्थान्ययोगव्यवच्छेदबोधात् । धनुर्द्धरपदस्योत्कृष्टधनुर्द्धरत्वाद्यर्थकत्वात् तथैवतात्पर्यात् । पार्थान्ययोगस्ताद्रात्म्यम् ॥ विशेषणसङ्गतस्यैवकारस्याऽयोगव्यवच्छेदोऽर्थः । शङ्खः पाण्डुर एवेत्यादौ विशेष्ये शङ्खे पाण्डुरत्वायोगव्यवच्छेदबोधात् ॥ क्रियासङ्गतस्यैवकारस्य चात्यन्तायोगव्यवच्छेदोऽर्थः । सम्भवाभिप्रायके नीलं सरोजं भवत्येवेत्यादावन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्तृत्वात्यन्ताऽयोगव्यवच्छेदबोधादिति सम्प्रदायः ॥ परिभवे ॥ ईषदर्थे ॥ अयनम् । इण् शीभ्यां वन् ॥

एवः । त्रि । गन्तरि । गमनकर्त्तरि ॥ एति । इण । इणशीभ्यां वन् ॥

एवम् । अ । उपमायाम् । सादृश्ये । वेत् । या । यथा । तथा । इवेत्यस्य



पर्यायाः ॥ यथा । अग्निरेवं विप्रः । अग्निरिवेत्यर्थः ॥ इदंप्रकारे । इत्थम् ॥ यथा । एवं वादिनि विप्रर्षौ । अवधारणे । यथा । एवमेतत् ॥ अङ्गीकारे ॥ अर्थप्रश्ने ॥ परकृतौ ॥ पृच्छायाम् ॥

एषणः । पुं । लौहमयेवाणः ॥

एषणा । स्त्री । इच्छायाम् । पुत्रलोकवित्तकामनासु ॥ न कश्चिदन्यः संसार उक्तादस्त्येषणात्रयात् ॥ इषेर्ण्यु टिटाप् ॥

एषणिका । स्त्री ॥ एषण्याम् । नाराच्याम् । स्वर्णकारादीनां तुलायाम् । निक्ति इति गौडभाषा । काँटा इति देशभाषा ॥ इष्यतेऽनया । इषगतौ । ल्युट् । स्वार्थे कः । टापित्वे ॥

एषणी । स्त्री । एषणिकायाम् ॥ व्रणमार्गानुसारिण्याम् । व्रणवेधशलाकायाम् । वेलकार इति गौडभाषाप्रसिद्धायाम् ॥ चेतनाभिदि । इष्यतेऽनया । इषग० । ल्युट् । गौरादिषु एषणः करणइति ङीष् ॥

एषितव्यः । त्रि । अन्वेष्टव्ये ॥ एषितुं योग्यः । तव्यः ॥

एष्टव्यः । त्रि । एषितव्ये ॥ यथा । एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृष

नुवृत्तेदिति ॥

## ऐ

ऐ । अ । हूतौ । आह्वाने ॥ स्मृतौ ॥ आमन्त्रणे ॥ शोचने ॥ ऐकारे ॥

ऐः । पुं । महेश्वरे ॥

ऐकध्यम् । अ । एकधार्थे ॥ एकाद्धोध्यमुञन्यतरस्यामिति धाप्रत्ययस्य ध्यमुञ् ॥

ऐकभाव्यम् । न । एकभावत्वे ॥ ब्राह्मणादित्वात् ष्यञ् ॥

ऐकरस्यम् । न । सामरस्ये ॥ एकरसस्य भावः । ष्यञ् ॥

ऐकागारिकः । त्रि । चौरे । तस्करे ॥ एकमसहायमगारं प्रयोजनमस्य । ऐकागारिकट् चौर इतिइकट् वृद्धिश्च निपातनात् ॥ स्त्रियां टित्त्वान्ङीपि । ऐकागारिकी ॥

ऐकाग्रः । त्रि । एकताने ॥ एकाग्रात् स्वार्थेऽण् ॥

ऐकात्म्यम् । न । ऐक्ये ॥ एकात्मनो भावः । ष्यञ् ॥

ऐकान्तिकः । त्रि । अव्यभिचारिणि । साधनानन्तरमवश्यम्भाविनि ॥

ऐकान्यिकः । पुं । एकान्यपाठच्छात्रे ॥ यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं-जातं सोऽनेनोच्यते । एकमन्यद्वृत्तमस्य । कर्माध्ययने वृत्तमिति ठक् । एकमन्यदिति विगृह्य तद्धितार्थ इति समासः । ततष्ठक् । एवं द्वैयन्यिकः त्रैयन्यिकः ॥

ऐकाह्निकः । त्रि । एकाहनिष्पन्ने ॥ पुं । एकदिनानन्तरभवे ज्वरे ॥ दिनेदिने एककाले समागतज्वरे ॥ समुद्रस्योत्तरे तीरे द्विविदो नामवानरः । ऐकाह्निकज्वरं हन्ति तस्य नामानुकीर्त्तनात् ॥ एकाह्नेभवः । ठञ् ॥

ऐक्यम् । न । अभेदे । एकात्मभावे । एकत्वे । व्यतिरेकाभावे ॥ भावेष्यञ् ॥

ऐक्षवम् । न । मेरटे । इक्षोर्मूले ॥ इक्षोरिदम् । अण् ॥ त्रि । इक्षोर्विकारे । गुडादौ ॥ तदवयवे ॥ बिल्वादण् ॥

ऐक्ष्वाकः । पुं । सूर्यवंश्यनृपे ॥ इक्ष्वाकोरपत्यम् । जनपदशब्दात्क्षत्रियादञ् । बहुत्वेलुक् । इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धय इति प्रयोगः ॥ इक्ष्वाकुषु जनपदेषु भवः ॥ कोपधादण् । अस्यबहुत्वेपिनलुक् । ऐक्ष्वाकेषु चमैथिलेषु च महान्कष्माकमद्भागिपततिमुरारिः ॥ दाण्डिनायनेत्युकारलोपः ॥

ऐङ्गुदम् । न । इङ्गुदीवृक्षस्यफले । हिंगोटा इतिभाषा ॥ इङ्गुद्या इदम् । प्लक्षादिभ्योऽण्विधेर्नाणोलुक् ॥

ऐडविडः । पुं । ऐलविले । कुवेरे ॥

ऐडूकम् । न । एडूके । सास्थिकुड्ये ॥ स्वार्थेऽण् ॥

ऐणम् । त्रि । एणस्य चर्मादौ ॥ एणस्य अवयवो विकारो वा । प्राणिरजतादिभ्योऽञ् ॥

ऐणिकः । त्रि । एणहन्तरि ॥

ऐणेयम् । त्रि । एण्यास्त्वगादौ ॥ एण्या अस्या विकारोऽवयवो वा एण्याढञ् ॥ स्त्रीणां रतिबन्धविशेषे ॥

ऐतरेयः । पुं । ऋग्वेदोपनिषदि । तच्छाखायाम् ॥ त्रि । इतराया अपत्ये ॥

ऐतरेयी । पुं । ऋग्वेदीयशाखाविशेषाध्यायिनि ॥

ऐतिह्यम् । न । इतिह । पारम्पर्योपदेशे ॥ तत्रानिर्दिष्टप्रवक्तृकं पारम्पर्यप्रवादमात्रम् इतिह ऋचुर्वृद्धा इति ऐतिह्यम् । यथेह वटे यक्षः प्रतिवसतीति । इतिहेति निपातसमुदायः उपदेशपारम्पर्ये । तदेव । अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ यद्वा चतुर्वर्णादित्वात् । स्वार्थे ष्यञ् ॥

ऐनसः । पुं । एनसि ॥ स्वार्थिकः प्रज्ञाद्यण् ॥

ऐन्दवम् । न । मृगशिरोनक्षत्रे ॥ त्रि । इन्दुसम्बन्धिनि ॥ इन्दोरिदम् । तस्येदमित्यण् ॥

ऐन्दवी । स्त्री । सोमराज्याम् ॥ ङीप् ॥

ऐन्द्रः । पुं । अर्जुने ॥ वालिवानरे ॥ दैवसर्गान्तरे ॥ त्रि । शक्रसम्बन्धिनि ॥ इन्द्रस्यायम् । तस्येदमित्यण् ॥ न । ज्येष्ठानक्षत्रे ॥ मूलविशेषे । वनार्द्रकायाम् ॥ इन्द्रदेवताकहविरादौ ॥ इन्द्रो देवतास्य । साऽस्य देवतेत्यण् ॥

ऐन्द्रजालिकः । पुं । मायाकारके । मायाविनि ॥ इन्द्रजालेन चरति । चरतीति ठक् ॥

ऐन्द्रलुप्तिकः । त्रि । केशघ्नरोगविशिष्टे । खल्लीटे । गञ्जा इतिभाषा ॥

ऐन्द्रिः । पुं । जयन्ते । इन्द्रपुत्रे ॥ काके ॥ अर्जुने ॥ वालिवानरे ॥ अपत्यार्थे इञ् ॥

ऐन्द्रियकम् । त्रि । प्रत्यक्षे । इन्द्रियग्राह्ये । इन्द्रियविषये ॥ इन्द्रियेणाऽनुभूयते । कुलालादित्वाद्वुञ् ॥

ऐन्द्री । स्त्री । शच्याम् ॥ दुर्गायाम् ॥ अलक्ष्म्याम् ॥ एलायाम् ॥ इन्द्रवारुण्याम् । राखालसशा इतिगौड़भाषा । इन्द्रायण इतिभाषा ॥ प्राच्यां दिशि ॥ इन्द्रस्येयम् । तस्येदमित्यण् ।

टिड्ढेति ङीप् ॥

ऐभी । स्त्री । हस्तिघोषायाम् ॥

ऐरः । पुं । मण्डे ॥ इराऽन्नम् तन्मयः ॥ न । ऐरंमदीयंसर इतिश्रुतिप्रसिद्धे मण्डेन पूर्णे मदकरे ब्रह्मलोकस्थे सरसि ॥

ऐरण्डम् । न । एरण्डस्यफले ॥

ऐराकः । पुं । खुरासानमध्यस्थेच्छदेशविशेषे ॥ तन्मध्ये चोत्तरे देवि ऐराकः परिकीर्त्तितः । तन्मध्ये खुरासानमध्ये इति तन्त्रशास्त्रम् ॥

ऐरावणः । पुं । अभ्रमातङ्गे । ऐरावते । इन्द्रगजे ॥ इरया उदकेन वणति । वणशब्दे । पचाद्यच् । इरावण एव । स्वार्थे प्रज्ञाद्यण् ॥ यद्वा इरा सुरा वनमुदकं यस्मिन् । पूर्वपदादितिणत्वम् । इरावणे भवः । तत्रभव इत्यण् ॥

ऐरावतः । पुं । नारङ्गे ॥ लकुचद्रुमे ॥ नागभेदे ॥ पञ्चमासस्य प्रथमेऽऽहभेदे ॥ शक्रद्विपे । अभ्रमुवल्लभे । चतुर्दन्तगजे ॥ इराउदकानि सन्त्यस्मिन् । मतुप् । इरावान् समुद्रः । इरावत्यब्धौ भवः तत्रभवइत्यण् ॥ इरावत्या विद्युत इयार्थंवा । तस्येदमित्यण् ॥ न । महेन्द्रस्य ऋजुदीर्घशरासने ॥

ऐरावती । स्त्री । वटपत्रीवृक्षे ॥ विद्युति ॥ विद्युद्भेदे ॥ इरा आपः सन्त्यस्य इरावान् मेघः । तस्येयम् । तस्येदमित्यण् । ङीप् । ऐरावतेनैकदिक् । तेनैकदिगित्यण् वा ॥ उत्तरमार्गेनक्षत्र विशेषाणां संज्ञाविशेषे ॥ यथा । पुष्याश्लेषा तथादित्यावीथी चैरावतीस्मृतेति ॥

ऐरिणम् । न । पांशवलवणे ॥

ऐरेयम् । न । मद्यविशेषे ॥ त्रि । कुवेरे ॥ इराया अपत्यम् । स्त्रीभ्योढक् ॥

ऐलः । पुं । चन्द्रवंशीये पुरूरवसि नृपे ॥ इलाया अपत्यम् । अण् ॥

ऐलवालुकम् । न । एलेये । वालुके । हरिवालुके । गन्धद्रव्यमिदम् ॥ एलवालुकमेव । स्वार्थेऽण् ॥

ऐलविलः । पुं । कुवेरे । पुण्यजनेश्वरे ॥ इलविलायाः अपत्यम् । इडविलायावा अपत्यमितिविग्रहे । ऐडविलोपि । अत्रद्व्यचोनदीत्यण् ॥ डलयोरैकत्वस्मरणादैडविलोपि । इडविडा अक्तिमात्वेन अस्येतिविग्रहे ज्योत्स्नादित्वादणि ऐडविडोपि ॥

ऐलेयम् । न । एलवालुकनामगन्धद्रव्ये ॥ इलाया अपत्यम् । स्त्रीभ्योढक् ॥

ऐशानी । स्त्री । ईशदिशि । ईशानकोणे ॥ ईशानस्येयम् । अण् ङीप् ॥

ऐहलौ

ऐश्वरम् । न । अघटनघटनाचातुर्ये ॥ त्रि ॥ ईश्वरसम्बन्धिनि ॥ ईश्वरस्येदम् । अण् ॥

ऐश्वरी । स्त्री । ईश्वरसम्बन्धिन्यांशक्तौ ॥

ऐश्वर्य्यम् । न । विभूतौ । अणिमाद्यष्टसिद्धिषु ॥ सात्त्विकोबुद्धिधर्मऐश्वर्य्यम् । यतोऽणिमालघिमामहिमाप्राप्तिप्राकाम्यवशित्वेशित्वकामावसायित्वानां प्रादुर्भावः । ऐश्वर्यं द्विविधं तदिच्छाया भवति । ईश्वरोहि यदिच्छति तत्करोति ॥ सम्पत्तौ ॥ नियन्तृत्वे ॥ ईश्वरस्यभावः । गुणवचनेतिष्यञ् ॥

ऐषमः । अ । वर्त्तमानवत्सरे । ऐसौंइतिभाषा ॥ अस्मिन् संवत्सरे । सद्यः परुतपरार्य्यैषम इति इदमइश् समसण् प्रत्ययश्च संवत्सरे निपात्यते ॥

ऐषमस्तनः । त्रि । ऐषमोभवे ॥ ऐषमो ह्यः श्वसोन्यतरस्यामिति शैषिकेष्वर्थेषु पक्षेट्युट्युलौ ॥

ऐषमस्त्यः । त्रि । ऐषमस्तने । ऐषमो भवे जाते इत्याद्यर्थेषु ॥ ऐषमोह्यःश्वसोन्यतरस्यामिति पक्षे त्यप् ॥

ऐहलौकिकम् । न । धने ॥ त्रि । इहलोकोपयोगिनि ॥ यथा । ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनम् । पारलौकिककार्येषु प्रसुप्ताभृशना-

ओक४

त्मिका इतिमहाभारते पावकाध्ययनम् ॥ इहलोकेभवम् । अध्यात्मादेष्ठञिष्यते ॥

ऐहिकः । त्रि । इहलोकभवे प्रतिपन्नशरीरसम्बन्धिनि स्रक्चन्दनवनितागृहक्षेत्रपशुभृत्यादिविषयजन्यसुखदुःखादिस्वरूपेभोगे ॥ इहभवम् । काशादिभ्य ठञ् ॥

ओः

ओ । अ । सम्बोधने ॥ आह्वाने ॥ स्मरणे ॥ अनुकम्पायाम् ॥ ओंकारे ॥

ओः । पुं । ब्रह्मणि ॥ इत्येकाक्षरकोषः ॥

ओकः । पुं । शकुन्ते ॥ वृषले ॥ उचेरिगुपधलक्षणेकेगुणः कुत्वञ्च ओकउचः के इतिनिपात्यते ॥

ओकणः । पुं । } केशकीटे । यूकायाम् ओकणिः । पुं । } । जूं इतिभाषा ॥

ओकः । न । पुं । आश्रयमात्रे ॥ गृहे । मन्दिरे ॥ उच्यते समवैत्यत्र । उच समवाये । असुन् । गुणः । न्यङ्क्वादित्वात् कुत्वम् ॥

ओघः । पुं । प्रवाहे । जलस्य वेगे ॥ वृन्दे । सङ्घाते ॥ परम्परायाम् ॥ उपदेशे ॥ काकाख्यायां तुष्टौ ॥ यथा । भवज्यादिन सद्यो निर्वाणदेति मै व काल परिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तमतया तवेत्युपदेशे या आध्यात्मिका तुष्टिः सा काला ख्या ओघ उच्यते ॥ द्रुतन्त्ये ॥ नृत्यद्रुत्युपलक्षणं गीतवाद्ययोः ॥ ओचनम् । उच० । घञ् । पृषोदरादित्वात् घः ॥ वहतिवा । वह० । पचाद्यच् । न्यङ्क्वादित्वात् साधुः ॥ यद्वा । आऊह्यतेऽनेन । ऊह० । हलश्चेति घञ् ॥

ओङ्कारः । पुं । प्रणवे । वेदितव्ये ब्रह्मणि वेदनसाधने ॥ अवति । अवरक्षणादौ । अवतेष्टिलोपश्चेति मन् । मन्प्रत्ययस्यैवायं टिलोपो न तु प्रकृतेः । अन्यथा ऽडिदित्येव ब्रूयात् । ज्वरत्वरेत्यूट् । गुणः । वषट्कार इति लिङ्गात् समुदायादधिकार प्रत्ययः ॥ अत्राक्षापस्तम्बः ॥ ओङ्कारः स्वर्गद्वारं तदस्मा ऽध्येष्यमाण एतदादि प्रतिपद्येत विकथांचान्यां कृत्वा एवं लौकिक्यावाचाव्यावर्त्तते इति ॥ लौकिक्यावा चाध्याय सन्ते तया मिश्रितं न भवतीत्यर्थः ॥

ओङ्कारा । स्त्री । बुद्धशक्तिविशेषे । तारायाम् ॥

ओजः । पुं । विषमसङ्ख्यायाम् ॥ ओजेनौजस्समःपादे ॥ इति भरता द्यः ॥

ओजतिथिः । पुं । विषमतिथौ ॥

ओजः । नं । दीप्तौ ॥ अवष्टम्भे ॥ मकाशे ॥ प्राणबले । निजबले । सामर्थ्ये ॥ प्रथमतृतीयपञ्चमसप्तमनवमैकादशराशिषु ॥ धातुतेजसि ॥ शस्त्रादिकौशले ॥ ज्ञानेन्द्रियाणां पाटवे ॥ काव्यगुणे गौडीरीत्याम् ॥ तल्लक्षणम् । बहुसमाससंयुक्तवर्णपदाडम्बरः । यथा । ओजः प्रसाद माधुर्यगुणत्रितयभेदतः । गौडवैदर्भपाञ्चालीरीतयः परिकीर्त्तिताः ॥ ओजस्समासभूयस्त्वं मांसलं पदडम्बरम् ॥ तस्योदाहरणं यथा । गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाग्रजाग्रत्फणिस्फूर्जत्फूत्कृतिभीतिसम्भृतचमत्कारस्फुरत्सम्भ्रमा । आनन्दामृतमापिकां विदधती चित्तं गिरीशप्रेम्णस्त्वां पायान्नवसङ्गमे भगवती लज्जावती पार्वतीति ॥ रसादिसप्तधातुसारभागजधातुविशेषे ॥ यथा । हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् । ओजश्शरीरे सञ्ज्ञातं त

त्वाशान्त्राश मश्च्छति ॥ भ्रमरैःफल पुष्पेभ्यो यथासम्भ्रियतेमधु । तद्दोजश्शरीरेभ्योधातुःसम्भ्रियतेन्त गामितिवैद्यकशास्त्रम् ॥ उब्जस्य्नेन । उब्जआर्जवे । उब्जेर्बलेषस्लो पश्चेत्यसुन् ॥

ओजिष्ठ । त्रि । ओजस्विनि ॥ सारत मे ॥ उभयत्र विन्यस्ता देोजस्विशब्दा दिष्ठन् । विन्मतोर्लुगिति लुक् टिलोपश्च ॥

ओडवः । पुं । पञ्चस्वरयुक्तरागे ॥ सरि चह प वर्जितः । प ग म ध नि युक्त । यथा मल्लारादयः ॥ इतिसङ्गीतदर्पणः ॥

ओडिका । स्त्री । उडिधान्इतिगौडभाषामसिद्धे धान्यविशेषे । नीवारे ॥

ओडी । पुं । ओडिका धान्ये ॥

ओड्रः । पुं । जवापुष्पे ॥ जवापुष्प वृक्षे ॥ जने ॥ आर्द्रयदुनक्ति । उन्दी । स्फायितञ्चीतिरक् । बाहुलकाद्गुणःच्छत्वम् ॥

ओड्राः । पुं । भूम्नि । उडीसा इति प्रसिद्धे नीवृद्विशेषे ॥

ओड्रपुष्पम् । न । ओडर गुडहर इतिप्रसिद्धायांजवायाम् । जवावृक्षे ॥ ओड्रं पुष्प मस्य। ओड्रपुष्पकुसुमप्रियेत्यिकि इतिहरानन्दः ॥

ओड्राख्या । स्त्री । जवावृक्षे ॥

ओतः । त्रि । पटेदीर्घतन्तौ ॥ अन्तर्व्यासौ ॥

ओतुः । पुं । स्त्री । विडाले ॥ अवतिविद्याम् आखुभ्योरक्षंवा । अवरचणादौ । सितनीतितुन् । ज्वरत्वरेत्यूठ् । गुणः ॥

ओतुमदः । पुं । मार्जारधर्मे ॥

ओदनः । पुं । न । अन्ने । भक्ते । भात इति भाषा ॥ उनत्ति । उन्दी । उन्देर्नलोपश्चेति युच् ॥ यद्वा उर्द्दतेऽनेन । उर्द्दक्रीडायाम् । करणे ल्युट् । पृषोदरादिः ॥

ओदनपाकी । स्त्री । ओषधिविशेषे । नीलझिण्ट्याम् ॥ पाककर्णेति ङीष ॥

ओदनाह्वा । स्त्री । महासमङ्गायाम् ॥

ओदनिका । स्त्री । महासमङ्गायाम् ॥ बलायाम् ॥

ओदनी । स्त्री । बलायाम् ॥

ओद्मः । पुं । उन्दने ॥ उन्दी० । औणादिके मन् मत्यये । अवोदैधोद्म प्रश्रथहिमश्रथा इतिनलोपोगुणश्च निपातितः ॥

ओम् । अ । उपक्रमे ॥ प्रणवे ॥ अभ्युपगमे । अनुमतौ ॥ अपाकृतौ । अङ्गीकारे ॥ मङ्गले । शुभे ॥ वेदोप

| ओषधी | ओष्ठ्यः |
|---|---|

ष्वाथिवेदनसाधने ॥ अवति । अव रचणादौ । अवतेष्टिलो परश्चेतिम न् । मनपवटिलोपः । ज्वरत्वरेत्यू ठ् । गुणः ।

ओलः । पुं । अर्शोघ्ने । शूरणे । कन्दे ॥ त्रि । आर्द्रे । गोला भीजा इतिच भाषा ॥

ओल्लः । पुं । ओले । शूरणे ॥ ग्राम्यकन्दस्तु दोषलः ॥ त्रि । आर्द्रे । आला गीला इतिचभाषा ॥

ओषः । पुं । दाहे । प्लोषे । प्रोषे ॥ ओषणम् । उष० । घञ् ॥

ओषणः । पुं । कटुरसे । भाल इति-भाषा ॥

ओषणी । स्त्री । पुंख्या इतिगौडभाषा प्रसिद्धे शाकविशेषे ॥

ओषधिः । स्त्री । फलपाकान्ते कदल्यादौ । व्रीहियवादौ ॥ जातिमात्रविवक्षायामोषधिशब्दस्य प्रयोगो भवति ॥ ओषः प्लोषः दीप्तिर्धीयतेऽत्र । डुधाञ् ० । कर्मण्यधिकरणेचेति किः ॥

ओषधिप्रस्थः । पुं । हिमालयस्य नगरविशेषे ॥

ओषधी । स्त्री । फलपाकान्ते व्रीहियवादौ ॥ किमत्ययान्तात् कृदिकारादितिङीष् ॥ जातिमात्रविवचायामस्य प्रयोगो भवति । ओषधयः पञ्चधाख्याता लतागुल्माश्चशाखिनः । पादपाः प्रसराश्चेति तेषां वच्यामि लचणम् ॥ गुडूच्याद्या लताः प्रोक्ताः गुल्माः पर्पटकादयः । आम्राद्याः शाखिनोज्ञेया वटाश्वत्थादि पादपाः ॥ कण्टकार्य्यादिकाः सर्वाः प्रसरा इति कीर्त्तिताः ॥

ओषधीपतिः । पुं । इन्दौ । चन्द्रमसि ॥ ओषधीनांपतिः ॥

ओषधीशः । पुं । ग्लावि । चन्द्रे ॥ ओषधीना मीशः ॥ कर्पूरे ॥

ओष्ठः । पुं । दशनवाससि । रदनच्छदे । ऊपरला होठ इतिभाषा ॥ अधरे । नीचला ओठ होठ इतिच भाषा ॥ उष्यते उष्णाहारेण । उष० । उषिकुषीतिथन् ॥

ओष्ठपुष्पः । पुं । बन्धूकपुष्पवृक्षे ॥

ओष्ठरोगः । पुं । आस्यरोगान्तर्गतोष्ठभवव्याधौ ॥ विशेषोस्यनिदाने ॥

ओष्ठी । स्त्री । बिम्बफले । कंदूरी इतिभाषा ॥

ओष्ठोपमफला । स्त्री । बिम्बिकायाम् । कंदूरी इतिभाषा ॥ ओष्ठोपमानि फलान्यस्याः ॥

ओष्ठ्यः । पुं । ओष्ठभववर्णे ॥ त्रि । ओष्ठहिते ॥ ओष्ठेभवः । शरीराव

यवाङ्गेति यत् ॥ ओष्ठयोर्हितः । श रीरावयवाद्यत् ॥

ओष्णम् । त्रि । ईषदुष्णे ॥ आउष्णम् ॥

## औ

औ । अ । आह्वाने ॥ सम्बोधने ॥ विरोधे ॥ निर्णये ॥ शूद्राणां प्रणवे ॥ यथा । चतुर्दशस्वरो यो सौ सेतुरौ कारसंज्ञितः । सचानुस्वारनादाभ्यां शूद्राणां सेतुरुच्यते इति कालिका पुराणम् ॥ औकारे ॥

औः । पुं । अनन्ते ॥ निस्वने ॥ स्त्री । विश्वम्भरायाम् ॥

औक्थिकः । पुं । उक्थाध्ययनकर्त्तरि ॥ उक्थमधीते वेद वा । क्रतूक्थादीति ठक् ॥

औक्थिक्यम् । न । औक्थिकानां धर्मे ॥ तेषामाम्नाये पि ॥ छन्दोगौक्थिके त्यिञ्यः ॥

औक्षम् । न । वृषसमूहे ॥ उक्ष्णां समूहः तस्य समूह इत्यण् । औक्षमनपत्य इति टिलोपः ॥ अपत्ये तु औक्ष्णः । षपूर्वहन इत्यल्लोपः ॥

औक्षकम् । न । उक्ष्णां समूहे । वृ



षदन्दे ॥ गोत्रोक्षोष्ट्रेति वुञ् ॥

औख्यम् । त्रि । स्थालीपक्के ऽन्नादौ । पिठरपक्के ॥ उख्य मेव स्वार्थे ष्यञ् ॥

औचिती । स्त्री । औचित्ये ॥ सत्ये ॥ उचितस्य भावः । ब्राह्मणादित्वात् ष्यञ् । ङीष् । हलस्तद्धितस्येति यलोपः ॥

औचित्यम् । न । उचितत्वे । योग्यत्वे ॥ सत्ये ॥ उचितस्य भावः । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् ॥

औजसिकः । पुं । शूरे ॥ ओजसा वर्त्तते । ओजसहोम्भसावर्त्तत इति ठक् ॥

औड्रः । पुं । ओड्रदेशोद्भवे आदौ क्षत्रिये पश्चाद्ब्राह्मणादर्शनेन क्रियालोपादिना च शूद्रत्वमापन्ने दस्युपदवाच्ये ॥ त्रि । ओड्रदेशजे ॥

औत्कर्ष्यम् । न । उत्कर्षतायाम् ॥ भावे ब्राह्मणादित्वात् ष्यञ् ॥

औत्तरपथिकः । त्रि । उत्तरपथेनाहृते ॥ तेन गच्छति उत्तरपथेनाहृतञ्चेति ठञ् ॥

औत्तरपदिकः । त्रि । उत्तरपदग्राहिणि ॥ उत्तरपदं गृह्णाति । ठक् ॥

औत्तराहः । त्रि । उत्तरस्मिन् जातः भवः तत आगतो वा ॥ उत्तरादाहञ् ॥

औत्तरेयः । पुं । परीक्षिन्नृपतौ ॥ उत्त

रायाः अपत्यम् । स्त्रीभ्योढक् ॥

औत्तानपादिः । पुं । ध्रुवे । स्वायम्भुव मनोः पौत्रे ॥ उत्तानपादस्यापत्यम् । इञ् ॥

औत्सर्गिकः । त्रि । उत्सर्गार्हे ॥ सामान्यविधिरुत्सर्गः । उत्सर्गमर्हति । ठञ् ॥ सामान्यत्वे ॥

औत्सुक्यम् । न । उत्कण्ठायाम् ॥ उत्सुकस्य कर्मभावो वा । ष्यञ् ॥

औदनिकः । त्रि । सूपकारे ॥ ओदनं शिल्पमस्य । शिल्पमिति ठञ् ॥

औदमेयिः । पुं । उदमेयस्यापत्ये ॥ अतइञ् ॥

औदमेयी । स्त्री । उदमेयजातौ ॥ इञन्तात् इतोमनुष्यजातेरिति ङीष् ॥

औदरिकः । त्रि । उदरमात्रपूरके । आद्यूने । पेटार्थी इतिभाषा ॥ अत्यन्तबुभुक्षिते । बुभुक्षयात्यन्तपीडिते ॥ उदरे प्रसितः । उदराट्टगाद्यूनइतिठक् ॥

औदश्वितम् । न । अर्द्धजलयुक्ते घोले ॥ त्रि । उदश्विति संस्कृते ॥ उदश्वितोन्यतरस्यामिति पक्षेऽण् ॥

औदश्वित्कः । पुं । औदश्विते ॥ उदश्विति संस्कृतम् । उदश्वितोन्यतरस्यामिति ठक् । इसुसुक्तान्तात्कः ॥

औदार्य्यम् । न । उदारतायाम् ॥ उदारस्य भावः । गुणवचनेति ष्यञ् ॥

औदासीन्यम् । न । शुभाशुभयोरुपेक्षायाम् ॥ ताटस्थ्ये ॥ उदासीनस्य भावः । ष्यञ् ॥

औदास्यम् । न । अकर्तृत्वे ॥ वैराग्ये । अनुरागादिशून्यतायाम् ॥ मनोयोगाभावे ॥

औदुम्बरः । पुं । श्राद्धदेवे । यमे ॥ न । कुष्ठरोगप्रभेदे ॥ तल्लक्षणम् । रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् । उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेदिति ॥ ताम्रे ॥ उदुम्बरमेव । प्रज्ञाद्यण् ॥ यज्ञाङ्गशाखिनःफलादौ ॥ फलमौदुम्बरं शाल मम्लतक्रेणसाधितम् । वेसवारभृते साज्ये पाचितं सैन्धवान्वितम् ॥ शीतं कषायं मधुरं रक्तपित्तप्रणाशनम् । मूत्रकृच्छ्रहरंसकषग विबन्धाध्मानकारकम् ॥ उदुम्बरस्य प्रयवोविकारोवा । प्राणिरजतादिभ्योऽञ् ॥ त्रि । ताम्रजे पात्रादौ ॥

औद्गात्रम् । न । सामवेदविहिते उद्गातुः कर्मणि भावेच ॥

औद्दालकम् । न । वल्मीककीटसम्भृते मधुनि ॥ प्रायोवल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः । कुर्वन्तिकपिलं स्वल्पंतत् स्यादौद्दाल-

कमधु ॥ औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम् । कषायमुष्णमम्लञ्च कटुपाकञ्च पित्तकृत् ॥

औद्दालकिः । पुं । गौतमे ॥ उद्दालकस्यापत्यम् । अतइञ् ॥ आरुणौ ॥

औद्धत्यम् । न । अविनीतभावे ॥ उद्धतस्य भावः । ष्यञ् ॥

औद्भिज्जम् । न । पांशवलवणे ॥

औद्भिदम् । न । रेह इति प्रसिद्धे पांशुलवणे ॥ औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम् । क्षारं गुरु कटु स्निग्धं श्लेष्मलं वातनाशनम् ॥ भौमस्य पानीयस्य प्रभेदे ॥ यथा । विदीर्य्य भूमिं निम्नां यन्महत्याधारया स्रवेत् । तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥ औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम् । प्रीणनं मधुरं बल्यमीषद्वातकरं लघु इति ॥

औद्वाहिकम् । न । उद्वाहसम्बन्धिधनादौ ॥ भार्य्याप्राप्तिकाले लब्धे भार्य्याधने ॥ तद्भ्रातृभिरविभाज्यम् । यथाह याज्ञवल्क्यः । पितृद्रव्याविनाशेन यदन्यत् स्वयमर्जयेत् । मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेदिति ॥

औपगवः । पुं । उपग्वपत्ये ॥ उपगोरपत्यम् । तस्यापत्यमित्यण् ॥ उप समीपे गौ र्यस्य इति उपगुर्गोपः । लक्षणया तत्पुरोहितोऽपि । यथाह हारीतः । यं यं याजयेद्वस्तु सत दर्शत्वमाप्नुयात् । संयोविपेण वर्षे ष्वेन्त्येवमेवोपनोङ्गिराः ॥ तथाच स्वाचार्य्यो ब्राह्मणोऽप्युपगुपद्वाच्यः । तस्यापत्यमौपगवः ॥ इति श्रीधरस्वामिनः ॥

औपगवकम् । न । औपगवानां समूहे ॥ गोत्रोक्षोष्ट्रेति वुञ् ॥

औपचारिकः । त्रि । उपचारार्थे ॥ विनयादिभ्यश्चेति स्वार्थे ठक् ॥

औपच्छन्दसिकम् । न । वैतालीयच्छन्दोविशेषे ॥ तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृद्यमिति लक्षणम् ॥ यथा । आतन्वानं सुरारिकान्तास्वौपच्छन्दसिकं हृदाविनोदम् । कंसं यो निर्जवान देवो मन्दे तं जगतां स्थितिं दधानमिति ॥ पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं विदुः ॥ अन्यत्र । विषमे ससजा गुरू समे चेत् सरयाश्छन्दसिकं तदौपपूर्वम् । यथा । स्मररागमयी वपुस्तमिस्रा परितस्सार रवेरसत्यवश्यम् । प्रियमापदिनापि कोकिलेस्त्री परितस्सार रवेरसत्यवश्यमिति ॥

औपधेयम्। न। उपधौ। रथाङ्गे॥ छदिरुपधीतिस्वार्थेढञ्॥

औपनिधिकम्। न। उपनिधौ। प्रीत्याभोगार्थमर्पिते द्रव्ये॥

औपनिषदः। त्रि। श्रुतिवेद्ये परमात्मनि॥ उपनिषदा दृश्यते गम्यते वा। उपनिषदो व्याख्यानं तत्र भवो वा। शेषइति कण्वृङ्गयनादिभ्यइ तिवा। अण्॥

औपनिषदम्मन्यः। पुं। भर्तृप्रपञ्चे॥ अयं वेदान्तैकदेशी॥ त्रि। अन्यत्र॥

औपनीविकम्। त्रि। नीविसमीपे व्यापृते॥ भवार्थे उपजानूपकर्णोपनीवेष्ठक्॥

औपमन्यवः। पुं। प्राचीनशालसंज्ञर्षौ॥ उपमन्योर्गोत्रापत्यम्। विदाद्यञ्॥

औपम्यम्। न। अनुहारे। उपमाया म्। साम्ये॥ उपमैव। चतुर्वर्णादित्वात्ष्यञ्॥

औपयिकः। त्रि। उपयुक्ते॥ न्यायागतवस्तुनि। लभ्ये॥ उपायन्त्यनेन। अयगतौ। एरचेति घञ्॥ उपायएव। उपायो ह्रस्वश्चेतिठक् ह्रस्वश्च॥

औपरोधिकः। पुं। पीलुदण्डे। मैत्रने॥ त्रि। उपरोधसम्बन्धिनि॥

औपवस्तम्। न। उपवासे॥ उपवस्तमेव। प्रज्ञाद्यण्॥

औपवस्त्रम्। न। उपवासे। भोजनाऽभावे॥ उपवसति। तृच्। उपवस्तुरिदं कर्म। तस्येदमित्यण्। माषान्मधुमसूरांश्च वर्जयेदौपवस्त्रकमितिस्मृतिः॥

औपसर्गिकः। पुं। सन्निपातरोगविशेषे॥ तस्य लक्षणम्। कफोनुलोमवातेन यदि पित्तानुगो भवेत्। स्वेदश्च्यादिभिर्जुष्टस्तदा भवति मानवः॥ प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात्। औपसर्गिकएवान्यः सन्निपातउदाहृत इति॥ त्रि। उपसर्गसम्बन्धिनि॥

औपस्थ्यम्। न। उपस्थेन्द्रियसुखे॥

औपानह्यः। पुं। मुञ्जे॥ न। चर्मणि॥ उपानहे अयम्। छ्रपभोपानहोर्ञ्यः॥

औमीनम्। त्रि। उम्ये॥ उमानाम्भवनं क्षेत्रम्। विभाषातिलमाषोमेति पक्षेखञ्॥

औरगम्। न। फणिभे॥ त्रि। सर्पसम्बन्धिवस्तुनि॥ उरगस्येदम्। अण्॥

औरभ्रः। पुं। कम्बले। रल्लके॥ उरभ्रस्य इदम्। अण्॥

औरभ्रकम्। न। मेषवृन्दे॥ उरभ्राणां समूहः। गोत्रोक्षोष्ट्रोरभ्रेतिवुञ्॥

औरभ्रिकः। त्रि। मेषजीवने॥

**औरसः ।** पुं । स्त्री । उरस्ये । स्वात्मजे । ऊढसवर्णायां जनितापत्ये ॥ यथा । सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम् । औरसं तं विजानीयात् पुत्रं प्रथमकल्पितमिति ॥ उरसा निर्मितः । उरसोऽण् चेत्यण् ॥

**औरसिकः ।** त्रि । उर इवेत्यर्थे ॥ अङ्गुल्यादिभ्यष्ठक् ॥

**और्द्धदेहिकम् ।** त्रि । और्द्धदैहिके ॥ केचिदस्यानुशतिकादिषु पाठं नेच्छन्ति ॥

**और्द्धदैहिकम् ।** त्रि । प्रेतकर्मणि । प्रेतदाने । प्रेतमुद्दिश्य मरणदिनमारभ्य सपिण्डीकरणपर्य्यन्तं प्रत्यहं दीयमाने जलपिण्डादौ । स्तार्थं तद्देहदानं पिपुस्यादौर्द्धदैहिकम् ॥ देहादूर्द्धः ऊर्द्धदेहः । राजदन्तादिः । ऊर्द्धदेहेभवम् । अध्यात्मादित्वाट्ठञ् । अनुशतिकादित्वादुभयपदवृद्धिः ॥

**और्द्धस्रोतसिकः ।** त्रि । शैवे ॥ इति त्रिकाण्डशेषः ॥

**और्व्वः ।** पुं । वाडवानले ॥ सप्तभूगोलस्य दक्षिणसीमा । तत्र सर्वे नरकाः दैत्याश्च वसन्ति ॥ पञ्चप्रवरान्तर्गतमुनिभेदे ॥ ऊर्वस्य मुनेरपत्यम् । ऋष्यण् । गोत्रापत्ये विदाद्यञ् ॥ न ।

पांशवलवणे ॥

**और्वरः ।** त्रि । भौमे । रजसि ॥

**और्व्वशेयः ।** पुं । अगस्त्यमुनौ ॥

**औलूकम् ।** न । पेचकसमूहे ॥ उलूकानां समूहः । खण्डिकादित्वादञ् ॥

**औलूक्यः ।** पुं । वैशेषिके । वैशेषिकदर्शनाभिज्ञे ॥

**औशनसम् ।** न । शास्त्रविशेषे । विचित्रनिर्माणप्रतिपादके शिल्पशास्त्रे ॥ उशनसा प्रोक्तम् । तेनप्रोक्तमित्यण् ॥ उपपुराणविशेषे ॥

**औशिजः ।** पुं । उशिजि ॥ स्वार्थिकः प्रज्ञाद्यण् ॥

**औशीरम् ।** न । शयनासने ॥ शयनं स्वापः शय्या वा । आसनम्पीठादि । स्वापपीठयोः समुदितयोरियं संज्ञा ॥ चामरे ॥ दण्डे ॥ पुं । चामरदण्डे ॥ त्रि । उशीरजे ॥ उश्यते । वशकान्तौ । वशः किदिति ईरन् । प्रज्ञाद्यण् ॥ यद्वा । उशीरस्येदम् । तस्येदमित्यण् ॥

**औषधम् ।** न । रोगनाशकद्रव्ये । भेषजे । जायौ । अगदे ॥ सर्वैः प्राणिभिर्भुज्यमाने औषधिप्रभवेऽन्ने ॥ रोगहृत्त्वेन द्रव्यमात्रविवक्षाया मौषधशब्दप्रयोगः । तेन घृततैलादिकमप्यौषधशब्दवाच्यमिति ज्ञेयम् ॥

ओषधेरिदम् । ओषधिरेव वा । ओषधे रजाता वित्यण् ॥ शुण्ठ्याम् ॥

औघरम् । न । पांशवलवणे ॥

औघरकम् । न । सार्वगुणे । मृत्तिकालवणे । खारीलौन खारीनून इति च भाष

औषसः । त्रि । प्राभातिके ॥ अनुदितौषसराग इति औषसातपभयादिति च भारवि लेख्यम् ॥ उषसिभवः । सन्धिवेलेत्यादिनायोगविभागादण् । अन्यथा कालाट्ठञ् स्यादिति व्याख्यातारः । अपभ्रंश एवायमिति प्रामाणिकाः ॥

औष्ट्रम् । त्रि । उष्ट्रसम्बन्धिनि ॥ औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा । कृमिकुष्ठकफानाहशोफोदरहरं सरम् ॥ उष्ट्रस्येदम् । अण् ॥

औष्ट्रकम् । न । उष्ट्रसमूहे ॥ तस्यसमूह इत्यर्थे गोत्रोक्षोष्ट्रेतिवुञ् ॥ उष्ट्रस्य विकारोऽवयवोवा । उष्ट्राद्वुञ् ॥

औष्ठ्यः । त्रि । ओष्ठभवे ॥ शरीरावयवाद्यदिति यत् ॥

अम् । न । परे ब्रह्मणि ॥ अनुस्वारे । पञ्चदशे स्वरे ॥ बिन्दुमात्रानुनासिकवर्णोयम् । अकार उच्चारणार्थः । अयं नकारमकारस्थानेपि भवति ॥



अः । पुं । महेश्वरे ॥ विसर्गे । षोडशे स्वरे ॥ द्विबिन्दुमात्रः कण्ठ्यवर्णोयम् । अकार उच्चारणार्थः । अयं रेफसकारस्थानेपि भवति ॥

इत्यादिगौडकुलोत्पन्नाडीचवालप्रधानोपनामतुलाराममिश्रात्मज-श्रीधनपतिमिश्रापरनाम्ना तथा श्रीसद्गुरुकुलावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण बाल्यावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ वर्गः समाप्तिङ्गतः ॥१॥

तत् सत् ॥

कः । पुं । ब्रह्मणि ॥ समीरे ॥ आत्मनि ॥ यमे ॥ दक्षप्रजापतौ ॥ भास्करे ॥ कामग्रन्थौ ॥ चक्रिणि । नारायणे ॥ पतत्रिणि । खगे ॥ पार्थिवे ।

राजनि ॥ मयूरे ॥ भानौ ॥ मनसि ॥ शरीरे ॥ काले ॥ धने ॥ शब्दे ॥ प्रकाशे ॥ न ॥ सुखे ॥ शिरसि ॥ जले ॥ कायति । कचतिवा । केशब्दे । कचदीप्तौ । अन्येभ्योपीतिडः ॥ ककारे ॥

कंवलः । पुं । कम्बलार्थेषु ॥

कंसः । पुं । उग्रसेनसुतेऽसुरविशेषे । श्रीकृष्णमातुले ॥ पुं । न । तैजस द्रव्ये । स्वर्णरजतादिर्निर्मिते पानपात्रे ॥ ताम्ररङ्गमिश्रितधातुविशेषे । कांस्ये । काँसा काँसो इतिभाषा ॥ आढकपरिमाणे माने ॥ मद्यादिपानपात्रे । पानभाजने ॥ कम्यते । कमुकान्तौ । वृद्धश्वादिहनिकमीतिसः ॥

कंसकम् । न । नयनौषधे । पुष्पकासीसे । हीराकसीप्रभेदे ॥

कंसकारः । पुं । कसेरा इतिप्रसिद्धे जातिविशेषे ॥ अस्योत्पत्तिर्यथा । वैश्यायां ब्राह्मणाज्जातोअम्बष्ठो गान्धिको वणिक् । कंसकारशङ्खकारौ ब्राह्मणात्सम्बभूवतुः ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥ अपिच । विश्वकर्मा च शूद्रायां वीर्याधानं चकारसः । ततोवभूवुःपुत्राश्च नवैतेशिल्पकारिणः । मालाकारः कर्मकारः शङ्खकारः कुविन्दकः । कुम्भकारः कंसकारः षडेतेशिल्पिनोनराः ।

॥ इतिब्रह्मवैवर्त्तपुराणम् ॥

कंसजित् । पुं । वासुदेवे । श्रीकृष्णे ॥ कंसं जयति । जिजये । क्विप् । तुक् ॥

कंसवती । स्त्री । कंसस्य भगिन्याम् ॥

कंसहा । पुं । देवकीसुते ॥ कंसं हन्ति । हन० । क्विपचेति क्विप् ॥

कंसा । स्त्री । कंसवत्याम् । वसुदेवानुजपत्न्याम् ॥

कंसारातिः । पुं । श्रीकृष्णे ॥ कंसस्य

कंसारिः । पुं । अरातिः अरिर्वा ॥

कंसास्थि । न । कांस्यधातौ ॥

कंसीयम् । त्रि । कंसायहिते ॥ छः ॥

कंसोद्भवा । स्त्री । सुगन्धिमृत्तिकाविशेषे । आढक्याम् । काक्ष्याम् । सौराष्ट्राम् ॥

ककन्दः । पुं । कनके । स्वर्णे ॥

ककुञ्जलः । पुं । स्त्री । चातकखगे ॥

ककुत्स्थः । पुं । सूर्यवंशजे राजविशेषे । शशादतनये । इक्ष्वाकोःपौत्रे ॥ ककुदिवृषांसे तिष्ठति । स्था० । कः ॥

ककुत् । स्त्री । वृषाङ्गविशेषे ॥ श्वेतच्छत्रादौ राजचिह्ने ॥ वरे ॥ शैलशृङ्गे ॥ कं सुखं कौति । कुशब्दे । क्विप् । तुक् । पृषोदरादित्वात्दः ॥

ककुदः । पुं । न । प्रधाने । वरे । श्रेष्ठे ॥ राजचिह्ने । श्वेतच्छत्रादौ ॥ दृषाङ्गे । वृषांसस्थस्थूलमांसपिण्डे ॥ प्र

संतायभागे ॥ कं सुखं कौति । कु० । क्विप् । तुक् । पृषोदरादिः ॥

ककुद्मान् । पुं । वृषे । बलीवर्द्दे ॥ ऋषभौषधौ ॥ पर्व्वते ॥ ककुदस्ति अस्य । मतुप् । यवादित्वान्न वत्वम् ॥

ककुद्मती । स्त्री । कट्याम् । पोंछा इति भाषा ॥ ककुद्वृषस्कन्धः स इव मांसपिण्डः ककुत् । सोऽतिशयितोऽस्याम् । मतुप् । यवादित्वान्न वः ॥

ककुप् । स्त्री । प्रवेण्याम् ॥ दिशि ॥ शोभायाम् ॥ चम्पकस्रजि ॥ रागिणीविशेषे ॥ अस्या लक्षणं यथा । पीतं वसाना वसनं सुकेशी वने रुदन्ती पिकनाददूना । विलोकयन्ती ककुभोऽतिभीता मूर्त्तिः प्रदिष्टा ककुभस्य सेयमिति सङ्गीतदामोदरः ॥ कं कते । कक्कोल्ये । बाहुलकादुभमत्वयः ॥ यद्वा । कं वातं स्कुभ्नाति विस्तारयति । स्कुभ इति सौत्रः । क्विप् । पृषोदरादित्वात् सलोपः ॥

ककुभः । पुं । रागविशेषे ॥ वीणाङ्गे । प्रसेवके । वीणादण्डाधःस्थितं शब्दगाम्भीर्याय दारुमयं भाण्डं यच्चर्म्मणा च्छाद्यते तस्मिन् ॥ अर्ज्जुनपादपे ॥ ककुभः शीतलो भग्नक्षतक्षयविषास्रजित् । मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत् ॥ ककुभो दिशः सन्त्यस्य बहुविस्तरत्वात् । अर्श आद्यच ॥ पर्व्वतान्तरे ॥ कश्च कुश्च ककू । ते भाति । भा० । अन्तर्भावितण्यर्थः । आतोऽनुपेति कः ॥

ककुभा । स्त्री । दिशि ॥ केन आदित्येन जलेन वा कुत्सितानि भानि नक्षत्राण्यत्रेति । टाबन्तोऽपीति कश्चित् । तन्न । व्यधिकरणबहुव्रीहिप्रसङ्गात् ॥ केन कुत्सिता भाति । भा दीप्तौ । सुपीति कः । भिदाद्यङ् वा ॥ रागिणीविशेषे ॥

ककुभादनी । स्त्री । नलीनामगन्धद्रव्ये ॥

ककुभः । पुं । खगान्तरे ॥

कक्कोलः । पुं । न । स्वनामख्यातसुगन्धिद्रव्यविशेषे । कोलके । काँकला इति गौडभाषा । काँकोली इति फलकपूर इति गड्ढला इति च प्रसिद्धे ॥ कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम् । आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत् ॥ ककते । कक० । सम्पदादित्वात् क्विप् । कोलति । कुल संस्त्याने । ज्वलादित्वाण्णः । ककच तत् कोलश्च ॥

कक्कोलकम् । न । कोपफले । कक्कोले । स्थूलमरिचे ॥ स्वार्थे कन् ॥

कक्खटः । त्रि । कठिने ॥ कखति ।

कर्कशहसने । शंकादिस्फोटन ॥

कक्खटपत्रकः । पुं । पाट इति गौड प्रसिद्धे वृक्षविशेषे । पट्टे । राजशणे ॥

कक्खटी । स्त्री । वर्णलेखायाम् । कठिन्याम् । खट्याम् । सेलखडी इति भाषा ॥

कक्षः । पुं । बाहुमूले । काख इति भाषा ॥ वीरुधि । लतायाम् ॥ तृणे ॥ शुष्कतृणे ॥ शुष्कवने ॥ पापे ॥ कच्छे ॥ अरण्ये ॥ पार्श्वे ॥ कषति कष्यते वा । कर्षहिंसायाम् । वृतवदिह निकसिकषिभ्यः सः ॥

कक्षरुहा । स्त्री । नागरमुस्तायाम् ॥

कक्षशायः । पुं । कुक्कुरे ॥

कक्षा । स्त्री । अन्तरीयवस्त्रस्य पश्चिमे अञ्चले ॥ अधोंशुकस्य पृष्ठतो निविष्टाञ्चले ॥ स्पर्द्धास्पदे ॥ प्रभरणाम् । गजमध्यवन्धनरज्जौ ॥ काञ्च्याम् ॥ राजदारप्रवेशे ॥ गेहप्रकोष्ठके ॥ भित्तौ ॥ साम्ये ॥ रथभागे ॥ उष्ट्रा दिपर्याम् ॥ क्षुद्ररोग विशेषे ॥ तल्लक्षणम् । बाहुपार्श्वांशकक्षेषु कृष्ण स्फोटां सवेदनाम् । पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्दिशेदिति ॥ कषति कष्यते वा । कष० । वृत्तिसेकृते टाप् ॥

कक्षापटः । पुं । कौपीने ॥ इतिहला-



युधः ॥

कक्षावेक्षकः । पुं । शुद्धान्तपाले ॥ उद्यानपाले ॥ रङ्गाजीवे ॥ कवौ ॥ विड्गे ॥ द्वास्थे ॥ कक्षायाः अवेक्षकः ॥

कक्षीवान् । पुं । स्फोटायने ॥ ऋषिविशेषे ॥ कक्ष्या अस्ति अस्य । मतुप् ॥ आसन्दीवदष्ठीवदिति निपातनात् कक्ष्यायाः सम्प्रसारणम् ॥ कक्ष्यावान् अन्यत्र ॥

कक्षोत्था । स्त्री । भद्रमुस्तायाम् ॥

कक्ष्यम् । न । एकशिकापाशे । काँटे की कटोरी इति भाषा ॥ इतिमिताक्षरा ॥

कक्ष्या । स्त्री । गुञ्जिकायाम् ॥ हर्म्यादिप्रकोष्ठे । राजगृहादेर्वेष्टनावच्छिन्ने देशे । राजगृहादीनां प्राकारकोष्ठके ॥ सप्तकक्ष्या अतिकाम्येति यथा ॥ सादृश्ये ॥ कक्षरज्जौ ॥ काञ्च्याम् । मेखलादामनि ॥ यथा । परिधानाद्धिः कक्ष्यो निबद्धा धीरसुरीमेति ॥ मध्येभवन्धने ॥ गजमध्यबन्धनरज्जौ ॥ यथा । हेमकक्ष्या गजा इति ॥ उद्योगे ॥ यथा । परार्थबद्धकक्ष्याणां तादृशा मुद्भवः कृतः ॥ कक्षेभवा । शरीरावयवाद्यत् ॥

कङ्कः । पुं । छद्मद्विजे ॥ काँक् इतिगौडभाषा प्रसिद्धे पक्षिविशेषे । लोह

पृष्ठे । कंकरडा इति भाषा ॥ यमे । युधिष्ठिरन्त्वमे । अज्ञातशत्रौ ॥ कंस भ्रातरि । उग्रसेनसुते ॥ महाराज चूते ॥ कङ्कते । ककिगतौ । अच् ॥

कङ्कटः । पुं । कवचे । सन्नाहे ॥ कङ्कते । ककिलौल्ये । शकादिभ्योऽटन् ॥ यद्वा । कं सुखं कटति । कटे० । मू०कः ॥

कङ्कटकः । पुं । सन्नाहे । तनुत्रे । वर्मणि ॥ स्वार्थे कन् ॥

कङ्कणम् । न । करभूषणे । कड़ा इति भाषा ॥ हस्तसूत्रे । कङ्गणा इति भाषा ॥ मण्डने ॥ गुर्वक्षरे ऽ ॥ कंशुभं कणति । कणशब्दे । अच् । कङ्कते वा । ककिलौल्ये । बहुलमन्यत्रापीति अनुदात्तेतश्च हलादेरिति वा युच् । पृषोदरादित्वात्साधुः ॥ शेखरे ॥

कङ्कणी । स्त्री । क्षुद्रघण्टिकायाम् । किङ्किण्याम् । कण्ठाभरणविशेषे ॥ कंगणीति भाषाप्रसिद्धे स्त्रीणां हस्ताभरणे ॥ कङ्कनम् । ककिगतौ । ल्युट् । कङ्के गतौ कणति । कण शब्दे । अच् । गौरादित्वात् ङीप् । शकन्ध्वादिः ॥ यद्वा । कं सुखं कणति । कण० । पचाद्यच् ॥

कङ्कणीका । स्त्री । प्रतिसरायाम् । क्षुद्रघण्टिकायाम् ॥ कंगणीति प्रसिद्धे स्त्रीणां करभूषणे ॥ कङ्कणवते । कण शब्दे । अस्माद्यङ्लुगन्तात् चङ्क्रणः कङ्कणचेतीकने धातोः कङ्कणादेशश्च ॥

कङ्कतम् । न । प्रसाधन्याम् । कङ्घी इति भाषा ॥ कङ्कते । कंकि० । बाहुलकात् अतच् ॥

कङ्कतिका । स्त्री । कङ्कते । प्रसाधन्याम् ॥ कङ्कते । ककिगतौ । बाहुलकादतच् । गौरादित्वात् ङीप् । स्वार्थे कन् । केण इति ह्रस्वः ॥ यद्वा । कस्य शिरसोऽङ्कः । शकन्ध्वादिः । किङ्कते । ण्वुल् ॥ बलाप्रभेदे । नागबलायाम् ॥

कङ्कती । स्त्री । कङ्कतिकायाम् ॥

कङ्कचोटः । पुं । काँकिला इतिगौडभाषा प्रसिद्धे मत्स्यविशेषे । जलव्यधे ॥

कङ्कत्रोटिः । पुं । कङ्कत्रोटमत्स्ये ॥ कङ्क इव त्रोटिर्यस्य ॥

कङ्कपत्रः । पुं । शरविशेषे ॥ कङ्कस्य पत्राणीव पत्राणि यस्य ॥

कङ्कमाला । स्त्री । करतालीवाद्ये ॥

कङ्कमुखः । पुं । न । सन्दंशे । संडसी सडांसीतिच भाषा ॥

कङ्करः । त्रि । कुत्सिते ॥ न । तक्रे ॥ इति हेमचन्द्रः ॥

कङ्करोलः । पुं । निकोचकवृक्षे । अङ्कोठे । ढेरा इतिभाषा ॥ काँकरोल इति गौडभाषाप्रसिद्धायां प्रलतायाम् ॥

कङ्कपत्रः । पुं । पृश्निपर्ण्याम् ॥

कङ्काणी । स्त्री । उत्पलगन्धिके । कृष्णताम्रे । गोशीर्षचन्दने ॥ उग्रसेनस्य कन्यायाम् । वसुदेवानुजपत्न्याम् ॥

कङ्कालः । पुं । शरीरास्थि ॥ त्वङ्मांसरहितेशरीरारम्भकेऽस्थिपञ्जरे । करङ्के । अस्थिपञ्जरे । कं सुखं शिरो वा कालयति । कलक्षेपे चुरादिः । अच् ॥ यद्वा । कङ्कते । ककिगतौ । बाहुलकात्कालन् ॥

कङ्कालमाली । पुं । रुद्रे । शिवरूपाख्ये ॥ कङ्कालमाला अस्ति अस्य । व्रीह्यादित्वादिनिः ॥

कङ्गुः । स्त्री । कांगुनी इतिख्यातेकङ्गुधान्ये ॥ न । कंसासुरभ्रातरि ॥

कङ्कुष्ठम् । न । पर्वतीयमृत्तिकाविशेषे । कालकुष्ठे । रङ्गदायके ॥ यथा । हिमवत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैकं नलिकाख्यं स्यात्तदन्यद्रेणुकस्मृतम् ॥ पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् । श्यामं पीतं लघु त्यक्तसत्त्वं नेष्टं हि रेणुकम् ॥ कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम् । कृमिशोथोदराध्मानगुल्मानाहकफापहमिति ॥

कङ्केरः । पुं । काकविशेषे । द्वारबलिभुजि ॥

कङ्केलिः । पुं । अशोकद्रुमे ॥

कङ्केलः । पुं । वास्तूके ॥

कङ्केल्लिः । पुं । अशोकवृक्षे । वञ्जुले ॥

कङ्कम् । न । भोगे ॥ पापभोगे ॥

कङ्गुः । स्त्री । काँगनीतिप्रसिद्धधान्यविशेषे । प्रियङ्गौ ॥ स्त्रियां कङ्गुप्रियङ्गू द्वे कृष्णारक्तासितास्तथा ॥ पीता चतुर्विधा कङ्गुस्तासां पीतावरा स्मृता ॥ कङ्गुस्तु भग्नसन्धानवातकृद्बृंहणी गुरुः । रूक्षश्लेष्महरातीव वाजिनां गुणकृद्भृशम् ॥ कम् अङ्गति । अगि गतौ । अङ्गयति वा । मृगय्वादित्वात् कुः । शकन्ध्वादिः ॥

कङ्गुनी । स्त्री । कांगुनी इतिभाषाप्रसिद्धे धान्यविशेषे । पीततण्डुले ॥ चीनके । अत्यन्तसुकुमारे ॥

कङ्गुनीपत्रा । स्त्री । तृणविशेषे । पण्यान्धायाम् ॥

कङ्गूः । स्त्री । धान्यभेदे । प्रियङ्गौ ॥

कचः । पुं । केशे ॥ बृहस्पतेः पुत्रे ॥ बन्धे ॥ शुष्कव्रणे ॥ कच्यते । कच बन्धने । पुंसीतिघः ॥ कचत्याभानं वा । पचाद्यच् ॥ मेघे इतिशब्दमाला ॥

कचङ्गनम् । न । करशून्यहट्टे । निर्मुटे । पैठ इतिभाषा ॥

कचङ्गलः । पुं । पाथोधौ ॥ समुद्रे ॥

कचपम् । न । तृणे ॥ पत्रे ॥ शाकपत्रे ॥ कचते । कचबन्धने । उषिकुटिदलिकचिखजिभ्यः कपन् ॥ ।

कचपक्षः । पुं । केशसमूहे ॥ पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥

कचपाशः । पुं । केशसमूहे ॥ ।

कचमेरिपुफला । स्त्री । शमीवृक्षे ॥

कचहस्तः । पुं । केशसमूहे ॥

कचा । स्त्री । हस्तिन्याम् ॥

कचाकुः । त्रि । दुराधर्षे ॥ दुःशीले ॥ । पुं । भुजङ्गमे ॥

कचाग्रम् । न । बालाग्रे । पांसरेखाष्टके ॥

कचाचितः । त्रि । विकीर्णकेशे ॥

कचाटुरः । पुं । दात्यूहे । शितिकण्ठे ॥

कचामोदम् । न । वाला इतिप्रसिद्धे वालके ॥

कचुः । स्त्री । कच्च्याम् । अरवी कचासु इतिच भाषा ॥

कचोलम् । न । पत्रीनिबन्धने ॥

कच्चटम् । न । जलपिप्पल्याम् ॥

कच्चरः । त्रि । मलिने ॥ कुत्सितं चरति । पचाद्यच् । रथवदयोश्चेतिच कारात् कोः कत्तत्पुरुषइतियोग-विभागाद्वा कोः कत् ॥ न । तक्रे ॥

कच्चित् । अ । कामप्रवेदने ॥ सोऽभिलाषप्रश्ने । इष्टपरिप्रश्ने ॥ हर्षे ॥ मङ्गले ॥ कदिति कुशब्दादेशः । कत् चित् अनयोः समाहारद्वन्द्वः ॥

कच्छः । पुं । अनूपे । जलमायदेशे ॥ नदीपर्वतादिजलाशयसमीपे । तटे ॥ तुन्नवृक्षे ॥ नौकाङ्गे ॥ काछ इतिभाषाप्रसिद्धे परिधानाञ्चले । कक्षायाम् ॥ अत्रस्मृतिः । वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम् । एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः इति ॥ परिधानाद्बहिः कच्छा निबद्धा ह्यासुरी भवेत् इतियाज्ञवल्क्यः ॥ पुं भूम्नि । देशविशेषे ॥ यथा । गणेश्वरात् पूर्वभागे समुद्रादुत्तरे शिवे । कच्छदेशः समाख्यातस्तन्त्रे श्रीशक्तिसङ्गमे इति ॥ कचति केशदीप्तौ । बाहुलकाच्छः ॥ यद्वा केन छूयति । छद्दिर्दीप्तिदेवनयोः । अन्येभ्योपीति डः । कं जलं छ्यति परिच्छिनत्ति । छोछेदने । आतोऽनुपसर्गेकः ॥ त्रि । जलप्रान्ते ॥ परिधानाञ्चले कच्छो जलमाये त्रिलिङ्गकस्त्वमरः ॥

कच्छकः । पुं । तुन्नके । तूणी इति प्रसिद्धे वृक्षे ॥

। ॥ यवासे॥ पुंश्चल्याम् ॥ कच्छूं राति । रादाने। आत इति कः। पृषोदरादित्वात् ह्रस्वः॥

कच्छूः। स्त्री। खाज इतिप्रसिद्धेपामरोगे॥ कषति॥ कषहिंसायाम्। कषेश्छश्चेत्यूः॥

कच्छूमती। स्त्री। शूकशिंब्याम्॥ त्रि। कच्छूयुक्ते॥

कच्छोटिका। स्त्री॥ कच्छे। परिधानाञ्चले। कछोटी इतिभाषा॥

कच्वी। स्त्री। अरवीं घुंइया इति प्रसिद्धे शाकविशेषे। वितण्डायाम्॥

कजम्। न। कमले॥ केजातम्। जनी। डः॥

कज्जलम्। न। काजल इति प्रसिद्धे अञ्जने। लोचके॥ पुं। मेघे॥

कज्जलध्वजः। पुं। दीपे॥ कज्जलं ध्वजं यस्य॥

कज्जलरोचकः। पुं। न। ज्योत्स्नावृक्षे। दीपवृक्षे। दीवट इतिभाषा॥

कज्जला। स्त्री। मत्स्यविशेषे। कज्जल्याम्॥

कज्जली। स्त्री। मत्स्यविशेषे॥ मिश्रितरसगन्धके॥ यथा। शुद्धं सूतं तथागन्धं खल्लेतावदिमर्दयेत्। सूतं न दृश्यते यावत् किन्तु कज्जलवद्भवेत् ॥ एषा कज्जलिका ख्याता संयोगी...

येवर्द्धिनी। नानानुपानयोगेन सर्वव्याधिविनाशिनीति॥

कञ्चटम्। न। जलतण्डुलीये। लाङ्गल्याम्। काँचडादाम इतिगौडप्रसिद्धे जलजशाकविशेषे॥ पानीयतण्डुलीयो यस्य कञ्चटमुदाहृतम्। कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु॥ चौवराई शाकस्य विशेषे॥ इति भावप्रकाशः॥

कञ्चडः। पुं। कञ्चटप्रभेदे। चक्रमर्दे। अम्बुमे॥

कञ्चारः। पुं। सूर्ये॥

कञ्चिका। स्त्री। वंशशाखायाम्। कुञ्चिकायाम्। कमची इतिभाषा॥ क्षुद्रस्फोटे॥

कञ्चुकः। पुं। वारबाणे। भटादेश्चोलाकृतिसन्नाहे॥ लोहवर्मणि॥ कच्यते। कचिदीप्तिबन्धनयोः। वा कुलकादुकन्॥ कवचे॥ निर्मोके। अहिनिर्ल्वयिन्याम्। सर्पत्वचि। काँचली इतिभाषा॥ चोलके। कूर्पासे। अङ्गिकायाम्। अङ्गिया काँचुली चोली इतिचभाषा॥ वस्त्रे॥ मदोपकण्ठीतालक्षितवस्त्रे॥

कञ्चुकालुः। पुं। सर्पे॥

कञ्चुकी। पुं। अन्तःपुराध्यक्षे। सौविदल्ले। स्थापत्ये। राज्ञांस्त्र्यगारेषु

वीरस्त्र्याधिकृते ॥ पिङ्गे ॥ अहौ । सर्पे ॥ जोङ्गकद्रुमे ॥ यवे ॥ चणके ॥ आवर्त्तकवचे ॥ कञ्चुकश्चोलकोऽस्त्यस्य । अत इनिः ॥ न स्यात् कर्म्मणि कञ्चुकीति स्मृतिः ॥

कञ्चुकी । स्त्री । ओषधिप्रभेदे ॥ क्षीरीशवृक्षे ॥

कञ्चुलिका । स्त्री । कञ्चुके । स्त्रीणां अङ्गरक्षिण्याम् ॥

कञ्जः । पुं । केशे ॥ विरिञ्चौ । चतुरानने ॥ न । पीयूषे ॥ पद्मे ॥ कम् जले जातम् । जनी० । डः ॥

कञ्जकः । पुं । मयना इति प्रसिद्धे पक्षिविशेषे ॥ इति शब्दचन्द्रिका ॥

कञ्जजः । पुं । ब्रह्मणि । विश्वसृजि ॥

कञ्जनः । पुं । कन्दर्पे । कामे ॥ मयना इति प्रसिद्धे पक्षिणि ॥

कञ्जयोनिः । पुं । शालूके ॥ कञ्जस्य पद्मस्य योनिरुत्पत्तिस्थानम् ॥

कञ्जलः । पुं । मयनाइ प्रसिद्धे पक्षिणि ॥

कञ्जारः । पुं । जठरे ॥ सूर्ये ॥ विरिञ्चौ ॥ वारणे ॥ मुनौ ॥ कञ्जति । कञ्जिः सौत्रः । कञ्जिमृजिभ्यांचिदित्यारन्

कञ्जिका । स्त्री । ब्राह्मणयष्टिकावृक्षे । वम्हनेटी इतिभाषा ॥

कटः । पुं । श्रोणौ ॥ कटिपार्श्वे ॥ कि-लिञ्जे । वीरणनडादिमये तृणासने । चटाई मांदरी इतिभाषा ॥ अतिशये ॥ समये ॥ गजगण्डे ॥ तृणे ॥ शवे ॥ शवरथे ॥ ओषधौ ॥ श्मशाने ॥ त्रिं । क्रियाकारे ॥ कटति कथ्यते वा कटे वर्षावरणयोः । पचाद्यच् । पुंसीतिघः ॥

कटंवरा । स्त्री । कटुरोहिण्याम् । कटुकीतिख्यातायाम् ॥ कटं वृणोति वृञ्० । संज्ञायां भृतृ इति खच् । अरुर्द्विषदितिमुम् ॥

कटकः । पुं । न । अद्रेर्नितम्बे । मेखलायां पर्वतमध्यभागे ॥ वलये । बाहुभूषणे ॥ दन्तिनां दन्तमण्डले ॥ चक्रे ॥ सामुद्रलवणे ॥ राजधान्याम् ॥ नगर्याम् ॥ सेनायाम् ॥ कटति कथ्यते वा कट० । कुन्शिल्पिसंज्ञयोः । कृञादिभ्यः संज्ञायां वुन्निति वुन् वा ॥ सानौ ॥

कटकी । पुं । नगे । पर्वते ॥ सेनाध्यक्षे ॥ कटकोऽस्यास्ति । इनिः ॥

कटकोलः । पुं । पतद्ग्रहे । निष्ठीवनपात्रे । इति त्रिकाण्डशेषः ॥

कटकृत् । त्रि । तृणासनकर्त्तरि ॥

कटखादकः । पुं । काचकलशे ॥ काके ॥ जम्बुके । त्रि । खादके । भक्षके ॥

कटङ्कटः । पुं । अग्नौ ॥

कटङ्कटेरी । स्त्री । दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥

कटप्रूः । पुं । महादेवे ॥ विद्याधरे ॥ अक्षदेवने ॥ कामरूपिणि ॥ राक्षसे ॥ कीटे ॥ कटं प्रवते तच्छीलः । प्रुङ् गतौ । क्विप्चिप्रच्छीति, कि पदीर्घौ ॥

कटप्रोथः । पुं । स्फिचि । कव्याम् ॥

कटभङ्गः । पुं । सस्यानां हस्तच्छेदे ॥ स्वपात्यये । राजविनाशे ॥

कटभी । स्त्री । ज्योतिष्मत्याम् ॥ वृक्षभेदे । स्वादुपुष्पे । कटभीतु प्रमेहार्शोनाडीव्रणविषकृमीन्, हन्त्युष्णा कफकृच्छ्रघ्नी कटु रूक्षा च कीर्त्तिता ॥ तत्फलं तद्गुणं ज्ञेयं विशेषात् कफशुक्रकृत् । श्वेता चित्रगुणसंयुक्ता ॥ कटमञ्चति । अन्येभ्योपीति डः । गौरादिः ॥ काँटागिरीष इति गौडभाषाप्रसिद्धे वृक्षविशेषे ॥ अपराजितायाम् ॥

कटमालिनी । स्त्री । मदिरायाम् ॥

कटम्बः । पुं । वाद्यभेदे ॥ बाणे ॥ कटति । कटे० । कुरुटिकडिकटिभ्यो म्बच् ॥

कटम्भरः । पुं । स्योनाकवृक्षे ॥ कटभीवृक्षे ॥

कटम्भरा । स्त्री । प्रसारण्याम् । गन्धभादालिया इति गौडभाषा ॥ रोहिण्याम् । कटकी इति भाषा ॥ हस्तिन्याम् । हथिनी इति भाषा ॥ कलम्बिकायाम् ॥ गोलायाम् ॥ वर्षाभ्वि ॥ मूर्वायाम् ॥ कटं बिभर्त्ति । डुभृञ् धो० । संज्ञायां भृतॄवृजिधारिसहितपिदमः इति खच् । मुम् ॥

कटम्रणः । पुं । भीमसेने ॥

कटशर्करा । स्त्री । गाङ्गेष्ठीलतायाम् । नाटा इति गौडभाषा ॥

कटाक्षः । पुं । अपाङ्गदृष्टौ ॥ कटौ क्षिपति अक्षिणीयत्र । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ॥ कटं गण्डं गच्छति वा । अक्षूव्याप्तौ । कर्मण्यण् ॥ भक्तेषु तिर्यङ्निपातात् कृपादृष्टिः कटाक्षः ॥

कटायनम् । न । वीरणे ॥

कटारः । पुं । नागरे । कामिनि ॥

कटाहः । पुं । कूर्मकर्परे । कमठपृष्ठे ॥ द्वीपभेदे ॥ तैलादेः पाकपात्रे ॥ जायमानविषाणायमहिषीशावके । महिषीशिशौ ॥ खर्परे ॥ नरके ॥

कटिः । स्त्री । श्रोण्याम् ॥ कट्यते । कटे आवरणे । सर्वधातुभ्य इन् ॥

कटित्रम् । न । रसनायाम् । काञ्च्याम् । करधनी कौधनी तगडी इति भाषा ॥ कटिवस्त्रे ॥ कटिवर्मणि ॥

काटी । पुं । इभे । गजे ॥ त्रि । कटयति ॥

कटिप्रोथः । पुं । स्फिचि । चूतड़ इति भाषाप्रसिद्धे कटिदेशस्थमांसपिण्डे ॥ प्रोथति । प्रोथृ पर्याप्तौ । पुंसीति घः । कव्याः प्रोथो मांसपिण्डः ॥

कटिरोहकः । पुं । हस्तिपश्चाङ्गारोहके ॥

कटिल्लकः । पुं । कारवेल्ले ॥ कटति । कटे० । वाहुलकादिल्लः । स्वार्थे कन् ॥

कटिशीर्षकः । पुं । कटिदेशे ॥

कटिशूलं । पुं । कटिदेशस्थे शूलरोगे ॥ अस्यौषधं यथा । रजनीकदलीचारलेपः सिध्मविनाशनः । कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ॥ उष्णोदकेन सम्पीत्वा कटिशूलविनाशनमिति ॥

कटिशृङ्खला । स्त्री । चित्तिकायाम् । कटिधार्यक्षुद्रघण्टिकायाम् ॥

कटिसूत्रम् । न । चन्द्रहार गोट् इति गौडभाषाप्रसिद्धे कट्यलङ्कारविशेषे ॥

कटी । स्त्री । पिप्पल्याम् ॥ श्रोणिदेशे ॥ कट्यते । कटे० । सर्वधातुभ्य इन् । कृदिकारादिति कटात् श्रोणिवच-न इति गौरादिषु पाठाद्वा ङीष् ॥

कटीतल्ल । पुं । न्युजखड्गे । बाँकाखाँडा इति भाषा । खुखुंडी इति खुखडी इति नेपालभाषा ॥

कटीरः । पुं । जघने ॥ कन्दरे ॥ न । कटौ ॥ कटति कट्यते वा कटीरगतौ कटे० वा । कृशृपकटिपटिशौटिभ्य-ईरन् ॥

कटीरकः । पुं । नितम्बे ॥ कटीर एव । स्वार्थे कः ॥

कटुः । पुं । रसविशेषे । चर्परा इति भाषा । झाल इति गौड भाषा ॥ कटू रूक्षः स्वान्यसेदः श्लेष्मकण्डूविषापहः । वातपित्तकृदाग्नेयः शोधी प्राचनरोचकृत् ॥ चम्पकवृक्षे ॥ चीनकर्पूरे ॥ पटोले ॥ कङ्कोलतायाम् ॥ स्त्री । कटुक्याम् । कटुरोचिण्याम् ॥ प्रियङ्गुवृक्षे ॥ राजिकायाम् ॥ न । अकार्ये ॥ दूषणे ॥ त्रि । कटुरसयुक्ते ॥ सुगन्धौ ॥ तीक्ष्णे ॥ मत्सरे ॥ अप्रिये ॥ कटत्यावृणोति तीव्रतया सुगन्धम् । कटे० । कटिवटिभ्यां चेत्यु. । वस्तुतस्तु शृम्भिकिञ्चिन्नपीत्यत्र चकारादुः । कटिवटिभ्यामिति सूत्रश्चोज्ज्वलदत्तादिष्वदर्शनात् । स्त्रियां वोतोगुणेति-ङीषि कट्वी कटुर्वा ॥ कटति । स्व० उर्वा ॥

कटुकः । पुं । पटोले ॥ सुगन्धितृणे ॥ अर्कवृक्षे ॥ कुटजवृक्षे ॥ राजसर्षपे ॥ न । व्योषे । त्रिकटुनि ॥ स्वार्थे कः ॥

कटुकन्दः । पुं । शिग्रुवृक्षे ॥ आर्द्रके । शृङ्गवेरे ॥ लशुने ॥ कटुः कन्दोऽस्य ॥

कटुकफलम् । न । कक्कोले ॥

कटुकस्नेहः । पुं । सर्षपे ॥

कटुका । स्त्री । क्षुद्रचञ्चुचुपे ॥ कटुरोहिण्याम् । कटम्भरायाम् । कुटुकी इतिभाषा ॥ कटुका कटुका पाके तिक्ता रूक्षा हिमा लघुः । भेदिनीदीपनी हृद्या कफपित्तज्वरापहा । प्रमेहश्वासकासास्रदाहकुष्ठकृमिप्रणुत् ॥ ताम्बूल्याम् ॥ राजिकायाम् ॥ तिक्तालाबुके ॥

कटुकी । स्त्री । कटुकायाम् । मत्स्यपित्तायाम् । शतपर्वायाम् ॥ कुटकी इति भाषा ॥

कटुकीटः । पुं । मशके ॥

कटुक्वाणः । पुं । टिट्टिभे ॥

कटुग्रन्थि । न । पिप्पलीमूले ॥ शुण्ठ्याम् ॥

कटुचातुर्जातकम् । न । एलात्वक्पत्रकमरिचात्मकचतुष्के ॥ इतिराजनिर्घण्टः ॥

कटुच्छदः । पुं । तगरवृक्षे । टगर इति गौडभाषा ॥

कटुतिक्तकः । पुं । भूनिम्बे ॥ शणवृक्षे ॥

कटुतिक्तिका । स्त्री । कटुतुम्ब्याम् ॥

कटुतिन्दुकः । पुं । कुपीलौ । कुचला इतिभाषा ॥

कटुतुण्डी । स्त्री । लताप्रभेदे । तिक्ततुण्ड्याम् । कटुतराइ इति गौडभाषा ॥

कटुतुम्बी । स्त्री । इक्ष्वाकौ । तिक्तालाब्वाम् ॥ कटुतुम्बी हिमा हृद्या पित्तकासविषापहा । तिक्ता कटुर्विपाके च वातपित्तज्वरान्तकृत् ॥ कटुश्चासौ तुम्बी च ॥

कटुत्रयम् । न । त्रिकटुनि ॥ कटूनां त्रयम् ॥

कटुदला । स्त्री । कर्कट्याम् । काकडी इतिभाषा ॥

कटुनिष्पावः । पुं । नदीनिष्पावधान्ये ॥

कटुपत्रः । पुं । पर्पटे ॥ सितार्जके ॥

कटुपत्रिका । स्त्री । कारीवृक्षे ॥

कटुफलः । पुं । पटोले ॥ इतिराजनिर्घण्टः ॥

कटुफला । स्त्री । श्रीवल्लीवृक्षे ॥

कटुभङ्गः । पुं । }
कटुभद्रम् । न । } शुण्ठ्याम् ॥

कटुमञ्जरिका । स्त्री । अपामार्गे ॥

कटुमोदम् । न । जवादिनामसुगन्धिद्रव्ये ॥

कटुरवः । पुं । मण्डूके ॥

कटुरोहिणी । स्त्री । कटुकायाम् । क- र्कारोहिण्याम् ॥ [illegible]

ख्या ॥ कटुर्भ्वामी रोहिणीच ॥

कटुवार्त्ताकी । स्त्री । श्वेतकराटकार्याम् ॥

कटुबीजा । स्त्री । पिप्पल्याम् ॥

कटुशृङ्गालम् । न । गौरसुवर्णशाके ॥

कटुस्नेहः । पुं । सर्षपे ॥ गौरसर्षपे ॥

कटूत्कटम् । न । आर्द्रके ॥

कटूत्कटकम् । न । शुराट्याम् ॥

कटोरम् । न । कटोरा इति प्रसिद्धे पात्रे ॥ यथोक्तं भैरवतन्त्रे ९ प्रकाशे । स्वर्पटे संयुतको चकूप्यां दृत्यामुखं लोश्च पलो च्छूच्चैः । निष्कासितो धूमरसस्तु तस्य सौगन्धिकैः काचकटोरकेष इत्यादि ॥ जैमिन्याश्वमेधिके पर्वणि ९ अध्यायेपिच । रत्नान्वं देवकीदत्तं पात्रे काञ्चननिर्मिते । कटोराणां चतुःषष्टिः पात्रखोभयतः स्थिता इति ॥ कटति । कटे० । ओरच । रलयोरैक्यम् ॥

कटोरकम् । न । कटोरा इतिप्रसिद्ध पात्रभेदे ॥ स्वार्थे कः ॥

कटोरा । स्त्री । स्वनामख्यातपात्रे । इति ब्रह्मवैवर्त्तपुराणम् ॥

कटोलः । पुं । कटुरसे ॥ चण्डाले ॥ कटति । कटे० । कपिगडिगगिडकटिपटिभ्य ओलच ॥

कटोलकः । पुं । कटोलार्थे ॥ स्वार्थे कः ॥

कटोलवीणा । स्त्री । केन्दुडा इति गौडभाषाप्रसिद्धे यन्त्रे । चण्डालवल्लक्याम् ॥ कटोलस्य चण्डालस्य वीणा ॥

कट्टारः । पुं । कटिशस्त्रे । कटार इतिभाषा ॥

कट्फलः । पुं । कायफल इति प्रसिद्धे वृक्षे । श्रीपर्णिकायाम् । कुसुदिकायाम् ॥ कट्फल स्तुवर स्तिक्तः कटुर्वातकफज्वरान् । हन्ति श्वासप्रमेहार्शः कासकण्ठामयारुचीः ॥ कटति । कटे० । क्विप् । कट्फलमस्य ॥

कट्फला । स्त्री । गम्भार्य्याम् ॥ दृहत्याम् ॥ काकमाच्याम् ॥ देवदाल्याम् ॥ वार्त्ताक्याम् ॥ स्वर्गेव्यारी ॥

कड्डङ्गः । पुं । सूर्य्यवंशजो दिलीपन्नृपतौ ॥ श्योनाकद्रुमे । सोनापाठा इतिभाषाप्रसिद्धे ॥ कटूनि अङ्गान्यस्य ॥

कड्डरम् । न । दधिसरे ॥ व्यञ्जने ॥ तक्रे ॥ दध्नः ससारकस्यात्र तक्रंकड्डरमुच्यते ॥ कटति । कटे० । छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकड्डरसंयद्वराइतिष्वरजन्तं साधु ॥

कङ्की । स्त्री । कटुकायाम् ॥ लताविशेषे । कटुकपर्ण्याम् । काण्डवल्लिकायाम् ॥ मुकाष्ठायाम् ॥ चोतीगुणवच-

नादिति ङीप् ॥

कठः । पुं । मुनिविशेषे ॥ कठशाखाध्ययनकर्त्तरि ॥ कठशाखाभिज्ञे ॥ ऋचां प्रभेदे ॥ स्वरे ॥ यजुःशाखाविशेषे ॥ कठेन प्रोक्तमधीते । वैशम्पायनान्तेवासित्वात् जातस्य णिनेः कठचरकाल्लुगिति लुक् ॥

कठमर्द्दः । पुं । शिवे ॥

कठरः । पुं । कठिने ॥

कठा । स्त्री । करिण्याम् ।

कठाकुः । पुं । पक्षिणि ॥ कठति । कठ कृच्छ्रजीवने । कठिकुषिभ्यां काकुः ॥

कठाहकः । पुं । दात्यूहखगे ॥

कठिञ्जरः । पुं । तुलस्याम् । मर्वासे ॥ कृष्णवर्वरायाम् ॥ कठिनं जरयति । जॄष् वयोहानौ । ण्यन्तः । कर्मण्यण् । पृषोदरादिः ॥

कठिनः । त्रि । क्रूरे । निष्ठुरे । कठोरे ॥ स्तब्धे ॥ न । स्थाल्याम् ॥ वैद्यशास्त्रप्रसिद्धेषु यवान्यजाजीपिकटुभूनिम्बादिद्रव्येषु ॥ कठति । कठ० । वञ्जुगमन्यत्रापीति इनच् ॥

कठिनपृष्ठकः । पुं । कमठे । कूर्मे ॥

कठिना । स्त्री । गुडशर्करायाम् ॥

कठिनिका । स्त्री । कठिन्याम् ॥

कठिनी । स्त्री । पर्वतनिरिकायाम् । पाकशुक्लायाम् [illegible] इतिभाषा ॥ गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमाद्यस्य । तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी नाम ॥

कठिल्लः । पुं । कारवेल्ले ॥ कठति । कठ शोके । बाहुलकादिल्लः ॥

कठिल्लकः । पुं । कारवेल्ले ॥ तुलस्याम् ॥ पुनर्नवायाम् ॥ स्वार्थे कन् ॥

कठी । स्त्री । कठेन प्रोक्तमधीयानायाम् ब्राह्मण्याम् ॥ शाखाध्येतृमात्रवाचित्वेन जातित्वात् ङीप् ॥

कठेरः । पुं । कृच्छ्रजीविनि । दरिद्रे ॥ कठति । कठ कृ० । पतिकठिकुठीभ्येरक् ॥

कठेरुः । पुं । चामरवाते । मन्थरे ॥

कठोरः । त्रि । कठिने ॥ कठति । कठ० । कठिचकिभ्यामोरन् ॥ पूर्णे ॥ कठोरताराधिपलाञ्छनच्छविः । इति माघः

कडः । पुं । मूर्खे ॥ कडति । कड मदे । पचाद्यच् ॥

कडकम् । न । सामुद्रे । त्रिकूटे । करकच इति गौडभाषाप्रसिद्धे सामुद्रलवणे ॥

कडङ्करः । पुं । माषमुद्गादिकाष्ठे । बुसे ॥ कडङ्करोति । कृ० । कडङ्करदक्षिणादिति निपातनात् खच् ॥

कडङ्करीयः । त्रि ।
कडङ्कर्य्यः । त्रि । } कडङ्करार्हे गवि ॥

कडङ्गर मर्हति । कडङ्गरदक्षिणा च्छचेति छः यत्च ॥

कडङ्गः । पुं । सुराविशेषे ॥

कडङ्गरः । पुं । बुसे ॥ गृणाति गिरति वा । गृशब्दे निगरणे वा । अच् । कडस्य गरः । कडङ्गरेतिनिर्देशान्मुम् ॥ यद्वा । कडति । कड० । क्विप् । कड्च तत् अङ्गञ्च । कडङ्गं राति । रा० । कः ॥

कडचम् । न । मानविशेषे ॥

कडम्बः । पुं । शाकनाडिकायाम् । कलम्बे । डांठ डंठल् इति च भाषा ॥ कोणे । प्रान्तभागे ॥ कडति । कड० । कृकादिकडोच्यम्बच् । केन लम्बते वा लम्बि० । अच् । डलयोरैक्यम् ॥ अग्रभागे ॥

कडम्बकः । पुं । कलम्बे ॥ स्वार्थे कन् ॥

कडम्बी । स्त्री । कलम्बीशाके ॥

कडारः । पुं । पिङ्गलवर्णे ॥ त्रि । पिङ्गलवर्णवति ॥ कडार स्तृणवह्निसदृश्ये इति भरतः ॥ दासे ॥ गडति । गड सेचने । गडेः कडचेत्यारन् ॥

कणः । पुं । अतिसूक्ष्मे । लेशे ॥ धान्यांशे । चूर्णतण्डुले ॥ सूक्ष्मस्तण्डुलावयव. कण इति व्याख्यातारः ॥ सन जीरके ॥ कणति । कण निमीलने । पचाद्यच् ॥

कणगुग्गुलुः । पुं । गुग्गुलुप्रभेदे । निशपीते । स्वर्णकणे । गन्धराजे ॥

कणजीरः । पुं । श्वेतजीरके ॥

कणजीरकम् । न । क्षुद्रजीरके । ह्रिचगन्धिनि ॥

कणभ. । पुं । कीटविशेषे ॥

कणभचकः । पुं । भारिटखगे । श्यामचटके । शेशिरे ॥

कणलाभः । पुं । आवर्त्ते । जलभ्रमे ॥

कणा । स्त्री । जीरके ॥ कुम्भीरमक्षिकायाम् ॥ पिप्पल्याम् ॥ श्वेतजीरके ॥ छिले ॥ टाप् ॥

कणाटीनः । पुं । }
कणाटीरः । पुं । } खञ्जनपक्षिणि ॥
कणाटीरकः । पुं । }

कणाद. । पुं । वैशेषिकदर्शनकर्त्तरि मुनिविशेषे । काश्यपे ॥

कणिकः । पुं । कणायाम् ॥ मन्थे ॥ नीराजनाविधौ ॥ खूली इति भाषा प्रसिद्धे शुष्कगोधूमचूर्णे ॥

कणिका । स्त्री । अत्यन्तसूक्ष्मवस्तुनि ॥ अग्निमन्थे । अरणीतिख्याते ॥ कणति । कणगतौ । पचाद्यच् । स्वार्थे कन् । ह्रस्वम् ॥ यद्वा । कणति । कणशब्दे । क्वुन् ॥ कणाः सन्त्यस्या । अतइनिठनाविति ठन् ॥

कणितम् । न । पीडितानां शब्दे । आ

स्तनादि ॥ इति हेमचन्द्रः ॥

कणिशम् । न । शस्यमञ्जर्याम् । धान्यादिशीर्षे ॥ कणाय: कणाः सन्त्यस्य । लोमादित्वाच्छः ॥ यद्वा । कणिनं स्वावयवं श्यति । शोतनूकरणे । आत इति कः ॥

कणी । स्त्री । हयकण्ठलतायाम् ॥ कणिकायाम् ॥ न । अल्पे ॥

कणीचिः । स्त्री । कणीच्यर्थेषु ॥ कणति । कणगतौ । सृकणिभ्यामीचिः ॥

कणीची । स्त्री । पुष्पितलतायाम् ॥ गुञ्जायाम् ॥ कणाची इति किरीची इति च प्रसिद्धे शकटे ॥ कृदिकारादिति ङीष् ॥

कणे । अ । अभिलाषातिशये । सप्तमीप्रतिरूपकोऽयं निपातः ॥

कणेरः । पुं । कर्णिकारवृक्षे ॥

कणेरा । स्त्री । वेश्यायाम् ॥ हस्तिन्याम् ॥

कणेरुः । स्त्री । कर्णिकारे ॥ करिण्याम् ॥ वेश्यायाम् ॥

कण्टकः । पुं । न । सूच्यग्रे ॥ क्षुद्रशत्रौ ॥ मत्स्यादिकीकसे ॥ नैयायिकादिदोषोक्तौ ॥ रोमाञ्चे ॥ द्रुमाङ्गे । कांटा इति भाषा ॥ केन्द्रे । लग्नचतुर्थसप्तमदशमस्थानेषु ॥ यथा ॥ लग्नात्मुहूर्तकर्माणि केन्द्रमुक्तं च कण्टकम् । चतुष्टयञ्चानेके टौपलीलग्ने विशेषत इति ॥ वेणौ ॥

कण्टकद्रुमः । पुं । शाल्मलिवृक्षे ॥ इति राजनिर्घण्टः ॥

कण्टकप्रावृता । स्त्री । गृहकन्यायाम् । घृतकुमार्याम् ॥

कण्टकफलः । पुं । क्षुरे । गोक्षुरे ॥

कण्टकवृन्ताकी । स्त्री । वार्त्ताक्याम् ॥

कण्टकश्रेणी । स्त्री । कण्टकार्याम् ॥ कण्टकानां श्रेणी यस्याम् ॥

कण्टकागारः । पुं । सरटजन्तौ ॥

कण्टकाढ्यः । पुं । कुब्जकवृक्षे ॥ त्रि । कण्टकयुक्ते ॥

कण्टकारिका । स्त्री । निदिग्धिकायाम् । वृहत्याम् । भटकटैया इति भाषा ॥ कण्टकान् ऋच्छति । ऋगतौ । कर्मण्यण् । स्वार्थे कन् । कण्टकारिका फले ॥ कण्टकारिकायाः फलम् । हरीतक्यादिभ्यश्चेति विकारावयवप्रत्ययस्य लुप् ॥ हरीतक्यादिषु लिङ्गमेव प्रकृतिवञ्च सङ्ख्या ॥

कण्टकारी । स्त्री । व्याघ्र्याम् । कण्टकारिकायाम् । भटकटैया इति भाषा ॥ कण्टकारी कण्टकिनी तथा स्वादुः सुशुक्रला । चक्षुष्या चतशोधमी मापिगी ज्वरदाहनुत् ॥ दीपनी यरहोसम्नीग्रहणर्य्यातिसारजित् ॥

सुश्रुते तु। कण्टकारी सरा तिक्ता कटुका दीपनी लघुः। रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान्॥ निहन्ति पीनसं पार्श्वपीडाकृमिहृदामयान्। तयोः फलं कटुरसं पाके च कटुकं भवेत्॥ शुक्रस्य रेचनं भेदि तिक्तं पित्ताग्निकृल्लघु। हन्यात् कफमरुत्कण्डूकासमेदकृमिज्वरान्॥ कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा॥ तद्वत् मोक्ता सिता क्षुद्राविशेषाद्गर्भकारिणी॥ अश्मन्त्याम्॥ कण्टकान् इयर्त्ति। ऋ गतौ। कर्मण्यण्। ङीप्॥

कण्टकारीफलम्। न। कण्टकार्याः फले॥ कण्टकारीफलं तिक्तं कटुकं दीपनं लघु। रूक्षोष्णं श्वासकासघ्नं ज्वरानिलकफापहम्॥ शाकप्रकारस्तु। तोयाम्लस्विन्नबृहतीफलमार्द्रं काञ्चदण्डाहतं चिरविपाचितमाज्यकेन। चूर्णेन सैन्धवभवेन विमिश्रितञ्च वह्निं प्रबोधयति कासनिवारणञ्चेति॥

कण्टकाशुकः। पुं। यवासे। यासे॥

कण्टकाशनः। पुं। उष्ट्रे। कण्टकानि अशनं यस्य॥

कण्टकाष्ठीलः। पुं। मत्स्यविशेषे। क्रुशिमे॥

कण्टकितः। त्रि। पुलकिते॥

कण्टकी। पुं। मत्स्ये॥ खदिरवृक्षे॥ विकङ्कते। मदनवृक्षे॥ गोक्षुरे॥ वंशे॥ बदरवृक्षे॥ कण्टकाः सन्त्यस्मिन्। इनिः॥

कण्टकिनी। स्त्री। वार्त्ताक्याम्॥ गोरक्षभिण्ड्याम्॥ मधुखर्जूर्याम्॥

कण्टकिफलः। पुं। कांटहल इति प्रसिद्धे वृक्षविशेषे। पनसे॥ कण्टकाः सन्त्यस्य। अत इनिठनौ इति इनिः। कण्टकि फलमस्य॥ समष्ठिलावृक्षे॥

कण्टकिलः। पुं। बेंडुवाँश इति गौड भाषाप्रसिद्धे वंशविशेषे॥

कण्टकिलता। स्त्री। त्रपुष्याम्॥ खीरा इति भाषा। कण्टकिनी चासौ लता चेति॥

कण्टकी। स्त्री। वार्त्ताकीविशेषे। कांटीलाबैंगन इति भाषा॥

कण्टकुरण्टः। पुं। झिण्ट्याम्॥

कण्टतनुः। स्त्री। बृहत्याम्॥

कण्टदला। स्त्री। केतक्याम्॥

कण्टपत्रः। पुं। विकङ्कतवृक्षे॥

कण्टपत्रफला। स्त्री। ब्रह्मदण्ड्याम्॥

कण्टपादः। पुं। विकङ्कतवृक्षे॥

कण्टफलः। पुं। क्षुद्रगोक्षुरे॥ पनसे॥ धुस्तूरे॥ लताकरञ्जे॥

कण्टफला। स्त्री। देवदालीलतायाम्॥

कण्ठलः। पुं। धावल्ले। बबूलइति भाषा॥ इतिशब्दचन्द्रिका॥

कण्ठवल्ली। स्त्री। श्योवल्लीवृक्षे॥

कण्ठवृक्षः। पुं। तेजःफलवृक्षे॥

कण्ठफलः। पुं। कण्टकिफले। कटहल इति भाषा॥ विशेषात् पनसं च ज्ञेयं गुल्मिभिर्मन्दवह्निभिः॥

कण्ठाग्निला। स्त्री। नीलमक्षिकायाम्॥

कण्ठालुः। पुं। वंशे॥ वृहत्यां॥ यासायाम्॥ बबूरे॥

कण्ठालुयम्। न। पद्मकन्दे॥

कण्ठी। पुं। कलाये॥ अपामार्गे॥ खदिरे॥ गोक्षुरे॥

कण्ठः। पुं। मदनद्रुमे॥ होमकुण्डादर्हिरङ्गुलिपरिमितेस्थाने॥ यथा। खाता द्व्यङ्गुलः कण्ठः सर्वकुण्डेष्वयंविधिरिति॥ त्रि। गले। ग्रीवाग्रभागे॥ अन्तविशुद्धनामषोडशदलपद्ममस्ति॥ सन्निधाने। निकटे॥ ध्वनौ॥ कणति। कणशब्दे कणो ठः॥ यद्वा। कण्ठते। कठिशोके। अच्॥

कण्ठकूणिका। स्त्री। वीणायाम्॥

कण्ठतलासिका। स्त्री। अश्वग्रीवावेष्टकरज्जुचर्मादि॥ इति शब्दमाला॥

कण्ठनीडकः। पुं। चिल्लपक्षिणि। चील्ह इति भाषा॥ इतित्रिकाण्डशेषः॥

कण्ठनीलकः। पुं। उल्कायाम्॥ मसाल इतिभाषा॥ इतिशब्दमाला॥

कण्ठपाशकः। पुं। हस्तिकण्ठवेष्टकरज्जौ॥

कण्ठभूषा। स्त्री। ग्रैवेयके। कण्ठी गोपसकरी इतिचभाषा॥ भूष्यतेऽनया। भूष अलङ्कारे। गुरोश्चेत्यः। कण्ठस्यभूषा॥

कण्ठमणिः। पुं। ग्रैवेयकमणौ॥ काकले॥ कण्ठस्य मणिः॥

कण्ठशुद्धिः। स्त्री। गलस्य कफाद्यलिप्तत्वे॥

कण्ठसूत्रम्। न। स्तनालिङ्गने॥ यथा। यत्कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निविडोपगूढात्। परिश्रमार्थं शनकैर्विदग्धास्तत्कण्ठसूत्रं प्रवदन्तिसन्त इति॥

कण्ठाग्निः। पुं। पक्षिणि॥ कण्ठे अग्निरस्य॥ इति त्रिकाण्डशेषः॥

कण्ठालः। पुं। शूरणे॥ युद्धे॥ गोणीभेदे। खुर्जी इतिभाषा॥ क्रमेलके॥ नौकायाः खनित्रे॥

कण्ठाला। स्त्री। जालगोणिकायाम्॥

कण्ठिका। स्त्री। कण्ठाभरणे। एकलडीकण्ठी इति भाषा॥ इतिहेमचन्द्रः॥

कण्ठी। स्त्री। गले॥ अश्वकण्ठवेष्टनर

त्त्वचर्म्मादौ ॥

कण्ठीरवः । पुं । सिंहे ॥ मत्तमातङ्गे ॥ पारावते ॥

कण्ठीरवी । स्त्री । वासकवृत्ते ॥

कण्ठेकालः । पुं । महादेवे ॥ कण्ठेकालोस्य । हलदन्तादित्त्वलुक् ॥

कण्ठ्यः । त्रि । कण्ठभवे शब्दादौ ॥ कण्ठहिते ॥ उभयत्र शरीरावयवत्त्वात् यत् ॥

कण्डनम् । न । निस्तुषीकृतौ । उदूखलादिना तण्डुलादे निर्मलीकरणे । छडना इतिभाषा ॥

कण्डनी । स्त्री । उलूखले ॥ मुषले ॥

कण्डरा । स्त्री । महास्नायौ । महानाड्याम् ॥

कण्डिका । स्त्री । वेदैकदेशे ॥

कण्डुः । स्त्री । कण्डूयायाम् । गात्रविघर्षणे ॥ कण्डते । कडिमदे । मृगय्वादित्त्वात् कुप्रत्ययः ॥

कण्डुरः । पुं । कारवेल्ललतायाम् ॥ कुन्दरवृत्ते ॥

कण्डुरा । स्त्री । आत्मगुप्तायाम् । शूकशिम्ब्याम् ॥ अत्त्यन्त मर्कटाम् ॥ कण्डूंराति । रादाने । आतोनुमेतिकः । पृषोदरादित्त्वात् ह्रस्वः ॥

कण्डूः । स्त्री । खाज इतिप्रसिद्धे रोगे । खर्ज्ज्वाम् । कण्डूयायाम् ॥ कण्डूय



नम् । कण्डूञ् गात्रविघर्षणे । सम्पदादित्त्वात् क्विप् ॥

कण्डूकरी । स्त्री । शूकशिम्ब्याम् ॥

कण्डूघ्नः । पुं । आरग्वधे ॥ गौर सर्षपे ॥

कण्डूतिः । स्त्री । कण्डूाम् । खाज इति भाषा ॥ कण्डूयतेः क्तिच् ॥

कण्डूयनम् । न । कण्डूाम् ॥

कण्डूयमानः । त्रि । कण्डूयितरि । कषमाणे ॥

कण्डूया । स्त्री । कण्डूयने । खर्ज्ज्वाम् ॥ कण्डूयनम् । कण्डूञ्० । कण्डूादिभ्योयक् । अप्रत्ययात् ॥

कण्डूयिता । त्रि । कण्डूयमाने ॥

कण्डूरा । स्त्री । प्रावृषायण्याम् । मर्कव्याम् ॥ कण्डूंराति । रा० । आत इति कः ॥

कण्डूलः । पुं । शूरणे ॥ त्रि ॥ कण्डूयुक्ते ॥

कण्डोलः । पुं । उष्ट्रे ॥ गोणीप्रभेदे ॥ पिटे । वंशादिनिर्मिते धान्यादिस्थापनभाण्डे ॥ कण्डते । कडिमदे । बाहुलकादोलच् ॥ यद्वा । कपिगलिगण्डीतिसूत्रे काण्डः पाठादोलच् ॥

कण्डोलकः । पुं । कण्डोले ॥

कण्डोलवीणा । स्त्री । केंदुरा इति

गौडभाषा प्रसिद्धे वाद्ययन्त्रे। चण्डालवल्लक्याम्। किङ्करीति प्रसिद्धे वाद्ये॥ कण्वते। कवि०। बाहुलकादोलच्। कण्डोलस्य वीणा॥

कण्डोली। स्त्री। कण्डोलवीणायाम्॥

कण्डूघः। पुं। मूककीटे। मूयापोका इतिगौडे भाषा॥

कण्वः। पुं। मुनिविशेषे॥ पुरुवंशजातप्रतिरथनामक्षत्रियपुत्रे॥ यथा। सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः। तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्याद्विजातयः। इतिश्रीभागवतम्॥ न। पापे॥ कणनम्। कणशब्दे॥ उल्वादयश्चेतिसाधुः॥ कणति। अशूमुषिलटिकणीत्यादिना क्वन्॥

कत्तः। पुं। मुनिविशेषे॥ कतकवृक्षे॥

कतकः। पुं। तिक्तफले। पयःप्रसादिनि। निर्मली इतिभाषा॥ कतकस्य फलं नेत्र्यं जलनिर्मलकारकम्। वातश्लेष्महरं शीतं मधुरं तवरं गुरु॥

कतफलः। पुं। कतकवृक्षे॥

कतमः। पुं। बहूनां जातिपरिप्रश्ने॥ किमो डतमच्॥

कतमालः। पुं। वह्नौ॥

कति। त्रि। कियति। सङ्ख्यापरिमाणप्रश्ने॥ का सङ्ख्यापरिमाणमेषाम्। किमः सङ्ख्यापरिमाणे डतिचेति डतिः। नित्यंबहुवचनान्तोयम्॥



कतिथः। त्रि। कतीनां पूरणे॥ षट्कतिकतिपयचतुरांथुगिति डटिथुगागमः॥

कतिपयः। त्रि। कतिशब्दार्थे। कितनेक इतिभाषा॥

कतिपयथः। त्रि। कतिपयानां पूरणे। षट्कतीत्यादिना कतिपयस्यासङ्ख्यात्वेपि अतएवज्ञापकाड्डट्। तस्मिन् थुगागमः॥

कतृणम्। न। रामकर्पूर इतिगौडभाषाप्रसिद्धे सुगन्धितृणविशेषे। पौरे। सौगन्धिके। रौहिषे॥ अस्यगुणाः। कटुत्वम् तिक्तत्वम् कफशस्त्रशल्यादिदोषवालग्रहविनाशित्वमिति राजनिर्घण्टः॥ चाकुलिया इति गौडभाषाप्रसिद्धे पृश्नौ॥ पृश्निकायाम्। कुम्भिकायाम्॥ कुत्सितं तृणम्। तृणेच जातावितिकोः कत्॥

कत्तीयम्। न। मद्ये। मैरेये॥

कत्थनम्। न। श्लाघायाम्॥ कत्थ०। ल्युट्॥

कत्सवरम्। न। स्कन्धे

कथकः। त्रि। कथोपजीविनि॥ एकनटे। नाटकवर्णनकर्त्तरि॥ वक्तरि॥ यथा। वाद्युक्तसाध्यनियमच्युते

पिकथकै रूपाधिरुह्याव्य इतिचिन्ता मणिः ॥ कथयति । कथवाक्यप्रबन्धे । वहुलमन्यत्रापीति कुन् ॥

कथङ्कथिकः । त्रि । प्रश्नकर्त्तरि । प्रष्टरि ॥

कथङ्कथिकता । स्त्री । पृच्छायाम् ॥ इति हेमचन्द्रः ॥

कथङ्कारम् । अ । केन प्रकारेण कृत्वेत्यर्थे । कथमित्यर्थे ॥ अनर्थकादेव कारोतेः कथम्पूर्वीणमुल् ॥

कथञ्चन । अ । केनाप्यंशेनेत्यर्थे ॥

कथञ्चित् । अ । अतिप्रयत्नेनेत्यर्थे ॥

कथनम् । न । कथायाम् । कहना इति भाषा ॥ इतिहलायुध ॥

कथम् । अ । प्रश्ने ॥ गर्हायाम् ॥ प्रकारार्थे ॥ सम्भ्रमे ॥ प्रश्ने ॥ सम्भावनायाम् ॥ केन प्रकारेण । किमस्येति थमुः ॥

कथमपि । अ । यत्नगौरवे ॥ वाढमित्यर्थे ॥ कथमादितयाप्यन्तयत्नगौरव भेदयोः ॥

कथम्भूत । त्रि । किम्प्रकारे ॥ कं प्रकारं किंवा प्रकार मापन्नः । द्वितीयान्तादपियमु ॥

कथा । स्त्री । प्रबन्धकल्पनायाम् ॥ प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः । परस्पराश्रया यास्यात्सा मता ख्यायिका क्वचिदिति कोलाहलाचार्यः ॥ पञ्चप्रतिपत्तोपन्यासेन-विचारणायाम् ॥ नैयायिकमतेचि नानावक्तृकपूर्वपक्षसिद्धान्तवान् वाक्यसन्दर्भः कथा । तद्भेदास्त्रय. । वादो जल्पो वितण्डाचेति ॥ कथा कादम्बर्यादिस्वरूपा सैवगद्यपद्यमयी चम्पूरितिग्रन्थान्तरे ॥ कथयति । कथवाक्यप्रबन्धे । चितिपूजिकथिकुम्बिचर्चश्चेत्यङ् । टाप् ॥

कथाप्रसङ्गः । त्रि । वातुले ॥ वार्त्तायाम् । गोष्ठीवचने ॥ विषवैद्ये ॥

कथाप्राणः । त्रि । कथके । कथोपजीविनि । नाटककर्त्तरि ॥ कथायां माणः यस्य ॥

कथितः । त्रि । उक्ते । कहा इतिभाषा ॥ कथ० । क्त. ॥

कदः । पुं । मेघे ॥ कं जलं ददाति । डुदाञ् । कः ॥

कदकः । पुं । उल्लोचे ॥ विताने ॥

कदध्वा । पुं । कापथे । निन्द्यमार्गे ॥ कुत्सितो ऽध्वा । कुगतीतिसमासः । कोः कत् तत् पुरुषेचीति कदादेशः ॥

कदनम् । न । मर्दे । युद्धे ॥ पापे ॥ बाधायाम् ॥ मारणे ॥

कदन्नम् । न । कुत्सितान्ने ॥

कदम्बः । पुं । नीपे । प्रियके ॥ कदम्बो मधुरः शीतः कषायो लवणो गुरुः । सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः ॥ अन्यसाञ्च । नीपो महाकदम्बःस्याद्धाराकदम्बइत्यपि । द्वितीयोऽल्पप्रसरश्च रक्तपुष्पः कदम्बकद्व्यस्यभेदः । तथाऽन्येपि । हारिद्रस्तुरजोवलः । धूलीकदम्बको धाराकदम्बः षट्पदप्रियः ॥ रक्तपुष्पः केशराढ्यः प्रावृषेण्यः कदम्बकः । नीपोमहा कदम्बोपि तथा वहुफलोमतः । इत्यमरटीकायां भरतः॥ सर्षपे ॥ देवताडकतृणे ॥ न । निकुरम्बे । सङ्घे । समूहे ॥ कदति । कदः सौत्रोधातुः । कृकदिकडिकटिभ्योम्बच् ॥

कदम्बकः । पुं । हरिद्रौ ॥ कदम्बार्थेषु ॥ स्वार्थेकन् ॥ यद्वा । कदति कन्दयतिवा । कदहिंसायाम् । कदि आह्वाने रोदने च । कृकादीत्यम्बच् । अनित्यत्वान्ननुम् । स्वार्थेकः ॥ न । निकुरम्बे । समूहे ॥

कदम्बगोलकन्यायः । पुं । कदम्बगोलकस्य सर्वावयवेषु युगपदेव पुष्पाणामुत्पादरूपे दृष्टान्तविशेषे ॥

कदम्बपुष्पा । स्त्री । मुण्डितिकायाम् । मुण्डी इतिभाषा ॥

कदम्बपुष्पी । स्त्री । महाश्रावणिकायाम् । मुण्डार्याम् ॥

कदम्बी । स्त्री देवदाल्याम् ॥

कदरः । पुं । सोमवल्के श्वेतखदिरे ॥ कदरो विशदो वर्ण्यो मुखरोगकफास्रजित ॥ क्रकचे । करपत्रे । करपत करौत आरा इतिच भाषा ॥ कडाजामुडा इति गौडभाषाप्रसिद्धे व्याधिभेदे ॥ तल्लक्षणम् । शर्करोन्मथिते पादे क्षते वा कण्टकादितः । ग्रन्थिः कोलवदुत्सन्नो जायते कदरस्तु सइति ॥ अङ्कुशे ॥ दृणाति । दृविदारणे । पचाद्यच् । कस्यजलस्य दरः ॥

कदर्थितः । त्रि । विडम्बिते । दूषिते ॥ कुत्सितोऽर्थः कदर्थः । कोःकत् । कदर्थः कृतः कदर्थितः ॥

कदर्य्यः । त्रि । क्षुद्रे । कृपणे । सतिविभवे अदातरि ॥ यथा । आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् । यो लोभात् सञ्चिनोत्यर्थान् सकदर्य इतिस्मृतः ॥ कुत्सितो ऽर्थः स्वामी ॥ कुगतीतिसमासः । कोः कत् तत्पुरुषे ॥

कदलः । पुं । रम्भावृक्षे ॥ पृश्नीलतायाम् ॥ कन्दते कन्द्यते वा । कदि आह्वानेरोदनेच । वृषादित्वात् कलच्

कदलकः । पुं । कदलार्थे ॥ स्वार्थे कः ॥

कदला । स्त्री । पृश्न्याम् ॥ डिम्बिकायाम् ॥ शाल्मलीवृक्षे ॥ अजादेराकृतिगणत्वाट्टाप् ॥

कदली । स्त्री । वारणबुसायाम् । रम्भायाम् ॥ यथा ॥ माणिक्यमर्त्त्यामृतचम्पकाद्या भेदाः कदल्या बहवोपि सन्ति । उक्ता गुणास्तेष्वधिका भवन्ति निर्दोषता स्याल्लघुता च तेषाम् ॥ गुणान् पश्य मोचाफले ॥ पताकायाम् ॥ करिवैजयन्त्याम् ॥ मृगविशेषे ॥ के दलति । दल विशरणे । अच् । ङीष् ॥ कन्दते कन्द्यते वा कदिरा० । ए पादित्वात् साधुः । गौरादिः ॥

कदलीकन्दः । पुं । रम्भामूले । केराकन्द केलाकन्द इतिच भाषा ॥ शीतलः कदलीकन्दो बल्यः केश्योम्लपित्तजित् । वह्निकृद्दाहहारी च मधुरो रुचिकारकः ॥ कन्दः कदल्या दलितो नितान्तं संस्वेदितो हिङ्गुघृतेन राद्धः । उद्धूलितः सैन्धवरेणुना यः मरीचसम्मर्कितएव रुच्यः ॥

कदलीकुसुमम् । न । रम्भापुष्पे ॥ कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु । वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत् ॥

कदलीदण्डः । पुं । थोड इति गौडभाषाप्रसिद्धे मोचामध्यस्थदण्डे ॥ कृत्तः स्विन्नः सलिलविधृतः कृत्ततन्तुः प्रभिन्नः कम्बुभृच्चाजलविरचितः चारजम्बीरपुष्टः । मध्ये मध्ये तनुशकलितोनार्द्रकेणातिपूर्णः स्वादुस्तूर्णं भवति सुतरां गर्भदण्डः कदल्याः ॥ योनिदोषहरो दण्डः कादल्यो रूक्षदरं जयेत् । रक्तपित्तहरः शीतः सुरुच्योग्निप्रवर्द्धनः ॥

कदा । अ । कस्मिन् काले । कव इति भाषा ॥ सर्वैकान्यकिंयत्तदः काले दा ॥

कदाकारः । त्रि । कुत्सितावयवे ॥ कुत्सितः आकारोऽस्य । कोः कदादेशः ॥

कदाख्यम् । न । कुष्ठौषधौ ॥ त्रि । कुत्सितनामनि ॥ कुत्सिता आख्याऽस्य । कोः कत् तत्पुरुषेचीति कदादेशः ॥

कदाचन । अ । कस्मिन्काले । किसी समयमे इतिभाषा ॥

कदाचारः । त्रि । कुव्यवहारे ॥ कुत्सितः आचारोऽयस्य । कोः कत् आदेशः ॥

कदाचित् । अ । जातु । कस्मिंश्चित्काले प्रस्तावे ॥ कदाच चिच्च अनयोः समाहारः ॥

कदुष्णम् । न । कोष्णे ॥ ईषदुष्णम् । कवञ्चोष्णे इतिपक्षे कदादेशः ॥ त्रि । तद्वति ॥

कद्रथः । पुं । कुत्सितरथे ॥

कद्रुः । पुं । पिङ्गलवर्णे ॥ त्रि । तद्वति । स्वर्णपिङ्गे ॥ कन्दति । कदि आह्वाने । मृगय्वादित्वात् साधुः ॥

कद्रुपुत्रः । पुं । नागे ॥ कद्र्वाःपुत्रः ॥

कद्रूः । स्त्री । नागमातरि ॥ संज्ञायामि च्यूङ् ॥

कद्वदः । त्रि । गर्ह्यवादिनि । दुर्वाचि ॥ कुत्सितंवदति । वदेः पचाद्यच् । रथवदयोश्चेति कोः कत् ॥ कुत्सितस्य वदोवा ॥

कनकम् । न । स्वर्णे । हेम्नि ॥ पुं । किंशुकवृक्षे ॥ नागकेशरवृक्षे ॥ कृष्णधत्तूरे ॥ धुस्तूरे ॥ काञ्चनालवृक्षे ॥ कालीये । कृष्णचन्दने ॥ चम्पकवृक्षे ॥ वासमर्दवृक्षे ॥ कणगुग्गुलुवृक्षे ॥ लघ्वधरे । ॥ कनति । कनीदीप्तौ । वृञादिभ्योवुन् ॥ लाक्षाद्रुमे ॥

कनकक्षारः । पुं । टङ्कणे । सुहागा इति भाषा ॥

कनकदण्डः । पुं । राजशृङ्गे । राजच्छत्रे ॥ कनकस्यदण्डोऽस्मिन् ॥

कनकदण्डकम् । न । राजशृङ्गे । राजच्छत्रे ॥ स्वार्थेकन् ॥

कनकपलः । पुं । सुवर्णादिपरिमाणक षोडशमाषके । पलपरिमाणे । कुवविस्ते ॥ इतिहारावली ॥

कनकप्रभा । स्त्री । महाज्योतिष्मत्याम् ॥

कनकप्रसवा । स्त्री । स्वर्णकेतक्याम् ॥

कनकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

कनकरसः । पुं । हरिताले ॥

कनकलोद्भवः । पुं । राले ॥

कनकाचलः । पुं । सुमेरुपर्वते ॥ दानविशेषे ॥ कनकमयःअचलः ॥

कनकाध्यक्षः । पुं । भौरिके । सुवर्णाधिकृते ॥ कनकस्यअध्यक्षः ॥

कनकारकः । पुं । कोविदारवृक्षे ॥

कनकालुका । स्त्री । भृङ्गारे । सौवर्णकलशे ॥ कनकस्य आलुः । संज्ञायांकन् ॥

कनकाह्वम् । न । नागकेशरपुष्पे ॥

कनकाह्वयः । पुं । धत्तूरे ॥ कनकमाह्वयोऽस्य । भुक्तेऽस्मिन् कनकवर्णपृथ्वीदर्शनात् ॥ नागकेशरे ॥

कनखलः । पुं । उग्रादेव्याःस्थाने तीर्थविशेषे ॥ उग्राकनखलेस्मृते सिपुरायाम् ॥

कननः । त्रि । काणे । एक दृशि ॥ इति हेमचन्द्रः ॥

कनिष्ठा । स्त्री । सन्मितायाम् ॥

कनिष्ठः । त्रि । अतियूनि ॥ अत्यल्पे ॥

जघन्यजे । अनुजे । पश्चाज्जाते ॥ अयमेषामतिशयेन युवा अल्पो वा । अजादी गुणवचनादेवेतीष्ठने । युवाल्पयोःकनन्यतरस्यामिति कनादेशः ॥

कनिष्ठकम् । न । शूकतृणे ॥

कनिष्ठा । स्त्री । दुर्बलाङ्गुलौ ॥ पश्चाज्जातायाम् । अनुजायाम् ॥ कनिष्ठस्य भार्यायाम् ॥ कनिष्ठस्य स्त्री । पुंयोगलक्षणं ङीषं बाधित्वा अजादित्वात् टाप् ॥ नायिकाभेदे ॥

कनी । स्त्री । दुहितरि । कन्यायाम् ॥

कनीनिका । स्त्री । अक्षितारके ॥ कनिष्ठाङ्गुलौ ॥ कनति । कनी दीप्तौ । बाहुलकादीनः । स्वार्थे कन् । टाप् । इत्वम् ॥

कनीयान् । त्रि । कनिष्ठार्थे ॥ अयमनयोरतिशयेन युवा अल्पो वा । द्विवचनविभज्योपपदे तरबीयसुनौ । अजादी गुणवचनादेवेति ईयसुन् । युवाल्पयोरिति कनादेशः ॥

कनीयसम् । न । ताम्रे ॥

कन्तु । त्रि । सुखविशिष्टे । सुखिनि ॥ कं सुखम् अस्ति अस्य ॥ कं शम्भ्यां बभयुस्तितुतयसः इति तुः ॥ कामदेवे ॥ कुसूले ॥ कामयते । कमुकान्तौ । अर्जिदृशिकम्यमीतिक्रुः प्रत्ययो धातोस्तुगागमश्च ॥ कमिमनीतिसुबौ ॥ हृदये ॥



कन्था । स्त्री । मन्मथभित्तौ । कांथ इति भाषा ॥ प्रावरणान्तरे । सूतजीर्णपटनिर्मिताच्छादनवस्त्रे । कथरी गुदरी इति च भाषा ॥ यथा । भिक्षाशिनस्य रक्षार्थं कन्था शीतनिवारणी । अथवा केशवे भक्ति विभवैः किम्प्रयोजनमिति ॥ कम्यते । कमु० । बाहुलकात् थन् । टाप् ॥

कन्थारी । स्त्री । कन्थरी । दुर्द्धर्षासी ॥ तृणकण्टका तीक्ष्णगन्धा दुषमवेशा इत्यादिपर्यायवति वृक्षे ॥

कन्दः । पुं । न । सूरणे ॥ ग्राम्यकन्दस्तु दोपलः ॥ सस्यमूले ॥ सलगम इति प्रसिद्धे मूलविशेषे । गृञ्जने ॥ पुं । मेघे ॥ योनिरोगविशेषे । तस्य निदानलक्षणे यथा । दिवास्वापादतिक्रोधाद् व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा । पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् । उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिजः इति ॥ स चतुर्विधः । लक्षणभेदात् । यथा । रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् । दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तम् ॥ नीलपुष्पप्र

तीक्ष्णं कण्डूमन्तं कफात्मकम् । स र्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः ॥ सन्निपातात्मकोऽसाध्यः शेषाः कृच्छ्रप्रसाधनाः इति ॥ कन्दति कन्दयति कन्द्यते वा । कदि आह्वाने रोदने च । अच् घञ् वा ॥

कन्दगुडूची । स्त्री । गुडूचीविशेषे । कन्दोद्भवायाम् । पिण्डालुनि । सुयनी इति काश्यादिदेशप्रसिद्धे कन्दे ॥

कन्दटम् । न । शुक्लोत्पले । कोंई इति भाषा ॥

कन्दफला । स्त्री । क्षुद्रकारवेल्लयाम् ॥

कन्दमूलम् । न । मूलके ॥

कन्दरः । पुं । अङ्कुशे ॥ पुं । स्त्री । गुहायाम् ॥ न । आर्द्रके । शृङ्गवेरे ॥ केन जलेन दीर्यते । दृ विदारणे । अदोरप् ॥

कन्दरा । स्त्री । दर्याम् । कृत्रिमाकृत्रिमे गृहाकारे गिरिविवरे ॥ कन्दरा टाप् ॥

कन्दराकरः । पुं । शिलोच्चये । पर्वते ॥ कन्दराणामाकरः ॥

कन्दरालः । पुं । गर्दभाण्डवृक्षे ॥ कन्दरां लाति । ला आदाने । आत इति कः ॥ प्लक्षद्रुमे ॥ कपीतने । आखोटवृक्षे ॥ कन्दरा भवति । आलभूषणादौ । कर्मण्यण् ॥ कन्दराऽस्यास्ति वा । सिध्मादित्वाल्लच् ॥

कन्दरालकः । पुं । कन्दराले ॥

कन्दरी । स्त्री । गुहायाम् ॥

कन्दरोद्भवा । स्त्री । क्षुद्रपाषाणभेदिनि वृक्षे ॥

कन्दर्पः । पुं । कामदेवे ॥ पुष्पोत्पत्त्यर्थो यः कामानां मध्ये कामः स च भगवतो विभूतिः ॥ कमित्यव्ययं कुत्सायाम् । कुत्सितो दर्पोऽस्य अस्माद्वा ॥ यद्वा । कं सुखं तत्र तेन वा दृप्यति । दृप हर्षमोहनयोः । पचाद्यच् ॥ अथवा । के ब्रह्मणि दृप्तवान् कं ब्रह्माणं दर्पितवान् वा । पृषोदरादिः ॥ ध्रुवकप्रभेदे ॥ यथा । एषो विंशतिवर्णाड्यो ध्रुवः कन्दर्पसंज्ञकः । वीरे वा करुणे वा स्यात् खण्डताले विधीयते इति सङ्गीतदामोदरः ॥

कन्दर्पकूपः । पुं । भगे । योनौ ॥

कन्दर्पजीवः । पुं । कामवृद्धिनामवृक्षे ॥

कन्दर्पमुषलः । पुं । मेढ्रे । शिश्ने ॥ इति त्रिकाण्डशेषः ॥

कन्दर्पशृङ्खलः । पुं । शृङ्गारबन्धविशेषे ॥ तल्लक्षणम् । नारी पादद्वयं स्थाप्य कान्तस्योरुद्वयोपरि । कटिं चेद्दोलयेद्रागबन्धः कन्दर्पशृङ्खलः इति ॥

कन्दलम् । न । कलाये ॥ उपरागे ॥ नवाङ्कुरे ॥ कलध्वनौ ॥ अपवादे ॥ पुं ।

कितव । युद्धे । कपाले ॥ भूमिकन्द
स्यांपुंस्ये ।
कन्दलता । स्त्री । मालाकन्दे ॥
कन्दली । स्त्री । मृगविशेषे ॥ गुल्मप्र
भेदे ॥ पताकायाम् ॥ पद्मबीजे ॥
कन्देसत्यमूले लीयते । लीङ् श्लेषणे ।
अन्येष्वपीतिडः । यद्वा । कन्दते ।
आदि० । टाप्कलच । गौ० ङीप् ॥
भूमिकन्दल्याम् ॥
कन्दलीकुसुमम् । न । शिलीन्ध्रे ॥
कन्दवर्द्धनः । पुं । सूरणे ॥
कन्दवल्ली । स्त्री । वन्ध्याकर्कोटक्याम् ॥
कन्दबहुला । स्त्री । त्रिपर्णिकायाम् ॥
कन्दसूरणः । पुं । ओले । सूरणे ॥
कन्दसंज्ञम् । न । योनिभ्रंशे । योनि
रक्तरोगविशेषे ॥ तल्लक्षणं निदानादिक
न्दे द्रष्टव्यम् ॥
कन्दसारम् । न । नन्दनवने ॥
कन्दाढ्यः । पुं । धरणीकन्दे ॥
कन्दार्हः । पुं । सूरणे ॥
कन्दालुः । पुं । कासालौ ॥ धरणीकन्दे
॥ त्रिपर्णिकायाम् ॥
कन्दी । पुं । सूरणे ॥
कन्दिरी । स्त्री । लज्जालुवृक्षे ॥
कन्दुः । पुं । स्त्री । कडाही इति भाषा
प्रसिद्धे भर्ज्जनपात्रे । स्वेदन्याम् ॥
स्कन्दति । स्कन्दिर् गतिशोषणयोः ।
स्कन्देः सलोपश्चेत्युः ॥
कन्दुकः । पुं । गेन्दु के गेंद इति भा
षा ॥ कन्द्यते । कदि० । बाहुलकादुः
। कं सुखं ददाति द्यति द्यति वेच्छति
वा मितन्द्वादिः । स्वार्थे कन् ॥ कंचि
त्रोदु नौति द्रवति वा । टुदु उपतापे
दुनोति वा । पान्तन्तः ।
कन्दुपक्वम् । न । जलोपसेकं विना के
वलपात्रे यद्वह्निनापक्वं भृष्टतण्डुला
दि तस्मिन् ॥ यथा । कन्दुपक्वानि
तैलेन पायसं दधिसक्तवः । द्विजैरे
तानि भोज्यानि शूद्रगेहकृतान्यपी
ति तिथ्यादितत्त्वे कूर्मपुराणम् ॥
कन्दोटः । पुं । शुक्लोत्पले ॥ न । नीलो
त्पले ॥
कन्दोलः । पुं । कुमुदे । निशापद्मे ॥
कन्धः । पुं । मेघे । वारिदे ॥
कन्धरः । पुं । वारिवाहे ॥ वारिवाहो
कामजलस्य धरः ॥
कन्धरा । स्त्री । ग्रीवायाम् ॥ कंशिरो
धारयति । संज्ञायां भृतृवृजीति ख
च । खचिह्रस्वः ॥ यद्वा । धरति । पृष
। पचाद्यच् । कंशिरसोधरा ॥
कन्धि । स्त्री । ग्रीवायाम् ॥ पुं । समु
द्रे ॥
कन्नम् । न । पातके ॥ मूर्च्छायाम् ॥
कन्यका । स्त्री । दशवर्षीयाकुमार्याम्

म्॥ अज्ञाता कन्या । अज्ञातादौ कः। क्षिपकादित्वान्नेत्वम्॥

कन्यकाजातः। त्रि। अनूढापत्ये। कानीने॥

कन्यकापतिः। पुं। जामातरि॥

कन्या। स्त्री। कुमार्याम्॥ दशवर्षीयां बालिकायाम्॥ नार्याम्॥ यथा दृष्टकन्यासु॥ यथा। यच्च गन्धर्वसिद्धानां कन्यका नरनागयोः। विद्याधरकिम्पुरुषपिशाचानामपीदृशाकृतिः॥ अहल्याद्रौपदीताराकुन्तीमन्दोदरीष्वपि॥*॥ कन्यायांजातमात्रायामुपक्रासंस्कुर्वते। नयराचादिपूजार्थं जातोऽयकुमारिका॥ कन्यादानप्रसिद्धार्थं वंशद्वयविवृद्धये। इतितेनापिजननाद्धर्मान्तेचिरञ्चेत्॥ कन्याविक्रये दोषो यथा। यः कन्यापालनं कृत्वा करोति यदि विक्रयं। विक्रेता धनलोभेन कुम्भीपाकं स गच्छति॥ कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश॥ मृतश्च व्याधयोनौ च सप्तजन्म निश्चितम्। विक्रीणीते मांसभारं वहत्येव दिवानिशमिति ब्रह्मवैवर्त्तपुराणम्॥*॥ अथ कन्यालक्षणम्। तत्र पादलक्षणम्। स्निग्धान्नतायततनुताम्रनखौ



कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्गुलीकमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत्॥ १॥ पादजङ्घाजानूरुगुह्यमणीनां लक्षणानि॥ मत्स्याङ्कुशाब्जयववज्रहलासिचिह्नावस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ। जङ्घे च रोमरहिते विसिरे सुवृत्ते जानुद्वयं सममनुल्वणसन्धिदेशम्॥ २॥ ऊरू घनौ करिकरप्रतिमावरोमौ अश्वत्थपत्रसदृशं विपुलञ्च गुह्यम्। श्रोणीललाटमुरुकूर्मसमुन्नतञ्च गूढो मणिश्च विपुलां श्रियमादधाति॥ ३॥ नितम्बनाभ्योर्लक्षणम्। विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रशनाकलापम्। नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्त्तगता च शस्ता॥ ४॥ मध्यस्तनोरुवक्षोग्रीवाल०। मध्यं स्त्रियास्त्रिवलिनाथमरोमशञ्च वृत्तौ घनावविषमौ कठिनावुरस्यौ। रोमप्रवर्जितमुरो मृदु चाङ्गनानां ग्रीवा च कम्बुनिचितार्थसुखानि धत्ते॥ ५॥ अधरदन्तयोर्ल०। बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपभृत्॥ कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामिताः

र्थेदाः ॥ ६ ॥ वचननासिकादृशां-लं० । द्वाविंशयुक्तमशठं परपुष्टवं सवर्णगुणभाषितमदीनमनल्पमौख्यम् । नासा समा समपुटा रुचिरा प्रशस्ता दृङ्नीलनीरजदलद्युतिहारिणी च ॥ ७ ॥ भूललाटलं० । नो सङ्गते नातिपृथू चरम्ये भ्रुवौ बालशशाङ्कवक्रे । अर्द्धेन्दुसंस्थानमरोमशञ्च यस्याः ललाटं न नतं न तुङ्गम् ॥ ८ ॥ कर्णकेशशिरोलं० । कर्णयुग्ममपि युक्तमांसलं शस्यते मृदुसमाहितं समम् । स्निग्धनीलमृदुकुञ्चितैकजा मूर्द्धजाः सुखकराः समं शिरः ॥ ९ ॥ हस्तपादयोर्लेखालं० । भृङ्गारासनवाजिकुञ्जररथश्रीवृक्षयूपेषुभिर्मालाकुण्डलचामराङ्कुशयवैः शैलैर्ध्वजैस्तोरणैः । मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः पादे पाणितलेऽथ वा युवतयो गच्छन्ति राज्ञीपदम् ॥ १० ॥ हस्तलं० । निगूढमणिबन्धनौ तरुणपद्मगर्भोपमौ करौ नृपतियोषितस्तनुविकृष्टपर्वाङ्गुली । न निम्नमतिनोन्नतं करतलं सुरेखान्वितं करोत्यविधवां चिरं सुतसुखार्थसम्भोगिनीम् ॥ ११ ॥ मध्याङ्गुलिं या मणिबन्धनोत्था रेखा गतापाणितलेऽङ्गनायाः । ऊर्द्ध्वस्थिता पादतलेऽथवा या पुंसोऽथवा राज्यसुखाय सा स्यात् ॥ १२ ॥ कनिष्ठिकामूलभवा गता या प्रदेशिनी मध्यमिकान्तरालम् । करोति रेखा परमायुषः सा प्रमाणमूना तु तदूनमायुः ॥ १३ ॥ अथोपलक्षणानि । अङ्गुष्ठमूले प्रसवस्य रेखाः पुत्रा बृहत्यः प्रमदास्तु तन्व्यः । अच्छिन्नमध्या बृहदायुषां ताः स्वल्पायुषां छिन्नलघुप्रमाणाः ॥ १४ ॥ शुभलक्षणान्युक्त्वा अशुभलक्षणान्याह । इतीदमुक्तं शुभमङ्गनानामतो विपर्यस्तमनिष्टमुक्तम् । विशेषतोऽनिष्टफलानि यानि समासतस्तान्यनुकीर्त्तयामि ॥ १५ ॥ पादयोरनिष्टलक्षणम् । कनिष्ठिका च तदनन्तरा वा महीं न यस्याः स्पृशति स्त्रियाः स्यात् । गताथवाङ्गुष्ठमतीत्य यस्याः प्रदेशिनी सा कुलटातिपापा ॥ १६ ॥ जङ्घागुल्फोदराणां लं० । उद्बद्धाभ्यां पिण्डिकाभ्यां सिरालैः शुष्कैर्जङ्घे लोमशे चाशिमांसे । वामावर्त्तं निम्नमल्पं च गुह्यं कुम्भाकारं चोदरं दुःखितानाम् ॥ १७ ॥ ग्रीवालं० । ह्रस्वयातिनिःस्वता दीर्घया कुलक्षयः । ग्रीवया पृथुलया योषितः प्रचण्डता ॥ १८

 

॥नेत्रगण्डयोर्ल० ॥नेत्रे यस्याः केकरे पिङ्गलेवा सादुःशीला श्यावलोलेचणाच ॥कूपौयस्या गण्डयोश्च स्मितेषु निस्सन्दिग्धं बन्धकीं तांवदन्ति॥ १९ ॥ अन्यदप्याह ॥ प्रविलम्बिनिदेवरं ललाटे श्वशुरंहन्त्युदरे स्फिजौ पतिञ्च । अतिलोमचयान्वितोत्तरौष्ठी नशुभाभर्त्तुरतीवयाचदीर्घा॥ २० ॥ स्तनकर्णदन्तल० ।स्तनौसरोमौ मलिनोल्वणौ चक्लेशंददाते विषमौचकर्णौ । स्थूलाः कराला विषमाश्चदन्ताः क्लेशाय चौर्य्यायच कृष्णमांसा ॥२१॥ हस्तल० । क्रव्यादरूपैर्वृककाककङ्कैः सरीसृपोलूक समानचिह्नैः । शुष्कैः सिरालैर्विषमैश्चहस्तैर्भवन्ति नार्यः सुखवित्तहीनाः ॥ २२ ॥ अन्यदप्याह । यातूत्तरौष्ठेन संमुन्नतेन रूक्षाग्रकेशीकलहप्रियासा । प्रायो विरूपासु भवन्तिदोषायत्रा कृतिस्तत्रगुणावसन्ति ॥२३॥ अधुना शरीरस्येवविभागमाह । पादौसगुल्फौ प्रथमं प्रदिष्टं जङ्घे द्वितीयं तु सजानुचक्रे । मेढ्रोरुमुष्कञ्चततस्तृतीयं नाभिंकटिंचैवचतुर्थमाहुः ॥ २४ ॥ उदरंकथयन्तिपञ्चमं हृदयंषष्ठमयस्तनान्वितम् । अथसप्तममांसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥२५ ॥ नवमंनयनेचसंभ्रुणी सललाटं दशमंशिरस्तथा । अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनम् ॥२६॥ इतिवाराह्यां कन्यालक्षणं नामाध्यायः । ६७ ॥ * ॥ एतकुमार्य्याम् । सहायाम् ॥ स्थूलैलायाम् ॥ वाराहीकन्दे ॥ वन्ध्याकर्कोटकाम् ॥ षष्ठराशौ ॥ जन्मकालीन चन्द्राश्रितैतद्राशिफलम् । युवतिगे शशिनि प्रमदाजनप्रवलकेलि विलासकुतूहलैः विमलशीलयुतोजननोत्सवैः सुविधिनाविधिना संहितः पुमान् ॥ कन्यास्थितोद्भवो मर्त्त्यो नानाशास्त्रविशारदः । सौभाग्यगुणसम्पन्नः सुन्दरः सुरतप्रियः ॥ चतुर्थवर्णाद्विभेदे ॥ भगौ शेत् कन्या । भास्वत्कन्या सैकाधन्या । यस्याः कूले कृष्णोऽखेलत् ॥ कनति । कनदीसौत्र् अघन्यादिः । कन्यायाः कानीनचेतिनिर्देशादयसिप्रयम इतिनञ्जीप ॥ दक्षिणार्णवसमीपेदुर्गादेव्याम् ॥

**कन्याकुब्जः** । पुं । कान्यकुब्जदेशे ॥ इतिहेमचन्द्रः ॥

**कन्याटः** । पुं । वासस्द्मनि ॥ इतित्रिकाण्डशेषः ॥

कन्याधिपः । पुं । बुधग्रहे ॥

कन्यापतिः । पुं । जामातरि ॥

कन्यापालः । पुं । कनैत इतिहिमगिरिप्रसिद्धे शूद्रजातिविशेषे । पाखवणिजि ॥

कन्यारामः । पुं । बुद्धभेदे ॥

कन्युषम् । न । हस्तपुच्छे । हथौंछा औंछा इति भाषा ॥

कपः । पुं । वरुणे ॥

कपटः । पुं । न । व्याजे । दम्भे । छद्मनि ॥ के मूर्द्धनि पटइव आच्छादकः ॥ यद्वा । पटति । पट० अच् । कस्य ब्रह्मणोऽपि पटोव्यापकः ॥

कपटधारी । त्रि । छलाढ्ये ॥

कपटिक । त्रि । कपटविशिष्टे । कपटिनि ॥ मत्वर्थे ठन् ॥

कपटी । त्रि । अयथार्थव्यवहारवति । दम्भविशिष्टे ॥ कपटोऽस्ति अस्यास्मिन्वा । इनिः ॥

कपटिनी । स्त्री । गौडभाषया चोडा नामनि गन्धद्रव्ये ॥

कपटेश्वरी । स्त्री । श्वेतकण्टकार्याम् ॥

कपर्द्दः । पुं । शिवस्यजटाजूटे ॥ वराटके ॥ पर्वपूरणे । सम्पदादित्वात्भावे क्विप् । राल्लोपः । केन सुखेन जलेन वा परं पूर्त्तिं ददाति । सुपातियोगविभागात्कः ॥ कस्य जलस्य परा पूरणेन दापयतीति वा । दैप् शोधने । आत इति कः ॥

कपर्द्दिका । स्त्री । वराटिकायाम् ॥

कपर्द्दकः । पुं । हरजटाजूटे ॥ वराचरे । वराटके ॥ अस्याः प्रभेदाः । सुवर्णवर्णा सिंही १ । धूम्रवर्णा व्याघ्री २ । पीतपृष्ठासितोदरा मृगी ३ । श्वेतवर्णा हंसी ४ । नातिदीर्घिका विदन्ता ५ ॥ इतिराजनिर्घण्टः ।

कपर्द्दी । पुं । शिवे । ईशे ॥ कपर्द्दोजटाजूटोऽस्यास्ति । इनिः ॥

कपाटम् । त्रि । अररे । कवाटे । किंवाड इतिभाषा ॥ कं वातम् शिरोवा पाटयति प्रविशते । पटगतौ ॥ कर्मण्यण् ॥ अर्द्धर्चादि ॥

कपाटिका । स्त्री । क्षुद्रकपाटे । किवाँडी इतिभाषा ॥ कपाटएव । स्वार्थे कः । टाप् ॥

कपाटी । स्त्री । कपाटिः ॥ अजन्तान् ङीप् ॥

कपालः । पुं । न । शिरोस्थिनि । कर्परे ॥ घटादेःशकले । खपरा इति भाषा ॥ व्रजे । समूहे ॥ यतीनां स्तम्भकपरादिभिक्षापात्रे ॥ यथा । कपालं वृक्षमूलानि कुचेलमसहायता । समताचैवसर्वस्मिन्नेतन्मुक्तस्य लक्षणमिति ॥ कुष्ठरोगविशेषे ॥ तल्ल

कपिः ध्वजः ध्वजे वा यस्य ॥

कपिलः । पुं । अनले ॥ वासुदेवे । सिद्धेशे भगवतो विभूतिविशेषे देवहूत्याङ्कर्दमप्रजापतेराविर्भूते ॥ सिद्धानाङ्कपिलो मुनिरिति भगवदुक्तेः ॥ अयञ्च ज्ञानभक्तिसेश्वरसाङ्ख्ययोगप्रचारार्थो भगवदवतारः ॥ अनीश्वरसाङ्ख्यमतप्रवर्त्तकेच मुनिविशेषे ॥ कुक्कुरे ॥ दानवविशेषे ॥ पिङ्गले वर्णविशेषे ॥ नीलपीतः कपिलः इति रभसः ॥ कपिलो रोचनाभविरित्यन्ये ॥ त्रि । पिङ्गलवर्णयुक्ते ॥ कवते । कादम्बौ । कवेः पश्चेति इलच प्रत्ययः ॥ मत्वर्थे सिध्मादित्वाल्लजवा ॥

कपिलद्युतिः । पुं । सूर्य्ये ॥

कपिलद्राक्षा । स्त्री । गोस्तन्याम् । द्राक्षायाम् ॥

कपिलद्रुमः । पुं ॥ सुगन्धिकाष्ठविशेषे ॥

कपिलधारा । स्त्री । गङ्गायाम् । स्वर्णद्याम् ॥ तीर्थविशेषे ॥

कपिलपुराणम् । न । कापिले उपपुराणे ॥

कपिलशिंशपा । स्त्री । शिंशपावृक्षविशेषे । पीतायाम् । कृशिंशपायाम् ॥

कपिला । स्त्री । गोविशेषे । स्वर्णवर्णायाङ्गवि ॥ कपिलवर्णयोगात् । अनुदात्तत्वाभावात् वर्णादित्तिनङीप् ॥ भस्मगर्भायाम् । कपिलवर्णपुष्पायां शिंशपायाम् ॥ भस्मगन्धिन्यौषधौ । रेणुकायाम् ॥ कपिलो वर्णोऽस्त्यस्याः । अर्श आद्यच् ॥ पुण्डरीकदिग्गजकरिण्याम् ॥ नदीविशेषे ॥ यथा । कज्जलाचलशैलात्तु पूर्वस्मिन् शुक्लपर्वतः । शच्या सह पुरा रेमे यत्र शक्रः सुरेश्वरः ॥ तत्पूर्वस्यां महादेवी नदी कपिलसंज्ञिता । तस्यां स्नात्वा नरो गङ्गास्नानजं फलमाप्नुयात् ॥ इति कालिकापुराणे ८१ अध्यायः ॥

कपिलाक्षी । स्त्री । कपिलशिंशपायाम् ॥ सृगेर्वारौ ॥

कपिलाचार्य्यः । पुं । वासुदेवे ॥ कपिलस्य सेश्वरसाङ्ख्यस्य शुद्धात्मतत्त्वविज्ञानस्य आचार्य्यस्य ॥

कपिलाश्वः । पुं । विडौजसि । इन्द्रे ॥

कपिलोम्भफला । स्त्री । कपिकच्छ्वाम् ॥

कपिलोमा । स्त्री । रेणुकायाम् ॥

कपिलोहम् । न । पित्तले ॥

कपिवल्लिका । स्त्री । गजपिप्पल्याम् ॥

कपिवक्त्रः । पुं । नारदे ॥

कपिशाह्वयः । पुं । आम्रातके ॥

कपिवल्ली । स्त्री । करिपिप्पल्याम् । कोलवल्ल्याम् ॥ कपिरिव वल्ली तत्तुल्यरोमत्त्वात् ॥

कपिशः । पुं । सिल्हकनामगन्धद्रव्ये ॥

श्यावे । कृष्णपीतमिश्रितवर्णे ॥ त्रि । तद्वर्णयुक्ते ॥ कपिवर्णो विशेषोऽस्यास्ति । लोमादित्वात् शः ॥ विरक्तसन्ध्याकपिशमित्यत्र कपिशं ताम्रमिति मल्लिनाथः ॥

कपिशा । स्त्री । माधव्याम् । माधुरीसुरायाम् ॥ नदीविशेषे ॥ टाप् ॥

कपिशाञ्जनः । पुं । शिवे ॥

कपिशापुत्रः । पुं । पिशाचे ॥

कपिशी । स्त्री । माधव्यामदिरायाम् ॥

कपिशीका । स्त्री । मदिरायाम् ॥ इति त्रिकाण्डशेषः ॥

कपिशीर्षम् । न । कपशीर्षे । प्राकाराग्रे ॥

कपिशीर्षकम् । न । हिङ्गुले ॥ खोडकशीर्षके । प्राकाराग्रे ।

कपिष्ठलः । पुं । ऋषिविशेषे ॥ कपिष्ठलो गोत्र इति निपातनात् षत्वम् ॥

कपीज्यः । पुं । क्षीरिकावृक्षे ॥

कपीतः । पुं । श्वेतवुह्नावृक्षे ॥

कपीतनः । पुं । गर्दभाण्डे ॥ शिरीषवृक्षे ॥ आम्रातके ॥ अश्वत्थे ॥ पूगवृक्षे ॥ मालूरवृक्षे । बिल्वे ॥ तनोति । तनु विस्तारे । पचाद्यच् । कपीनाम् कपेर्वर्णस्य वा तनः । अन्येषामपीति दीर्घः ॥ यद्वा । वाः खघ्म्याः तनः ईतनः । कपीनाञ्चपेषां ईतनः ॥

कपीन्द्रः । पुं । हनूमति ॥ सुग्रीवे ॥ राघवे ॥ वराहमूर्त्तौ ॥ कपिस्त्वासाविन्द्रश्च । कपीनामिन्द्रो वा ॥

कपीशः । पुं । हनूमति ॥ कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ कपीनामीशः ॥

कपीष्टः । पुं । राजादनवृक्षे ॥ कपित्थे ॥

कपूयः । त्रि । कुत्सिते ॥ कुत्सितं पूयते । पूयी विसरणे । पचाद्यच् । पृषोदरादिः ॥

कपूयचरणः । त्रि । दुष्कृतिनि । कुत्सितकर्मणि ॥ कपूयं निन्दितं चरणं कर्मास्य ॥

कपोतः । पुं । पारावते । कबरके ॥ कपोतको गुरुः स्निग्धो रक्तपित्तानिलापहः । सङ्ग्राही शुक्रलः शीतः सुस्वादूरुचिकारकः ॥ घुघुर्ती इति प्रसिद्धे चित्रकण्ठविहङ्गमे । धूसरे । धूम्रलोचने ॥ कस्य वायोः पोत इव । कोवायुः पोतो नौरिवास्य वा ॥ यद्वा । कवते । कवृ वर्णे । कबेरोतच् पश्च ॥ पक्षिमात्रे ॥

कपोतकम् । न । सौवीराञ्जने ॥

कपोतचरणा । स्त्री । नलीनामगन्धवस्तुनि ॥

कपोतपालिका । स्त्री । समाग्रप्रसारिते दारुविशेषे ॥ सौधादिप्रान्तकाष्ठे ॥

कपिः रथः रथे वा अस्य ॥

कपिलः । पुं । अनले ॥ वासुदेवे । सिद्धेशे भगवतो विभूतिविशेषे देवहूत्यां कर्द्दमप्रजापतेराविर्भूते ॥ सिद्धानां कपिलो मुनिरिति भगवदुक्तेः ॥ ॥ अयञ्च ज्ञानभक्तिवैराग्यसाङ्ख्ययोगप्रचारार्थी भगवदवतारः ॥ अनीश्वरसाङ्ख्यमतप्रवर्त्तकेच मुनिविशेषे ॥ कुक्कुरे ॥ दानवविशेषे ॥ पिङ्गले वर्णविशेषे ॥ नीलपीतः कपिलः इति रभसः ॥ कपिलो रोचनाभविरित्यन्ये ॥ त्रि । पिङ्गलवर्णयुक्ते ॥ कनते । कटवर्णो । कवेः पश्चेति इलच प्रत्ययः ॥ मत्वर्थे सिध्मादित्वात् लच्वा ॥

कपिलद्युतिः । पुं । सूर्य्ये ॥

कपिलद्राक्षा । स्त्री । गोस्तन्याम् । हारहारायाम् ॥

कपिलद्रुमः । पुं ॥ सुगन्धिकाष्ठविशेषे ॥

कपिलधारा । स्त्री । गङ्गायाम् । स्वर्गङ्गायाम् ॥ तीर्थविशेषे ॥

कपिलपुराणम् । न । कापिले उपपुराणे ॥

कपिलशिंशपा । स्त्री । शिंशपाद्रुमविशेषे । पीतायाम् । कुशिंशपायाम् ॥

कपिला । स्त्री । गोविशेषे । स्वर्णवर्णायाङ्गवि ॥ कपिलवर्णयोगात् । अनुदात्तत्वाभावात् वर्णादितिनङीप् ॥ भस्मगर्भायाम् । कपिलवर्णपुष्पायां शिंशपायाम् ॥ भस्मगन्धिन्यौषधौ । रेणुकायाम् ॥ कपिलो वर्णोऽस्त्यस्याः । अर्श आद्यच् ॥ पुण्डरीकदिग्गजकरिण्याम् ॥ नदीविशेषे ॥ यथा । कज्जलाचलशैलात्तु पूर्वस्मिन् शुभपर्वतः । शच्या सह पुरा रेमे यत्र शक्रः सुरेश्वरः ॥ तत्पूर्वस्यां महादेवी नदी कपिलसंज्ञिता । तस्यां स्नात्वा नरो गङ्गास्नानजं फलमाप्नुयादिति कालिकापुराणे ८१ अध्यायः ॥

कपिलाक्षी । स्त्री । कपिलशिंशपायाम् ॥ स्वर्णक्षीर्य्यां ॥

कपिलाचार्य्यः । पुं । वासुदेवे ॥ कपिलश्चासौ साङ्ख्यस्य शुद्धात्मतत्त्वविज्ञानस्य आचार्य्यश्च ॥

कपिलाश्वः । पुं । बिडौजसि । इन्द्रे ॥

कपिलोमफला । स्त्री । कपिकच्छाम् ॥

कपिलोमा । स्त्री । रेणुकायाम् ॥

कपिलोहम् । न । पित्तले ॥

कपिल्लिका । स्त्री । गजपिप्पल्याम् ॥

कपिवक्त्रः । पुं । नारदे ॥

कपिशद्राव्यः । पुं । आम्रातके ॥

कपिवल्ली । स्त्री । करिपिप्पल्याम् । कोलवल्ल्याम् ॥ कपिरिव वल्ली तत्तुल्यरोमत्वात् ॥

कपिशः । पुं । सिल्हकनामगन्धद्रव्ये ॥

राद्विति पक्षे ङीष् ॥

कफप्रकृतिकः । त्रि । कफस्वभावे ॥ तल्लक्षणं यथा। गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नर इति ॥

कफवर्द्धनः । पुं । पिण्डीतगरवृक्षे ॥ त्रि । श्लेष्मवृद्धिकारके ॥

कफविरोधि । न । मरिचे ॥

कफाल् । पुं । कफनाशके ॥ कफमत्ति । अद॰ । क्विप् ॥

कफान्तकः । पुं । वर्वुरवृक्षे ॥ इतिराजनिर्घण्टः ॥

कफारिः । पुं । शुण्ठ्याम् ॥

कफी । पुं । गजे । हस्तिनि ॥ त्रि । श्लेष्मले । श्लेष्मयुक्ते ॥ कफोऽस्यास्ति । द्वन्दोपतापेतीनिः ॥

कफेलूः । पुं । श्लेष्मातके ॥ कफंलाति । लाआदाने । अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूरिति ऊप्रत्ययो निपातनादेत्वम् ॥

कफोणिः । पुं । कूर्परे । भुजमध्यग्रन्थौ । कोहणी इति भाषा ॥ कं सुखं स्फोरयति । स्फुरस्फुरणे सञ्चलनेच । यङन्तः । कचट्टः ॥ पृ॰ । यद्वा । केन सुखेन फणति स्फुरतिवा । फण॰ । स्फुर॰ । इन् । पृ॰ ॥

कफोणी । स्त्री । कूर्परे ॥

कफोतक्लेशः । पुं । कफस्य शमनायोपस्थितौ ॥

कबन्धः । पुं । उदरे ॥ धूमकेतौ ॥ राहौ ॥ रक्षोविशेषे ॥ न । जले । उदके ॥ पुं । न । क्रियायुक्तशिरश्शून्यकलेवरे ॥ कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम् ॥ यथा । मनुष्याणां सहस्रेषु हतेषु हतमूर्द्धसु । तदावेशात्कबन्धः स्यादेकोऽमूर्द्धा क्रियान्वितः॥ अपिच । नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दशकोटयो निपतिता एकः कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलत्कबन्धखेशिरस्से पाञ्चोटिनिपातनेरघुपतेः कोदण्डघण्टारवः । इति प्राचीनाः ॥ कं सुखं बध्नाति । बन्धबन्धने । कर्मण्यण् ॥ कं बध्यते छिद्यतेऽस्मात् । घञ् ॥ केन वायुना बध्यते वा । को वायुरेव बन्धः आश्रयो यस्य वा ॥

कबन्धी । पुं । ऋषिविशेषे ॥

कबित्थः । पुं । कपित्थवृक्षे ॥ कपयः तिष्ठन्त्यत्र ष्ठा॰ । सुपिस्थ इति कः । पृ॰ ॥

कबिशः । पुं । कपिशवर्णे ॥ त्रि । कपिशवर्णके ॥

कभस् । न । रोहिणीनक्षत्रे ॥

कम् । अ । पादपूरणे ॥ जले ॥ मस्तके ॥ सुखे ॥ मङ्गले ॥ निन्दायाम् ॥

दिरचिते पक्षिस्थाने । विटङ्के ॥ पालयति । पालरक्षणे । ख्वुल् । कपोतानां पालिका ॥ कपोतान् पालयति वा । कर्मण्यण् । संज्ञायां कन् इति कन् ॥

कपोतपाली । स्त्री । विटङ्के ॥ कपोतान् पालयति । कर्मण्यण् । ङीप् ॥

कपोतवङ्का । स्त्री । ब्राह्मीवृक्षे ॥

कपोतवर्णी । स्त्री । सूक्ष्मैलायाम् ॥

कपोतवाणा । स्त्री । नलीनामगन्धद्रव्ये ॥

कपोतसारम् । न । स्रोतोञ्जने ॥

कपोताङ्घ्रिः । पुं । कपोतपादे ॥ स्त्री । नल्याम् । गन्धद्रव्यविशेषे ॥ कपोतस्याङ्घ्रिरिव ॥

कपोताभः । पुं । कपोतवर्णे ॥

कपोतारिः । पुं । श्येनपक्षिणि ॥ कपोतानाम् अरिः ॥

कपोलः । पुं । गण्डे । गल्ले । चक्षुःकर्णतिर्यक्सन्धिभागे । गाल इतिभाषा ॥ कम्पते । कपिचलने । कपिगडिगण्डीत्योलच् । कपीतिनिर्देशान्नलोपः ॥ कं सुखं पोलति वा । पुल महत्त्वे । कर्मण्यण् ॥

कप्याख्यः । पुं । सिह्लके ॥

कप्यासः । पुं । वानरगुदे । कपिपृष्ठान्ते ॥

कफः । पुं । शरीरस्थधातुविशेषे । श्लेष्मणि । सौम्यधातौ ॥ कफस्य कोपः कुसुमागमे भवति । अस्य प्रकोपहेतुः । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः सम्प्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते ॥ अपि च । गुरुपटुमधुराम्लस्निग्धमाषैस्तिलैश्च द्रवदधिदिननिद्राशीतनिश्चेष्टताभिः । प्रथमदिवसभागे रात्रिभागे पिचाद्ये भवति हि कफकोपो भुक्तमात्रे वसन्ते इति ॥ त्रिधाविभक्तस्य दिवसस्य प्रथमे भागे एवं रात्रेश्चाद्ये भागे ॥ फाल्गुने चैत्रमासे च जन्तुपीडाकरो मतः । सर्वशास्त्रविचारज्ञैः श्लेष्मा राजा प्रकीर्त्तितः ॥ केन जलेन फलति । फलनिष्पत्तौ । अन्येष्वपीति डः ॥ यद्वा । केशिरसि फलति वा पूर्ववत् डः ॥

कफकूर्चिका । स्त्री । लालायाम् । ष्ठीविकायाम् । आस्यासवे । लाल थूक इत्यादिभाषा ॥

कफघ्नी । स्त्री । क्षुपाम्रभेदे ॥

कफणिः । पुं । स्त्री । कफोणौ ॥ केन सुखेन फणति स्फुरति वा । फण गतौ स्फुरसञ्चलने वा । इन् । पृषोदरादिः ॥

कफणी । स्त्री । कफोणौ ॥ कूर्दिका

रादिति पचेङीप् ॥

कफप्रकृतिकः । त्रि । कफस्वभावे ॥ तल्लक्षणं यथा । गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नर इति ॥

कफवर्द्धनः । पुं । पिण्डीतगरवृक्षे ॥ त्रि । श्लेष्मवृद्धिकारके ॥

कफविरोधि । न । मरिचे ॥

कफहृत् । पुं । कफनाशके ॥ कफमस्ति । छद० । क्विप् ॥

कफान्तकः । पुं । वर्बुरवृक्षे ॥ इतिराजनिर्घण्टः ॥

कफारिः । पुं । शुण्ठ्याम् ॥

कफी । पुं । गजे । हस्तिनि ॥ त्रि । श्लेष्मले । श्लेष्मणे । श्लेष्मयुक्ते ॥ कफोऽस्त्यस्य । दन्दीपतापेतीनिः ॥

कफेलूः । पुं । श्लेष्मातके ॥ कफं लाति । लाआदाने । अन्दूदृन्भूजम्बूकफेलू कर्कन्धूदिधिषूरिति ऊप्रत्ययो निपातनादित्वम् ॥

कफोणिः । पुं । कूर्परे । भुजमध्यग्रन्थौ । कोहणी इति भाषा ॥ कं सुखं स्फोरयति । स्फुरस्फुरणे सञ्चलने च । नलन्तः । अच्छः ॥ पृ० । यद्वा । केन सुखेन फणसि स्फुरति वा । फण० । स्फुर० । इन् । पृ० ॥

कफोणी । स्त्री । कूर्परे ॥



कफोतक्लेशः । पुं । कफस्य वमनायोपस्थितौ ॥

कबन्धः । पुं । उदरे ॥ धूमकेतौ ॥ राहौ ॥ रक्षोविशेषे ॥ न । जले । उदके ॥ पुं । न । क्रियायुक्तशिरःशून्यकलेवरे ॥ कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम् ॥ यथा । मनुष्याणां सहस्रेषु हतेषु हतमूर्द्धसु । तदावेशात्कबन्धः स्यादेकोऽमूर्द्धा क्रियान्वितः ॥ अपिच । नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दशकोटयो निपतिता एकः कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलच्चलत्खेशिरस्तोघाक्कोटिनिपातनैरघुपतेः कोदण्डघण्टारवः ॥ इति प्राचीनाः ॥ कं सुखं बध्नाति । बन्धबन्धने । कर्मण्यण् ॥ कं बध्यते छिद्यतेऽस्मात् । घञ् ॥ केन वायुना बध्यते वा । को वायुरेव बन्ध आश्रयो यस्य वा ॥

कबन्धी । पुं । ऋषिविशेषे ॥

कवित्थः । पुं । कपित्थवृक्षे ॥ कबयः तिष्ठन्त्यत्र ष्ठा० । सुपिस्थ इति कः । पृ० ॥

कबिलः । पुं । कपिलवर्णे ॥ त्रि । कपिलवर्णके ॥

कभस् । न । रोहिणीनक्षत्रे ॥

कम् । अ । पादपूरणे ॥ जले ॥ मस्तके ॥ सुखे ॥ मङ्गले ॥ निन्दायाम् ॥

कम्यते । कमु° । णिङभावे विच् ॥

कमठः । पुं । कच्छपे ॥ दैत्यविशेषे ॥ मुनिभाजने ॥ शल्लक्याम् ॥ भगवतोऽवतारविशेषे ॥ न । मुनीनां जलपात्रविशेषे । बक्री बलकी खोट इति भाषाप्रसिद्धे ॥ काम्यते । कमु° । कमेरठः ॥ के जलेमठतिवा । मठमदनिवासयोः । पचाद्यच् ॥

कमठी । स्त्री । कच्छप्याम् । दुल्याम् ॥ स्वल्पकूर्मजातौ ॥ शल्लक्याम् ॥ पुंयोगादिति जातेरितिवा ङीष् ॥

कमण्डलुः । पुं । न । करके । कुण्ड्याम् । सन्न्यासिनां मृत्काष्ठादिमयेपात्रे ॥ अलाबुं दारुपात्रञ्च मृन्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥ पुं । प्लक्षपादपे ॥ चतुष्पाज्जातिविशेषे ॥ कस्य प्रजापतेर्जलस्य वा मण्डःसारः । तं लाति । ला° । मितद्र्वादित्वात् डुः ॥ यद्वा । मण्डनम् । मण्डिभूषायाम् ॥ घञ् । कस्य मण्डभूषां लाति । डुः ॥

कमनः । पुं । कामे ॥ अशोकवृक्षे ॥ ब्रह्मणि ॥ त्रि । कामुके ॥ कामयते कमु° । कर्त्तरिल्युट् ॥ अभिरूपे । कमनीये । मनोहरे ॥ अनुदात्तेश्चेतिकर्मेयुच् ॥

कमनच्छदः । पुं । कङ्कपक्षिणि ॥

कमनी । स्त्री । कामयित्र्याम् । ङीप् ॥

कमनीयः । त्रि । कामनायोग्ये । वल्गुनि । मनोहरे । रुचिरे । कान्ते । शोभने ॥ कमेरनीयर् ॥

कमरः । त्रि । कामकोष्ठिते । कामिनि ॥ कामयते । कमु° । अर्त्तिकमिभ्रमीत्यरच्चित् ॥

कमलः । पुं । मृगविशेषे । कुरङ्गे ॥ न । जले । ताम्रे ॥ क्लोमनि ॥ भेषजे ॥ सारसपक्षिणि । जलजे । पद्मे ॥ अस्यगुणाः । कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥ विशेषतः सितंपद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥ धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकमिति ॥ षण्मात्रस्य सप्तम ऽऽ। प्रभेदे ॥ कामयते काम्यते वा । कमु° । णिङभावे वृषादिकलच् ॥ कञ्जलम् अलति । अलभूषणादौ । मू° कोषा ॥ ध्रुवकप्रभेदे ॥ यथा । उक्तोमलयतालेन लघुमध्ये स्फुरेद्गुरुः । सप्तदशाक्षरैर्युक्तःकमलोऽयं भयानके इति ॥

कमलखण्डम् । न । कमलानांसमूहे । कमलादिभ्यःखण्डः ॥

कमलच्छदः । पुं । पद्मदले ॥ पद्मपत्रे ॥

कमलजः । पुं । अब्जयोनौ । धातरि ॥ कमले जातः । जनी । डः ॥

कमला । स्त्री । लक्ष्म्याम् । श्रियि ॥ कमलालयस्थायां देव्याम् ॥ वरस्त्रियाम् ॥ कालकट्टादिपत्तने कमलानींबू इति ख्याते फलविशेषे । यथा । रम्भाफलं लिम्बिडीकं कमलानागरङ्गकम् । फलान्येतानि भोज्यानि रम्योऽन्यानि विवर्जयेदिति तन्त्रसारे पुरश्चरणप्रकरणम् ॥ काम्यते । कमु° । वृषा°कलच ॥ कमलम् अस्ति अस्याः । अर्शआद्यच् वा ॥ छन्दोविशेषे । यथा । द्विगुणनगणसहितः सगणः इह विहितः । फणिपतिमतिविमला क्षितिपभवतिकमलेति ॥ सवैयान्तर्गता कमला यथा । वसुभिः प्रमिताः सगणा विहिताः पुनरेकमितो निहितो गुरुरन्ते । यदि सल्कवयो विलसन्मतयो ऽभिधया कमलेति तदा कलयन्ते । विदधत्यनया रमणीयतया रसनापरिखेलितया तुलकान्ते । यशवन्तनरेशविशोभियशोधिकशोभितसाविदधातु मुदन्ते इति ॥

कमलाश्रयः । पुं । सिद्धस्थानविशेषे ॥ यथा । कमलालये महास्थाने कमलाख्यो महेश्वरः । कमलावनदेयानी सकलार्थप्रदायिनी इत्यागमोक्तिः ॥

कमलालया । स्त्री । लक्ष्म्याम् ॥ कमलम् आलयो यस्याः ॥

कमलासनः । पुं । धातरि ॥ कमलम् आसनम् अस्य ॥ न । आसनविशेषे ॥

कमलासनस्थः । पुं । पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थे भगवन्नाभिकमलासनस्थे विधातरि ॥

कमलिनी । स्त्री । पद्मिन्याम् ॥ पद्मखण्डे । पद्माकरे ॥ कमलानि सन्त्यत्र । पुष्करादिभ्यो देशे इति इनिः ॥

कमलोत्तरम् । न । कुसुम्भपुष्पे ॥ कमलादुत्तरम् ॥

कमा । स्त्री । शोभायाम् ॥ इति राजनिर्घण्टः ॥

कमिता । त्रि । कामुके ॥ कमेर्णिङभावे तृच् ॥

कम्पः । पुं । गात्रादिचलने । वेपथौ । वेपने ॥ कम्पनम् । कपि किञ्चिच्चलने । भावे घञ् ॥

कम्पनः । पुं । शिशिरत्तौ ॥

कम्पनम् । त्रि । कम्रे । लोले । चञ्चले ॥ न । कम्पे ॥ कम्पनशीलः । कपि° चलनशब्दार्थादिति युच् ॥

कम्पलक्ष्मा । पुं । वायौ ॥

कम्पाकः । पुं । वायौ ॥

कम्पितम् । न । कम्पने । वेपने । कम्पे

करग्रहारम्भः । पुं । नववर्षसम्बन्धिनः करस्य राजप्रजाभ्यः प्रथमादाने । पु ण्याहइतिप्रसिद्धे ॥ तद्दिननिर्णयो यथा । तीक्ष्णोग्रवर्जीतरभेषु लग्ने शीर्षोदये भानुदिने शुभाह्ने । कुर्या दनुक्तानि समीहितानि करग्रहार म्भमपिप्रजाभ्यइति ॥

करग्राहः । पुं । पाणिग्राहे ॥ करंगृह्णा ति । ग्रह० । अण् ॥

करघर्षणः । पुं । दधिमन्थनदण्डे । त क्रादे ॥ न । हस्तघर्षणे ॥

करघर्षी । पुं । क्षुद्रमन्थानदण्डे । छो टीरवीइतिभाषा ॥

करङ्कः । पुं । मस्तके ॥ अस्थिनारिके लफलास्थनि । नारियलकाखोलइ तिभाषा । पोखानारियलइतिच ॥ शरीरास्थि ॥ इक्षुविशेषे ॥

करङ्कशालि । पुं । करङ्काभिधेक्षौ ॥

करच्छदः । पुं । शाखोटवृक्षे । सिहोडा इतिभाषा ॥

करच्छदा । स्त्री । सिन्दूरपुष्परास्। ॥

करजः । पुं । नखे ॥ करञ्जवृक्षे ॥ न । व्याघ्रनखाख्यगन्धद्रव्ये । करजं नखं त द्दिव ॥ करेभ्यजन्यते । जनी० । अ न्यत्रापीतिडः ॥ कं सुखं जलं वा रञ्ज यति । रञ्जरागे । कर्मण्यण् । त्यन्त रकेतिनिर्देशादकाडित्यपिनलोपः । संज्ञापूर्वकत्वान्नवृद्धिः ॥

करज्योडिः । पुं । हस्तज्योडिवृक्षे । हा थाजोडीइतिभाषा ॥ इतिराजनिर्घ ण्टः ॥

करञ्जः । पुं । वृक्षविशेषे । करंजुया इतिभाषाप्रसिद्धे ॥ स षड्विधः । तत्र गौडभाषायां डहरकरञ्जस्य पर्यायाः । चिरविल्वोनक्तमालः करजश्च करञ्ज के ॥ नाटाकरञ्जस्य पर्यायाः । प्रकीर्यः पूतिकरञ्जः पूतिकः कलिकारकः ॥ गौ डभाषया काँटाकरञ्ज गाँठियाकरञ्ज इतिप्रसिद्धस्य । घृतपूर्णकरञ्जस्य घृतपर्णः ॥ मांकडा करञ्जस्य । मर्कटी ॥ विषकरञ्जस्य । अङ्गारवल्लरी ॥ इति ॥ अम्लकरञ्ज स्य पर्यायास्तु । करमर्दीषेणेक्षुशाक राम्लःकरमर्दकः । इति ॥ कं सुखं ज लं वा रञ्जयति । रञ्जेःकर्मण्यण्॥

करञ्जकः । पुं । करञ्जे ॥ स्वार्थेकन् ॥ करञ्जःकटुकस्तीक्ष्णो वीर्योष्णोऽनि लदोषहृत् । कुष्ठोदावर्त्तगुल्मार्शो व्रणकृमिकफापहः ॥ तत्पत्रंकफवा तार्शःकृमिशोथहरम्परम् । भेदनं कटुकम्पाकेवीर्योष्णं पित्तलंलघु ॥ तत्फलं कफवातघ्नं मेहार्शःकृमिकुष्ठ जित् । घृतपूर्णकरञ्जोपिकरञ्जसदृ शोगुणैः ॥ भूङ्गराजे ॥

करञ्जफलः । पुं । कपित्थवृक्षे ॥

करञ्जी । स्त्री । उदकीर्य्यां । महाकरञ्जे ॥ करञ्जी स्तम्भिनी तिक्ता तुवरा कटुपाकिनी । वीर्य्योष्णा वमिवाताशःक्रिमिकुष्ठप्रमेहजित् ॥

करटः । पुं । गजगण्डे ॥ कुसुम्भवृक्षे ॥ निन्द्यजीवने ॥ एकादशाहादिश्राद्धे ॥ दुर्दुरूटे ॥ वायसे ॥ वाद्यविशेषे ॥ करोति शकुनम् । शकादिभ्योऽटन् ॥ केति रटतिवा । रटशब्दे । पचाद्यच् ॥

करटकः । पुं । करटार्थे ॥ स्वार्थे कन् ॥

करटा । स्त्री । दुःखदोह्यायाङ्गवि ॥ अजाद्यतष्टाबिति अदन्तलक्षणाट्टाप् ॥

करटी । पुं । हस्तिनि ॥

करटिनी । स्त्री । हस्तिन्याम् ॥

करटुः । पुं । कर्करेटौ । करकटियाइतिगौडभाषाप्रसिद्धपक्षिवि० ॥

करणम् । न । हेतौ । साधकतमे । क्रियासिद्धौ प्रकृष्टोपकारके ॥ यद्व्यापारानन्तरमव्यवधानेन फलोत्पत्तिस्तस्मिन्नित्यर्थः । तेनदात्रेण धान्यं लुनातीत्यत्र हस्तादेः करणत्वेपि दात्रस्यैव करणत्वम् । तथाचोक्तम् । कारणाव्यवधानेपि क्रियानिष्पत्तिकारणम् । यद्वैविवक्षितं तेषु करणत्वं प्रकीर्त्तितमिति ॥ साधने ॥ कर्म्मणि ॥ तिथ्यर्द्धपरिमितेषु ववाद्येकादशसु ॥ यथा । ववाख्यबालवकौलवतैतिलगरवणिजविष्टयः सप्त । जगदुरथैतिचराणि तिथिखण्डात्मकानि करणानि ॥ अचराण्युत्तरशकलाद्यामास्यन्ताच्चतुर्द्दशीतस्थाः । शकुनिचतुष्पदनागकिंस्तुघ्नानि भवन्ति करणानि ॥ सितादिः करणव्येको यातत्तिथ्यर्द्धसञ्चयः । सप्तभक्तो विशेषेण मितं स्याद्भवतो गतम् ॥ चराणि विष्टिं करणान्यृते चसा भवन्ति सौम्याखिलकर्म्मसिद्धये । तथैव धीराणि च पितृकर्म्मणो विष्टिर्विघातादिविधौ वरा भवेदिति ॥ हस्तलेखे ॥ नृत्यप्रभेदे ॥ नृत्यविषयकाष्टोत्तरशतकरणविशेषेषु ॥ यथा । करणानान्तु सर्वेषां सामान्यं लक्षणं त्विदम् । प्रायोवामकरो वक्षःस्थितोऽन्यः पुरतोऽनुगः ॥ पादाभ्याङ्करणं चेयं तदिहाष्टोत्तरं शतम् । निकुञ्चितं पार्श्वक्रान्तमतिक्रान्तं विवर्त्तकम् ॥ विद्युद्भ्रान्तं गजक्रीडं कान्तञ्च गरुडप्लुतमित्यादि सङ्गीतदामोदरः ॥ गीतप्रभेदे ॥ क्रियाप्रभेदे ॥ व्रतबन्धे ॥ कायस्थसंहतौ ॥ कृतादौ ॥ क्षेत्रे ॥ गात्रे । काये ॥ संवेशने ॥ कायस्थे ॥ इन्द्रिये ॥ वर्णानास्पष्टतादौ ॥ योगिनामासनादौ ॥ न्याय

मते व्यापारवद्साधारणं कारणङ्करणम्। समवाय्यसमवायिनिमित्तकारणमध्येयद्साधारणंकारणं तदेव करणमिति॥साङ्ख्य नये इन्द्रियेषु ॥ यथा । करणं त्रयोदशविधम्। इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणम्। त्रयोदशविधेकरणेऽवान्तरविभागंकरोति । अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्त्रविषयाख्यम्। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरङ्करणम्॥३२॥ च सूत्रार्थः। अन्तः करणंत्रिधम्। बुद्धिरहङ्कारोमनइति । शरीराभ्यन्तरवृत्तित्वादन्तःकरणम्॥ दशधाबाह्यमिन्द्रियम् त्रयस्यान्तःकरणस्य विषयाख्यम् । विषयमाख्यातीति विषयाख्यम् । सङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति । तत्र बुद्धीन्द्रियाण्यालोचनेन कर्मेन्द्रियाणियथास्वंव्यापारेण। बाह्याभ्यन्तरयोःकरणयोर्विशेषमाह। साम्प्रतकालमित्यादि । साम्प्रतकालं वर्त्तमानकालंवाह्येन्द्रियम्।वर्त्तमानसमीपमनागतमपिवर्त्तमानम्। अतीतानागतमपिवर्त्तमानविषयाभवति । त्रिकालमाभ्यन्तरं करणम् । तद्यथा । पूरस्रोदाद्भूतवृष्टिः सलिलपूरात्



गिरिद्दनगनिकुञ्जे असत्यपघातके पिपीलिकाण्डसञ्चरणादिहभविता वृष्टिरिति, तदनुरूपाश्चसङ्कल्पाभिमानाध्यवसाया भवन्तीति ॥ श्रोत्रादिपञ्चज्ञानेन्द्रियाणि वागादि पञ्चकर्मेन्द्रियाणि मनो बुद्धिश्चेति द्वादशसंख्याके ॥ करणवर्गे मनोबुद्धिश्चेतिदृत्तिविशेषौ वृत्तिमांस्त्वहङ्कारः कर्त्तैव । चिदाभासस्तु सर्वेचैवा ऽविशिष्टः । अनात्मा भौतिकः कल्पितश्च ॥ सेतिकर्त्तव्यताके साधने ॥ धात्वर्थे ॥ पुं । वैश्याच्छूद्रासुते । अयंलिखनवृत्तिः कायस्थइतिख्यातः । इति भरतः ॥ धनधान्याध्यक्षताच राजसेवातथैवच। द्विजातेः परिचर्याच दुर्गान्तः पुररक्षणम् ॥ एषा पारशवस्योक्ताउग्रस्य करणस्यच । प्रोक्ता उशनसा वृत्तिः कभयन्सुखप्रदा ॥ व्रात्यात्तत्रियात् सवर्णायामुत्पन्नेभल्लमल्लादिसंज्ञके ॥ यथा। झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्च करणश्चैव खसोद्रविडएवचेतिमनो १०ऽध्याय. ॥ वानरादौ ॥ किरति कीर्यते ऽनेनवा । क्त॰ । बहुलमन्यत्रापीतियुच् । कृत्यल्युटो बहुलमिति ल्युट् ॥ करणकार्यम् ।न। इन्द्रियाणाङ्कार्ये ॥ आ

हरणादिक्रियाणां सकर्मकत्वात् किं कर्म कतिविधञ्चेत्यतआह ॥ कार्य्यञ्चतस्य दशधा हार्य्यन्धार्य्यं प्रकाश्यञ्च । तस्य त्रयोदशविधस्य करणस्य दशधाकार्य्यम् । आहार्य्यम् धार्य्यम् प्रकाश्यञ्च । आहार्य्यं व्याप्यम् कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः ज्ञानेन्द्रियाणां शब्दस्पर्शरूपरसगन्धमया यथास्वं व्याप्याः । ते च दिव्यादिव्यतया दशधा । एवंधार्य्यमपि अन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम् तच्च पार्थिवादि पाञ्चभौतिकम् शब्दादीनां पञ्चानां समूहः पृथिवीति । तेच दिव्यादिव्यतया दशधेति धार्य्यमपि दशधा । एवं बुद्धीन्द्रियाणां प्रकाश्यं दशधेति शब्दादीनां पञ्चानां दिव्यादिव्यभेदात् । करणानाङ् कार्य्यम् ॥

करणत्राणम् । न । मस्तके ॥

करणव्यापारः । पुं । करणानां व्यापारे ॥ कारकविशेषः करणम् । नच व्यापारावेशंविना कारकत्त्वमिति व्यापारमाह । तदाहरण धारण प्रकाशकरम् । तत्रकर्मेन्द्रियाणि वागादीनि आहरन्ति स्वस्वविषयं यथा स्वमुपाददते स्वव्यापारेण व्याप्नुवन्तीतियावत् । बुद्ध्यहङ्कारमनांसितु स्ववृत्त्या प्राणादि लक्षणया धारयन्ति । बुद्धीन्द्रियाणितु प्रकाशयन्ति ॥

करणाधिपः । पुं । जीवे । हृषीकेशे ॥ श्रोत्रादिचतुर्दशेन्द्रियाणामधिपा यथा । श्रोत्रस्य दिक् । त्वचोवातः । चक्षुषः सूर्य्यः । रसनायाः प्रचेताः । घ्राणस्याश्विनौ ॥ वाचो वह्निः । हस्तस्य इन्द्रः । पादस्य विष्णुः । पायोर्मित्रः । उपस्थस्य प्रजापतिः ॥ मनसश्चन्द्रः । बुद्धेश्चतुर्मुखः । अहङ्कारस्य शङ्करः । चित्तस्याच्युत इति ॥

करणाधिपाधिपः । पुं । जीवस्येश्वरे ॥ करणाधिपस्य अधिपः ॥

करणी । स्त्री । वैश्या च्छूद्रायामुत्पन्नायाम् ॥ ल्युडन्तात् ङीप् ॥

करणीयः । त्रि । कर्त्तव्ये । कार्य्ये ॥ कृञोऽनीयर् ॥

करण्डः । पुं । मधुकोषे ॥ असौ । खड्गे ॥ कारण्डवे खगे ॥ दलाढके ॥ वंशादिरचिते भाण्डविशेषे । करंडीकरण्डी इतिचभाषा प्रसिद्धे पुष्पादिधारणार्थे भाण्डे ॥ समुद्गे । सम्पुटे ॥ करोति । डुकृञ्० । अण्डन्कृसृभृवृजभ्यण्डन् ॥

करण्डा । स्त्री । कालखण्डे । यकृति ॥

करपत्री । पुं । मत्स्ये ॥ इन्नन्तः ॥

करतलः । पुं । हस्ततले । हपेली इ तिभाषा ॥ गुर्वन्त ॥ ऽ चतुर्मात्रे ॥

करतालम् । न । वाद्यविशेषे । खड़ताल इतिभाषा ॥ यथा । शिवागारे झल्लकञ्च सूर्यागारे च शङ्खकम् । दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत् ॥ झल्लकं कांस्यनिर्मितकरतालकमिति रघुनन्दनभट्टाचार्येण व्याख्यातम् ॥ पुं । डगणे ॥ ऽ ऽ आदिगुरुद्विकले ॥

करताली । स्त्री । करतलध्वनौ ॥ तथाच । यथा । न स्याद्दोलीकपटकरतालीपटुरवः । इत्युद्भटः ॥ करतालिव ड़ताल इतिचभाषा प्रसिद्धे वाद्यविशेषे । करङ्खीम् ॥

करतोयम् । न । वर्षोपलजले ॥

करतोया । स्त्री । कामरूपदेशप्रसिद्धनद्याम् । सदानीरायाम् ॥ कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्त्तनात् ॥ गौरीविवाहसमये शङ्करकरगलितसम्प्रदानतोयप्रभवत्वात् करस्य तोयम् तदत्रास्ति । अर्शआद्यच् ॥ अवस्मृतिः । अथादौ कर्कटे देवी त्र्यहं गङ्गारजस्वला । सर्वारक्तवहा नद्यः करतो याम्बुवाहिनीति ॥

करदीकृतः । त्रि । वशीकृते ॥ करम्भागं ददाति । डुदाञ् । कः । ततः च्विः । अकरदः करदः सम्पद्यमानः कृतः करदीकृतः । अस्य च्वावितीत्वम् ॥

करद्रुमः । पुं । कारस्करवृक्षे ॥

करपत्रम् । न । क्रकचे । करवत करात इतिचभाषा ॥ अम्बुक्रीडायाम् ॥ करेण करात् वा पतति । पतलृ । सर्वधातुभ्यः ष्ट्रन् ॥

करपत्रवान् । पुं । तालतरौ ॥ त्रि । करपत्रयुते ॥ करपत्रमस्यास्ति मतुप् ॥

करपत्रिका । स्त्री । अम्बुलीलायाम् ॥

करपर्णः । पुं । भिण्डीतिप्रसिद्धे फलशाकवृक्षे । भिण्डायाम् ॥ रक्तैरण्डे ॥

करपल्लवः । पुं । अङ्गुलौ ॥

करपात्रम् । न । } जलक्रीडायाम् ॥
करपात्रिका । स्त्री । }

करपालः । पुं । खड्गे ॥ करम्पालयति । पालरक्षणे । कर्मण्यण् ॥

करपालिका । स्त्री । ह्रस्वे गदाकारे हस्तदण्डे । सोटा इतिप्रसिद्धे । इतिभरतः ॥ एकधाराखड्गे । इतिस्वामी ॥ ईस्योम् ॥ अणन्तान्ङीप् । कन् ॥

करपीडनम् । न । विवाहे ॥

करप्रचेयः । त्रि । पाणिग्राह्ये ॥ करेण

प्रचेयः ॥

करभः । पुं । मणिबन्धा द्वाकनिष्ठं करस्य बहिर्भागे ॥ करिशावके ॥ उष्ट्रपुत्रे । वीतादितिभाषा ॥ उष्ट्रे ॥ नखनाम गन्धद्रव्ये ॥ कृणाति किरत्यनेन कीर्यतेवा । कृविक्षेपे कृणूहिंसायांवा । कृशृशलिकलिगर्दिभ्योऽभच् ॥ करे भातिवा । भादीप्तौ । सुतिकः ॥

करभकाण्डिका । स्त्री । उष्ट्रकाण्डीरे ॥

करभञ्जिका । स्त्री । उष्ट्कीर्ये । करभञ्ज्याम् ॥

करभप्रिया । स्त्री । क्षुद्रदुरालभायाम् ॥

करभवल्लभः । पुं । कपित्थवृक्षे ॥ पीलुवृक्षे ॥

करभादनी । स्त्री । क्षुद्रदुरालभायाम् ॥

करभी । पुं । हस्तिनि ॥

करभी । स्त्री । उष्ट्रयोषायाम् । वाच्याम् ॥

करभीरः । पुं । सिंहे ॥ इतिशब्दरत्नावली ॥

करभूषणम् । न । कङ्कणे ॥ करंभूषयति करो भूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ हस्ताभरणमात्रे ॥

करभोरूः । स्त्री । उत्तमस्त्रीविशेषणे ॥ करभइव ऊरूयस्याःसा । ऊरूत्तरपदादौपम्येइत्यूङ् ॥

करमर्द्दः । पुं । गुवाकवृक्षे । तन्तुसारे ॥

करमरी । पुं । बंदुआइतिप्रसिद्धे । बन्दिनि ॥ इतित्रिकाण्डशेषः ।

करमर्द्दः । पुं । करमर्द्दके । करौंदाइतिभाषा ॥ करंमर्द्दनाति । मर्द्दचोदे । कर्मण्यण् ॥ लघुद्दीर्घफलाभ्यान्तु करमर्द्दद्वयं मतम् । करमर्द्दद्वयं त्वाम्लं गुरु दाहरम् ॥ उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत्पक्वं मधुरं रूक्षं लघु पित्तसमीरजित् ॥

करमर्द्दकः । पुं । कृष्णपाकफले । करौंदाइतिभाषा । सुषेणे । अविग्ने ॥ करमर्द्दएव । स्वार्थेकन् ॥

करमर्द्दिका । स्त्री । वनकरमर्द्दके ॥ करमर्द्दाल्लघुफला सा ज्ञेया करमर्द्दिका ॥

करमर्द्दी । पुं । करञ्जवृक्षे ॥

करमर्द्दी । स्त्री । करमर्द्दकवृक्षे ॥

करमालः । पुं । खतमाले । धूमे ॥ इतिहेमचन्द्रः ॥

करमाला । स्त्री । करपर्वरूपमालायाम् ॥

करमुक्तम् । न । बरछी भाला इतिभाषाप्रसिद्धे अस्त्रविशेषे ॥

करम्भः । त्रि । व्यामिश्रे । मिश्रिते ॥ करोति । डुकृञ् । कृकदिकडीभ्य स्मच् ॥

करम्बितः । त्रि । सम्पृक्ते । मिश्रिते ॥

करम्भः । पुं । दधिमिश्रितसक्तुषु ॥ केन जलेन रभ्यते मिश्रीक्रियते । केन वायुना वा रभ्यते । रभिरनेकार्थः । अकर्त्तरिचेति घञ् । रभेरशब्लिटोरितिनुम् ॥

करम्भकम् । न । कर्कसारे । करम्भे ॥

करम्भा । स्त्री । प्रियङ्गौ ॥ शतावर्य्याम् ॥

कररुहः । पुं । नखे ॥ करे रोहति । रुहेरिगुपधेति कः ॥

करर्द्धिः । स्त्री । करताल्याम् ॥ करसम्पद्धि ॥ करस्य ऋद्धिः ।

करवालः । पुं । कृपाणे ॥ करं वलति । करेण वलति वा । वलप्राणने । कर्मण्यण् । ज्वलादिभ्योणो वा । यद्वा । वलनंवालः । वलसंवरणे । घञ् । करेवालोऽस्य करेण वल्यते वा । कर्मणि घञ् ॥

करवालिका । स्त्री । ईल्याम् । करपालिकायाम् ॥ करं वलते । वलहिंसादानयोः । अच् । करेण वाल्यते वा । णिजन्तात्खच् । कन् ॥

करवी । स्त्री । हिङ्गुपत्रे ॥

करवीरः । पुं । कृपाणे । खड्गे ॥ दैत्यविशेषे ॥ ब्रह्मावर्त्ते दृषद्वतीनदीतीरे चन्द्रशेखरराजपुरे ॥ श्मशाने ॥ विषप्रभेदे । करवीरमूले ॥ कनेर इतिप्रसिद्धे वृक्षे । मतिहासे । हयमारके ॥ करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ॥ वीर्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ रक्तश्वेतप्रभेदेन करवीरद्वयं मतम् ॥ करं वीरयति । वीरविक्रान्तौ । कर्मण्यण् ॥ न । अस्यपुष्पे ॥ करवीरस्य विकारो वा पुष्पम् । पुष्पमूलेषु बहुलमित्यणो लुक् ॥

करवीरकः । पुं । अर्जुनवृक्षे ॥ करवीरार्थे ॥

करवीरकन्दसंज्ञः । पुं । तैलकन्दे ॥

करवीरभूषा । स्त्री । आढक्याम् । अरहड इतिभाषा ॥

करवीरी । स्त्री । अदितौ । देवमातरि ॥ सद्गव्याम् । श्रेष्ठगव्याम् ॥ पुत्रवत्याम् ॥

करशाखा । स्त्री । अङ्गुलौ ॥ करस्य शाखाइव ॥

करशीकरः । पुं । वमथौ । हस्तिशुण्डानिर्गतजलकणे ॥ करस्य शीकरः ॥

करशूकः । पुं । नखे ॥ इतित्रिकाण्डशेषः ॥

करसूत्रम् । न । विवाहादौ मङ्गलार्थं मूर्द्धादिमये हस्तसूत्रे ॥ यागादौमणिबन्धसूत्रत्वप्रचारात् ॥

करहाटः । पुं । पद्मादिमूले । शिफा कन्दे ॥ मदनद्रुमे ॥ महापिण्डीतरौ ॥ देशविशेषे ॥ करंहाटयति । हटदीप्तौ । ण्यन्तः । कर्मण्यण् ॥

करहाटकः । पुं । मदनपादपे । मयनफल इति भाषा ॥ स्वार्थेकन् ॥ न । हस्तसम्बन्धित्वर्थो ॥

करालः । त्रि । विकटे । भयानके ॥

करामर्द्दः । पुं । करमर्द्दे ॥

करामुकः । पुं । अविघ्ने । सुपेणे ॥

करामलकः । पुं । करमर्द्दे ॥

करायिका । स्त्री । कूटपूर्थाम् । करांकी इति गुरुसलईतिचभाषा ॥

करारोटः । पुं । अङ्गुरीयके ॥

करालः । पुं । गर्जनतैल इति गौडभाषाप्रसिद्धे सर्जरसयुक्ततैले । धूनतैले ॥ भल्लाततैले ॥ राक्षसविशेषे ॥ दन्तरोगविशेषे । यथा । शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः । करालान् विकृतान् दन्तान् करालेन स सिध्यति ॥ न । कृष्णकुठेरके । श्यामतुलसी इतिभाषा ॥ वेसवारप्रभेदे ॥ यथा । तप्तस्नेहे प्रचेल पूर्वेवेसवारकसंज्ञकम् । पाकप्रापितसौरभ्यं करालं सूदकैर्मतमिति ॥ त्रि । दन्तुरे ॥ तुङ्गे । उच्चे ॥ विकृते । भीषणे ॥ करेण लाति । ला० । आतश्चोपसर्गे इति सुपीति योगविभागाद्वा कः ॥ यद्वा । अलमूषणादौ । कर्मण्यण् ॥

करालकः । पुं । करालार्थे ॥

करालत्रिपुटा । स्त्री । काञ्चिकायाम् । लङ्काधान्ये ॥

कराला । स्त्री । शारिवायाम् ॥

करालास्यः । त्रि । दन्तुरवदने ॥ करालं दन्तुरमास्यं यस्य ॥

करालिकः । पुं । वृक्षे ॥ इतिहेमचन्द्रः ॥

करालितः । त्रि । भीषिते । पीडिते ॥

कराली । स्त्री । वह्नेः सप्तजिह्वान्तर्गतजिह्वाविशेषे ॥ देवीविशेषे ॥ बह्वादित्वाच्चेति पाक्षिको ङीप् ॥

करास्फोटः । पुं । आस्फोटिते । वक्षःस्थले बाह्वोः द्वितीयहस्तेनताडने ॥

करिक । पुं । अरिमेदवृक्षे । विटखदिरे ॥

करिकणावल्ली । स्त्री । चविकावृक्षे ॥

करिका । स्त्री । नखव्रणे ॥ करिका नखरेखिकेति वैजयन्ती ॥

करिकुसुम्भः । पुं । नागकेशरचूर्णके ॥

करिगर्ज्जितम् । न । वृंहिते । हस्तिगर्ज्जने ॥

करिणी । स्त्री । देवताभेदे ॥ धेनुकायाम् । हस्तिन्याम् ॥ इन्नन्तात्नान्तलक्षणो ङीप् ॥

करिद्दारकः । पुं । सिंहे ॥

करी । पुं । हस्तिनि ॥ करः शुण्डा अस्ति अस्य । इनिः ॥ लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् इयं हि श्रीर्यत्करिणः इति चाणक्यः ॥

करिनासिका । स्त्री । यन्त्रविशेषे ॥

करिपत्रम् । न । तालीशपत्रे ॥

करिपिप्पली । स्त्री । गजपिप्पल्याम् । चविकाफले ॥ करीरपिप्पली इत्यन्ये ॥

करिपोतः । पुं । करिशावके ॥

करिबन्धः । पुं । प्रारब्धौ । गजबन्धनस्तम्भे ॥ इतिहारावली ॥

करिमाचलः । पुं । सिंहे ॥

करिमुखः । पुं । गणेशे । विनायके ॥ करिणोमुखमिव मुखमस्य ॥

करिरतम् । न । रतबन्धान्तरे ॥ भूगतस्तनभुजास्यमस्तका सुन्नतां स्वयमधोमुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे करिरतं तदुच्यते ॥ करिपदमिति पाठान्तरम् ॥

करिशावकः । पुं । कलभे । हस्तिशिशौ ॥ करिणः शावकः ॥

करिष्ठः । त्रि । अतिशयेन कर्त्तरि ॥ अतिशायने इष्ठन् । तुरिष्ठेमेयस्सु ॥

करिस्कन्धः । पुं । करीणां समूहे ॥ नरकरितुरगाणां स्कन्धश्च ॥ गजांसे ॥

करीरः । पुं । घटे ॥ ककरे । ग्रन्थिले । करील इति भाषाप्रसिद्धे वृक्षे ॥ करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः । दुर्नामकफवातामगरशोथव्रणप्रणुत् ॥ पुं । न । वंशाङ्कुरे ॥ कृणाति किरति कीर्यते वा । कृहिंसायाम् कृविक्षेपे वा । कृशॄपृकटीति ईरन् ॥ करिणमीरयति वा । ईर० । कर्मण्यण् ॥

करीरफलम् । न । कारीरे । टींट इति ख्याते ॥

करीरा । स्त्री । हस्तिदन्तमूले ॥ चीरिकायाम् । झिल्ल्याम् । झींगुर इति भाषा । सेनभींगरनींदरा इति च ख्याते कीटे ॥ अजाद्यतष्टाप् ॥

करीरिका । स्त्री । दन्तिनां दन्तमूले ॥
करीरी । स्त्री । चीरिकायाम् ॥

करीषः । पुं । न । शुष्कगोमये । छगणे । छाणा कण्डा इति भाषा ॥ कीर्यते । कृविक्षेपे । कॄतॄभ्यामीषन् ॥

करीषङ्कषा । स्त्री । वात्यायाम् ॥ करीषं कषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषु कषः इति खच् । मुमागमः ॥

करीषाग्निः । पुं । छागणे । गोमयानले ॥

करुणः । पुं । करणानींबू इति भाषाप्र

सिद्धे वृक्षविशेषे ॥ शृङ्गाराद्यष्टरसान्तर्गततृतीये रसे ॥ इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ॥ बुद्धभेदे ॥ सर्वभूताभयदातरि परमहंसपरिव्राजके ॥ त्रि । दीने ॥ सदये । दुःखितेषु दया करुणा तद्वति ॥ अर्श आद्यच् ॥ करोति मनः । डुकृञ् । कृवृदारिभ्य उनन् ॥

करुणमल्ली । स्त्री । नवमल्लिकायाम् ॥

करुणविप्रलम्भः । पुं । पूर्वरागादिचतुर्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भविशेषे ॥

करुणा । स्त्री । कृपायाम् । दयायाम् । परदुःखहानीच्छायाम् ॥ दुःखितेषु कथन्तु नाम्नैषां दुःखनिवृत्तिः स्यादिति कृपासिषभावये नोपेक्षा न मात्सर्यम् ॥ करणम् । कृवृदारिभ्य उनन् । टाप् ॥

करुणापरः । त्रि । दयालौ । स्नेहते ॥

करुणामयः । त्रि । कृपाप्राचुर्यवति ॥

करुणी । स्त्री । ग्रीष्मपुष्पराम् । रक्तपुष्प्याम् । कंकरखिरुणी इतिलोकभाषा ॥

करूषः । पुं । देशविशेषे ॥

करेटः । पुं । नखे ॥

करेटव्या । स्त्री । यनच्छूपक्षिणि ॥

करेटुः । पुं । स्त्री । कर्करेटौ । करकटिया इतिगौडभाषाप्रसिद्धे विहगे ॥ के जले वायौ वा रेटति । रेट्टभाषणे । मृ० कुः ॥

करेणुः । पुं । इभे । मतङ्गजे । गजे ॥ कर्णिकारवृक्षे ॥ स्त्री । हस्तिन्याम् ॥ करोति । कृञ्ध्यासेणुः ॥ के रेणुरस्येति वा ॥

करेणुभूः । पुं । पालकाप्यमुनौ ॥

करेणुसुतः पुं । मुनिविशेषे ॥ इभशावके । कलभे ॥ करेणोः सुतः ॥

करेन्दुकः । पुं । भूतृणे ॥

करेवरः । पुं । तुरुष्के । सिह्लके ॥

करोटः । पुं । न । शिरोस्थनि ॥ कं वायुं रोटते । रुट० । अच् ॥

करोटिः । स्त्री । शिरोस्थि ॥ कं वायुं रोटते । रुटदीप्तौ प्रतिघाते च । के नेहव्यते वा । इन् ॥ रोटयति वा । रुटिभ्युरादिः । अच इः ॥

करोटिका । स्त्री । शिरोस्थि । कपाले ॥ करोटिरेव । स्वार्थे कन् ॥

करोटी । स्त्री । करोटौ ॥ ङीष् ॥

कर्कः । पुं । कर्कोटके ॥ वह्नौ ॥ शुक्लाश्वे ॥ दर्पणे ॥ घटे ॥ चतुर्थराशौ ॥ कर्कटवृक्षे ॥ कुलीरे ॥ करोति कृणोति क्रियते वा । कृदाधारार्चिकलिभ्यः कः ॥

कर्कचिर्भिटी । स्त्री । चिर्भिटायाम् ।

कर्कटीभेदे ॥

कर्कटः । पुं । वृक्षविशेषे । क्षुद्रामलकसमवृक्षे । कर्कफले ॥ पक्षिवि° । ककरेटै ॥ जलजन्तुविशेषे । कुलीरे । । कांकड़ा इतिभाषा ॥ मेषादिराश्यन्तर्गतचतुर्थराशौ ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । श्रुतकलामलनिर्मलवृत्तयः सुकृतगन्धजलाशयकेलयः । किल नरास्तु कुलीरगते विधौ वसुमतःसुमतोऽर्थिलब्धयः ॥ कर्किलग्ने समुत्पन्नो भोगी सर्वजनप्रियः । मिष्टान्नपानभोगी च जायते स्वजनप्रियः ॥ वालुङ्क्याम् ॥ शाल्मलीफले ॥ स्त्रीणांकरणे ॥ कृणाति । कृञि° । अन्येष्वपीतिविच् । कटति । कटे° । पचाद्यच् । कर् चासौ कटश्च । अहरादित्वाद्रेफः ॥ कर्कइति सौत्रोधातुः । शकादिभ्योटन्वा ॥ कर्कखेतवर्णे टलति । टलगतौ । डो वा ॥

कर्कटकः । पुं । वृक्षविशेषे ॥ कुलीरे ॥ कर्कटएव । स्वार्थे कन् ॥

कर्कटशृङ्गिका । स्त्री । } अजशृङ्ग्याम् ॥ महाघोषायाम् । कुलीरशृङ्ग्याम् । कांकड़ासींगी इतिख्यातायाम् ॥
कर्कटशृङ्गी । स्त्री । }

कर्कटाख्या । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटाधिपः । पुं । चन्द्रे ॥

कर्कटाह्वः । पुं । बिल्ववृक्षे ॥

कर्कटाह्वा । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटिः । स्त्री । वालुङ्क्याम् । इर्वारौ ॥ । शाल्मलीफले ॥ करङ्कटतीति । कटे° । सर्वधातुभ्यइन् । शकन्ध्वादिषु पररूपं वाच्यम् ॥

कर्कटिनी । स्त्री । दारुहरिद्रायाम् ॥

कर्कटी । स्त्री । एर्वारौ । वालुङ्क्याम् । ककड़ी इतिभाषा ॥ कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा सामा पक्का सन्दाग्निपित्तकृत् ॥ अस्याःपाकप्रकारस्तु । लग्नवीजरहिता प्रौढा गुलिकाकारखण्डिता । तलिता सुघृते तप्ते कर्कटीवाम्ललेहिता ॥ विधाय खण्डखर्पटे तदुग्धसोर्ध्वं विभावितं बहुशर्कराभ्याम् । कृतैलघासस्वकटुग्धमेतत प्रतिचर्षरोचनतामातनोति ॥ शाल्मलीफले ॥ देवदालीलतायाम् ॥ कर्कटशृङ्गीवृक्षे ॥ घोटिकावृक्षे ॥ करङ्कटति । कटे° । इन् । पचेङीष् । शकन्ध्वादिः ॥

कर्कंटुः । पुं । करेटुपक्षिणि ॥

कर्कन्धूः । पुं । स्त्री । कोलिपादपे । बदरीवृक्षे ॥ बदरीफले ॥ बेर इतिभाषा । कर्कन्धूः क्षुद्रबदरं कथितम्

पूर्वसूरिभिः । अर्क स्यात् क्षुद्रवर्दरं कषायं मधुरं सनाकं ॥ स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् । शुष्कं भेदाग्निकृत् सर्वं लघुतृष्णाक्लमास्रजित् ॥ इति वैद्यकान्तरे ॥ कर्कं ददाति । डुधाञ् ० । अन्दूदृन्भूजम्बेति निपातितः कू प्रत्ययान्तः । कर्कं दधाति वा । निपातनान्नुम् ॥

कर्करः । पुं । दर्पणे । मुकुरे ॥ न । चूर्णजनकचुम्रपाषाणखण्डे । चूर्णखण्डे । कङ्कर काँकर इति च भाषा ॥ मुकुरे ॥ त्रि । कठिने । दृढे ॥ कर्कनम् । कर्कहासे । घञ् । कर्कं राति । रा० । आतोऽनुपेति कः ॥

कर्कराङ्गः । पुं । खञ्जनपक्षिविहङ्गमे । खञ्जने ॥

कर्कराटुः । पुं । कटाक्षे ॥ इति कश्चित् जटाधरः ॥

कर्कराटुकः । पुं । कर्करेटुपक्षिणि ॥

कर्करान्धुकः । पुं । अन्धकूपे ॥

कर्करालः । पुं । चूर्णकुन्तले ॥

कर्करिका । स्त्री । घर्षे । नेत्रखञ्जने ॥

कर्करी । स्त्री । गलन्तिकायाम् । सनालजलपात्रे । झारी इति भाषा ॥ कठिनायाम् ॥ कन्दोर्द्धतपक्षानिका सनसाधने । झनां झारा इति च भाषा ॥ गौरादित्वात् ङीष् ।

कर्करीका । स्त्री । गलन्तिकायाम् । कर्करीम् ॥ फर्फरीकादित्वात् साधुः ॥

कर्करेटम् । न । अर्द्धचन्द्रे । अङ्गुलितोरणे । गलहस्ताधाने ॥

कर्करेटुः । पुं । करेटौ । करकटिया इति गौड़भाषा प्रसिद्धे खगे ॥ कर्केति रेटति । रेटृ भाषणे । मृगय्वादि ॥

कर्कशः । पुं । काम्पिल्लवृक्षे ॥ कासमर्दे ॥ इक्षौ ॥ खड्गे ॥ त्रि । साहसिके ॥ क्रूरे ॥ दृढे ॥ असमृणे । खरस्पर्शे । दुस्स्पर्शे ॥ निर्दये ॥ कृणोति । कृञ् हिंसायाम् । अन्येभ्योऽपीतिविच् । कशति । कशशब्दे । पचाद्यच् । कर् चासौ कशश्च ॥ यद्वा । करे कशति । कशे. पचाद्यच् । अन्तर्भावितण्यर्थो वा ॥ पृषोदरादि । कर्कोऽस्त्यर्थे लोमादित्वात् शः ॥

कर्कशच्छदः । पुं । शाखोटवृक्षे ॥ पटोले ॥

कर्कशच्छदा । स्त्री । कोशातक्याम् । तोरई इति भाषा ॥ दग्धरुहायाम् ॥

कर्कशदलः । पुं । पटोले ॥

कर्कशदला । स्त्री । दग्धारुहे ॥

कर्कशवाक्यम् । न । निष्ठुरवचने । परुषवाक्ये ॥

कर्क्कशा । स्त्री । वृश्चिकालीवृक्षे ॥ क्रूरायाम् ॥

कर्क्कसारम् । न । करम्भे । दधिसक्तुषु ॥

कर्क्कारुः । पुं । कुष्माण्डे ॥ स्त्री । कुष्माण्ड्याम् ॥ कर्क्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः । पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत् ॥ कर्क्कं शुक्लवर्णम् ऋच्छति । ऋगतौ । बाहुलकादुण् ॥

कर्क्कारुकः । पुं । कालिङ्गवृक्षे ॥

कर्क्कारुः । स्त्री । कुष्माण्ड्याम् ॥

कर्क्किः । पुं । कर्क्कटराशौ ॥

कर्क्की । पुं । कर्क्कटे ॥

कर्क्केतनः । पुं । न । रत्नविशेषे ॥ अस्योत्पत्त्यादिकम् गारुडे ७५ अध्याये । सूत उवाच । वायुर्नखान् दैत्यपतेर्गृहीत्वा चिक्षेप सत्सु गयवनेषु हृष्टः । ततः प्रसूतं पवनात्पवित्रं कर्क्केतनं पूज्यतमं पृथिव्याम् ॥ वर्णेन तद्रुधिरसोमसमधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति । नीलं पुनः खलुसितं परुषं विभिन्नं व्याध्यादिदोषकरणेन न तद् विभाति ॥ स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः । त्रासव्रणव्याधिविवर्जिताश्च कर्क्केतनास्ते परमाः पवित्राः ॥ प्रवेष्ट्य काञ्चनमयेन तु वेष्टयित्वा हस्ते गले ऽप्यधृतमेतदति प्रकाशम् । रोगप्रणाशनकरं कलिनाशनञ्च आयुष्करं कुलकरञ्च सुखप्रदञ्च ॥ एवंविधं बहुगुणं मणिमाववहन्ति कर्क्केतनं शुभमलङ्कृतये नरा ये । ते पूजिता बहुधना बहुबान्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति ॥ एकेऽपन्नाविकृताङ्गलनीलभासः प्रम्लानरागलुलिताः कलुषा विरूपाः । तेजोविदीप्तिकुलपुष्टिविहीनवर्णाः कर्क्केतनस्य सदृशं वपुरुद्वहन्ति ॥ कर्क्केतनं यदि परीक्षित वर्णरूपं प्रत्ययप्रभास्वरदिवाकरसुप्रकाशम् । तस्योत्तमस्य मणिशास्त्रविदां महिम्ना तुल्यन्तु मूल्यमुदितं तुलितस्य कार्य्यमिति ॥

कार्क्कोटः । पुं । नागराजविशेषे ॥

कार्क्कोटकः । पुं । बिल्ववृक्षे ॥ स्त्री ॥ काँकरोल इति गौडभाषा प्रसिद्धे फललताविशेषे । किल्लासमे । तिक्तपत्रे ॥ काद्रवेये । कर्क्कोटको नाम सर्पो योऽदृष्टो विषदृष्यते । तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते । इति श्रुति प्रसिद्धे नागराजे ॥ अपिच । कर्क्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति ॥

कर्कोटकी । स्त्री । पीतघोषायाम् । महाजाल्याम् । खखसा इति ख्याते फले ॥ कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् ॥ ईषद्विभिन्नमरिचैःपरिपूर्णगर्भं तैलेन रन्धितसुसैन्धवपातयोगम् । माहिषीकयुतपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तरुणम् ॥

कर्कोटिका । स्त्री । ककोडा इतिभाषाप्रसिद्धे । कर्कोटके । कूष्माण्ड्याम् ॥

कर्कोटी । स्त्री । कर्कोटिकायाम् ॥

कर्चूरिका । स्त्री । कचौरीतिख्याते पिष्टकप्रभेदे ॥ इतिपाकराजेश्वरः ॥

कर्चूरी । स्त्री ॥ कचरीतिख्यातेफले ॥ क्षीराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता । अरोचकादिरोगाणां कर्चूरी कण्ठकर्त्तरी ॥ कर्चूरी वत्रिकृत्त्या सुस्वादुरतिलेखनी । उष्णा पित्तकरी प्रोक्ता कफ कृत सारिका स्मृता ॥

कर्चूरः । पुं । कचूर इतिभाषा प्रसिद्धे गन्धसारे । द्राविडे ॥ कर्चूरो दीपनो रुच्यः कटुक स्तिक्त एव च । सुगन्धिः कटुपाकः स्यात् कुष्ठार्शो व्रणकासनुत् ॥ उष्णो लघुर्हरेच्छ्वासगुल्मवातकफ क्रिमीन् ॥ गन्धास् ॥ ...ने । स्वर्णे ॥ कर्चति । कचदीप्तने । खर्जूरादित्वादूरः । पृ० ॥

कर्चूरकः । पुं । द्राविडके । कचूर इति भाषा ॥ स्वार्थे कन् ॥

कर्णः । पुं । पृथायाज्येष्ठसुते । सुषेणे । चम्पापतौ ॥ सुवर्णालिप्ते ॥ श्रवणेन्द्रिये । श्रोत्रे ॥ गुरुयुगले ऽऽ ॥ अरित्रे ॥ कीर्यते शब्दग्रहणाय चिप्यते यद्वा कीर्यते शब्दो ऽस्मिन् किरतिशरीरे सुखं वा । कृविक्षेपे । कृवृकृसीतिनन् । बाहुलकाद्गुणः ॥ यद्वा । कर्णयति । कर्णभेदने । अदन्तः ॥ अच् ॥ यद्वा । करोति शब्दज्ञानम् । डुकृञ्० । कृवृदृस्यादिना नन् ॥

कर्णकण्डुः । पुं । कर्णरोगविशेषे ॥ तस्यनिदानं यथा । मारुत, कफसंयुतः कर्णकण्डुं करोतिचेति ॥

कर्णकीटी । स्त्री । कर्णजलौकायाम् । शतपद्याम् । कानसलाई इतिभाषा ॥

कर्णक्ष्वेडः । पुं । कर्णरोगविशेषे ॥ वायुः पित्तादिभिर्युक्तो वेणुघोषसमं स्वनम् । करोतिकर्णयोः क्ष्वेडं कर्णक्ष्वेडः सउच्यते ॥ इति माधवः ॥

कर्णगूथम् । न । कर्णमले ॥ कर्णगूथम् ॥

कर्णगूथकः । पुं० । कर्णरोगविशेषे ॥ पित्तोष्मशोषितः श्लेष्मा जायते कर्णे गूथकइत्यस्य निदानम् ॥

कर्णचापः । पुं० । काखपृष्ठाख्येधनुषि ॥ कर्णस्य राधेयस्य चापः ॥

कर्णजलौकिः । पुं० । शतपद्याम् । गोजर । कानखजूरा इतिभाषा ॥

कर्णजलौका । स्त्री । शतपद्याम् । चित्राङ्ग्याम् । कानसलाई इतिभाषा ॥

कर्णजाहम् । न । कर्णस्यमूले ॥ तस्य पाकमूलइत्यादिना जाहच् प्र० ॥

कर्णजित् । पुं० । अर्जुने ॥ गुडाकेशे ॥ कर्णः जयति । जि० । सत्सूद्विषे त्यादिना क्विप् । तुक् ॥

कर्णदर्पणः । पुं० । ताडङ्कनामनि कर्णभूषणे । कानतडङ्का इतिभाषा ॥

कर्णदुन्दुभिः । स्त्री । शतपद्याम् ॥

कर्णधारः । पुं० । नाविके । काण्डारि इतिमौडभाषा । मल्लाह माँझी इति भाषा ॥ कर्णमरित्रम् धरति । धृञ् । अ० । कर्मण्यण् ॥

कर्णपाली । स्त्री । कर्णभूषणे । कान् पाशा . बाली इत्यादिभाषा प्रसिद्धे ॥ कर्णपल्लिमदेशयोः ॥

कर्णपिशाची । स्त्री । देवीविशेषे ॥

कर्णपूरं । स्त्री । कर्णपूरे । चम्पायाम् ॥

कर्णपुरम् । न । चम्पानगर्याम् । मालिन्याम् ॥

कर्णपुष्पः । पुं० । मोरटलतायाम् ॥

कर्णपूरः । पुं० । शिरीषवृक्षे ॥ नीलोत्पले ॥ अवतंसे ॥ कर्णाभरणे ॥ अशोकवृक्षे ॥ कर्णम्पूरयति । पूरि । क र्मण्यण् ॥

कर्णपूरकः । पुं० । कदम्बवृक्षे ॥ शिरीषे ॥ नीलोत्पले ॥ वतंसे ॥

कर्णप्रतिनाहः । पुं० । कर्णरोगविशेषे ॥ तस्य सम्प्राप्तिरूपे यथा । सकर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखम्प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोर्द्धभेदकृदिति ॥

कर्णफलः । पुं० । कानलि माचा इति गौड प्रसिद्धे मत्स्यविशेषे ॥

कर्णभूषणम् । न । कर्णाभरणे ॥

कर्णमलम् । न । कर्णगूथे ॥

कर्णमुकुरः । पुं० । ताटङ्कनाम्नि कर्णभूषणे ॥

कर्णमोटिका । स्त्री । चामुण्डादेव्याम् ॥

कर्णमोटी । स्त्री । ऽम ॥

कर्णरोगः । पुं० । श्रोत्रव्याधौ ॥

कर्णलतिका । स्त्री । पाल्याम् । कानपत्ता इति भाषा इति हेमचन्द्रः ॥

कर्णवंशः । पुं० । मञ्चे ॥ इतिशब्दरत्नावली ॥

कर्णवर्जितः । पुं । सर्पे ॥ त्रि । बधिरे ॥

कर्णवेधः । पुं । कर्णपटकदोषनिवारणार्थं कर्णयोर्वेधने ॥ सोदरभ्रातॄणां संस्काराणाञ्च पौर्वापर्यक्रमः । कर्णवेधस्य संस्काररूपत्वात् न तथा नियमः । यथा । यदापत्यद्वयं तिष्ठेत् समं वैष्यपरस्य च । कर्णपुटं विजानीयान्निहितं तत्र वयसैव ॥ इत्याशङ्क्य तयोर्मध्ये शुद्धिर्यस्याथ वत्सरे । कर्णवेधो हितस्तस्य नैनाज्ज्येष्ठविचारणा ॥ पटकर्णोत्पत्तिमाशङ्क्य भानोः शुद्धौ समेऽपि च । कर्णवेधो न दोषः स्यादन्यथा मरणं भवेत् ॥ इति मार्कण्डेयः ॥

कर्णवेधनी । स्त्री । हस्तिकर्णवेधनास्त्रे । कर्णारायाम् ॥ इति त्रिकाण्डशेषः ॥

कर्णवेष्टः । पुं । } कुण्डले ॥ कर्णस्य वेष्टनम् ॥
कर्णवेष्टकम् । न । }
कर्णवेष्टनम् । न । }

कर्णशष्कुली । स्त्री । वेष्टने । कर्णगोलके ॥ कर्णमध्यवर्त्याकाशे ॥

कर्णशूलः । पुं । कर्णरोगविशेषे ॥

कर्णसंस्रावः । पुं । कर्णरोगविशेषे ॥ तस्य निदानसम्प्राप्तिरूपाणि यथा । शिरोभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधेः । स्रवेद्धि पूयं श्रवणोऽनिलार्दितः स कर्णसंस्राव इति प्रकीर्त्तितः इति माधवः ॥

कर्णस्फोटा । स्त्री । कानफाटा इति गौडभाषाप्रसिद्धे लताविशेषे । कृष्णतण्डुलायाम् ॥

कर्णाटः । पुं । देशविशेषे ॥ यथा । रामनाथं समारभ्य श्रीरङ्गान्तं विलेश्वरि । कर्णाटदेशो देवेशि साम्राज्यभोगदायकः ॥ इति शक्तिसङ्गमतन्त्रम् ॥

कर्णाटी । स्त्री । रागिणीविशेषे ॥ मालवरागस्य नार्याम् ॥ हंसपदीवृक्षे ॥

कर्णानुजः । पुं । युधिष्ठिरनृपे । अर्जुनभ्रातरि । कर्णस्य अनुजः ॥

कर्णान्दुः । स्त्री । कर्णपाल्याम् । कानतडका इति भाषा ॥ खर्जुरिसिकायाम् । कानकेंडो इति गौडभाषाप्रसिद्धे कर्णाभरणविशेषे ॥

कर्णान्दूः । स्त्री । कर्णपाल्याम् ॥

कर्णाभरणकः । पुं । आरग्वधवृक्षे ॥

कर्णारा । स्त्री । नाल्याम् । कर्णवेधन्याम् ॥

कर्णारिः । पुं । अर्जुनपाण्डवे ॥ नदीसर्जवृक्षे ॥

कर्णास्फालः । पुं । करिणः कर्णचालने । कानभालनभाषायाम् ॥

कर्णिः । पुं । कर्णिकाकारफलके वाणे ॥

म्। शरीरावयवाद्यत्॥

कर्त्तनम्। न। छेदने॥ नारीणां सूत्रनिर्मितौ। कातना इतिभाषा॥ कृती०। ल्युट्॥

कर्त्तरी। स्त्री। कृपाण्याम्॥ स्वर्णीकृतस्वर्णादिः कर्त्तनोपाये। कात काती इतिभाषा॥ नापितोपकरणविशेषे। कैंची इतिभाषा॥ योगविशेषे॥ यथा। क्रूरमध्यगतश्चन्द्रो लग्नं वा क्रूरमध्यगम्। कर्त्तरी नामयोगोऽयं कन्यानिधनकारक इति॥ अपिच। लग्नात् पापावन्त्यजू व्ययार्थस्थौ यदा तदा। कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदेति॥ कृन्तति। कृती छेदने। बाहुलकादरः। यद्वा। कर्त्तनम्। घञ्। कर्त्तं राति। रा दाने। आतोनुपेतिकः। गौरादित्वान्ङीष्॥

कर्त्तव्यम्। त्रि। करणीये। करणयोग्ये। कार्य्ये॥ यस्मिन् क्रियमाणे न दोषस्तत्कर्त्तव्यम्॥ तव्यप्रत्ययः॥

कर्त्ता। पुं। परमेष्ठिनि॥ स्वरनिबन्धने दाहे। कीर्य्यते विक्षिप्यते इतस्ततश्चाल्यते कायो येन। कृ विक्षेपे। तृच॥ त्रि। स्वतन्त्रः कर्त्तेतिनिरुपितेषट्कारकान्तर्गतकारकविशेषे॥ अभीक्तार्थे प्रथमा अनुक्तार्थे तृतीयाविभक्तिर्भवति। तस्य लक्षणम्। क्रियानुकूलकृतिमत्त्वं कर्त्तृत्वम्॥ यः करोति सः॥ कृत्याश्रयः कर्त्तेति तार्किकाः॥ चेतनान्तरव्यापाराव्यवधानेन धात्वर्थनिष्पादकश्चेतनः कर्त्ता। कर्मकरणादिकारकचक्रप्रयोक्ता वा। इति प्रायश्चित्तविवेकः॥ कृतिमति॥ उत्पादके॥ कारणानुकूलव्यापारवति॥ अनुष्ठातरि॥ धातूपात्तव्यापाराश्रये॥ क्रियायां स्वातन्त्र्येण विवक्षितेऽर्थे॥ सतु पञ्चविधः। यथा। क्रियामुख्यो भवेत् कर्त्ता हेतुकर्त्ता प्रयोजकः। अनुमन्ता ग्रहीता च कर्त्ता पञ्चविधः स्मृत इति॥ स त्रिविधोपि भवति। यथा। त्रिधैव ज्ञायते कर्त्ता विशेषेण प्रतिक्रियाम्। योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः॥ अस्यार्थः॥ क्रियाप्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम्। स्वाध्यायोऽध्येतव्य इत्यत्र योग्यत्वेन लब्धविद्यस्त्रैवर्णिकः। १। अग्रहपदंद्यात् दीक्षितो न ददातीत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरपरः। २। स्वर्गकामोयजेतेत्यत्र विशेषणपदान्वयेन स्वर्गकामः कर्त्ता ज्ञायते। ३॥ अहङ्कारोमीत्याद्यभिमानवति॥ ज्ञानशक्तिप्रधानपञ्चीकृतपञ्चम

वो वा ॥

कर्पूरकः । पुं । कर्पूरे ॥ कर्च्चूरके । क र्चूरके ॥

कर्पूरतिलका । स्त्री । उमायाः सखीभेदे । जयायाम् ॥

कर्पूरतैलम् । न । कर्पूरस्नेहे । हिमतैले ॥

कर्पूरनालिका । स्त्री । कपूरनारीति ख्याते पक्वान्नविशेषे ॥ यथा । घृताक्तया समितया कृत्वा लम्बपुटंततः । लवङ्गोषणकर्पूरयुतया सितयान्वितम् ॥ पचेद्‌घृतेन सिद्धैषा ख्याता कर्पूरनालिका । सवावसदृशीज्ञेया गुणैः कर्पूरनालिका ॥

कर्पूरमणिः । पुं । पाषाणप्रभेदे । कर्पूराश्मनि ॥ कर्पूरमणिनामायं युक्त्या वातादिदोषनुत् ॥

कर्पूररसः । पुं । रसकर्पूरे ॥

कर्पूरहरिद्रा । स्त्री । कपूरहलदीति ख्यातायाम् । सर्वकण्डूनिनाशिन्याम् ॥

कर्पूराश्मा । पुं । उपरत्नविशेषे । कापूरचीनियेति ख्याते ॥

कर्फरः । पुं । दर्पणे ॥ इतिजटाधरः ॥

कर्बरः । पुं । व्याघ्रे ॥ रक्षसि ॥ कृणाति । क्रृप्रचिं० । कृगॄशृवृञ्चतिभ्यः ष्वरच् ॥

कर्व्वरी । स्त्री । शिवायाम् ॥ षित्त्वान् ङीष् ॥

कर्ब्बुदारः । पुं । कोविदारे ॥ नीलझिण्ट्याम् ॥ श्वेतकाञ्चने ॥

कर्बुदारकः । पुं । श्लेष्मातकवृक्षे ॥

कर्बुरः । पुं । पापे ॥ राक्षसे ॥ नानावर्णे । चित्रे । किर्म्मीरे ॥ नदीनिष्पावधान्ये ॥ न । जले ॥ काञ्चने ॥ धुस्तूर वृक्षे ॥ त्रि । चित्रवर्णवति ॥ कर्वति ॥ कर्वहिं० । कर्वस्यनेन वा । कर्वगतौ वा । श्रोष्ठ्योपधः । मद्गुरादयश्चेति उरच् ॥ कर्वुरोपयमेन वा । ववयोरभेदादन्तस्थमध्योपि॥

कर्बुरफलः । पुं । साकुरुण्डवृक्षे ॥

कर्बुरा । स्त्री । कृष्णवृन्तायाम् । पांरुल इति गौड भाषाप्रसिद्धे वृक्षे ॥ बर्बरायाम् । वावुइतुलसी इति गौड भाषा ॥ उरजन्ता टाप् ॥

कर्बुरी । स्त्री । दुर्गायाम् ॥ इतित्रिकाण्डशेषः ॥

कर्च्चूरः । पुं । शव्याम् ॥ द्राविडके । कचोहलदी इतिभाषा ॥ राक्षसे ॥ न । स्वर्णे ॥ हरिताले ॥ त्रि । चित्रिते ॥ कर्वति । कर्वगतौ । खर्जादित्वादूरः ॥

कर्चूरकः । पुं । कर्च्चूरार्थे ॥ स्वार्थेकः ॥

कर्म्मकरः । पुं । कीनाशे । यमे ॥ त्रि ।

भृत्ये ॥ वेतनजीविनि । भरण्यभुजि । मूल्येन कर्मकुर्वति । कमेरा इति भाषा ॥ कर्म करोति । कृष्° । कर्मणिभृताविति टः ॥

कर्म्मकारी । स्त्री । मूर्वालतायाम् ॥ विम्बिकालतायाम् ॥ मूल्येन कर्मकुर्वन्त्याम् । दास्याम् ॥ टित्त्वात् ङीप् ॥

कर्म्मकर्त्ता । पुं । कर्मात्मककर्त्तरि ॥ यथा । क्रियमाणन्तु यत् कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तद्विदुरिति ॥ त्रि । कर्मणः कर्त्तरि ॥

कर्म्मकाण्डः । पुं । यावज्जीवमग्निहोत्रं जुहुयादित्यादिक्रमेण चित्तशोधके कर्मप्रतिपादके वेदभागे ॥ संसारफलके ज्योतिष्टोमादिकर्मकलापे ॥ कर्मणांसमूहः । दूर्वादिभ्यः काण्डः ॥

कर्म्मकारः । पुं । वर्णसङ्करजातिविशेषे । लौहकारे । लुहार इतिभाषा ॥ गोपालात तन्तुवाय्यां वै कर्मकारो बभूव सुतः । ब्रह्मवैवर्त्तेतु शूद्रायां विश्वकर्मणोजातइत्युक्तम् ॥ वृषे ॥ त्रि । भृतिंविना भारवहनादिकर्मकारके । वेगारी इतिभाषा ॥ कर्म करोति । कर्मण्यण् ॥

कर्म्मकीलकः । पुं । रजके ॥ इतित्रिका ॥ ण्डशेषः ॥

कर्म्मक्षमः । पुं । अलङ्कर्मीणे ॥ कर्मकरणसमर्थे ॥ कर्मसु क्षमः । सप्तमीतियोगविभागात् समासः ॥

कर्म्मक्षेत्रम् । न । भारतवर्षे ॥

कर्म्मचोदना । स्त्री । कर्मविषयायां प्रेरणायाम् ॥ कर्म क्रिया पुरुषव्यापाररूपाऽर्थभावना तद्विषयाचोदना प्रेरणा विधिरूपा शाब्दीभावनेत्यर्थः ॥

कर्म्मजः । पुं । कलियुगे ॥ स्वर्गादौ ॥ अदृष्टे ॥ वटद्रुमे ॥ त्रि । कर्मसम्भवे । कायिकवाचिकमानसकर्मोद्भवे ॥ कर्मणोजातः । जनेर्° । पञ्चम्यामजातावितिडः ॥

कर्म्मजगुणः । पुं । क्रियाजन्यगुणे ॥ स च संयोगः । विभागः । वेगः । इति भाषापरिच्छेदः ॥

कर्म्मठः । त्रि । कर्मशूरे । प्रयत्नेन मारब्धं कर्मसमापयति यः स तथोच्यते ॥ कर्मकुशले ॥ कर्मणि घटते । कर्मणिघटोऽठच् ॥

कर्म्मण्यः । त्रि । कर्मयोग्ये ॥ कर्मणि प्रवीणे ॥ कर्मणि साधुः । तत्रसाधुरितियत् ॥

कर्म्मण्यभुक् । त्रि । भरण्यभुजि । कर्मकारे । वेतनोपजीविनि ॥ कर्मण्यं वेतनं भुङ्क्ते । भुज° । क्विप् ॥

कर्मण्या । स्त्री । वेतने । मूल्ये ॥ क
र्म्मणा सम्पद्यते । कर्मवेशाद्यत् ॥ क
र्मणि साधुर्वा । तत्रसाधुरितियत् ॥
कर्म्मदेवः । पुं । यज्ञेन स्वर्गं प्राप्ते ॥ य
था । ज्योतिष्टोमादिना स्वर्गम्प्रा
प्ताःस्युःकर्मदेवताःइति॥अपिचाहुः
। अस्मिन्कल्पेऽश्वमेधादिकर्म कृत्वा
।महत् पदम् । अवाप्याजानदेवैर्याः
पूज्यास्ताःकर्मदेवताः इति ॥
कर्म्मधारयः । पुं । समानाधिकरणे त
त् पुरुषे ॥
कर्म्म । न । क्रियायाम् । देहेन्द्रियादि
व्यापारे ॥ संयोगवियोगयो रसम
वायिकारणजातीयकर्मेति लक्षिता
क्रिया । उत्क्षेपणापक्षेपणाकुञ्च
नप्रसारणगमनानि पञ्चकर्माणिभ
वन्ति । नित्यनैमित्तिककाम्यप्राय
श्चित्तप्रतिषिद्धभेदाच्चापिपञ्चविधं भ
वति । तत्रचत्वारिधर्म्याणिअन्त्यमध
र्म्यमितिनिश्चयः ॥ निष्फलं क्लेशब
हुलंसन्दिग्धफलमेवच । न कर्मकु
र्यान्मतिमान् सदा वैरानुबन्धिच ॥
सञ्चितक्रियमाणप्रारब्धभेदात् क-
र्मत्रिविधं भवति ॥ कायिकवाचिक
मानसिकभेदात् पुनस्तत् त्रिविधं
भवति ॥ विधिप्रतिषेधलक्षणं शा-
स्त्रप्रसिद्धं कर्म । तत्र नित्यनैमित्ति

कप्रायश्चित्तभेदात् त्रिविधम्भवति
॥ यागदानहोमात्मकेवेदविहिते ॥
भूतभावोद्भवकरो विसर्गः कर्मसं-
ज्ञितः । भूतानां भवनधर्माणां सर्वे
षां स्थावरजङ्गमानां भावमुत्पत्ति
म् उद्भवं वृद्धिञ्चकरोति योविसर्ग
स्त्यागः तत्तच्छास्त्रविहितो यागदा
नहोमात्मकः सइह कर्म संज्ञितः
॥ सात्त्विकादिभेदात् पुन स्तत्त्रि
विधम् । तत्रसात्त्विकं यथा । निय
तं सङ्गरहितमरागद्वेषतः कृतम् ।
अफल प्रेप्सुना कर्म यत् तत् सात्त्वि
कमुच्यते ॥ राजसंयथा । यत्तुकामे
प्सुना कर्म साहङ्कारेणवापुनः । क्रि
यते बहुलायासं तद्राजसमुदाहृत
म् ॥ तामसं यथा । अनुबन्धं क्षयं
हिंसा मनपेक्ष्यचपौरुषम् । मोहा
दारभ्यते कर्म यत् तत् तामस मुच्य
ते ॥ तत्तद्वर्णाश्रमाभिमाननिमि
त्ते ऽन्तः करणबोधके । शास्त्रविहि
तक्रियाकलापे नित्यनैमित्तिक-
काम्यात्मके ॥ शुक्लं कृष्णंशुक्लकृष्ण
ञ्चेतित्रिविधभेदभिन्ने ॥ तत्त्रिवि
धं जन्मप्रयच्छति । तदाहु र्विश्वरू
पाचार्याः । शुभैराप्नोति देवत्वं नि
षिद्धैर्नारकीङ्गतिम् । उभाभ्यांपुण्य
पापाभ्यां मानुष्यं लभते ऽवशः ।

इति ॥ क्रियतेतत्तत्फलार्थिभिरि
ति कर्म्म । तस्यचानादित्वम् आद्य
क्षोटे रनुपलभ्यमानत्वात् । यतः
शरीरवतः कर्मकरणम् तच्छरीरं
कर्मारब्धम् । तान्यपिशरीरान्तरेण
कृतानि । तच्चकर्मजमिति सोयं तृ
तीयः पाशः ॥ जन्मनिमित्ते अदृष्ट
विशेषे ॥ उक्तमनवार्त्तिकाकारैः ।
नकर्मकारणं मुक्ते र्नोमिस्तापलभे
यजम् । कर्मभ्योजन्म नियतं जन्म
चेन्निर्वृतिः कुतः । इति ॥ वासना
कर्म्म विद्याच त्रयं जन्मप्रयोजकम् ।
उक्तं तत्र प्रधानत्वं कर्मणः श्रूयते
पुनः ॥ उत्तमाधमदेहाख्यं वैषम्यं
कर्मणा भवेत् । देहे विद्यावासना
भ्यां भवेद्भोगस्य कौशलम् ॥ कर्म
सांख्येय कार्य्यमिच्छताभ्युदयश्चि
रम् । पापन्तु सर्वदाहेयं दुःखेभ्यस्तु
स्ताभृशम् ॥ पूर्वकाण्डपरा इत्थं
कर्मप्राधान्यमूचिरे । अथवेदान्त शा
स्त्रज्ञा प्राहुः कामप्रधानताम् ॥ पु
मानादौ काममय एवभूत्वाथ कर्म
कृत् । यतोयं कर्मणोहेतु कामो
तोस्य प्रधानता ॥ अकामस्य क्रिया
काचिद्दृश्यते नेहकस्य चित् । यद्य
द्धि कुरुते जन्तु स्तत्तत्कामस्यचेष्टि
तम् ॥ यज्ञादिरूपं नित्यं कर्मद्विधा

। संस्कारकं विविदिषाजनकञ्च । त
च विहितत्वमात्रबुद्ध्या क्रियमाणं
संस्कारकम् । ईश्वरार्पणबुद्ध्या क्रि
यमाणं विविदिषाजनकम् । यत्क
रोषीत्यादि भगवद्वचनादितिवि
वेकः ॥ षट्कारकान्तर्गतकारकवि
शेषे ॥ अत्रद्वितीया विभक्तिर्भवति
। उक्ते कर्मणि प्रथमाभवति । धातू
पात्तव्यापारजन्यफलाश्रयं कर्मेति
लक्षणम् । यत् क्रियते फलार्थि
भि स्तत् कर्मेति प्रसिद्धम् । करो
तेर्निखिल क्रियावाचकत्वात् कर्त्तु
र्व्यापारैर्यत् साध्यते तदित्यर्थः । अ
तएव क्रियाव्याप्यं कर्मेति क्रमदीश्वरः
। तच्चतुर्विधम् । निर्वर्त्त्यम् १ यथा
घटं करोति पुत्रं प्रसूते ॥ विकार्य
म् २ तच्चद्विविधम् । प्रकृतेरुच्छेद
कम् प्रकृतेर्गुणान्तराधायकञ्च । आ
द्यंयथा काष्ठं भस्म करोति । अन्त्यं
यथा । सुवर्णं कुण्डलं करोति । त
थाचोक्तंभर्तृहरिणा । यदसज्जायते
पूर्वं जन्मना यत् प्रकाशते । तन्निर्व
र्त्त्यं विकार्यञ्चकर्मद्वेधा व्यवस्थित
म् ॥ प्रकृत्युच्छेदसम्भूतं विकार्यं का
ष्ठभस्मवत् । अन्यद्गुणान्तरोत्पत्त्या
सुवर्णादिविकारवत् ॥ प्राप्यम् ३ य
था ग्रामङ्गच्छति चन्द्रम् पश्यती

त्यादि ॥ अनीप्सितञ्च ४ यथा पापं त्यजती त्यादि ॥ लग्नाद्दशमभवने ॥ ज्ञानसाधनविशेषे ॥ यथाहुः । कषायपक्तिकर्माणि ज्ञानन्तुपरमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानंप्रवर्त्तते इति ॥ क्रियते । फलार्थिभिः । डुकृञ् । कृञो भावे कर्मणि च सर्वधातुभ्योमनिन् इतिमनिन् ॥ अर्द्धर्चादिः ॥ आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः । कर्माण्यारभमाणं हि पुरुषंश्रीर्निषेवते ॥

**कर्म्मन्दी** । पुं । भिक्षौ । परिव्राजि ॥ कर्मन्देन प्रोक्तम् भिक्षुसूत्र मधीते । कर्मन्दकृशाश्वादिनिः ॥

**कर्म्मफलम्** । न । कमरङ्गफले ॥ कर्मविपाके ॥ संसारे ॥ सर्वकर्म्मणाम् फलं व्याकृतंसंसार एवेति भाष्योक्तेः ॥ कर्मणः फलम् ॥

**कर्म्मफलप्रेप्सुः** । त्रि । कर्मफलार्थिनि ॥

**कर्म्मफलासङ्गः** । त्रि । कर्मणि फलेषु चासङ्गः कर्त्तृत्वाभिमानो भोगाभिलाषश्च यस्य तस्मिन् ॥

**कर्म्मभूः** । स्त्री । आर्य्यावर्त्ते ॥ कृष्टभूमौ । कर्म्मान्ते ॥

**कर्म्मभूमिः** । स्त्री । आर्य्यावर्त्ते । पुण्यभूमौ ॥ यद्यकालिकयावृत्या दृश्य इति निर्णयः । सर्वभक्ष्यानभक्ष्यन्ति कर्मभूमिमचेतसः ॥ कर्मणो भूमिः ॥ भारतवर्षे ॥ यथा । तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने । यतोहिकर्मभूरेषा अतोन्या भोगभूमय इति विष्णुपुराणम् ॥

**कर्म्ममीमांसा** । स्त्री । पूर्वमीमांसायाम् । कर्मकाण्डवेदविचारग्रन्थे जैमिनिप्रणीते ॥

**कर्म्ममूलम्** । न । कुशे । दर्भे ॥ कर्मणो हेतौ ॥ कर्मणो मूलम् ॥

**कर्म्मयुगम्** । न । कलियुगे ॥ इतित्रिकाण्डशेषः ॥

**कर्म्मयोगः** । पुं । ईश्वरार्पणबुद्ध्या क्रियमाणे फलाभिसन्धिरहिते तत्तद्वर्णाश्रमोचिते वेदविहिते कर्मकलापे सत्त्वानां ज्ञानसाधन भूते ॥ चित्तशुद्धिजनके वैदिके कर्मणि ॥

**कर्म्मरङ्गः** । पुं । न । कमरङ्ग इति ख्याते फलवृक्षे । पीतफले । कर्मारे । त्रुके ॥ कर्मरङ्गं हिमं ग्राहिस्वाद्वम्लं कफवातहृत ॥

**कर्म्मरी** । स्त्री । वंशरोचनायाम् ॥

**कर्म्मवज्रः** । पुं । शूद्रे ॥ इतिमहाभारतम् ॥

**कर्म्मवाटी** । स्त्री । तिथौ ॥

**कर्म्मविपाकः** । पुं । कर्मजन्यफलस्य परिपाके ॥ शातातपप्रभृतिभरतोक्ते पाप

रोगप्रायश्चित्तानां विवरणग्रन्थे ॥

कर्म्मव्यतिहारः । पुं । क्रियाविनिमये ॥ परस्परकरणे ॥

कर्म्मशीलः । त्रि । कार्म्मे । कर्म्मशूरे ॥ कर्म्मशीलमस्य ॥

कर्म्मशूरः । त्रि । कर्म्मठे । प्रयत्नेन प्रारब्धकर्म्मपरिसमापके ॥ फलपर्य्यन्तकर्म्मकर्त्तरि ॥ कर्म्मणि शूरः । सप्तमीसमासः ॥

कर्म्मशेषः । त्रि । उत्पाद्यविकार्य्याप्यसंस्कार्य्येषु पुरोडाशसोममन्त्रव्रीह्यादिषु ॥

कर्म्मसङ्गः । पुं । कर्म्मसु दृष्टादृष्टार्थेषु अहमिदङ्करोमि एतत् फलम्भोक्ष्ये इत्यभिनिवेशविशेषे ॥

कर्म्मसङ्गी । त्रि । श्रुतिस्मृतिविहितप्रतिषिद्धकर्म्मफलाधिकारिणि । कर्त्तृत्वाभिमानेन फलाभिसन्धिना च कर्म्मण्यभिनिविष्टे ॥

कर्म्मसङ्ग्रहः । पुं । कर्म्मसङ्गृह्यते समवैत्यनेनेति व्युत्पत्त्या कर्म्माश्रये ॥ कर्म्मणः पुण्यापापरूपस्य अर्थभावनायाः सङ्ग्रहे सङ्क्षेपे ॥

कर्म्मसचिवः । पुं । कर्म्मोपयुक्तसचिवे । धीसचिवातिरिक्ते मन्त्रिविशेषे ॥ कर्म्मणि सचिवः सहायः ॥

कर्म्मसन्न्यासिकः । पुं । यतौ । सन्न्यासिनि ॥

कर्म्मसन्न्यासी । पुं । यतौ ॥ द्विविधः कर्म्मसन्न्यासः फलसाधनभेदतः । फलस्य ज्ञानिनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये ॥ फलवत् कर्म्मणोपि त्याज्यत्वे कर्म्मण्येवाधिकारस्ते इत्यादिस्मृतिविरोध इत्याशङ्क्य तस्याविरक्तविषयत्वमस्मै यन्नित्याह । अविशुद्धधियः कर्म्मण्यधिकारो विशुद्धधीः । सन्न्यासं विविदिषोत्पत्तौ तदर्थं कर्म्म सन्न्यसेत् ॥ तदर्थं शुद्ध्यर्थम् ॥ कर्म्मणः सन्न्यासः कर्म्मसन्न्यासः । सोऽस्यास्ति । इनिः ॥ कर्म्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः ॥

कर्म्मसाक्षी । पुं । सूर्य्ये ॥ सूर्य्यादिनवसु ॥ सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च । एते शुभाशुभस्येह कर्म्मणो नव साक्षिणः ॥ कर्म्मणः साक्षी ॥

कर्म्मसिद्धिः । स्त्री । इष्टानिष्टलक्षणायां फलप्राप्तौ ॥

कर्म्माध्यक्षः । त्रि । क्रियासाक्षिणि ॥

कर्म्मान्तः । पुं । कर्म्मभुवि । कृष्टभूमौ ॥ इक्षुधान्यादिसङ्ग्रहस्थाने ॥ शुचीनाकरकर्म्मान्ते इत्युक्तेः ॥ कर्म्मावसाने ॥ कर्म्मान्ते दासभृत्याध्यक्ष्यु

ते. ॥

कर्मारः । पुं । कर्मकारे । लौहकारे । लुहार इतिप्रसिद्धे जातिविशेषे ॥ वंशे । त्वचिसारे । वाँस इतिप्रसिद्धे दृक्षे ॥ कर्मरङ्गे । कमरख इतिभाषा ॥

कर्म्मार्हः । पुं । पुरुषे ॥ वि । क्रियायोग्ये ॥

कर्म्माशौचः । पुं । अनहङ्कारे ॥

कर्म्मी । पुं । दक्षिणासहितज्योतिष्टोमादिकर्म्मानुष्ठायिनि । यजमाने । देवानामन्ते ॥ केवलकर्म्मीहि चन्द्रमण्डलाधिकारी परतन्त्रोदेवानामन्नभूतः इति श्रौतीप्रसिद्धिः ॥ त्रि । कर्मविशिष्टे ॥ कर्मास्ति अस्य । वी० इनिः ॥

कर्म्मिष्ठः । वि । क्रियावति ॥

कर्म्मीरकः । पुं । शाखोटे ॥

कर्म्मेन्द्रियम् । न । कर्मसाधकेइन्द्रिये । पाय्वादिपञ्चके व्यस्ते समस्तेच ॥ पायूपस्थम् पाणिपादौ वाक्चैवेन्द्रियसङ्ग्रहः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः ॥ वागादीनीन्द्रियाण्याकाशादीनां रजोंशेभ्यो व्यस्तेभ्यःपृथक्पृथक् क्रमेणोत्पन्नानिभवन्ति । यथोक्तं भागवते । तेषां रजोंशैर्जातानि क्रमात् कर्म्मेन्द्रियाणिच । प्रत्येकमिति ॥ कर्मसाधकमिन्द्रियम् ॥ कर्म्मेन्द्रियम् ॥ कर्म्मेन्द्रियदेवताः अग्नीन्द्रोपेन्द्रयमप्रजापतयः । कर्मेन्द्रियाणां वागादीनां क्रमेणाग्न्यादयो देवता भवन्ति ॥ कर्मेन्द्रियाणां विषयास्तु वचनादानगमनविसर्गानन्दाःक्रमेण वागादीनांविषयाः ॥

कर्व्वः । पुं । कामदेवे ॥ आखौ ॥ कृणाति । कृञ् हिंसायाम् । किरतिवा । कृविक्षेपे । कृगृशृदृभ्योवः ॥

कर्व्वटः । पुं । न । द्विशतग्राममध्ये मनोरमस्थाने ॥ ग्रामशतस्थजनाःक्रयविक्रयादिना सेवादिना वा येनग्रामेण जीवन्ति तस्मिन् ॥ इति केचित् ॥ चतुः समग्रामे ॥ चतुः समेग्रहस्थाने ॥ चतुः शतग्रामसङ्ग्रहस्थाने ॥ न । नगरे । पुरे ॥

कर्व्वुरः । पुं । राक्षसे ॥ पापे ॥ भेषजविशेषे ॥ व्याघ्रे ॥ कृणाति । कृञ्० । कृगृशृवनिभ्यः करच् ॥

कर्व्वुरी । पुं । उमायाम् । शिवायाम् ॥ हिङ्गुपत्र्याम् ॥

कर्श्यः । पुं । कर्पूरे । कचूर इतिभाषा ॥ इति राजनिर्घण्टः ॥

कर्षः । पुं । न । अक्षे । माषषोडशकेमाने । अशीतिरक्तिकासु ॥ भिषजांव्यवहारेतु कर्षः स्यात् तोलकद्वयम् । सुवर्णे । बिडालपदके ॥ राज

निर्वराटकमते कर्षः स्याद्दशमाषकः ॥ पुं । कर्षणे ॥ बिभीतक वृक्षे ॥ कर्षति । कृषविलेखने । पचाद्यच् । भावे घञ्वा ॥

कर्षकः । त्रि । क्षेत्राजीवे । कृषीवले ॥ आकर्षणकर्त्तरि ॥ पुं । अयस्कान्ते ॥ कर्षति । कृष० । ण्वुल् ॥

कर्षणम् । न । वैश्यवृत्तिविशेषे । कृषि कर्मणि । लाङ्गलादिना भूमिखनने । खेती इतिभाषा ॥ आकर्षणे ॥ शो षणे ॥ पीडने ॥ कृषेर्ल्युट् ॥

कर्षणी । स्त्री । क्षीरिणीवृक्षे ॥

कर्षफलः । पुं । बिभीतकवृक्षे । कलि- द्रुमे ॥ कर्षम् फलमस्य ॥

कर्षफला । स्त्री । आमलक्याम् ॥

कर्षार्द्धम् । न । तोलकपरिमाणे ॥

कर्षिणी । स्त्री । खलिकायाम् । अश्व मुखबन्धनरज्जुस्थितलौहे ॥ क्षीरि कावृक्षे ॥

कर्षितः । त्रि । पीडिते ॥ यथा । अथ सैकर्षित. इक्षिकर्षितइति ॥

कर्षूः । पुं । करीषाग्नौ ॥ तुषाग्नौ ॥ वा र्त्तायाम् । जीविकायाम् ॥ ऋषिवि शेषे ॥ स्त्री । कुल्यायाम् ॥ कुल्ये कीकसे ॥ नदीमात्रे ॥ कृत्रिमखाते । चतुरङ्गुलखातविशेषे । कर्षणम् कृ ष्यते कर्षति वा कृषवि० । कृषिच

मितनिधनिसर्जिखर्जिभ्य ऊः ॥

कर्हि । अ । कदा ॥ कस्मिन् काले । अ नद्यतनेर्हिलन्यतरस्याम् ॥

कर्हिचित् । अ । कस्मिंश्चित्काले ॥ क स्माञ्चिदप्यवस्थायाम् । जातु ॥ क र्हिच चित् चेति विग्रहः ॥

कलः । पुं । मधुरध्वनौ । अव्यक्त मधु रध्वाने ॥ शालवृक्षे ॥ न । शुक्रे । रे तसि ॥ त्रि । अजीर्णे ॥ कलति माद्य ति अनेन । कडमदे । हलश्चेति घञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः । ड लयोरेकत्वम् ॥

कलकः । पुं । शकुलमत्स्ये ॥

कलकण्ठः । पुं । कलध्वाने ॥ हंसे ॥ पारावते ॥ पिके ॥ कलः कण्ठोऽस्य ।

कलकलः । पुं । कोलाहले । बहुभिः कृते उच्चैः शब्दे ॥ यथा । विशाला भ्या माभ्यां किमिह नयनाभ्यां ख लुफलं न याभ्यामालीढा परमरम णीया तव तनुः । अयहि न्यक्कारो ज ननिमनुजस्य श्रवणयोर्ययोर्नान्तर्या तस्तव हरिलीलाकलकल इति- जगन्नाथत्रिशूली ॥ सर्जनिर्यासे ॥ कलशब्दे । कलनम् । घञ् । संज्ञा पूर्वकत्वाद्वृद्ध्यभावः । कलादपि कलः ॥

कलघोषः । पुं । कोकिले ॥ कलो घो

पो यस्य ॥

कलङ्कः । पुं । अङ्के । चिह्ने ॥ अपवादे ॥ कालायसमले । लौहकिट्टे ॥ कम् ब्रह्मार्थं लङ्कयतिहीनतां गम यति ज्ञापयति वा । लकिगतौ । कर्मण्यण् । यद्वा । कलति । कलश ब्दसंख्यानयोः । क्विप् । कल् चासा वङ्कश्च ॥

कलङ्कलेखा । स्त्री । मालिन्यरेखायाम् ।

कलङ्कषः । पुं । सिंहे ॥

कलङ्कषा । स्त्री । करताल्याम् ॥

कलङ्की । त्रि । अपवादग्रस्ते ॥ सचिह्ने ॥ लौहमलविशिष्टे ॥ मत्वर्थीय इनिः ॥

कलङ्कुरः । पुं । आवर्त्ते । जलभ्रमे ॥ इतित्रिकाण्डशेषः ॥

कलञ्जः । पुं । सविषास्त्रेण हतयो मृगप क्षिणोः ॥ ताम्रकूटे । तामाकू सुरती इति भाषा ॥ यथा । विष्णुसिद्धान्तसाराख्ये वैद्यके । अथ धूमप र्णीधूमपानगुणाः । कलञ्जसंवेष्टन धूमपानात् स्याद्दन्तशुद्धिर्मुखरोग हानिः । कफघ्नमामज्वरहानिकृच्च गान्धर्वविद्याप्रवणैकसेव्यम् ॥ संख्या विशेषे ॥ यथा । सम्वाला प्रोच्यते गुञ्जा सालिस्त्री रूपकं भवेत् । रू पकैर्दशभिः प्रोक्ता कलञ्जोनामना

मरः इतियुक्तिकल्पतरुः ॥

कलतूलिका । स्त्री । कामुकायाम् । वाञ्छिन्याम् । लञ्जिकायाम् ॥

कलत्रम् । न । श्रोणौ ॥ भार्यायाम् ॥ नृपादीनां दुर्गस्थाने ॥ गडति ग ड्यते वा । गडसेचने । गडेरादेश्च क इति अत्रन् । डलयोरैक्यम् ॥ क लं त्रायते वा । त्रैङ् पालने । कः ॥ कडति कड्यते वा । कडमदे । वाहुलका दत्रन् ॥

कलधूतम् । न । रूप्ये ॥ इतिराजनि र्घण्टः ॥

कलधौतम् । न । स्वर्णे । हेम्नि ॥ रजते । रूप्ये ॥ पुं । कलध्वनौ ॥ कलो ऽमलो धौतोऽस्य ॥

कलध्वनिः । पुं । पारावते ॥ पिके । कोकिले ॥ मयूरे ॥ गम्भीरशब्दे ॥ कलोध्वनिर्यस्य । कर्मधारयो वा ॥

कलध्वानः । पुं । पारावते ॥ परभृते ॥ वर्हिणि ॥ कलोध्वानोऽस्य ॥

कलनः । पुं । वेतसवृक्षे ॥ न । चिह्ने । लक्ष्मणि ॥ दोषे ॥ लङ्घने ॥ ग्रसने ॥ यथा । कलनात् सर्वभूतानां- महाकालः प्रकीर्त्तितः । महाकालस्य कलनात् त्वमाद्याकालिका परेति ॥ एकमासिकगर्भे ॥ गर्भे मिश्रिते शुक्रशोणिते । तच्च एकरात्रे

वा भवतीति श्रीभागवतम् ॥ सङ्ख्याने । गणने ॥ स्त्री

कलना । स्त्री । वशतायाम् ॥ गणनायाम् ॥

कलन्दरः । पुं । सङ्कीर्णजातिविशेषे । स तु लेटात् तीवरकन्यायां जातः । इति ब्रह्मवैवर्त्ते पुराणम् ॥

कलन्दिका । स्त्री । सर्वविद्यायाम् ॥ इति हेमचन्द्रः ॥

कलम्बुः । स्त्री । पत्रशाकविशेषे । कुयकालुकायाम् ॥ घोलिकायाम् ॥

कलभः । पुं । पञ्चवर्षपर्यन्ते करिशावके ॥ इतिसुभूतिः ॥ त्रिंशद्वर्षस्तु कलभ इतिवैजयन्ती ॥ धत्तूरवृक्षे ॥ कलयति । कल विक्षेपे गतौ सङ्ख्याने वा । कलते वा । कलशब्दसङ्ख्यानयोः । कृशृशलिकलिगर्दिभ्योऽभच् । कलेभाषते वा । भाष व्यक्तायां वाचि । अन्येष्वपीतिडः ॥

कलभवल्लभः । पुं । पीलुवृक्षे ॥

कलभी । स्त्री । चञ्चुवृक्षे ॥

कलभैरवः । त्रि । मधुरभीषणे ॥

कलमः । पुं । लेखन्याम् । वर्णतूल्याम् ॥ शालिधान्यप्रभेदे ॥ चौरे । पाटच्चरे ॥ कलते । कल शब्द० । कलिकर्चोरमः ।

कलमोत्तमः । पुं । गन्धशालौ ॥



कलम्बः । पुं । नालिकाशाके ॥ पृषत्के । शरे ॥ कल्यते । कल विक्षेपे । डलयोरेकत्वात् कृकादिकडिकटिभ्योऽम्बजिच्चम्बच ॥ कदम्बे । नीपपादपे ॥ कडम्बे । शाकनाड्याम् ॥ कडति । कड मदे । अम्बच ॥ केन जलेनलम्बते वा । लबि अवस्रंसने । पचाद्यच् ॥

कलम्बकः । पुं । कलम्बार्थे ॥ धाराकदम्बे ॥

कलम्बिका । स्त्री । कलम्बीशाके । नाली इतिभाषा ॥ ग्रीवापश्चाद्भागे । मन्यायाम् ॥ इतिहेमचन्द्रः ॥

कलम्बी । स्त्री । जलजशाकविशेषे । कलम्बिकायाम् ॥ कलमीशाक इतिगौडभाषा । करेंबु इतिभाषा ॥ कडति । कड मदे । कृकदिभ्यम्बच । डलयोरेकत्वम् ॥ केन लम्बते वा । लबि० । अच् । गौरादित्वान्ङीष् । कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥

कलम्बुः । पुं । कलम्बिकायाम् ॥

कलम्बुटम् । न । नवनीते । हैयङ्गवीने ॥ इतिहारावली ॥

कलम्बूः । स्त्री । कलम्ब्याम् । करेंबू इति प्रसिद्धशाके ॥

कलरवः । पुं । कपोते । पारावते ॥ कोकिले ॥ कलध्वनौ ॥ त्रि । कल

...न्दतनूर्जः॥ अस्य सिंहनादसंचाय्य स्ति ॥ कलोमधुरवाकहंसः॥ कलहनाशिनी। पुं। पूतिकरञ्जे॥ कलहप्रियः। पुं॥ नारदे॥ इतिमहाभारतम्॥ ...कलहप्रिया। स्त्री। सारिकायाम्॥ कलहान्तरिता। स्त्री। नायिकाभेदे॥ ...प्रसभिवचनं। यथा। पतिमवमन्य पश्चात् परितप्ता। यथा। कोपात् कान्तं पराणुद्य पश्चात् तापसमन्विता। कलहान्तरिताप्रोक्ता नायिका नयशालिभिरिति॥

कला। स्त्री। मूलधनवृद्धौ। इत्यद्वितिभाषा॥ शिल्पादौ। अंशमात्रे॥ चन्द्रस्यषोडशांशे॥ कालमाने। चिं...शत्काष्ठात्मककाले॥ स्त्रीरजसि ...नौकायाम्॥ कपटे। छद्मनि॥ विभूतौ॥ शक्तौ॥ केवलनीयाम्॥ मरीचिपत्न्याम्। कर्दमात्मजायाम्॥ राशेस्त्रिंशद्भागेभागस्य षष्टिभागः कलेतिज्योतिर्विदः। यथा। विकलानां कलाषष्ट्या तत्षष्ट्याभाग उच्यते। तत्त्रिंशताभवेद्राशिर्भगणो द्वादशैवते। इति॥ अथगीतवन्तोक्तायतः षष्टिकला लिख्यन्ते॥ गीतम् १। वाद्यम् २। नृत्यम् ३। नाट्यम् ४। आलेख्यम् ५। विशेषकच्छेद्यम् ६। तण्डुलकुसुमवलिविकाराः ७। पुष्पास्तरणम् ८। दशनवसनाङ्गरागाः ९। मणिभूमिकाकर्म १०। शयनरचनम् ११। उदकवाद्यम् १२। उदकघातः १३। चित्रायोगाः १४। माल्यग्रथनविकल्पाः १५। शेखरापीडयोजनम् १६। नैपथ्ययोगाः १७। कर्णपत्रभङ्गाः १८। गन्धयुक्तिः १९। भूषणयोजनम् २०। इन्द्रजालम् २१। कौचुमारयोगाः २२। हस्तलाघवम् २३। चित्रशाकयूपभक्ष्यविकारक्रिया २४। पानकरसरागासवयोजनम् २५। सूचीवायकर्माणि २६। सूत्रक्रीडा २७। प्रहेलिका २८। प्रतिमाला २९। दुर्वचकयोगाः ३०। पुस्तकवाचनम् ३१। नाटिकाख्यायिकादर्शनम् ३२। काव्यसमस्यापूरणम् ३३। पट्टिकावेत्रवाणविकल्पाः ३४। तर्कुकर्माणि ३५। तक्षणम् ३६। वास्तुविद्या ३७। रूप्यरत्नपरीक्षा ३८। धातुवादः ३९। मणिरागज्ञानम् ४०। आकरज्ञानम् ४१। वृक्षायुर्वेदयोगाः ४२। मेषकुक्कुटलावकयुद्धविधिः ४३। शुकसारिकाप्रलापनम् ४४। उत्सादनम् ४५। केशमार्जनकौशलम् ४६। अ...

चरमुष्टिकाकथनम् ४७ । म्लेच्छितकविकल्पाः ४८ । देशभाषाज्ञानम् ४९ । पुष्पशकटिकानिमित्तज्ञानम् ५० । अत्र निमित्तज्ञानमिति पृथक् केचित् पठन्ति ॥ यन्त्रमातृका ५१ । धारणमातृका ५२ । सम्पाठ्यम् ५३ । मानसीकाव्यक्रिया ५४ । क्रिया विकल्पाः ५५ । छलितकयोगाः ५६ । अभिधानकोषच्छन्दोज्ञानम् ५७ । वस्त्रगोपनानि ५८ । द्यूतविशेषः ५९ । आकर्षक्रीडा ६० । बालकक्रीडनकानि ६१ । वैनायिकीनां विद्यानां ज्ञानम् ६२ । वैजयिकीनां विद्यानां ज्ञानम् ६३ । वैतालिकीनां विद्यानां ज्ञानम् ६४ ॥ इति श्रीभागवतटीकायां श्रीधरस्वामिनः ॥ क्वचित् पुस्तके तूष्णीवापकर्मक्रीडेत्यकं पदम् । तदुत्तरं वीणाडमरुकवाद्यानि । वैतालिकीनामित्यत्र वैयासिकीनामिति च पाठो दृश्यते ॥ कलति कलयति कलते वा । कलशब्दसंख्यानयोः । पचाद्यच् ॥ कल्यते वा पुंसीति घः ॥ यद्वा कलाति । आतोऽनुपेति कः ॥

कलाकूणम् । न । विषे ॥ इति राजनिर्घण्टः ॥

कलाकेलिः । पुं । कामदेवे ॥ कलासु केलिर्यस्य ॥

कलाङ्कुरः । पुं । सारसे पक्षिणि ॥ कंसासुरे । मूलदेवे ॥

कलाचिका । स्त्री । } प्रकोष्ठे । कफोणेरधोमणिबन्धपर्यन्ते । कलाई इति भाषा । तिकस्थित ॥ इति हेमचन्द्रः ॥
कलची । स्त्री । }

कलाजाजी । स्त्री । सुषव्याम् । कारव्याम् । कलौंजी मंगरैला इति च ख्यातद्रव्ये ॥

कलादः । पुं । स्वर्णकारे ॥ कलामादत्ते ॥ डुदाञ् । मू० । कः ॥

कलादकः । पुं । स्वर्णकारे ॥

कलानिधिः । पुं । चन्द्रे ॥ कला निधीयन्तेऽत्र । डुधाञ् । कर्मण्यधिकरणे चेति किः ॥

कलानुनादी । पुं । चटकस्ये । भ्रमरे ॥ कलविङ्के ॥ कपिञ्जले ॥

कलान्तरम् । न । वृद्धौ । लाभे । सूद इति भाषा ॥

कलापः । पुं । संहतौ । समूहे ॥ मयूरपिच्छे । बर्हे ॥ काञ्च्याम् ॥ भूषणसामान्ये ॥ तूणे ॥ चन्द्रे ॥ विदग्धे ॥ कातन्त्रव्याकरणे ॥ ग्रामविशेषे ॥ यथा ॥ देवापि योगमास्था

य कलापग्राममाश्रित: । सोमवंशे कलौनष्टे कृतादैा स्थापयिष्यति ॥ कलामाप्नोति । आप्नु० । कर्मण्यण् ॥ कलाआप्यतेऽनेन वा । हलश्चे ति घञ् ।

कलापक: । पुं । हस्तिकण्ठबन्धे ॥ कला पार्थे ॥ स्वार्थेक: ॥ न । चंन्द्रातिथौ । षे ॥ यस्मिन् काले मयूरा: कलापि नो भवन्ति सर्वमचारात् कलापी कलापिनि देयत्वगम् । कलाप्यत्र त्ययवबुसादुम्॥

कलापी । पुं । प्लक्षवृक्षे ॥ बर्हिणि । मयूरे ॥ कोकिले ॥ कलापोऽस्या स्ति । इनि: ॥

कलापिनी । स्त्री । रात्रौ ॥ नागरमु स्तायाम् ॥

कलापूर्ण: । पुं । चन्द्रमसि ॥ कलाभि: पूर्ण: ॥

कलाभृत् । पुं । चन्द्रे ॥

कलामक: । पुं । व्रीहिविशेषे । कलम धान्ये ॥

कलाम्बिका । स्त्री । अर्थानामप्रयोगे । ऋणदाने ॥ इतिचिकाण्डशेष: ॥

कलाय: । पुं । सतीनके । हरेणौ । म टर इतिभाषा ॥ कलायखिकटः प्रो क्त: । कलायोमधुर: स्वादु: पाकेरू चश्चशीतक: । कषायो वातलो ग्रा



ही कफपित्तहरो लघु: ॥ कलमय ते । अय० । कर्मण्यण् ॥

कलायन: । पुं । नर्त्तकभेदे ॥

कलायशाकम् । न । केराउशाक इति ख्याते ॥ कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित् ॥

कलाया । स्त्री । गण्डदूर्वायाम् ॥

कलालाप: । पुं । भ्रमरे । चञ्चरीके ॥

कलावान् । पुं । विधौ । चन्द्रे ॥ त्रि । कलाविशिष्टे ॥

कलावती । स्त्री । तुम्बुरोर्गन्धर्वविशेष स्य वीणायाम् ॥ श्रीराधामातरि । वृषभानुपत्न्याम् ॥ अप्सरोविशेषे ॥ आगमोक्तदीक्षाविशेषे ॥

कलाविक: । पुं । कुक्कुटे ॥

कलाविकल: । पुं । चटके ॥

कलाहक: । पुं । वाद्यविशेषे । काहला याम् ॥

कलि: । पुं । शूरे ॥ आजौ युधि ॥ कल हे ॥ विभीतकवृक्षे ॥ अन्त्ययुगे । तिष्ये । कलियुगे ॥ यत्र कान्तागिरो वेदा यत्र धर्मोऽर्थसाधनम् । यत्र स्वप्र तिभामानं तस्मै श्रीकलयेनम इति कलिविडम्बनम् ॥ असवर्ण्योनाह । देवरेणसुतोत्पत्ति र्वानप्रस्थाश्रम ग्रह: । दत्ताक्षतायाः कन्यायाःपुन र्दानं परस्यच ॥ समुद्रयानस्वीकार:

कमण्डलुविधारणम् । महाप्रस्थान
गमनं गोपशुश्च सुराग्रहः ॥ अग्नि
होत्रहवन्याश्च लेहो लीढापरिग्रहः
। असवर्णासु कन्यासु विवाहश्च द्वि
जातिषु ॥ वृत्तस्वाध्यायसापेक्ष मघ
सङ्कोचनं तथा । अस्थिसञ्चयनादूर्द्ध
मङ्गस्पर्शनमेव च ॥ प्रायश्चित्तविधा
नञ्च विप्राणां मरणान्तिकम् । संस
र्गदोषः पापेषु मधुपर्के पशोर्वधः
॥ दत्तौरसेतरेषाञ्च पुत्रत्वेन परिग्र
हः । शामित्रं चैव विप्राणां सोमवि
क्रयणं तथा ॥ दीर्घकालं ब्रह्मच
र्यं नरमेधाश्वमेधकौ । कलौ युगे
त्विमान् धर्मान् वर्ज्यानाहुर्मनीषि
णः ॥ * ॥ तद्युगधर्मो यथा । क
लौ तु धर्मपादानां तुर्यांशोऽधर्महे
तुभिः । एधमानैः क्षीयमाणो ह्य
न्ते सोऽपि विनङ्क्ष्यति ॥ तस्मिन्
लुब्धा दुराचारा निर्दया शुष्कवैरि
णः । दुर्भगा भूरितर्षाश्च शूद्रदासो
त्तराः प्रजाः ॥ यदा मायानृतं तन्द्रा
निद्रा हिंसाविषादनम् । शोकमो
हौ भयं दैन्यं स कलिस्तामसः स्मृतः
॥ यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभा
ग्या महाशनाः । कामिनो वित्तही
नाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ द
स्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषि

ताः । राजानश्च प्रजाभक्ष्याः शिश्नो
दरपरा द्विजाः ॥ अव्रता वटवोऽशौ
चा भिक्षवश्च कुटुम्बिनः । तपस्विनो
ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥
ह्रस्वकाया महाहारा बह्वपत्या गत
ह्रियः । शश्वत् कटुकभाषिण्यश्चौ
र्यमायोरुसाहसाः ॥ पणयिष्यन्ति
वै क्षुद्राः किराटाः कूटकारिणः ।
अनापद्यपि मंस्यन्ते वार्त्तां साधु जुगु
प्सिताम् ॥ पतिं त्यक्ष्यन्ति निर्द्रव्यं भृ
त्या अप्यखिलोत्तमम् । भृत्यं विप
न्नं पतयः कौलं गाश्चापयस्विनीः ॥
पितॄन् भ्रातॄन् सुहृज्ज्ञातीन् हि
त्वा सौरतसौहृदाः । ननान्दृश्याल
संवादा दीनाः स्त्रैणाः कलौ नराः ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजी
विनः । धर्मं वक्ष्यन्त्यधर्मज्ञा अधि
रुह्योत्तमासनम् ॥ नित्यमुद्विग्नम
नसो दुर्भिक्षकर कर्षिताः । निरन्ने
भूतले राजन्ननावृष्टिभयातुराः ॥
वासोऽन्नपानशयनव्यवायस्नानभूषणैः
। हीनाः पिशाचसन्दर्शा भविष्यन्ति
कलौ प्रजाः ॥ कलौ काकिणिकेऽप्यर्थे
विगृह्य त्यक्तसौहृदाः । त्यक्ष्यन्ति हि
प्रियान् प्राणान् हनिष्यन्ति स्वकान
पि ॥ न रक्षिष्यन्ति मनुजाः स्थविरौ
पितरावपि । पुत्रान् भार्याञ्च कुलजां

क्षुद्राः शिश्नोदरम्भराः ॥ कलौ न रा
जन् जगतां परं गुरुं त्रिलोकनाथा
नतपादपङ्कजम् । प्रायेण मर्त्त्या भ
गवन्तमच्युतं यक्ष्यन्ति पाषण्डविभि
न्नचेतसः ॥ * ॥ कलिकृतदोषवि
नाशोपायो यथा ॥ यन्नामधेयं म्रि
यमाण आतुरः पतन् स्खलन् वा विव
शो गृणन् पुमान् । विमुक्तकर्म्मार्ग
ल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न
तं कलौ जनाः ॥ पुंसां कलिकृतान्
दोषान् द्रव्यदेशात्मसम्भवान् । सर्वा
न् हरति चित्तस्थो भगवान् पुरुषो
त्तमः ॥ श्रुतः सङ्कीर्त्तितो ध्यातः पू
जितश्चादृतोऽपि वा । नृणां धुनो
ति भगवान् हृत्स्थो जन्मायुताऽशु
भम् ॥ यथा हेम्नि स्थितो वह्निर्दुर्व
र्णं हन्ति धातुजम् । एवमात्मगतो
विष्णुर्योगिनामशुभाशयम् ॥ विद्या
तपः प्राणनिरोधमैत्रीतीर्थाभिषे
कव्रतदानजप्यैः । नात्यन्तशुद्धिं ल
भतेऽन्तरात्मा यथा हृदिस्थे भगवत्य
नन्ते ॥ तस्मात् सर्वात्मना राजन् हृ
दिस्थं कुरु केशवम् । म्रियमाणो ह्य
वहितस्ततो यासि परां गतिम् ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको मह
ान् गुणः । कीर्त्तनादेव कृष्णस्य मु
क्तसङ्गः परं व्रजेत् ॥ कृते यद्ध्याय



तो विष्णुं त्रेतायां यजतो मखैः । द्वाप
रे परिचर्य्यायां कलौ तद्धरिकीर्त्तना
त् ॥ * ॥ तद्युगशेषधर्म्माः ॥ सौरा
ष्ट्रावन्त्याभीराश्च शूरा अर्बुदमाल
वाः । व्रात्या द्विजा भविष्यन्ति शूद्र
प्राया जनाधिपाः ॥ सिन्धोस्तटं च
न्द्रभागां कौन्तीं काश्मीरमण्डलम्
। भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छा
अब्रह्मवर्चसः ॥ तुल्यकाला इमे रा
जन् म्लेच्छप्रायाश्च भूभृतः । एतेऽध
र्म्मानृतपराः फल्गुदास्तीव्रमन्यवः
॥ स्त्रीबालगोद्विजघ्नाश्च परदारधना
दृताः । उदितास्तमितप्राया अल्प
सत्त्वाल्पकायुषः ॥ असंस्कृताः क्रि
याहीना रजसा तमसावृताः । प्रजा
स्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरू
पिणः ॥ तन्नाथास्ते जनपदास्तच्छी
लाचारवादिनः । अन्योन्यतो राज
भिश्च क्षयं यास्यन्ति पीडिताः ॥ तत
श्चानुदिनं धर्म्मः सत्यं शौचं क्षमा द
या । कालेन बलिना राजन् नङ्
क्ष्यत्यायुर्बलं स्मृतिः ॥ वित्तमेव क
लौ नृणां जन्माचारगुणोदयः । धर्म्म
न्याय व्यवस्थायां कारणं बलमेव हि
॥ दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्या
वहारिके । स्त्रीत्वे पुंस्त्वे च हि रति
र्विप्रत्वे सूत्रमेव हि ॥ लिङ्गमेवा

अमख्यातावन्योन्यापत्तिकारणम् ।
अल्पत्वान्याय दौर्बल्यं पाण्डित्ये चा
पलं वचः ॥ अनाढ्यतैवासाधुत्वे सा
धुत्वे दम्भ एव हि । स्वीकार एव चोद्वा
हे स्नानमेव प्रसाधनम् ॥ दूरे वार्य्य
यनं तीर्थं लावण्ये केशधारणम् । उ
दरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमे
व हि ॥ दाक्ष्ये कुटुम्बभरणं यशोर्थे
धर्मसेवनम् । एवं प्रजाभिर्दुष्टाभि
राकीर्णे क्षितिमण्डले ॥ ब्रह्मविट्क्ष
त्रशूद्राणां यो बली भविता नृपः । प्र
जा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मि-
भिः ॥ आच्छिन्नदारद्रविणा यास्यन्ति
गिरिकाननम् । शाकमूलामिषक्षौ
द्रफलपुष्पाष्टिभोजनाः ॥ अनावृ
ष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडि-
ताः । शीतवातातपप्रावृड्हिमैर
न्योन्यतः प्रजाः ॥ क्षुत्तृड्भ्यां व्या
धिभिश्चैव सन्तप्स्यन्ते च चिन्तया ।
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ
नृणाम् ॥ क्षीयमाणेषु देहेषु देहि
नां कलिदोषतः । वर्णाश्रमवतां
धर्मे नष्टे वेदपथे नृणाम् ॥ पाषण्ड
प्रचुरे धर्मे दस्युप्रायेषु राजसु । चौ
र्यानृतवृथाहिंसानानावृत्तिषु वै नृ
षु ॥ शूद्रप्रायेषु वर्णेषु छागप्रायासु
धेनुषु । गृहप्रायेष्वाश्रमेषु यौन



प्रायेषु बन्धुषु ॥ अनुप्रायास्वोषधी
षु शमीप्रायेषु स्थास्नुषु । विद्यु
त्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ।
इत्थं कलौ गतप्राये जनेषु खरधर्मिषु
। धर्मत्राणाय सत्त्वेन भगवानवत-
रिष्यति ॥ इति श्रीभागवतम् ॥
* ॥ अथ विशेषस्तु श्रीमहा-
निर्वाणतन्त्रे । तत्र श्रीमदाद्या प्रश्नः
। आयाते पापिनि कलौ सर्वधर्मवि
लोपिनि । दुराचारे दुष्प्रपञ्चे दुष्ट
कर्मप्रवर्त्तके ॥ न वेदाः प्रभवस्तत्र
स्मृतीनां स्मरणं कुतः । नानेतिहा
सयुक्तानां नानामार्गप्रदर्शिनाम् ॥ ब
हुलानां पुराणानां विनाशो भविता
विभो । तदा लोका भविष्यन्ति धर्मक
र्मबहिर्मुखाः ॥ उच्छृङ्खला मदोन्म
त्ताः पापकर्मरताः सदा । कामुका
लोलुपाः क्रूरा निष्ठुरा दुर्मुखाः श
ठाः ॥ स्वल्पायुर्मन्दमतयो रोगशो
कसमाकुलाः । निःश्रीका निर्बला
नीचा नीचाचारपरायणाः ॥ नीच
संसर्गनिरताः परवित्तापहारकाः ।
परनिन्दापरद्रोहपरीवादपराः ख-
लाः ॥ परस्त्रीहरणे पापशङ्काभय
विवर्जिताः । निर्धना मलिना दीना
दरिद्राश्चिररोगिणः ॥ विप्राः शूद्र
समाचाराः सन्ध्यावन्दनवर्जिताः ।

कलिः

अयाज्ययाजका लुब्धा दुर्वृत्ताः पाप कारिणः ॥ असत्यभाषिणो मूर्खा दाम्भिका दुष्प्रपञ्चकाः । कन्याविक्रयिणो व्रात्याः स्तपोव्रतपराङ्मुखाः ॥ लोकप्रतारणार्थाय जपपूजापरायणाः । पाषण्डाः पण्डितम्मन्याः श्रद्धाभक्तिविवर्जिताः ॥ कदाहाराः कदाचारा भृतकाः शूद्रसेवकाः । शूद्रान्नभोजिनः क्रूरा वृषलीरतिकामुकाः ॥ दास्यन्ति धनलोभेन स्वदारान्नीचजातिषु । ब्राह्मण्यचिह्नमेतावत् केवलं सूत्रधारणम् ॥ नैव पानादिनियमो भक्ष्याभक्ष्यविवेचनम् । धर्मशास्त्रे सदा निन्दा साधुद्रोहो निरन्तरम् ॥ सत्कथालापमात्रञ्च न तेषां मनसि क्वचित् । त्वयैव कृतानि तन्त्राणि जीवोद्धारणहेतवे ॥ निगमागमजातानि भुक्तिमुक्तिकराणि च । देवीनां यत्र देवानां मन्त्रयन्त्रादिसाधनम् ॥ कथिता बहवो न्यासाः सृष्टिस्थित्यादिलक्षणाः । बद्धपद्मासनादीनि गदितान्यपि भूरिशः ॥ पशुवीरदिव्यभावा देवतामन्त्रसिद्धिदाः । शवासनं चितारोहो मुण्डसाधनमेव च ॥ लतासाधनकर्माणि त्वयोक्तानि सहस्रशः । पशुभावदिव्यभावौ स्वयमेव निवारितौ ॥ कलौ न प

कलिः

शुभावोऽस्ति दिव्यभावः कुतो भवेत् पत्रं पुष्पं फलं तोयं स्वयमेवाहरेत् पशुः ॥ न शूद्रदर्शनं कुर्यान्मनसा न स्त्रियं स्मरेत् । दिव्यश्च देवताप्रायः शुद्धान्तःकरणः सदा ॥ द्वन्द्वातीतो वीतरागः सर्वभूतसमः क्षमी । कलिकल्मषयुक्तानां सर्वदाऽस्थिरचेतसाम् । निद्रालस्यप्रसक्तानां भावशुद्धिः कथं भवेत् ॥ वीरसाधनकर्माणि पञ्चतत्त्वोदितानि च । मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च । एतानि पञ्चतत्त्वानि त्वया प्रोक्तानि शङ्कर ॥ कलिजा मानवा लुब्धाः शिश्नोदरपरायणाः । लोभात् तत्र पतिष्यन्ति न करिष्यन्ति साधनम् ॥ इन्द्रियाणां सुखार्थाय पीत्वा च बहुशो मधु । भविष्यन्ति मदोन्मत्ता हिताहितविवर्जिताः ॥ परस्त्रीधर्षकाः केचिद् दस्यवो बहवो भुवि । न करिष्यन्ति ते मत्ताः पापयोनिविचारणम् ॥ अतिपानादिदोषेण रोगिणो बहवः क्षितौ । शक्तिहीना बुद्धिहीना भूत्वा च विकलेन्द्रियाः ॥ ह्रदे गर्त्ते प्रान्तरे च प्रासादात् पर्वतादपि । पतिष्यन्ति मरिष्यन्ति मनुजा मदविह्वलाः ॥ केचिद्विवादयिष्यन्ति गुरुभिः स्वजनैरपि । केचिन्मौना मृतप्राया अपरेव

हुजल्पकाः ॥ अकार्यकारिणः क्रूराध
र्ममार्गविलोपकाः ॥ हिताय यानिक
र्माणिकथितानि त्वयाप्रभो । मन्येता
नि महादेवविपरीतानिमानवे ॥ के
चायोगंकरिष्यन्ति न्यासजातानि के
पिवा । स्तोत्रपाठंयन्त्रलिपिं पुरश्चर्यां
जगत्पते ॥ युगधर्मप्रभावेण स्वभावे
न कलौनराः । भविष्यन्त्यतिदुर्वृत्ताः
सर्वथापापकारिणः ॥ तेषामुपायं
दीनेशकृपयाकथयप्रभो । आयुरा-
रोग्यवर्चस्यंबलवीर्यविवर्द्धनम् ॥ वि
द्याबुद्धिप्रदंनॄणामप्रयत्नशुभंकरम् ।
येनलोकाभविष्यन्तिमहाबल पराक्र
माः ॥ शुद्धचित्ताः परहिता मातापि
त्रोः प्रियङ्कराः । स्वदारनिष्ठाः पुरु
षाः परस्त्रीषु पराङ्मुखाः ॥ देवता
गुरुभक्ताश्च पुत्रस्वजनपोषकाः । ब्रह्म
ज्ञाब्रह्मविद्याश्च ब्रह्मचिन्तनमानसाः
॥ सिद्ध्यर्थंलोकयात्रायाः कथयस्वहि
ताययत् । कर्त्तव्यंयदकर्त्तव्यंवर्णा
श्रमविभेदतः ॥ विनात्वांसर्वलोका
नांकस्त्राताभुवनत्रये ॥ इतिश्रीमहा
निर्वाणतन्त्रे प्रथमोल्लासेजीवनिस्ता
रोपायप्रश्नः ॥ इतिदेव्यावचः श्रुत्वा
शङ्करोलोकशङ्करः । कथयामास त
त्त्वेनमहाकारुण्यवारिधिः ॥ श्रीस
दाशिवउवाच ॥ साधुपृष्टंमहाभागे



जगतांहितकारिणि । एतादृशः शु-
भः प्रश्नोनकेनापिकृतःपुरा ॥ धन्या
सि सुकृतज्ञासि हितासि कलिजन्म
नाम् । यद्यदुक्तंत्वयाभद्रे सत्यंसत्यं
यथार्थतः ॥ सर्वज्ञात्वंत्रिकालज्ञाध
र्मज्ञापरमेश्वरि । भूतम्भवद्भविष्यञ्च
धर्ममुक्तंत्वयाप्रिये ॥ यथातत्त्वंयथा
न्यायंयथायोग्यं न संशयः । कलिक
ल्मषदीनानां द्विजादीनांसुरेश्वरि
॥ मेध्यामेध्याविचाराणां न शुद्धिः
श्रौतकर्मणा । न संहिताद्यैः स्मृति
भिरिष्टसिद्धिर्नृणांभवेत् ॥ सत्यं स
त्यंपुनःसत्यं सत्यंसत्यंमयोच्यते
। विनाह्यागममार्गेण कलौनास्ति ग
तिःप्रिये ॥ श्रुतिस्मृतिपुराणादौमयै
वोक्तंपुराशिवे । आगमोक्तविधाने
न कलौ देवान्यजेत् सुधीः ॥ कला
वागमसुल्लङ्घ्य योन्यमार्गेप्रवर्त्तते
। नतस्यगतिरस्तीतिसत्यं सत्यं न सं
शयः ॥ सर्ववेदैःपुराणैश्च स्मृतिभिः
संहितादिभिः । प्रतिपाद्योस्मि ना
न्योस्ति प्रभुर्जगति मां विना ॥ श्रा
मनन्तिचते सर्वेमत्पदंलोकपाव-
नम् । मन्मार्गविमुखालोकाः पा
षण्डा ब्रह्मघातिनः ॥ अतोमन्म
तमुत्सृज्ययो यत्कर्मसमाचरेत् ।
निष्फलंतद्भवेद्देवि कर्त्तापिनारकी-

भवेत् । मूढो मन्त्रमतन्त्यक्त्वान्य
न्मतमुपाश्रयेत् । ब्रह्महापितृहा
स्त्रीघ्नः सभवेन्नात्रसंशयः ॥ कलौ
तन्त्रोदितामन्त्राः सिद्धा स्तूर्णफल
प्रदाः । शस्ताःकर्मसुसर्वेषु जपय
ज्ञक्रियादिषु ॥ निर्वीर्याः श्रौतजा
तीयाविषहीनोरगाइव । सत्या
दौ सफला आसन् कलौतेमृतका
इव ॥ पञ्चालिका यथाभित्तौ सर्वे
न्द्रियसमन्विताः । अमूरशक्ताः का
र्येषुतथान्ये मन्त्रराशयः ॥ अन्यम
न्त्रैः कृतङ्कर्मवन्ध्यास्त्रीसङ्गमो यथा
। नतत्रफलसिद्धि स्याच्छ्रमएवहिके
वलम् ॥ कलावन्योदितैर्मार्गैः सिद्धि
मिच्छतियोनरः । तृषितोजाह्नवी
तीरेकूपंखनतिदुर्मतिः ॥ मदक्तादु
दितं धर्मंहित्वान्यद्धर्ममीहते । अ
मृतं स्वगृहेत्यक्त्वा क्षीरमार्कंसवा
ञ्छति ॥ नान्यःपन्था मुक्तिहेतुरि
हामुत्रसुखाप्तये । यथा तन्त्रोदितो
मार्गोमोक्षायच सुखायच ॥ तन्त्रा
णिबहुधोक्तानिनानाख्यानान्वितानि
च । सिद्धानां साधकानाञ्च
विधानानिचभूरिशः ॥ अधिकारिवि
भेदेनपशुबाहुल्यतः प्रिये । कुला
चारोदितंधर्मंगुप्यर्थंकथितंक्वचित्
॥ जीवप्रवृत्तिकारीणि कानिचित्क



थितान्यपि । देवानानाविधाः प्रोक्ता
देव्योपिबहुधाः प्रिये ॥ भैरवाश्चैव
वेतालावटुका नायिकागणाः । शा
क्ताः शैवावैष्णवाश्चसौरागाणपता
दयः ॥ नानामन्त्राश्चयन्त्राणि सिद्धोपा
यान्यनेकशः । भूरिप्रयाससाध्यानि
यथोक्तफलदानिच ॥ यथायथाकृ
ताः प्रश्ना येनयेन यदायदा । तदात
स्योपकारायतथैवोक्तमयाप्रिये ॥
सर्वलोकोपकारायसर्वप्राणिहिताय
च । युगधर्मानुसारेणयाथातथ्येन
पार्वति ॥ त्वयायादृक्कृतं प्रश्नोन
केनापिपुराकृतः । तवस्नेहेनवक्ष्या
मिसारात्सारंपरात् परम् ॥ वेदा
नामागमानाञ्च तन्त्राणाञ्चविशेष
तः । सारमुद्धृत्यदेवेशितवाग्रेकथ्य
तेमया ॥ यथानरेषुतन्त्रज्ञाः सरि
तांजाह्नवीयथा । यथाहंविबुदेशा
नानागमानामिदंतथा ॥ किंवेदैः
किंपुराणैश्चकिंशास्त्रैर्बहुभिः शिवे ।
विज्ञातेस्मिन्महातन्त्रेसर्वसिद्धीश्व
रोभवेत् ॥ यतोजगन्मङ्गलायत्वया
हंविनियोजितः । अतस्तेकथयि
ष्यामियल्लोकहितकृद्भवेत् ॥ कृते
विश्वस्थितेदेवि विश्वेश. परमेश्वर
। प्रीतोभवतिविश्वात्मायतोविश्वंत
दाश्रितम् ॥ सएकएव सद्रूपः सत्यो

कलि:-

ऽद्वैतः परात्परः। स्वप्रकाशः सदा पूर्णः सच्चिदानन्दलक्षणः॥ निर्विकारो निराधारो निर्विशेषो निराकुलः। गुणातीतः सर्वसाक्षी सर्वात्मा सर्वदृग्विभुः॥ गूढः सर्वेषु भूतेषु सर्वव्यापी सनातनः। सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः॥ लोकातीतो लोकहेतुरवाङ्मनसगोचरः। स वेत्ति विश्वं सर्वज्ञस्तं न जानाति कश्चन॥ तदधीनं जगत्सर्वं त्रैलोक्यं सचराचरम्। तदालम्बनतस्तिष्ठेदवितर्क्यमिदं जगत्॥ तत्सत्यतामुपाश्रित्य सद्वद्भाति पृथक् पृथक्। तेनैव हेतुभूतेन वयं जाता महेश्वरि॥ कारणं सर्वभूतानां स एकः परमेश्वरः। लोकेषु सृष्टिकरणात् स्रष्टा ब्रह्मेति गीयते॥ विष्णुः पालयिता देवि संहर्त्ता शङ्करस्तदिच्छया। इन्द्रादयो लोकपालाः सर्वे तद्वशवर्त्तिनः॥ स्वे स्वेऽधिकारे निरता स्ते शासति तदाज्ञया। त्वम्पराप्रकृतिस्तस्य पूज्यासि भुवनत्रये॥ तेनान्तर्यामिरूपेण तत्तद्विषययोजिताः। स्वस्वकर्म प्रकुर्वन्ति न स्वतन्त्राः कदाचन॥ यद्भयाद्वाति वातोऽपि सूर्यस्तपति यद्भयात्। वर्षन्ति तोयदाः काले पुष्प्यन्ति तरवो वने॥ कालङ्कालयते का-

कलि:

लेऽसौ मृत्योर्मृत्युर्भियो भयम्। वेदान्तवेद्यो भगवान् यत्तच्छब्दोपलक्षितः॥ सर्वे देवाश्च देव्यश्च तन्मयाः सुरवन्दिते। आब्रह्मस्तम्बपर्यन्तं तन्मयं सकलं जगत्॥ तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत्। तदाराधनतो देवि सर्वेषां प्रीणनं भवेत्॥ तरोर्मूलाभिषेकेण यथा तद्भुजपल्लवाः। तृप्यन्ति तदनुष्ठानात्तथा सर्वेऽमरादयः॥ यथा तवार्चनाद्ध्यानात् पूजनाज्जपनात् प्रिये। भवन्ति तुष्टाः सुन्दर्यस्तथा जानीहि सुव्रते॥ यथा गच्छन्ति सरितो ऽवशेनापि सरित्पतिम्। तथार्चादीनि कर्माणि तदुद्देश्यानि पार्वति॥ यो यो यान्यान्यान् देवानुद्दिश्य यद्ददाति ये। तत्तद्दाति सोऽध्यक्षः स्तैस्तैर्देवगणैः शिवे॥ बहुनात्र किमुक्तेन तवाग्रे कथ्यते प्रिये। ध्येयः पूज्यः सुखाराध्यस्तं विना नास्ति मुक्तये॥ नायासो नोपवासश्च कायक्लेशो न विद्यते। नैवाचारादिनियमो नोपचाराश्च भूरिशः॥ न दिक्कालविचारोऽस्ति न मुद्रान्यास संहतिः। यस्याधने कुलेशानि नान्यमाश्रयेत॥ ४॥ इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे श्रीमदाद्या

कलिः

सदाशिवसंवादे जीव निस्तारोपाय
प्रश्नोत्तरे परब्रह्मोपासनोपक्रमो ना
म द्वितीयोल्लासः ॥ २ ॥ * ॥ तृती
योल्लासे ब्रह्मोपदेशकथनम् ॥ कलौ
पापयुगे घोरे तपोहीनेति दुस्तरे
निस्तारबीजमेतावद्ब्रह्ममन्त्रस्य सा
धनम् ॥ साधनानि बहूक्तानि नाना
तन्त्रागमादिषु ॥ कलौ दुर्बलजीवा
नामसाध्यानि महेश्वरि ॥ अल्पायुषः
स्वल्पसत्त्वा अन्नाधीनासवः प्रिये ॥ लु
ब्धा धनार्जने व्यग्राः सदा चञ्चलमान
साः ॥ समाधावस्थिरधियो योगक्लेशा
सहिष्णवः । तेषां हिताय मोक्षाय ब्र
ह्ममार्गोऽयमीरितः ॥ कलौ नास्त्येव
नास्त्येव सत्यं सत्यं मयोच्यते । ब्रह्मदी
क्षां विना देवि कैवल्याय सुखाय चेति
॥ * ॥ श्रुत्वा सम्यक् परब्रह्मोपासनं
परमेश्वरी । परमानन्दसम्पन्ना शङ्करं
परिपृच्छति ॥ श्रीदेव्युवाच ॥ कथि
तं यत्त्वया नाथ ब्रह्मोपासनमुत्तमम्
सर्वलोकप्रियकरं साक्षाद्ब्रह्मपदप्रद
म् ॥ तेजोबुद्धिबलैश्वर्यदायकं सुख
साधनम् । हृष्टास्मि जगदीशान त
ववाक्यामृतप्लुता ॥ यदुक्तं करुणासि
न्धो यथा ब्रह्मनिषेवणात् । गच्छन्ति
ब्रह्मसायुज्यं तथैव मम साधनात् ॥ ए
तदेवेदितुमिच्छामि मदीयं साधनं पर

कलिः

म् । ब्रह्मसायुज्यजननं यत्त्वया कथि
तं प्रभो ॥ विधानं कीदृशं तस्य साध
नं केन वर्त्मना । मन्त्रः को वा च विहि
तो ध्यानपूजादिकञ्च किम् ॥ सविशे
षं सावशेषमामूलात्तु महेसि । म
म प्रीतिकरं देव लोकानां हितकार
कम् ॥ कोऽप्यन्यस्त्वामृते शम्भो भव
व्याधिभिषग्गुरुः ॥ इति देव्या वचः
श्रुत्वा देवदेवो महेश्वरः । उवाच
परया प्रीत्या पार्वतीं पार्वतीपतिः ॥
॥ श्रीसदाशिव उवाच ॥ शृणु देवि
महाभागे तवाराधनकारणम् । त
व साधनतो येन ब्रह्मसायुज्यमश्नु
ते ॥ त्वं परा प्रकृतिः साक्षाद्ब्रह्मणः
परमात्मनः । त्वत्तो जातं जगत्सर्वं
त्वं जगज्जननी शिवे ॥ महदाद्यणु
पर्यन्तं यदेतत् सचराचरम् । त्वये
वोत्पादितं भद्रे त्वदधीनमिदं जगत्
॥ त्वमाद्या सर्वविद्यानामस्माकम
पि जन्मभूः । त्वं जानासि जगत्सर्वं
न त्वां जानाति कश्चन ॥ त्वं काली ता
रिणी दुर्गा षोडशी भुवनेश्वरी । धू
मावती त्वं बगला भैरवी छिन्नमस्त
का ॥ त्वमन्नपूर्णा वाग्देवी त्वं देवि
कमलालया । सर्वशक्तिस्वरूपा त्वं स
र्वदेवमयी तनुः ॥ त्वमेव सूक्ष्मा स्थू
ला त्वं व्यक्ताव्यक्तस्वरूपिणी । नि

कवि:

राकारापि साकारा कस्त्वां वेदितुमर्हति॥ उपासकानां कार्यार्थं श्रेयसे जगतामपि। दानवानां विनाशाय धत्सेनानाविधास्तनूः॥ चतुर्भुजा त्वं द्विभुजा षड्भुजाष्टभुजा तथा। त्वमेव विश्वरक्षार्थं नानाशस्त्रास्त्रधारिणी॥ तत्तद्रूपविभेदेन मन्त्रयन्त्रादिसाधनम्॥ कथितं सर्वतन्त्रेषु भावाश्च कथितास्त्रयः॥ पशुभावः कलौ नास्ति दिव्यभावोऽपि दुर्लभः। वीरसाधनकर्माणि प्रत्यक्षाणि कलौ युगे॥ कुलाचारं विना देवि कलौ सिद्धिर्न जायते। तस्मात्सर्वप्रयत्नेन साधयेत् कुलसाधनम्॥ कुलाचारेण देवेशि ब्रह्मज्ञानं प्रजायते। ब्रह्मज्ञानयुतो मर्त्यो जीवन्मुक्तो न संशयः॥ ज्ञानेन मेध्यमखिलममेध्यं ज्ञानतो भवेत्। ब्रह्मज्ञाने समुत्पन्ने मेध्यामेध्यं न विद्यते॥ यो जानाति परम्ब्रह्म सर्वव्यापि सनातनम्। किमस्त्यमेध्यं तस्याग्रे सर्वं ब्रह्मेति जानतः॥ त्वं सर्वरूपिणी देवि सर्वेषां जननी परा। तुष्टायां त्वयि देवेशि सर्वे तोषपरा भवेत्॥ सृष्टेरादौ त्वमेकासीत् तमोरूपमगोचरम्। त्वत्तो जातं जगत्सर्वं परब्रह्मसिसृक्षया॥ महदाद्यादिभूतान्तं त्वया सृ-

कवि:

ष्टमिदं जगत्। निमित्तमात्रं तद्ब्रह्म सर्वकारणकारणम्॥ सद्रूपं सर्वतो व्यापि सर्वमावृत्य तिष्ठति। सदैकरूपं चिन्मात्रं निर्लिप्तं सर्ववस्तुषु॥ न करोति न चाश्नाति न गच्छति न तिष्ठति। सत्यं ज्ञानमनाद्यन्तमवाङ्मनसगोचरम्॥ तस्येच्छामात्रमालम्ब्य त्वं महायोगिनी परा। करोषि पासि हंस्यन्ते जगदेतच्चराचरम्॥ तव रूपं महाकालो जगत्संहारकारकः। महासंहारसमये कालः सर्वं ग्रसिष्यति॥ कलनात्सर्वभूतानां महाकालः प्रकीर्तितः। महाकालस्य कलनात्त्वमाद्या कालिका परा॥ कालसंग्रसनात् काली सर्वेषामादिरूपिणी। कालत्वादादिभूतत्वादाद्या कालीति गीयते॥ पुनः स्वरूपमासाद्य तमोरूपं निराकृति। वाचातीतं मनोगम्यं त्वमेकैवावशिष्यसे॥ साकारापि निराकारा मायया बहुरूपिणी। त्वं सर्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका॥ अतस्ते कथितं भद्रे ब्रह्ममन्त्रेण दीक्षितः। यत्फलं समवाप्नोति तत्फलं तव साधनात्॥ नानाचारेण भावेन देशकालाधिकारिणाम्। विभेदात् कथितं भद्रे क्वचिद् गुप्तसाधनम्॥ येयमाधिकृतामर्त्यास्ते तत्फलभागिनः। भ-

विष्यन्ति तरिष्यन्ति मानुषा गतकि
ल्बिषा: ॥ बहुजन्मार्जितैः पुण्यैः कु
लाचारे मतिर्भवेत् । कुलाचारेण पू
तात्मा साचाच्छिवमयो भवेत् ॥ यत्रा
स्ति भोगबाहुल्यं तत्र योगस्य का कथा
। योगेपि भोगविरह: कौलस्तूभयम
श्नुते ॥ एकश्चेत्कुलतत्त्वज्ञः पूजितो
येन सुव्रते । सर्वे देवाश्च देव्यश्च पूजि
तानात्र संशय: ॥ पृथिवीं हेमसंपूर्णां
दत्त्वा यत्फलमाप्नुयात् । तस्मात्को
टिगुणं पुण्यं लभते कौलिकार्चनात्
॥ श्वपचोपि कुलज्ञानी ब्राह्मणादति
रिच्यते । कुलाचारविहीनस्तु ब्राह्म
णः श्वपचाधम: ॥ कौलधर्मात्परो
धर्मो नास्ति ज्ञाने तु मामके । यस्या
नुष्ठानमात्रेण ब्रह्मज्ञानी नरो भवेत्
॥ सत्यं ब्रवीमि ते देवि हृदि कृत्वाव
धारय । सर्वधर्मोत्तमात् कौलात्प
रो धर्मो न विद्यते ॥ अयन्तु परमो मा
र्गो गुप्तोस्ति पशुसङ्कटे । व्यक्तो भविष्य
त्यचिरात् संप्राप्ते प्रबले कलौ ॥ क
लिकाले प्रवृद्धे तु सत्यं सत्यं मयोच्य
ते । नस्यास्यन्ति विना कौलान् प्रभवो
मानवा भुवि ॥ यदा तु वैदिकी दीक्षा
दीक्षा पौराणिकी तथा । नस्यास्य-
ति वरारोहे तदैव प्रबल: कलि: ॥ य
दा तु पुण्यपापानां परीक्षा वेदसम्भवा



। नस्यात्यतिगिते शान्ते तदैव प्रबल:
कलि: ॥ क्वचिच्छिन्ना क्वचिद्भिन्ना य
दा सुरतरङ्गिणी । भविष्यति कुले
ज्ञानि तदैव प्रबल: कलि: ॥ यदा तु
म्लेच्छजातीया राजानो धनलोलुपा:
। भविष्यन्ति महाप्राज्ञे तदैव प्रबल:
कलि: ॥ यदा स्त्रियोतिदुर्दान्ता:-
कर्कशा: कलहे रता: । गर्हिष्यन्ति
स्वभर्त्तारं तदैव प्रबल: कलि: ॥ य
दा तु मानवा भूमौ स्त्रीजिता: काम
किङ्करा: । द्रुह्यन्ति गुरुमित्रादीन्
तदैव० ॥ यदा चौर्वी स्वल्पफला तो
यदा स्तोकवर्षिण: । असम्यक्फलि
नो वृक्षास्तदैव० ॥ भ्रातर: स्वज
नामात्या यदा धनकलेच्छया । मि
थ: सम्प्रहरिष्यन्ति तदैव० ॥ प्रक
टे मद्यमांसादौ निन्दादण्डविवर्जिते
। गूढपानं चरिष्यन्ति तदैव० ॥ स
त्यत्रेताद्वापरेषु यथा मद्यादिसेवन
म् । कलावपि तथा कुर्यात् कुलधर्मा
नुसारत: ॥ ये कुर्वन्ति कुलाचारं सत्य
पूता जितेन्द्रिया: । ध्यक्ताचारा दया
शीलान्हितान्बाधते कलि: ॥ गुरु
शुश्रूषणे युक्ता भक्ता मातृपदाम्बुजे
। अनुरक्ता: स्वदारेषु नहि० ॥ सत्य
व्रता: सत्यनिष्ठा: सत्यधर्मपरायणा:
। कुलसाधनसत्याये नहि० ॥ कुलमा

**कलिः**

गैणतत्त्वा निरोधिता निच योगिने।
ये द्दद्युः सत्यवचसे नहि० ॥ हिंसा
मात्सर्यरहिता दम्भद्वेषविवर्जिताः।
कुलधर्मेषु निष्ठा ये नहि०॥ कौलिकैः
सह संसर्गं वसतिं कुलसाधुषु। कुर्व
न्ति कौलसेवां वे नहि०॥ नानावे
षधराः कौलाः कुलाचारेषु निश्चलाः
सेवन्ते तां कुलाचारैर्नहि०॥ जीव
सेकादिसंस्काराः पितृश्राद्धादिकाः
क्रियाः। येकुर्वन्ति कुलाचारैर्नहि०
॥ स्नानं दानं तपस्तीर्थव्रतं तर्पण
मेवच। ये कुर्वन्ति कुलाचारैर्नहि०
॥ कुलतत्त्वं कुलद्रव्यं कुलयोगिन
मेवच। नमस्कुर्वन्ति ये भक्त्या नहि०॥
कौटिल्यान्तहीनानां स्वच्छाना
रङ्कुलमार्गिणाम्। परोपकाररति
नां साधूनां किङ्करः कलिः॥ कले
र्दोषसमूहस्य महानेको गुणः प्रिये
सत्यप्रतिज्ञ कौलानां श्रेयः सङ्क
ल्पमात्रतः॥ अपरेतु युगे देविपु
ण्यं पापञ्च मानसम्। नृणामासी
त् कलौ पुण्यं केवलं नतु दुष्कृतम्॥
कुलाचारे विहीना ये सततासत्य
भाषिणः। परद्रोहपरा ये च ते नराः
कलिकिङ्कराः॥ कुलवर्त्मस्वभक्ता ये
यन्त्रेष्वपि च कालुकाः। द्वेष्टारः कुल
निष्ठानां रोषेषाः कलिकिङ्कराः॥

**कलिः**

युगाचारप्रसङ्गेन कलेः भावत्व-
स्वरूपम्। सङ्क्षेपात् कथितस्त
द्प्रीतये तव पार्वति। प्रकटे च कलौ
देवि सर्वे धर्माश्च दुर्बलाः। स्थास्यत्ये
कं सत्यमात्रं तस्मात् सत्यमयो भ
वेत्॥ सत्यधर्मं समाश्रित्य यत्कर्म
कुरुते नरः। तदेव सकलं कर्म सत्यं
जानीहि सुव्रते॥ नहि सत्यात् प
रो धर्मो न पापम् अनृतात्परम्। त
स्मात् सर्वात्मना मर्त्यः सत्यमेकं स
मांश्रयेत॥ सत्यहीना वृथा पूजा
सत्यहीनो वृथा जपः। सत्यहीनं
तपो व्यर्थमूषरे वपनं यथा॥ सत्य
रूपं परम्ब्रह्म सत्यं हि परमन्तपः।
सत्यमूलाः क्रियाः सर्वाः सत्यात्
परतरं नहि॥ अतएव मया प्रोक्तं दु
ष्कृते प्रबले कलौ। कुलाचारोपि
सत्येन कर्त्तव्यो व्यक्तभावतः॥ गोप
नाद्धीयते सत्यं न गुप्तिरनृतं विना
तस्मात्प्रकाशतः कुर्यात् कौलिकः
कुलसाधनम्॥ कुलधर्मस्य गुप्त्यर्थ
मानृतं स्याज्जुगुप्सितम्। यदुक्तं कु
लतन्त्रेषु नयस्तं प्रबले कलौ॥ कृते
धर्मश्चतुष्पादस्त्रेतायां पादहीनकः।
द्विपादो द्वापरे देवि पादमात्रं कलौ
युगे॥ तत्रापि सत्यं बलवत्तपः प-
ञ्च दयापि च। सत्यपादे कृतेलोपे

भवेत् । तस्मान्मर्त्त्यः प्रयत्नेनशाङ्करंमतमाश्रयेत् ॥ बहुनात्रकिमुक्तेन सत्यंसत्यंमयोच्यते । अशाम्भवंकृतंकर्मसर्वंदेविनिरर्थकम् ॥ अस्तुतावत् परोधर्मःपूर्वधर्मोपिनश्यति । शाम्भवाचारहीनस्य नरकान्नैवनिष्कृतिः ॥ मदुदीरितमार्गेणानित्यनैमित्तिकर्मणाम् । साधनंयन्महेशानितदेवतत्त्वसाधनम् ॥ विशेषाराधनंतत्रमन्त्रयन्त्रादिसंयुतम् । शेषंकलिरोगाणांश्रूयतांगदतोमम ॥ ॥ इतिश्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारेश्रीमदाद्यासदाशिवसंवादेजीवनिस्तारोपायप्रश्ने परांप्रकृतिसाधनोपक्रमोनामचतुर्थोल्लासः ॥ ४ ॥ ॥ यावद्गङ्गायपूजास्ति यावद्गङ्गाधरीतले । यावद्वेदस्मयोघोषस्तावन्नोविद्यतेकलि ॥ हरेर्नामैवनामैवनामैवममजीवनम् । कलौनास्त्येवनास्त्येवनास्त्येवगतिरन्यथा ॥ एकाये । द्यूतक्रीडासाधनीभूताचस्य यस्मिन् भागेएकोङ्कस्तस्मिन् ॥ कलनम् । कलशब्दादौ । इन् ॥ कलयतिकल्यतेवा ॥ कलगतौसंख्यानेच । अदन्तः । ॥अच इः॥

कलिः । स्त्री । कोरके । कलिकायाम् ॥ कलते । कलशब्दसंख्यानयोः । सर्वधातुभ्यइन् ॥

कलिकः । पुं । क्रौञ्चक इतिगौडभाषाप्रसिद्धे पक्षिणि । क्रौञ्चे ॥

कलिका । स्त्री । अविकसितपुष्पे । कोरके ॥ वीणामूले ॥ पदसन्ततियुक्तरचनाविशेषे ॥ लक्षणन्तु । कलानामभवेत्तासांनियता पदसन्ततिः । कलाभिः कलिकाप्रोक्ता तद्भेदाः षट्समीरिताः इत्यादिरूपगोस्वामिकृतगोविन्दविरुदावलीभाष्येऽवलोकनीयम् ॥ कलयति । कलगतौसंख्यानेच । चुरादिः । अचइः । स्वार्थेकन् ॥

कलिकापूर्वम् । न । अङ्गप्रधानान्यतरबहुकर्मसाध्यस्वर्गादिफलजनकापूर्वोत्पत्तौतत्तत् प्रत्येककर्मजन्ये अदृष्टे ॥ इतिस्मृतिः ॥

कलिकारः । पुं । धूम्याटपक्षिणि ॥ पीतमस्तकपक्षिणि ॥ पूतिकरञ्जे ॥ कलिंकरोति । कृञ् । कर्मण्यण् ॥

कलिकारकः । पुं । नारदे ॥ पूतिकरञ्जे । लङ्काकारञ्जे ॥ स्वार्थेकन् ॥

कलिकारी । स्त्री । उपविषप्रभेदे । लाङ्गल्याम् । गर्भपातन्याम् ॥ अग्निमुख्याम् । विषलाङ्गलीया इतिगौडभाषा ॥

कलिदो

कलिङ्गः । पुं । पूतिकरञ्जे ॥ धूम्याटे ॥ कुटजवृत्ते ॥ शिरीषवृत्ते ॥ प्लक्षवृत्ते ॥ कलिङ्गाः । देशविशेषे ॥ यथा । जगन्नाथात् पूर्वभागे कृष्णातीरान्तर्गमिते । कलिङ्गदेशः संप्रोक्तो वाममार्गपरायण इति ॥ कलिङ्गाः क्षत्रियाः तेषां निवासो जनपदः कलिङ्गाः । निवासेऽणो जनपदे लुप् । लुपि युक्तवद्व्यक्तिवचने ॥ न । कौटजफले । इन्द्रयवे ॥ कलिङ्गच्छति । अन्तर्भावितण्यर्थोऽस्मेडः । पृ० ॥ खड्गविशेषे मुकुटे । कलिंगायतीति स्वामी । कलिके मूर्ध्नि लिङ्गं चूडा यस्येति वा ॥

कलिङ्गकः । पुं । कलिङ्गार्थे । इन्द्रयवे ॥

कलिङ्गा । स्त्री । नितम्बिन्याम् । योषिति ॥ त्रिवृतायाम् ॥ इन्द्रयवे ॥

कलिङ्गः । पुं । कटे । चटाई सेफ इति भाषा ॥

कलितः । त्रि । विदिते ॥ आप्ते ॥ भेदिते ॥ गणिते ॥ उक्ते ॥ बद्धे ॥ धृते ॥ यथा । करकलितकपालः कुण्डली दण्डपाणिरिति भैरवध्यानम् ॥ सङ्क्रान्ते ॥ यथा । कदाकालेमातः कथयकलितालक्तकरसमिति ॥ विश्वादिर्ति ॥

कलिदोषमः । पुं । कुलधर्मे ॥ कलि

कलिमा

मलापहे परमात्मनि वासुदेवे ॥ यथा । कलावर्त्तिदोषाद्विषयासक्तमानसः । कृत्वापि सकलं पापं गोविन्दस्मरणाच्छुचिः ॥ अतिपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥ आद्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये । संसारस्थूलबन्धानामुद्वेजनकरो हि सः ॥ इत्यादिपुराणवचनम् ॥ कलेर्दोषो विहिताकरणप्रतिषिद्धानुष्ठानलक्षणः तान्स्मरणमात्रेण हन्ति नाशयतीति व्युत्पत्तिः ॥

कलिद्रुमः । पुं । विभीतके । बहेडा इति भाषा ॥

कलिन्दः । पुं । अद्रिविशेषे ॥ सूर्ये ॥ विभीतकद्रुमे ॥

कलिन्दकन्या । स्त्री । यमुनायाम् ॥

कलिन्दजा । स्त्री । यमुनायाम् ॥ कलिन्दाज्जाता । जनी० डः । टाप् ॥

कलिन्दनन्दिनी । स्त्री । कालिन्द्याम् ॥

कलिन्दशैलजा । स्त्री । यमुनायाम् ॥

कलिप्रियः । पुं । नारदमुनौ ॥ वानरे ॥ कलेः प्रियः । कलिः प्रियो यस्य वा ॥

कलिमलापहः । पुं । संसारदुःखोपशमने ॥

कलिमारकः । पुं । पूतिकरञ्जे । कण्टकपूतिकरञ्जे ॥ कलिं मारयति ।

कलिमारकः । पुं । पूतिकरञ्जे ॥

कलियुगम् । न । कलौ । अन्त्ययुगे ॥ अस्योत्पत्त्यादि यथा । माघीपूर्णिमायां शुक्रवारे कलियुगोत्पत्तिः । अस्यावतारः कल्किः । पुण्यमेकपादम् । पापं त्रिपादम् । गङ्गा तीर्थम् । ग्राम्ययोनिरब्धिः । अन्नगताः प्राणाः । सार्द्धत्रिहस्तपरिमितो मनुष्यदेहः । अष्टाधिकशतवर्षं परमायुः । भोजनपानस्य नियमो नास्ति इत्यस्य लक्षणम् ॥ अस्याब्दाः ४३२००० ॥ अत्र षट् शककर्त्तारः । यथा । युधिष्ठिरो विक्रमशालिवाहनौ नृपाधिनाथो विजयाभिनन्दनः । इमे नु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट्शककारकाः कलौ इति । धर्मः सङ्कुचितस्तपोविरहितं सत्यं च दूरं गतं लोकाधर्मरता द्विजाश्च लुभिता नार्यश्च ...ः मानवा इत्यस्य माहात्म्यम् ॥ अपि निस्ताराय भागवतोक्तं ब्रह्मोपासनमेव सदा शिवेनोक्तम् ॥

कलियुगालयः । पुं । विभीतके ॥

कलिलम् । त्रि । गहने । मिश्रे ॥ कलते कल्यते वा । कलशब्दसङ्ख्यानयोः । सलिकलीतीलच ॥

कलिद्रुमः । पुं । विभीतके ॥

कलिहारी । स्त्री । लाङ्गल्याम् ॥ कलिहारीसरा कुष्ठशोफार्शोव्रणशूलजित् । सक्षारा श्लेष्मजित्तिक्ता कटुका तुवरापि च ॥ तीक्ष्णोष्णा कृमिहृल्लघ्वी पित्तला गर्भपातनी ॥

कली । स्त्री । कलिकायाम् ॥

कलुषः । पुं । स्त्री । महिषे । न । पापे ॥ त्रि । आविले ॥ कलुषति । लुष हिंसायाम् । इगुपधेति कः । कस्य जलस्य लुषो घातकः ॥ कलयति वशीकरोति वा ॥ कलसङ्ख्याने । पुनः शिकलिभ्य उषच् ॥

कलेवरम् । न । शरीरे ॥ कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठम् । हलदन्तादित्यलुक् ॥

कलोपजीवी । त्रि । शाङ्कुषी ॥

कल्कः । पुं । न । घृततैलादिशेषे ॥ दम्भे ॥ विभीतकवृक्षे ॥ विष्ठायाम् ॥ किट्टे ॥ तुरुष्कनामगन्धद्रव्ये । घृतेन तैलेन वा त्रिफलादिद्रव्यसमवेते नसाध्ये पिष्टौषधविशेषे ॥ घृततैलादिपाके देयौषधद्रव्ये । तत्तु पञ्चकषायान्तर्गतं दृषदि पेषितम् । यथा । द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं मिश्रितम् । तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते इति ॥ अस्य पूर्वं वीर्यं याममेकं तिष्ठति ॥ शाठ्ये ॥ पापे । यथा । तमोऽन्तकल्कोऽध्ययनेन

कल्कइत्यादि । न । छद्मनि । विपापाशये । पापात्मनि । कल्यते । कल्क० । कृदाधारार्चिकलिभ्यः कः इति कः ॥ [illegible]

कल्कनम् । न । दम्भे ॥ शाठ्ये ॥ कथने ॥ कलहे ॥

कल्कफलः । पुं । दाडिमवृक्षे ॥

कल्किः । पुं । विष्णोर्भविष्यति दशमावतारे । विष्णुयशःपुत्रे । स तु कलिशेषे पापात्मनां विनाशाय सम्भलग्रामे भविष्यति । यथा । सम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः । भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ तस्य कर्मैयथा । अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः । असिनासाधुदमनमष्टैश्वर्यगुणान्वितः ॥ विचरन्नाशुना क्षौण्यां हयेनाप्रतिमद्युतिः । नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥ इति श्रीभागवतम् ॥ विशेषः कल्किपुराणादिषु द्रष्टव्यः ॥

कल्की । पुं । कल्क्यवतारे ॥ यथा । मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च रामश्च बुद्धः कल्कीति ते दश ॥ इति ॥

कल्पः । पुं । शास्त्रे । यागक्रियायामुपदेशके वेदाङ्गविशेषे ॥ यच्च विद्यायाम् । बोधायनादिकर्मपद्धतिग्रन्थे ।



सूत्रग्रन्थे ॥ अनुष्ठेयक्रमः कल्पः ॥ विधौ ॥ कल्पतेऽनेनवा । कृपू सामर्थ्ये । अच । घञ्वा ॥ प्रलये । संवर्त्ते ॥ कल्पते समर्थो भवति । पुंसि । तिघः ॥ ब्रह्मणोदिने ॥ ब्रह्मणो दिनमेकं कल्पः ॥ ब्रह्मणोरात्रिश्चापरः कल्पः ॥ कल्पयति स्थितिं प्रलयञ्च । कृपू० । यन्तात् पचाद्यच् ॥ क्रमसन्दर्भे तु । त्रिंशत्कल्पैर्ब्रह्मण एकोमासो भवति । तेषां क्रमतो नामानि । यथा । श्वेतवाराहः १ नीललोहितः २ वामदेवः ३ गाथान्तरः ४ रौरवः ५ प्राणः ६ वृहत्कल्पः ७ कन्दर्पः ८ सद्यः ९ ईशानः १० ध्यानः ११ सारस्वतः १२ उदानः १३ गरुड १४ कौर्मः १५ अयं ब्रह्मणः पौर्णमासी । नारसिंहः १६ समाधिः १७ आग्नेयः १८ विष्णुजः १९ सौरः २० सोमकल्पः २१ भावनः २२ सुप्तमाली २३ वैकुण्ठः २४ आर्चिषः २५ वल्मीकल्पः २६ वैराजः २७ गौरीकल्पः २८ माहेश्वरः २९ पितृकल्पः ३० अयं ब्रह्मणोऽमावास्या । इति क्रमसन्दर्भे प्रभासखण्डम् ॥ एतादृशैर्द्वादशमासैर्ब्रह्मणः संवत्सरो भवति । एवंवर्षशतम्ब्रह्मणआयुः । तत्र पञ्चाशद्वर्षाणि गतौ

। कासमे ॥

कसेरुः । पुं । कशेरौ । गुण्डकन्दे । सु कन्दे । भूकरेटे ॥

कसेरुकः । पुं । } कशेरुणि ॥
कसेरुका । स्त्री । }

कस्तीरम् । न । रङ्गे । पिण्टे । वङ्गे ॥

कस्तुरिका । स्त्री । } मृगमदे । कस्तू
कस्तूरिका । स्त्री । } र्याम् ॥

कस्तूरी । स्त्री । मृगमदे । मृगनाभौ । गन्धकेलिकायाम् । वेधमुख्याया म् ॥ कस्तूरिका कटु स्तिक्ता क्षारोष्णा शुक्रला गुरुः । कफवातविषच्छर्दिशी तदौर्गन्ध्यशोषहृत् ॥ सा च त्रिविधा । कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् । काश्मीरी कपिलच्छा या कस्तूरी त्रिविधा मता ॥ कामरू पोद्भवा श्रेष्ठा नैपाली मध्यमा भवे त् । काश्मीरदेशसम्भूता कस्तूरी ह्य धमा स्मृता ॥ कसति गन्धोऽस्याः । कसगतौ । बा° ऊरः । पृषोदरा दिः ॥

कस्तूरीमल्लिका । स्त्री । मृगमदवासा याम् ॥

कह्लारम् । न । श्वेतोत्पले । सौग न्धिके ॥ कस्य जलस्य ह्लारश्व । के ह्लादते वा । ह्लादी° । यथाच् । पृषोदरादिः ॥



कह्वः । पुं । बकपक्षिणि ॥ क इति शब्दे न के जले वा । ह्वयति । ह्वेञ्स्प र्द्धायां शब्देच । मू° । कः ॥

कांसीयम् । न । कांस्ये ॥ इति राजनि र्घण्टः ॥

कांस्यम् । न । वाद्यविशेषे ॥ पानपात्रे ॥ मानभेदे ॥ ताम्ररङ्गमिश्रितधातौ । ताम्रार्द्धे । सौराष्ट्रके । वह्निलोहके ॥ ताम्रं त्रपुज माख्यातं कांस्यं घोषञ्च कंसकम् । उपधातुर्भवेत् कांस्यं द्वयो स्तरणिरङ्गयोः ॥ कांस्यस्य तु गुणा ज्ञे याः स्वयोनिसदृशाजनैः । संयोग जप्रभावेण तस्यान्येऽपि गुणाः स्मृताः ॥ कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम् । गुरु नेत्रहितं रूक्षं कफपित्त हरं परम् ॥ * ॥ अस्य शोधनम् । पत्त लीकृत्य पत्राणि कांस्यस्याग्नौ प्रता पयेत् । निषिञ्चेत्तप्ततप्तानि तैले त क्रे च काञ्जिके ॥ गोमूत्रेच कुलत्थानां कषायेच त्रिधा त्रिधा । एवं कांस्यस्य री तेश्च विशुद्धिः सम्प्रजायते ॥ * ॥ मारणविधिस्तु । अर्कक्षीरेण सम्पि ष्टौ गन्धकः स्तेन लेपयेत् । समेन कां स्यपत्राणि शुद्धान्यग्नौ दहेत् मुहुः ॥ स तो मूषापुटे धृत्वा पचेद्गजपुटेन च । एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रु वम् ॥ इति भावप्रकाशः ॥ कंसीयञ्च

विकारः कंसीयपरस्वययोर्‍यञ्। इति यञ्। छस्य च लुक्॥

कांस्यकम्। न। कांस्यशब्दार्थे॥

कांस्यकारः। पुं। कंसकारे। कसेरा इति ख्याते जातिविशेषे। शौल्विके। ताम्रकुट्टके॥ कांस्यं करोति। डुकृञ्० कर्मण्यण्॥

कांस्यनीलः। पुं। अञ्जनविशेषे। मूपातुत्थे। हेमतारे॥

काकः। पुं। आत्मघोषे। वायसे। करटे॥ पीठसर्पिणि। पङ्गौ॥ वृक्षविशेषे। शिरोऽवक्षालने॥ परिमाणविशेषे॥ द्वीपविशेषे॥ अतिधृष्टे॥ तिलके॥ न। सुरतबन्धे॥ काकानां संहतौ॥ काकानां समूहः। तस्य समूह इत्यण्॥ कायति। कैशब्दे। इणभीकापाशल्यतिमर्चिभ्यः कन्॥

काककङ्गुः। पुं। चीनके। चीणा इति प्रसिद्धे धान्ये॥ इति हेमचन्द्रः॥

काककर्कटी। स्त्री। खर्जूर्याम्॥

काककला। स्त्री। काकजङ्घाख्ये॥

काककुष्ठम्। न। कङ्कुष्ठे॥

काकघ्नी। स्त्री। मद्यकरञ्जे॥

काकचिञ्चा। स्त्री।
काकचिञ्चिः। स्त्री।
काकचिञ्ची। स्त्री।
— गुञ्जायाम्॥ काकस्य चिञ्चा। गौरादिः॥

काकच्छदः। पुं।
काकच्छदिः। पुं।
— खञ्जनपक्षिणि॥

काकजङ्घा। स्त्री। स्वनामाख्याते वृक्षविशेषे। काकनासिकायाम्। नदीकान्तौषधौ॥ काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित्। निहन्ति ज्वरपित्तास्रज्वरकण्डुविषक्रिमीन्॥ काकप्रजङ्घायाम्॥

काकजम्बुः। स्त्री। भूमिजम्ब्वाम्॥

काकजम्बूः। स्त्री। काकफलायाम्। काकनीलायाम्॥

काकणम्। न। कुष्ठविशेषे॥ तल्लक्षणं यथा॥ यत् काकणन्तिकावर्णं सपाकं तीव्रवेदनम्। त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यतीति॥

काकणन्तिका। स्त्री। गुञ्जायाम्॥

काकतालीयम्। न। अवितर्कितसम्भवे॥ यादृच्छिकन्याये॥ समासाद्धसदिवर्यादिसिद्धः। अस्मादेव ज्ञापकादिवार्थे समासः। सहसुपेति वा। दावि वार्थौ। काकागमनमिव तालपतनमिव। काकतालम्। काकतालमिव काकतालीयम्। वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ। तत्र काकागमनं दैवदत्तागमनस्योपमानम्। तालपतनं दस्युनिपातस्य। तालेन तु यः काक

स्ववध.स देवदत्तस्य दस्युना बध्सोप मानम्। इति यथादि:काकतालीया दि शब्दवाच्यः सम्पद्यते ॥ काकता लसमागमसदृश स्वोरसमागम इ- ति समासार्थः। ततप्रयुक्तः काकम रणसदृशस्तु मत्त्ययार्थः ॥

काकतिक्ता। स्त्री। काकचिञ्चायाम्॥

काकतिन्दुकः। पुं। काकेन्दौ। काकपी लुके । मांकडाकेन्दु माकडागाव काकतेंदु इतिच गौडभाषा ॥ का- कानाम् काकवर्णो वा तिन्दुकः॥

काकतुण्डः। पुं। कालागुरुणि॥

काकतुण्डफला। स्त्री। काकनासाया म्॥

काकतुण्डिका । स्त्री। काकचिञ्चाया म्।

काकतुण्डी । स्त्री। राजरीत्याम्। राजपीतल इति भाषा॥ कौआठो डी इति भाषाप्रसिद्धे वृक्षविशेषे। काकादन्याम्॥

काकध्वजः।पुं। वाडवाग्नौ॥

काकध्वजा। स्त्री। धूम्राक्ष्याम्॥

काकनामा। पुं। वकवृक्षे॥ इति रत्न माला॥

काकनासः। पुं। विकङ्कतवृक्षे॥

काकनासा। स्त्री। कौआजङ्घावृक्षे॥ काकस्यनासेव फलमस्याः। काक



नासा कषायोष्णा कटुकारस पाक योः। कफघ्नी वामनी तिक्ता शोथा र्शश्विचकुष्ठनुत्॥

काकनासिका। स्त्री। काकजङ्घायाम्। कौवाठोंठी तिख्याता औषधौ॥ रक्तनि वृति॥

काकपक्षः। पुं। शिखण्डके। मस्तकपा र्श्वदये केशरचनाविशेषे। पट्टे इति भषा॥ यथा। बालानान्तु शिखा प्रोक्ता काकपक्षःशिखण्डकः इतिह लायुधः। काकस्य पक्षइव॥

काकपदः। पुं। रतिबन्धविशेषे॥ यथा। पादौ द्वौ स्कन्धयुग्मस्थौ चिबुकलिङ्ग भगोलघु। कामयेत् कामुकीं कामी बन्धःकाकपदोमत इति॥

काकपर्णी। स्त्री। मुद्गपर्ण्याम्॥

काकपीलुः। पुं। काकतिन्दुके। कुच ला इति भाषा॥ श्वेतगुञ्जायाम्॥ काकतुण्ड्याम्॥ काकैःपीयते। पीलुप्रतिष्ठम्भे। वाहुलकादु॥

काकपीलुकः। पुं। काकपीलौ॥ का कानाम् पीलुरिव। इवेप्रतिकृता विति कन्॥

काकपुच्छः। पुं। पिके॥

काकपुष्टः। पुं। कोकिले॥ काकेन पुष्टः॥

काकपुष्पम्। न। ग्रन्थिपर्णे॥

काकफलः । पुं । निम्बवृक्षे ॥ इति राजनिर्घण्टः ॥

काकवलिः । पुं । काकसम्प्रदानकान्नादौ ॥

काकभाण्डी । स्त्री । महाकरञ्जे ॥

काकभीरुः । पुं । पेचके ॥

काकमद्गुः । पुं । दात्यूहे ॥

काकमर्द्दः । पुं । महाकाललतायाम् ॥

काकमर्द्दकः । पुं । किम्पाके ॥

काकमाचिका । स्त्री । वायस्याम् ॥

काकमाची । स्त्री । वायस्याम् । बहुफलायाम् । सर्वतिक्तायाम् । मकोय इतिभाषा ॥ काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा । तिक्ता रसायनी शोथकुष्ठार्शोज्वरमेहजित् । कटु नेत्रहिता हिक्काछर्द्दिहृद्रोगनाशिनी ॥ काकमाचिजनितं मृदु शाकं वेसवारमिलितेन सुवासम् । तप्ततैलतलनेन सुपाकं कैरवाप्य न कृतं सुखवासम् ॥ काकान् मच्यते । सन्निधारणोच्छ्रायपूजनेषु । "कर्मण्यण् । आगमशासनस्यानित्यत्वान्नुम् ॥

काकमाता । स्त्री । काकमाच्याम् ॥

काकमुद्गा । स्त्री । मुद्गपर्ण्याम् । मुगानी इति गौडभाषा ॥ ईषत् कम् ईषदर्थे चेति कोः कादेशः । काकेन ईषज्जलेन मुद्गं गच्छति । गमश्चेति डः ॥ यद्वा । काकाः मुद्गाः हर्षं प्राप्ता यस्याम् ॥

काकयवः । पुं । आगडा इति गौडभाषा प्रसिद्धे तण्डुलशून्यधान्ये ॥ इति महाभारतम् ॥

काकरिपुः । पुं । उलूके ॥

काकरुहा । स्त्री । वन्दायाम् ॥

काकरूकः । पुं । स्त्रीजिते ॥ उलूके ॥ दम्भे ॥ त्रि । नग्ने ॥ भीरुके ॥ निर्द्धने ॥

काकलम् । न । कण्ठमणौ ॥ पुं । द्रोणकाके ॥

काकलकः । पुं । कण्ठमणौ । ग्रीवाया मुन्नतप्रदेशे ॥

काकलिः । स्त्री । काकल्याम् ॥

काकली । स्त्री । सूक्ष्ममधुरास्फुटध्वनौ ॥ ईषत्कलः काकली । ईषदर्थे चेति कोः कादेशः । गौरादित्वान्ङीष् ॥

काकलीद्राक्षा । स्त्री । निर्बीजायाम् । रसाधिकायाम् । सूक्ष्मायाम् । किसमिस इति भाषा ॥ इति राजनिर्घण्टः ॥

काकलीरवः । पुं । कोकिले ॥

काकवल्लरी । स्त्री । स्वर्णवल्ल्याम् ॥

काकविष्ठा । स्त्री । काकमले ॥ कर्म

धने ॥ नागकेशरपुष्पे ॥ काञ्चति काचिर्दीप्तौ । नन्द्यादित्वात् ल्युः ॥

काञ्चनकः । पुं । शालिजातिविशेषे ॥ कोविदारवृक्षे ॥ न । हरिताले ॥

काञ्चनकदली । स्त्री । स्वर्णकदल्याम् । चाँपाकेला इति गौडभाषा ॥

काञ्चनकारिणी । स्त्री । शतमूल्याम् ॥

काञ्चनक्षीरी । स्त्री । क्षीरिणीलतायाम् ॥

काञ्चनगिरिः । पुं । सुमेरुपर्वते ॥

काञ्चनपुष्पकम् । न । आहुल्यवृक्षे । हलराख्ये । सुपुष्पे ॥

काञ्चनपुष्पी । स्त्री । गणिकारीवृक्षे ॥

काञ्चनारः । पुं । कोविदारे । युगपत्रके ॥ काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंसगण्डमालाव्रणापहः ॥ कोविदारोऽपि तद्वत् स्यात् तस्य पुष्पं लघु स्मृतम् । रूक्षं संग्राहि पित्तास्रप्रदरक्षयकासजित् ॥

काञ्चनालः । पुं । कोविदारे ॥

काञ्चनाह्वयः । पुं । चाम्पेये । नागकेशरे ॥ काञ्चनस्य आह्वया आह्वयो यस्य ॥

काञ्चनी । स्त्री । हरिद्रायाम् ॥ गोरोचनायाम् ॥ स्वर्णक्षीरीवृक्षे ॥ काञ्चतेऽनया । काचिदीप्त्यादौ । करणे इति ल्युट् । टिड्ढेति ङीप् ॥

काञ्चनीया । स्त्री । गोरोचनायाम् ॥

काञ्चि । स्त्री । काञ्च्याम् ॥ काञ्चते । काचि दीप्तिबन्धनयोः ॥ सर्वधातुभ्य इन् ॥

काञ्चिकम् । न । काञ्जिके । आरनाले ॥ इत्यन्तात् संज्ञायां कन् ॥

काञ्ची । स्त्री । सप्तमुक्तिप्रदपुरीविशेषे ॥ यथा । शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुग्मं समासतः । एतत्तु पृथिवीमध्ये न गण्यन्ते कदाचन ॥ एताः सप्तपुर्यः ॥ काशी शिवत्रिशूलस्था काञ्ची हरिहरात्मिका । वामदेवो वक्षसोर्भ्यां दधार द्विजपुङ्गव ॥ इति भूतशुद्धितन्त्रम् ॥ चन्द्रहार गोट् इति गौडभाषाप्रसिद्धे स्त्रीकट्याभरणे । मेखलायाम् । तत्पर्यायः । सप्तकी । रसना । सारसनमिति ॥ केचित्तु एकयष्टिर्भवेत् काञ्ची मेखलाष्टयष्टिका । रसना षोडश ज्ञेया कलापः पञ्चविंशकः ॥ इति भेदं पठन्ति । इत्यत्वभेदात् पर्यायता ॥ गुञ्जायाम् ॥ कृदिकारादिति वा ङीप् ॥

काञ्चीपदम् । न । जघने ॥ इति हलायुधकोषः ॥

काञ्जिकम् । न । आरनाले । अवन्तिसोमे । धान्याम्ले । काँजी इति भा-

तः॥

काञ्ची । स्त्री । महाद्रोणपुष्पे ॥

काठः । पुं । पाषाणे । अश्मनि ॥

काठकम् । न । कठानाम्धर्मे आम्नाये समूहे । चरणाद्धर्माम्नाययोरिति गोत्र चरणाद्वुञ् ॥

काठिन्यम् । न । कठिनतायाम् ॥ यथा । वाच्यतां समयोतीतः स्पष्टमग्रे भविष्यति । इतिपाठयतांग्रन्थे काठिन्यंकुत्रवर्त्तते इतिकलिविडम्बनम् ॥

काठिन्यफलः । पुं । कपित्थवृक्षे ॥

काणः । पुं । काके । वायसे ॥ त्रि । एकचक्षुषि । काणा इति भाषा ॥ योगविशेषे । यथा । रवौज्येष्ठा सोमेऽभिजित् भौमे पूर्वाभाद्रपदा बुधेऽश्विनी भरणीच गुरावार्द्रा शुक्रे मघा शनौचित्राचेत् काणयोगो भवति ॥ कणनिमीलने । अस्मात् घञ् ॥

काणूकः । पुं । करटे । वायसे ॥ कणति । कण॰ । सकशिभ्यामूकोकर्त्त विध्य् कण ॥

काण्डः । पुं । न । स्तम्बे । तृणादिगुच्छे ॥ तरुस्कन्धे । गुद्दा इतिभाषा ॥ वाणे । शरे ॥ अवसरे । प्रस्तावे । प्रसरणे ॥ कुत्सिते ॥ वृक्षविशेषे । अक्रोडे ॥ नाडीदण्डे । नाले ॥ वर्गे । परिच्छेदे ॥ वृन्दे । समूहे ॥ रहसि । निर्जनस्थाने ॥ षोडशहस्तप्रमाणे दण्डे ॥ श्लाघायाम् ॥ पापीयसि ॥ कनति । कनीदीप्तौ । अमन्ताड्डः । क्रादिभ्यःकित् । अनुनासिकस्येतिदीर्घः ॥ कणति कण्यते वा । कणशब्दे डः । बाहुलकाद्दीर्घः ॥ न । सन्धिविच्छिन्नेकखण्डास्थिनि ॥

काण्डकटुकः । पुं । कारवेल्ले ॥

काण्डकाण्डकः । पुं । काशतृणे ॥

काण्डकीलकः । पुं । लोध्रे ॥

काण्डगुण्डः । पुं । दीर्घकाण्डे । काशे तृणे ॥ गुण्डनीमतृणे ॥

काण्डगोचरः । पुं । नाराचे । लौहमयेबाणे ॥

काण्डतिक्तः । पुं । भूनिम्बे । चिरायता इतिभाषा ॥

काण्डनीलः । पुं । लोध्रे ॥

काण्डपटः । पुं । तिरस्करिण्याम् ॥ दृष्याद्योजवनि वायुसञ्चारार्थं पटविशेषे । चिक सिकीं इतिचभाषा ॥ कनात इतिच ॥

काण्डपुङ्खा । स्त्री । शरपुङ्खायाम् ॥

काण्डपुष्पम् । न । दैाना इति भाषा प्रसिद्धे सुद्रसुगन्धिपुष्पविशेषे ॥

काण्डपृष्ठः । पुं । वैश्यापतौ ॥ सुतान्तरे ॥ स्वकुलं पृष्ठतः कृत्वा यो वैप

न रक्षुलंग्नेन तेनेदुश्चरितेनासौ । काण्डपृष्ठ इतिस्मृतः॥ न । कर्णधनुषि॥ काण्डानि शस्त्राणि पृष्ठे यस्य॥ त्रि । शस्त्राजीवेन॥

काण्डरुहा । स्त्री । कटुकायाम् ॥

काण्डर्षिः । पुं । वेदकाण्डविशेषाध्यापके जैमिन्यादौ मुनिविशेषे॥ इति त्रिकाण्डशेषः॥

काण्डवान् । त्रि । काण्डीरे । वाणधारके॥ तीरन्दाज इतीतरभाषा॥ काण्डोवाणो ऽस्यास्ति । मतुप्॥

काण्डवारिणी । स्त्री । दुर्गायाम्॥ यथा । महागजघटाटोपसंयुगे नरवाजिनाम्। स्मर णाद् वारते वाणान् तेनसा काण्डवारिणीति देवीपुराणे देवीनिरुक्ति नामा ४५ ऽध्यायः॥

काण्डसन्धिः । पुं । ग्रन्थौ॥

काण्डस्पृष्ट । पुं । काण्डपृष्ठे । शस्त्राजीवे॥ स्पृष्टं गृहीत काण्ड शस्त्रं येन। वाहिताग्न्यादिष्विति परनिपातः॥

काण्डहीनम् । न । भद्रमुस्तके॥

काण्डका । स्त्री । लज्जायाम् । करालत्रिपुटायाम् ॥ वालुकीनामकर्कव्याम्॥

काण्डीर । त्रि । काण्डवति॥ काण्डो वाणोऽस्त्यास्ति । काण्डाण्डादीरन्नीरचौ॥ पुं । अपामार्गे॥ काण्डवेल इति गौडभाषाप्रसिद्धे लताभेदे । कारवल्ल्याम्॥

काण्डीरा । स्त्री । मञ्जिष्ठायाम्॥

काण्डीरी । स्त्री ।

काण्डेक्षुः । पुं । कोकिलाक्षे । तालमखाणा इतिभाषा॥ काण्डयुक्त इक्षुरिव॥

काण्डोलः । पुं । पिटे॥ कण्डोलो॥ स्वार्थिकः प्रत्ययः॥

काण्व । पुं । यजुर्वेदीयशाखाविशेषे॥ कण्वस्य गोत्रापत्यम्॥ काण्व्यः । गण्यञ॥ काण्व्यस्य छात्रः । कण्वादिभ्योगोत्रइत्यण् । कण्वोदेवता ऽस्यवा॥

कातरः । त्रि । अधीरे । व्यसनाकुले । रोगादिना ऽऽकुलमनसि॥ भीते॥ विवशे॥ ईषत्तरति। पचाद्य च । ईषदर्थेचेति को कादेशः॥ पुं । कातलामाछ इतिगौड़भाषाप्रसिद्धे मत्स्ये॥

कातराक्षी । स्त्री । चकितनेत्रायाम् । मृगलोचनायाम्॥

कातर्य्यम् । न । अधीरतायाम् । केवलायांनीतौ॥ यथा । कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम् । अतः सिद्धिंसमेताभ्यामुभाभ्यामन्वियेष

ष सः ॥ भावेष्यण् ॥

कातलः । पुं । मत्स्यविशेषे । कातला इति भाषा ॥ कातलोमधुरस्स्निग्धो गुरुपाकीत्रिदोषकृत् ॥

कातृणम् । न । रोहिषतृणे ॥

कात्यः । पुं । कात्यायनमुनौ ॥ कतस्यापत्यम् । गर्गादित्वात् यञ् ॥

कात्यायनः । पुं । धर्मशास्त्रकर्त्तृमुनिविशेषे ॥ व्याकरणवार्त्तिककारे । वररुचौ ॥ कात्यस्यापत्यम् । फक् ॥

कात्यायनी । स्त्री । उमायाम् । दुर्गायाम् ॥ काषायवस्त्राद्धवृद्धविधवायाम् ॥ कात्यायन्यर्द्धवृद्धायाकाषायवसनाऽधवेत्युक्तेः ॥ कतस्यापत्यम् । रा० यञ् । सर्वत्रलोहितादिकतन्तेभ्य इतिष्फः । षित्त्वान्ङीप् ॥

काथञ्चित्कः । त्रि । कथञ्चिदर्थे ॥ विनयादित्वात्स्वार्थेठक् ॥

काथिकः । पुं । कथायांसाधौ ॥ कथादिभ्यष्ठक् ॥

कादम्बः । पुं । यालिहाँस इतिगौड प्रसिद्धे कलहंसपक्षिणि । नीलहंसोयमितिरघुव्याख्यानेमल्लिनाथः ॥ बाणे । इषौ ॥ कदति । कदिः सौत्रः । कदिर्विंत पक्षिणीत्यम्बच् ॥ कदम्बेसम्भवः । अण् ॥

कादम्बकः । पुं । बाणे । सायके ॥



कादम्बरः । पुं । दध्यग्रे । दधिसरे ॥ न । कदम्बपुष्पोद्भवेमद्ये ॥ कादम्बं कदम्बजातंरसंराति । रा० । आत इतिकः ॥ मल्लिनाथस्तु दध्यङ्गिरभि तस्मैटानितिमाघ श्लोकव्याख्यावसरे कादम्बरश्चुः । कादम्बः कलहंसस्त्वोरितिविश्वः । कादम्बं राति रलयोरभेदाल्लाति । प्रकृतित्वेनादत्ते इतिकादम्बरमैरेयम् । पानसङ्गाच्च माधूकं खार्ज्जूरन्तालमैरेयम् इति स्मरणात् । आत इतिकः इत्याह ॥

कादम्बरी । स्त्री । कोकिलायाम् ॥ भारत्याम् । सरस्वत्याम् ॥ शारिकापक्षिणि ॥ मदिरायाम् । हलिप्रियायाम् ॥ कुत्सितमम्बरम् । कुगतिसमासः । कोःकत्तत्पुरुषेचि । कदम्बरंनीलाम्बरमस्यास्ति । अर्श आद्यच् । तस्येयम् । तस्येदमित्यण् । ङीप् ॥ यद्वा । कदम्बेजातोरसःकादम्बः । तत्रजातइत्यण् । कादम्बंराति । रादाने । आतोनुपेतिकः । गौरादित्वात् ङीप् ॥

कादम्बर्यः । पुं । कदम्बवृक्षे ॥

कादम्बा । स्त्री । मुण्डीतिख्यातायाङ्कदम्बपुष्प्याम् ॥

कादम्बिनी । स्त्री । मेघमालायाम् ॥ कादम्बाः कलहंसाः पक्षाकामन्मेघ

मनुधावन्ति ते सन्त्यसाः । इनिः ॥ कद्म्बस्यविकारः कादम्बः। सोस्य स्याः कार्यत्वेनेतिवा ॥

कादाचित्कम् । त्रि । कदाचिद्भवे ॥

काद्रवेयः । पुं । नागे । नराकारे फणा लाङ्गूलवति सर्पभेदोन्यस्मिन् देव योनौ ॥ कद्र्वाः अपत्यम् । स्त्रीभ्योढ क् । ढ्रेलोपोऽकद्र्वाः ॥ शुभ्रादित्वा द्वादक ॥

कानकम् । नं । जयपालबीजे ॥

काननम् । न । वने ॥ गृहे ॥ ब्रह्मणो मुखे ॥ कानयति । कनीदीप्त्यादौ । युच्युटा ॥ कस्यजलम् अननं जीव नमस्येतिवा ॥

काननारिः । पुं । शमीदृक्षे ॥ इतिशब्द चं० ॥

कानीनः । पुं । पाराशर्ये । वेदव्यासे ॥ कर्णे । कुन्तीज्येष्ठपुत्रे ॥ त्रि । कन्य काजाते ॥ कन्यायदूढा तदा वोढुरे वपुत्रः । यथाहमनुः । पितृवेश्मनि कन्यातु यं पुत्रं जनयेद्रहः । तंकानी नं वदेन्नाम्नावोढुः कन्यासमुद्भवमि ति ॥ कन्यायद्यनूढापितृगृहएवति ष्ठति तदा तत्पुत्रो मातामहस्यैव । यथाह याज्ञवल्क्यः । कानीनः कन्यकाजातो मातामहसुतोमत इति ॥ कन्यायाः अपत्यम् । कन्या



याःकनीनचेत्यण् ॥

कानीयसः । त्रि । कनीयसि ॥ स्वार्थे ऽण् ॥

कान्तः । पुं ॥ पत्यौ ॥ लोहे ॥ चन्द्रस्य र्यायः पर्यायान्तः कान्तः शिलायाम् । यथा । चन्द्रकान्तः सूर्यकान्तः अ यस्कान्त इति ॥ वसन्तर्तौ ॥ विज्ज लवृक्षे ॥ कदाचिदाखिलापुं रूपाकृष्णविग्रहः । वंशीनादविनो देन करोति विवशं जगदित्यादि पुराणवाक्यात् त्रिपुरसुन्दर्यवतार त्वेनातिसुन्दरे श्रीकृष्णचन्द्रे वा सुदेवे॥ अभिरूपतमदेहधारित्वा त् द्विपरार्द्धान्ते कल्पब्रह्मणोऽन्तोय स्मादितिवा । द्विपरार्द्धावसानेकान्त ब्रह्माणमन्तयतिनाशय तिवा ॥ न । कुङ्कुमे ॥ लौहविशेषे ॥ तस्यलक्ष० यथा । स्वादुर्यत्र भवेन्निम्बकल्को रा विन्दिवोषितः । कान्तंतदुत्तमं य च्चल्पयोगावर्त्तितं मिलेत् ॥ तस्यप रीक्षा यथा । पात्रेयस्मिन् प्रसरति जलेतैलविन्दुर्निषिक्तोहिङ्गुं गन्धंवि सृजतिनिजं रूपितं निम्बकल्कैः । पाकेदुग्धं भवतिशिखराकारतांनै तिभूमौ कान्तंलोहं तदिदमुदितं ल क्षणोक्तं नचान्यदिति सुखबोधः ॥ त्रि । मनोरमे । शोभने ॥ अभीष्टे

 

॥ गन्धविशेषे ॥ काम्यतेस्म । कमु कान्तौ । क्तः । यस्यविभाषेतिनेट् । अनुनासिकस्येतिदीर्घः ॥ कनति स्म वा । कनीदीप्तिकान्तिगतिषु । गत्यर्थेति क्तः ॥

कान्तपक्षी । पुं । मयूरे ॥

कान्तपुष्पः । पुं । कोविदारवृक्षे ॥

कान्तलकः । पुं । नन्दीवृक्षे । ओंद इति गौडभाषा प्रसिद्धे । तुन्ने ॥ काम्यते । कमु० अतियुडि पूजार्थे स्यस्येतिक्तः । लकति । लकआस्वादने । अच् । कान्तस्यासौलकश्च ॥

कान्तलोहः । पुं । न । अयस्कान्ते । कान्तीसार इति प्रसिद्धे लौहे ॥ अस्य परीक्षा । यत्पात्रे नप्रसरतिजले तैलबिन्दुः प्रतप्ते हिङ्गुर्गन्धंत्यजतिच निजंतिक्ततां निम्बकल्कः । तप्तंदुग्धं भवति शिखराकारकं नैतिभूमिं कृष्णाङ्गस्यात् सजलचणकः कान्तलोहंतदुक्तमिति ॥ अस्यगुणाः । गुल्मोदरार्शः शूलाममामवात भगन्दरम् । कामलाशोथकुष्ठानि चयं कान्तमयोहरेत् ॥ प्लीहानमम्लपित्तञ्चयकृच्चापिशिरोरुजम् । सर्वान् रोगान् विजयते कान्तलोहंनसंशयः ॥ बलवीर्यवपुःपुष्टिंकुरुते ऽग्निंविवर्द्धयेदिति ॥

कान्ता । स्त्री । नार्याम् ॥ स्त्रीविशेषे । सर्वाङ्गसुन्दर्याम् ॥ भोगेवीर्येधनं पूर्वमनः कुटिलभाषणैः । कान्ता हरति सर्वस्वं कः स्नेहस्तादृशोऽपरः ॥ प्रियङ्गुवृक्षे । फलिन्याम् ॥ नागरमुस्तायाम् ॥ रेणुकायाम् ॥ वृषदेवायाम् ॥ काम्यतेस्म । कमु० । णिङ् । भावेक्तः । टाप् ॥

कान्ताङ्घ्रिदोहदः । पुं । कान्ताचरणदोहदे । अशोकवृक्षे ॥

कान्तायसम् । न । अयस्कान्ते ॥

कान्तारः । पुं । कोविदारवृक्षे ॥ इक्षुविशेषे । कतारा इतिभाषा ॥ कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलोबृंहणःसरः ॥ न । उपसर्गादौ ॥ कानने ॥ अजाविशेषे ॥ पुं । न । महारण्ये ॥ दुर्गमवर्त्मनि ॥ बिले ॥ कान्ताअरायस्य ॥ यद्वा । कस्य जलस्य सुखस्य वा । अन्तः । कान्तं मनोज्ञम् ऋच्छति इयर्त्ति वा । कर्मण्यण् ॥

कान्तारकः । पुं । काजलि आक इति गौड भाषा प्रसिद्धे इक्षु विशेषे ॥ कान्तारमृच्छति । ऋगतौ । कर्म ण्यण् ॥ स्वार्थे कन् स्वुला ॥

कान्तारी । स्त्री । कान्तारके ॥

कान्तिः । स्त्री । शोभायाम् । दीप्तौ ॥ अभिलाषे । इच्छायाम् ॥ स्त्रीणांशृङ्गार

लेगुणविशेषे । सौन्दर्ये ॥ काम्यते अनया वा । काममनेन वा । कमु० । क्तिन् । अनुनासिकेति दीर्घइति केनचि दुक्तंतन्न । काम्यतीति तेनविग्रहो तच्चात् । तचाङ्गत्वाखिङ्निमित्त इड्डेः सम्भवात् । आयादयइतिणिङ भावेवाबोध्यम् ॥

कान्तिदम् । न । पित्ते ॥ त्रि । कान्त्युत्पादके । शोभादायके ॥

कान्तिदा । स्त्री । बाकुच्याम् । सोमराज्याम् ॥

कान्तिदायकम् । न । कालीयकद्रव्ये ॥ त्रि । कान्तिप्रदे ॥

कान्यिकः । त्रि । कन्यायाम्भवे ॥ शैषिकः कन्यायाठक् ॥

कान्दर्पिकम् । न । वाजीकरणे ॥ यथा । रक्ते ऽधिके स्त्री पुरुषस्तु शुक्रे न पुंसकंशोणितशुक्रसाम्ये । यस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानिरसायनानि ॥ दर्पोद्भुत मुडुनाथरश्मयः सोत्पलंमधुमदालसाप्रिया । पक्षकीस्मरकथारवः स्तनोवर्गएष मदनस्य वागुरा ॥ माचीकधातुमधुपारदलोहचूर्णपथ्याशिलाजतुविडङ्गएतानियो ऽश्नात् । सो कानि विंशति दशानि,जरान्वितोपि सानी तिनोपिरमयत्यथयोयुनेव ॥ क्षीरं श्रितंयः कपिकच्छुमूलैः पिबेत्सयं स्त्रीषु नसोम्यु पैति । माषान् पयः सर्पिषिवाविपक्वान् षड्ग्रासमानाश्च पयोनुपानात् ॥ विदारिकायाः स्वरसेन चूर्णंमुहुर्मुहुर्भावितशोषितञ्च । घृतेनदुग्धेनसशर्करेणपिबेत् सयस्य प्रमदाः प्रभूताः ॥ धात्रीफलानां स्वरसेन चूर्णं सुभावितं क्षौद्रसिताज्ययुक्तम् । लीढ्वानुपीत्वाच पयो ऽश्नियक्त्वाकामान्विकामः पुरुषोनिषेवेत् ॥ क्षीरेण यस्तोड्युजाश्रितेन सम्प्राप्यकामी बहुशस्तिलान्यः । सुशोषितानत्तिपिबेत् पयश्चतस्याग्रतः किंचटकः करोति ॥ माषस्वरसच्छितेनसर्पिषा षष्टिकौदनमदन्तियेनराः । क्षीरमप्यनुपिबन्तितासुते शर्वरीषुमदनेनशेरते ॥ तिलाश्वगन्धाकपिकच्छुमूलैर्विदारिकाषष्टिकपिष्टयोगाः । श्राजेनपिष्टाः पयसाघृतेन पक्वा भवेच्छष्कुलिकातिवृष्या ॥ क्षीरेणवागोक्षुरकोपयोगं विदारिकाकन्दकभक्षणं वा । कुर्वन्नसीदेदपिजीर्यतेऽस्य मदाग्निनाचेदिदमत्रचूर्णम् ॥ साजमोदलवणाहरीतकीशृङ्गवेरसहिताच पिप्पली । मद्यतक्रतरलोष्णवारिभिश्चूर्णपानमुदराग्निदीपनम् ॥

अत्यर्थम्लतिक्तलवणानि कटूनि वासि यः चारशाकवहुलानिच भोजनानि ठक शुक्रवीर्यरहितः स करोत्यनेकव्याजान् जरन्निव युवाप्यबलामसाप्येति॥

कान्दवम्। न। मिठाई पकवान इति प्रसिद्धे भक्ष्ये। कन्दौ संस्कृतम्। संस्कृतम्भक्ष्याद्द्यण्॥

कान्दविकः। त्रि। आपूपिके। पूपविक्रयकर्तरि। भक्ष्यकारे। कान्दवं पण्यमस्य। तदस्य पण्यमितिठक्॥

कान्दिशभूतः। त्रि। कान्दिशीके॥

कान्दिशीकः। त्रि। भयद्रुते। भीत्या पलायिते। कान्दिशं यामीत्याह। तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक्। पृ°॥

कान्यकुब्जम्। न। पुरविशेषे। गाधिपुरे। कुशस्थले। महोदये। कनौज इति भाषा॥

कान्यजा। स्त्री। नलीनामगन्धद्रव्ये॥

कापटिकः। त्रि। शठे॥ पुं। छात्रे॥ परमर्मज्ञे। मन्त्रवर्गेषु प्रथमे॥ तत्र परमर्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात् कापटिकः। तं स्वामी अर्थमानाभ्यां सुपगृह्य रहसि राजा ब्रूयात् यद्दुष्टं त्वं पश्यसि तत्तदानीमेव मयि वक्तव्यमिति॥ कपटे



नचरति। ठक्॥

कापथ्यम्। न। कपटभावे॥

कापथम्। न। उशीरे॥ पुं। अध्वे। निन्द्यवर्त्मनि। कुत्सितः पन्थाः। कुगतीतिसमासः। ईषदर्थे चेति कोः कादेशः। कुमार्गोपीन्मार्गो भवति। इत्यर्थमदन्तपथशब्देन समासेन पुंस्त्वं निर्वाह्य पथिन्शब्देन समासे कापथ्यचयोरितिकादेशे पथः सङ्ख्याव्ययादेरितिक्लीवत्वं भवति॥

कापालः। पुं। कालियाकडा इतिगौडभाषाप्रसिद्धकर्कटाख्ये॥ न। अष्टादशकुष्ठान्तर्गतवातिककुष्ठे। पव्यकपालम्॥

कापालिकः। पुं। कपालि इति गौडभाषाप्रसिद्धवर्णसङ्करजातौ। अन्त्यजविशेषोयम्॥ सिद्धान्ताचारविशेषे॥ यथा। अथतीर्थकराग्रणीःप्रतस्थे कापालिकजालकं विजेतुमितिशङ्करविजयः॥ अस्यस्वरूपं यथा॥ नरास्थिमालाकृतभूरिभूषणः श्मशानवासी नृकपालभोजनः। पश्यामि योगाञ्जनशुद्धदर्शनो जगन्मिथोभिन्नमभिन्नमीश्वरादिति॥ अस्यधर्मोयथा। मस्तिष्कान्त्रवसाभिघारितमहामांसाहुती र्जुह्वतां वह्नौ ब्रह्मकपालकल्पितसुरापाने

न नः पारणा । सद्यः कृत्तकठोरक एठ विगलत्कीलालधारोत्क्षणैः रुद्धैर्नः पुरुषोपहारबलिभिर्देवो महाभैरवः इति प्रबोधचन्द्रोदयः॥ कपालिकेव । शर्करादिभ्योऽण्॥

कापाली । स्त्री । विडङ्गायाम्॥

कापित्थम् । न । दाधित्थे ॥ कपित्थस्यावयवो विकारो वा । अनुदात्तादेश्चेत्यञ् ॥

कापिलः । पुं । साङ्ख्यशास्त्रज्ञे ॥ पिङ्गलवर्णे ॥ त्रि । पिङ्गलवर्णवति ॥ न । उपपुराणविशेषे ॥

कापिशम् । न । मद्ये ॥

कापिशायनम् । न । मद्ये । मधुनि ॥ देवतायाम्॥ कापिश्यां जातादि । कापिश्याःष्फक्॥

कापिशायनी । स्त्री । द्राक्षायाम्॥ षित्त्वात् ङीष्॥

कापिशेयः । पुं । पिशाचे ॥

कापुरुषः । पुं । कुपुरुषे ॥ कुत्सितः पुरुषः । विभाषा पुरुषइति कादेशः ॥ ईषत् पुरुषो वा ॥

कापेयः । पुं । शौनकर्षौ । कपिगोत्रोत्पन्ने ॥ इतश्चानिञः इति ढक् ॥ त्रि । कपिसम्बन्धिनि ॥ न । कपित्वे ॥ कपेः कर्मभावो वा । कपिज्ञात्योर्ढक्॥

कापोतम् । न । कपोतसमूहे ॥ कपोतानां समूहः ॥ अनुदात्तादेरञ् ॥ सौवीराञ्जने ॥ कपोतस्येदम् । कपोतवर्णत्वात् । तस्येदमित्यण् ॥ पुं । सज्जके ॥ कपोताभवर्णे ॥ सर्जिकाक्षारे ॥ कपोतवर्णोऽस्यास्ति । ज्यो॰ अच् ॥ त्रि । कपोताभवर्णवति ॥ कपोतस्यावयवो विकारो वा । प्राणिरजतादिभ्योऽञ् ॥

कापोताञ्जनम् । न । सौवीराञ्जने । स्रोतोञ्जने ॥ कापोतञ्च तदञ्जनञ्च ॥

काप्यकरः । पुं । काप्यकारे ॥

काप्यकारः । पुं । स्वयंकृतं पापं चित्ते आधाय यः कथयति तस्मिन् । स्वपापवक्तरि ॥

काफलः । पुं । कट्फले ॥

काम । अ । अभ्यनुज्ञायाम्॥

कामम् । न । रेतसि ॥ इष्टानतिक्रमे । निकामे ॥ काम्ये ॥ वाढे ॥ अनुमतौ ॥ पुं । इच्छायाम् ॥ अनुरागे ॥ फलतृष्णायाम्॥ तत्तदिष्टविषयाभिलाषे ॥ पुंसोयाविषयामेच्छा स कामइति भण्यते । पुमान्नादौ काममयएवभूत्वायकर्मकृत् । यतोयंकर्मणोहेतुः कामोतोग्रप्रधानता ॥ अकामस्यक्रियाकाचिद्दृश्यते नेहकर्हिचित् । यद्यद्धिकुरुते किञ्चित्तत्तत्

मस्त्रचेष्टितम् ॥ बाह्यादिभेदात् कामस्त्रिविधः । बाह्योगश्चेष्टादिः १ आन्तरो मनोराज्यरूपः २ वासनामात्ररूपस्तृतीयः ३ ॥ इन्द्रियाधिष्ठाने ॥ अर्थैः काम्यमानत्वात् शब्दादिविषयेषु ॥ विषयभोगे ॥ स्त्रीपुंसयोः परस्परव्यतिकराभिलाषेच्छ-स्यन्तनिरूढः कामशब्दः ॥ स्त्रीसङ्गे ॥ अस्मात् सङ्कल्पादिदमेवमादिप्रवृत्तिरूपे ॥ अप्राप्तेमिविषयः मानसिका स्त्रवृत्तिविशेषे ॥ रतिमात्रहेतुः कामः ॥ शास्त्रानुमतजायापुत्रवित्तादिविषयोऽभिलाषः ॥ मोहनस्तम्भनाकर्षणवशीकरणमारणोच्चाटनादिः ॥ दृश्यमानुषभेदात् द्विविधः कामः ॥ कर्मफले ॥ कामयितव्ये ॥ रिरंसायाम् ॥ रतौ ॥ वयोदेशाङ्के ॥ कामस्तु ब्रह्मणो हृदयाज्जातः ॥ यथा । हृदि कामो भ्रुवोः क्रोधो लोभश्चाधरदच्छदादिति श्रीभागवतम् ॥ महाराजचूते ॥ कामदेवे । स्मरे ॥ अस्य स्थानानि यथा । पादाङ्गुष्ठे प्रतिपदि द्वितीयायाञ्च गुल्फके । ऊरुदेशे तृतीयायां चतुर्थ्यां भगदेशतः ॥ नाभिस्थाने च पञ्चम्यां षष्ठ्यान्तु कुचमण्डले । सप्तम्यां हृदये चैव चाष्टम्यां कक्षदेशतः ॥ नवम्यां कण्ठदेशे च दशम्यां चौष्ठदेशतः ॥ एकादश्यां गण्डदेशे द्वादश्यां नयने तथा ॥ त्रयोदश्यां ललाटके ॥ पौर्णमास्यां शिखायाञ्च ज्ञातव्यं इति क्रमात् ॥ इत्येवं पुंसां स्त्रियाः वामे शुक्ले कृष्णे विपर्ययः ॥ यत्रस्थाने भवेत् कामस्तत्रैव नखचुम्बनम् । मन्त्रेणानेन कर्त्तव्यं चालितं रतिकोविदैः ॥ काम्यतेऽनेन । क मु० । पुंसि संज्ञायामिति घः ॥ यद्वा कामयते । पचाद्यच् ॥ किमतम् ॥ कामेर्घञ् वा ॥

**कामकला ।** स्त्री । रतौ ॥ कामदेवपत्न्याम् ॥ मुखं बिन्दुं कृत्वेति ध्याने उक्तशक्तिप्रभेदे ॥ चन्द्रस्य याः षोडशकलास्ता एव कामस्य कलाः ॥

**कामकामी ।** त्रि । अन्ये । काम्यान् विषयान् कामयितुं शीले ॥

**कामकारः ।** पुं । कामतः प्रवृत्तौ । स्वेच्छायाम् ॥ कामं करोति । कृ अण् कर्म्मण्यण् ॥

**कामकारतः ।** अ । स्वेच्छाभिप्रायेऽर्थे ॥

**कामकूटः ।** पुं । वेश्याप्रिये ॥ वेश्याया विभ्रमे ॥

**कामकृत् ।** त्रि । कामकारके ॥ कामान् करोति । कृ क्विप् ॥

कामकेलिः । पुं । सुरते ॥ त्रि । पिङ्गे ॥

कामक्रोधपरायणः । त्रि । कामक्रोधाभ्यां सदापरिगृहीते ॥ कामक्रोधौ परमयनं माश्रयोयस्य ॥

कामखङ्गदला । स्त्री । स्वर्णकेतक्याम् ॥

कामगामी । त्रि । कामगामिनि ॥

कामगिरिः । पुं । भारतवर्षस्थपर्वतविशेषे ॥ सतुकामरूपदेशे वर्त्तते ॥

कामगुणः । पुं । रागे ॥ विषये ॥ आभोगे ॥

कामङ्गामी ॥ त्रि । कामचरे । अनुकामीने ॥ कामंयथेच्छं गमनशीलः । कामस्मित्यव्ययम् । सुपीतिणिनिः ॥

कामचारः । पुं । कामाचारे ॥ स्वतन्त्रतायाम् ॥

कामचारी । त्रि । कामुके ॥ स्वच्छन्दे । स्वेच्छाचारिणि ॥ कलविङ्के ॥ पुं । गरुडे ॥

कामचारिपुरम् । न । देवपुरविशेषे ॥

कामजानः । पुं । कोकिले । पिके ॥

कामतालः । पुं । कोकिले । मनप्रिये ॥

कामतिथिः । स्त्री । त्रयोदश्याम् ॥

कामदः । त्रि । कामिके । अभीष्टदे ॥ न । दक्षिणस्यां दिशिविख्याते वनविशेषे ॥ कामान्ददाति । दुदाञ्० आत इति कः ॥

कामदा । स्त्री । कामधेनौ । टाप् ॥

कामदुघा । स्त्री । कामधेनौ ॥ कामान् दुग्धे दोग्धिवा । दुहःकप्घश्चेति दुहेःकप् प्रत्ययोघश्चान्तादेशः ॥

कामधरः । पुं । कामरूपस्थमत्स्यध्वजपर्वतस्थे सरोवरे ॥

कामधुक् । स्त्री । समुद्रमथनोद्भवायां वसिष्ठमुनेः कामधेनौ ॥ धेनूनामस्मि सा भगवतो विभूतिः ॥ कामान् दोग्धि । दुह० क्विप् ॥ त्रि । काम्यप्रदे ॥ यथा । एकः शब्दः सुप्रयुक्तः सुप्रयुक्तः स्वर्गेलोकेकामधुग्भवतीतिश्रुतिः ॥

कामदूतिः । पुं । कामदूतिकायाम् ॥

कामदूतिका । स्त्री । नागदन्त्याम् ॥ पाटलायाम् ॥

कामदूती । स्त्री । पाटलावृक्षे ॥ कामदूतिकायां ॥

कामधेनुः । स्त्री । कामदुहि । स्वर्गवि ॥ वशिष्ठधेनौ ॥

कामध्वंसी । पुं । शिवे ॥ कामं ध्वंसयति । ध्वंसु० सुपीतिणिनिः ॥

कामनः । त्रि । कामुके ॥ अनुदात्तादेश्चेतिणिङन्तात्कमेर्युच् ॥

कामना । स्त्री । इच्छायाम् ॥ टाप् ॥

कामन्धमी । पुं । कांस्यकारे ॥

कामपत्नी । स्त्री । रतौ ॥ कामस्य पत्नी ॥

कामपरीतः । त्रि । कामातुरतया विपरीतबुद्धौ ॥

कामपालः । पुं । बलदेवे ॥ कामान् पालयति । पालरक्षणे । कर्म्मण्यण् ॥

कामप्रदः । पुं । भगवति । वासुदेवे ॥ कामानां पुरुषार्थानां प्रदः ॥ रतिबन्धविशेषे । यथा । द्वौ पादौ स्कन्धसंलग्नौ चिह्नालिङ्गभगे तथा । कामयेत् कामुकः प्रीत्या बन्धः कामप्रदो हितः इति ॥

कामप्रवेदनम् । न । स्वाभिप्रायाविष्करणे ॥

कामफलः । पुं । महाराजाम्रवृक्षे ॥

कामभाक् । त्रि । कामार्हे ॥

कामम् । अ । अनुमतौ ॥ प्रकामे ॥ पर्य्याप्ते ॥ असूयायाम् ॥ अनुगमने ॥ अकामानुमतौ । स्वच्छन्दार्थे । आदावनिच्छायां पश्चादङ्गीकारे ॥ काम्यते । कर्म्मणि डन्तादम् ॥

काममहः । पुं । चैत्र्यां पूर्णिमायाम् ॥

कामयमानः । त्रि । उशति । वाञ्छति ॥

कामयानः । त्रि । अर्थिनि ॥ कामुके ॥

कामयाना । स्त्री । गर्भिण्याम् ॥

कामयिता । त्रि । कामुके ॥ कामयते । कमु० । णिजन्तात् तृन् ॥

कामरूपः । पुं । काँवरू इति प्रसिद्धे देशे । प्राग्ज्योतिषे ॥ कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्वतम् । कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ॥ तत्र कामगिरौ योनिपीठे कामाख्या देव्यस्ति । यथा । योनिपीठं कामगिरौ कामाख्या तत्र देवतेत्युपक्रम्य सर्वत्र विरला चार्द्ध कामरूपे गृहे गृहे इति तन्त्रचूडामणौ पीठमाला ॥ त्रि । मनोज्ञरूपे ॥ स्वेच्छारूपे ॥

कामरूपिणी । स्त्री । अश्वगन्धावृक्षे ॥

कामरूपी । पुं । विद्याधरे ॥ जाहकजन्तौ ॥ त्रि । मनोज्ञरूपिणि ॥ स्वेच्छारूपिणि ॥ सर्वं मायुं विचेतव्यं हरिभिः कामरूपिभिरिति रामायणम् ॥ कामतोरूपमस्यास्ति । इनिः ॥

कामरेखा । स्त्री । वेश्यायाम् ॥

कामलः । पुं । वसन्तकाले ॥ मरुभूमौ ॥ त्रि । कामुके ॥ पुं । स्त्री । रोगविशेषे ॥ तस्य निदानसम्प्राप्तिलक्षणानि यथा । पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते । तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥ । हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः । रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्षितः । कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥

अस्थौषधंयथा । फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः । क्वाथः चौद्रयुतोहन्यात् पाण्डुरोगंसकामलमिति ॥ कालान्तरात् खरीभूता कृच्छ्रास्यात् कुम्भकामला ॥ तस्या रिष्टलक्षणम् । छर्द्यरोचकहृल्लास ज्वरक्लमनिपीडितः । नश्यति श्वासकासार्त्तो विड्भेदी कुम्भकामली ॥ कृष्ण पीतशकृन्मूत्रो भृशंशूनश्चमानवः । सरक्ताचिमुखच्छर्दिविण्मूत्रो यश्चताम्यति ॥ दाहारुचितृडानाहतन्द्रामोहसमन्वितः । नष्टाग्निसंज्ञः चिप्रंहि कामलावान् विपद्यते इति ॥ मरीचतिलपुष्पाभ्यामञ्जनकामलापहमिति गारुडे १८७ अध्यायः ॥

कामलता । स्त्री । शिश्ने ॥ इतिहेमचन्द्रः ॥

कामला । स्त्री । कामले रोगे ॥

कामलायनः । पुं । उपकोसलाख्यमुनौ ॥ कमलस्यापत्यम् । नडादित्वात् फक् ॥

कामलिका । स्त्री । कटुधान्ये ॥

कामवती । स्त्री । दारुहरिद्रायाम् ॥

कामवल्लभः । पुं । आम्रे ॥

कामवल्लभा । स्त्री । ज्योत्स्नायाम् ॥

कामवृन्तः । पुं । यन्दाके ॥

कामवृद्धिः । पुं । कामज इतिकर्णाटदेशप्रसिद्धे चुपविशेषे । मदनायुधे । कन्दर्पजीवे ॥

कामवृन्ता । स्त्री । पाटलायाम् ॥

कामशरः । पुं । आम्रे ॥

कामसखः । पुं । वसन्तकाले ॥

कामसुतः । पुं । अनिरुद्धे ॥

कामसूत्रम् । न । वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रे ॥

कामहैतुकम् । न । कामातिरिक्तकारणशून्ये ॥

कामाख्या । स्त्री । कामरूपदेशे देवीस्थाने ॥ सतीदेहेनावतीर्णाया महादेव्या यत्रयोनिमण्डलं पतितम् कालिकापुराणेच यस्यमहद्वर्णनंतत् त्रिपुरभैरव्याः स्थानम् । यथोक्तंदेवीगीतायाम् । श्रीमत्त्रिपुरभैरव्याः कामाख्यायोनिमण्डलम् । भूमण्डलेक्षेत्ररत्नंमहामायाधिवासितम् ॥ नातः परतरं स्थानं क्वचिदस्ति धरातले । प्रतिमासं भवेद्देवी यत्र साक्षाद्रजस्वला ॥ तत्रत्यादेवताः सर्वाः पर्वतात्मकतां गताः । पर्वतेषु वसन्त्येव महत्योदेवताअपि ॥ तत्रत्यापृथिवीसर्वादेवीरूपास्मृताबुधैः । नातःपरतरंस्थानं । कामाख्यायोनिमण्डलादिति ॥ नामकारणं

यथा । श्रीभगवानुवाच । कामार्थं मागता यस्मात् मया सार्द्धं महागिरौ । कामाख्या प्रोच्यते देवी नीलकूटे रहोगता ॥ कामदा कामिनी कामा कान्ता कामाङ्गदायिनी ॥ कामाङ्गनाशिनी यस्मात्कामाख्या तेनचोच्यतइति कालिकापुराणम् ॥

कामाङ्कुशः । पुं । नखे ॥ शिश्ने ॥ व्याघ्रनखद्वययुते बालानाम्भूषणे ॥

कामाङ्ग. । पुं । आम्रवृक्षे ॥

कामातुरः । त्रि । कामार्त्ते ॥

कामात्मजः । पुं । अनिरुद्धे ॥

कामात्मता । स्त्री । फलाभिलाषशीलत्वे ॥ कामात्मनो भावः । तल् ॥

कामात्मा । पुं । कामस्वभावे । कामाकुलचित्ते ॥ काम्यमानविषयशताकुलचित्तत्त्वेन काममये ॥ कामेफलतृष्णायां आत्मा यस्यसः ॥

कामाधिष्ठानम् । न । इन्द्रियमनोबुद्धिषु ॥ इन्द्रियाणि मनोबुद्धि रस्याधिष्ठान मुच्यते ॥

कामानशनम् । न । अनाशके । तपसि ॥ तपोनानशनात् परम् । कामानामनशनम् । रागद्वेषरहितैरिन्द्रियैर्विषयाणां सेवनं यदृच्छालाभसन्तुष्टत्वमितियावत् ॥



कामान्धः । पुं । कोकिले ॥ त्रि । कामेनविवेकहीने ॥

कामान्धा । स्त्री । कस्तूर्य्याम् ॥

कामायुधः । पुं । महाराजाम्रवृक्षे ॥ न । कामदेवास्त्रे ॥

कामायुः । पुं । गरुडे ॥

कामारिः । पुं । विटमाक्षिकधातौ ॥ श्री सदाशिवे । महादेवे ॥

कामार्त्तः । त्रि । कामपीडिते । कामातुरे ॥

कामालुः । पुं । रक्तकाञ्चनवृक्षे ॥

कामावशायिता । स्त्री । शिवस्याणिमाद्यष्टैश्वर्यान्तर्गते ऐश्वर्यविशेषे । सत्यसङ्कल्पतायाम् ॥ कामान् अवशेते । शीङ्णिनिः । कामावशायिनो भावः । तल् प्रत्ययः ॥

कामावसायिता । स्त्री । कामावशायितायाम् ॥ कामान् अवस्यति तिष्ठतीत्यर्थे स्यतेर्णिनिः । भावेतल् ॥

कामावसायित्वम् । न । अष्टैश्वर्यान्तर्गतैश्वर्यविशेषे । सत्यसङ्कल्पतायाम् ॥ यथास्यसङ्कल्पो भवति भूतेषु तथैवभूतानि भवन्ति । अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्था निश्चयमिति । कामान् स्वेच्छया अवसाययितुं निश्चेतुं शीलमस्य । स्यतेर्णिनिः

भावे त्वः ॥

कामाख्यः । पुं । राजाख्ये

कामिः । पुं । कामुके ॥ स्त्री । रत्याम् ॥

कामिकः । पुं । कारण्डवेखगे ॥ न । काम्ये । काम्यमानभोगमोक्षप्रयोजने विधिपूर्वके कर्मणि ॥ त्रि । कामदे । अभीष्टफलप्रदे ॥

कामितः । त्रि । इच्छिते । वाञ्छिते ॥ कामः सञ्जातोस्य । ता० इतच् ॥

कामी । पुं । परमात्मनि ॥ पूर्णकामत्वात् कामोऽस्यास्ति । इनिः ॥ कामुके ॥ चक्रवाके ॥ पारावते ॥ चटके ॥ संसारिणि ॥ चन्द्रे ॥ ऋषभौषधौ ॥ सारसखगे ॥ अवश्यं काम्यते । कमुकान्तौ । आवश्यकेति ग्रह्यादित्वाण्णिनिः ॥

कामिनी । स्त्री । अतिशयकामयुक्तायांनार्याम् । सवर्णासवर्णयो रतायाम् ॥ भीरुस्त्रियाम् ॥ स्त्रीसामान्ये ॥ वन्दायाम् ॥ दारुहरिद्रायाम् ॥ मदिरायाम् ॥ अवश्यं काम्यते । कमेः पूर्ववण्णिनिः ॥ भूयान् कामोस्त्यस्याः । अतइनिर्वा ॥

कामिनीपुष्पः । पुं । दृक्षविशेषे । न । आर्तवे ॥ कामिन्याः पुष्पम् ॥

कामिनीशः । पुं । शोभाञ्जनवृक्षे ॥ विदग्धनायके ॥

कामिमहः । पुं । स्मरोत्सवे ॥

कामीनः । पुं । रामपूगे । सुरेवटे ॥ त्रि । कामानुरूपिणि ॥

कामुकः । पुं । अशोकपादपे ॥ अतिमुक्तके । माधवीलतायाम् ॥ चटके ॥ त्रि । कमने । कामयितरि । कामिनि । स्त्रीसुखासक्ते ॥ कामयते तच्छीलः । लषपतपदेत्यादिनाकमेरुकञ् प्रत्ययः ॥

कामुककान्ता । स्त्री । अतिमुक्तकलतायाम् ॥

कामुका । स्त्री । इच्छावत्याम् । धनादीच्छायुतायाम् ॥ कामयते तच्छीला । उकञन्ताट्टाप् ॥

कामुकी । स्त्री । मैथुनेच्छायुक्तायाम् । वृषस्यन्त्याम् ॥ जानपदकुण्डगोणेत्यादिनाङीप् ॥

कामेप्सुः । पुं । फलकामे । सकामे ॥ काममाप्तुमिच्छतीति तथा ॥

कामेश्वरी । स्त्री । कामाख्यापञ्चमूर्त्यन्तर्गतमूर्तिविशेषे ॥

कामोदकम् । न । स्नेहादेनान्येच्छयाद्त्तोदके ॥

कामोदा । स्त्री । रागिणी विशेषे ॥

काम्पिल्यः । पुं । गुण्डारोचनिकायाम् । कबीला इति भाषा ॥ उत्तरदेशविशेषे ॥ कम्पिलाया अदूरभवः ।

सङ्ख्यादिभ्यात् यः ॥

काम्पिल्लः । पुं । काम्पिल्यार्थे ॥ काम्पिल्लः कफपित्तास्रकृमिगुल्मोदरव्रणान् । हन्तिरेची कटुष्णश्च मेहानाहविषाश्मजित् ॥

काम्पिल्लकः । पुं । } काम्पिल्यार्थे ॥
काम्पिल्लका । स्त्री । } उत्तरजनपदविशेषे ॥

काम्पीलः । पुं । }
काम्पीलकः । पुं । } काम्पिल्यार्थे ॥

काम्बलः । पुं । कम्बलावृतरथे ॥ कम्बलेन परिवृतो रथः । परिवृतो रथ इत्यण् ॥

काम्बविकः । पुं । शङ्खवलयादिकर्त्तरि । शाङ्खिके । शङ्खकारे ॥ कम्बुशिल्पमस्य । शिल्पमितिठक् । शाश्वतिकश्रुतिनिर्देशात् कादेशोऽनित्यः ॥ कम्बोर्विकारो ऽस्यास्तीतिठन्वा ॥

काम्बुका । स्त्री । अश्वगन्धायाम् ॥

काम्बोजः । पुं । कम्बोजदेशजे ऽश्वे ॥ सोमवल्के ॥ पुन्नागवृक्षे ॥ कम्बोजदेशोद्भवे प्रथमतःक्षत्रिये पश्चाद्विचितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये । सतुयवनतुल्योक्ते क्षत्र जातिविशेषः । अस्यसगरराजेन सर्वशिरोमुण्डनकृतम् । यथा । अर्द्धं शकानां शिरसोमुण्डयित्वा व्यसर्जयत् । यवनानांशिरः सर्वं काम्बोजानां तथैवचेति ह० ॥ पुं । न । वल्वखदिरे । पपरियाखैर इतिभाषा ॥ कम्बोजेषु देशेषुभवः । तत्रभवइत्यर्थे । कच्छाद्यण् । कम्बोजो ऽभिजनो ऽस्यवा । सिंध्वाद्यण् ॥



काम्बोजी । स्त्री । माषपर्ण्याम् । श्वयपुच्छ्याम् ॥ दुग्धखदिरे ॥ गुञ्जायाम् ॥ बाकुच्याम् ॥ कम्बोजेषुभवा । अण् । ङीप् ॥

काम्यम् । न । अन्तःकरणशुद्ध्यनुपयोगिनि कर्मविशेषे । फलकामनया चोदिते ॥ यथा । यत्किञ्चित्फलमुद्दिश्य यज्ञदानजपादिकम् । क्रियते कायिकं यत्र तत्काम्यं परिकीर्त्तितमिति ॥ त्रि । कमनीये । सुन्दरे ॥ कामनाविषयेस्वर्गादौ ॥ कामोऽस्तियत्र । अन्यत्रापीति यण् ॥ यद्वा । काम्यते । कमु० ऋचोर्यत् ॥

काम्यकर्म्म । न । स्वर्गादीष्टसाधने ज्योतिष्टोमादौ । फलोद्देशेनविधीयमाने कर्मणि ॥ काम्यञ्च तत्कर्म चेतिविग्रहः ॥

काम्यदानम् । न । प्रवारणे ॥ फलकामनयादाने ॥ यथा । अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते । दानंतत्काम्यमाख्यात मृषिभिर्धर्मचिन्तकैरि

ति गरुडपुराणम् ॥ काम्येनेच्छया काम्यस्य सुहृदादेरिष्टस्य वरस्त्रीरत्नस्य वा दानम् ॥

काम्यफलम् । न । आर्थिक्यांशुद्धौ ॥ प्राधान्येन फलंशुद्धिरार्थिकी काम्यकर्मणः । आर्थिकीशुद्धिः काम्यकर्मणःप्राधान्येन फलम् ॥

कायः । पुं । कदैवते । प्राजापत्ये ॥ मूर्त्तौ । देहे ॥ सङ्घे ॥ लक्ष्ये ॥ स्वभावे ॥ मूलधने ॥ प्राजापत्यविवाहे । सहनौ धर्मञ्चरतामितिनियमनङ्कृत्वा कन्यादाने ॥ न । मनुष्यतीर्थे । प्रजापतितीर्थे ॥ तत्तु स्वल्पाङ्गुल्योर्मूलेकनिष्ठानामिकयोरधोभागे प्रसिद्धम् । कायमङ्गुलिमूले इति वचनात् ॥ प्रजापतिर्देवतास्य । कस्येदित्यण् इदन्तादेशश्च । यस्येतिलोपात् परत्वादादिवृद्धिः ॥ चीयतेऽन्नादिभिः चीयतेऽस्मिन्नस्थ्यादिकमिति वा । चिञ्चयने । निवासचितीत्यादिना घञ् ।

कायचिकित्सा । स्त्री । वैद्यविद्याङ्गविशेषे ॥ यथाह सुश्रुतः । कायचिकित्सानाम सर्वाङ्गसंसृतानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनां सुपशमनार्थमिति ॥

कायवलनम् । न । कवचे । तनुत्रे ॥ इति हारावली ॥

कायमानम् । न । तृणकुट्याम् ॥ शरीरपरिमाणे ॥

कायस्थः । पुं । परमात्मनि ॥ नरेषु धूर्त्ते कृपाहीने नरजातिविशेषे । अचरजीविके । कूटकृति । पञ्जीकरे । कायथ इति भाषा ॥ यथोक्तं ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे ८५ ऽध्याये । लिपेकलिपिकश्चैव मचदातु वैनं हरेत् । कायस्थेनोदरस्थेन मातुर्मांसनखादितम् । तत्रनास्तिकृपा तस्यदन्ताभावोहि केवलमिति ॥ वह्निपुराणेपि । चाटचारणचौरेभ्योवधवन्धभयादिभिः पीड्यमानाः प्रजारक्षेत् कायस्थेभ्योविशेषतइति ॥ काये तिष्ठति । ष्ठा । सुपिस्थ इति कः ।

कायस्था । स्त्री । हरीतक्याम् ॥ आमलक्याम् ॥ कायस्थिष्ठत्यनया । घञर्थेकः ॥ एलाइये ॥ तुलस्याम् ॥ कायस्थभार्यायाम् ॥

कायिकः । त्रि । शारीरिके । कायनिष्पन्ने ॥

कायिका । स्त्री । } गवादिवलीवर्दादिकर्मयुतायांवृद्धौ ॥ यथा । दोह्यवाह्यकर्मयुता का
कायिकावृद्धि । स्त्री । }

यिकासमुदाहृतेतिव्यासः ॥ मूलध
नाऽविरोधिन्यां प्रत्यब्ददेयमयात
दृद्धादिरूपायां वृद्धौ ॥ यथा । काया
विरोधिनी शश्वत् पणार्द्धाद्यातु कायि
केति नारदः ॥ हलायुधस्तु पणार्द्धा
द्या इत्यत्र पणाद्या इति पठित्वा पण
स्य मूलधनस्य यावदवस्थानं तावत्
शश्वत् वर्षसहस्रमपि उत्तमर्णेन या
वाद्यते प्राप्यते सा कायिकेति व्याख्या
तवान् । तन्माया भोगलाभान्तर्गता
अपराच तद्भिन्ना । इति मिश्राः ॥
कारः । पुं । वधे ॥ निश्चये ॥ बलौ ॥
यत्ने ॥ यतौ ॥ तुषारशैले । हिमा
द्रौ ॥ क्रियायाम् ॥ यथा । स्वाहा
कारवषट्कारनमस्कारा दिवौकसा
म् । हन्तकारो मनुष्याणां स्वधाका
रः स्वधाभुजामिति ॥ करणम् कारः
॥ कर्म्मोपपदे कर्त्तृवाचकः । यथा । क
र्म्मकारः स्वर्णकारः इत्यादि ॥ वि
क्षिप्ते धान्यादिराशौ ॥ यथा । द्वौ
कारौ ॥ करणे व । प्रभादयः ॥ ह्र
विक्षेपे । परिमाणाख्यायां सर्वेभ्य इ
ति कर्मणि घञ् । सर्वेभ्य इति पञ्च
मीनिर्देशात् प्रकृत्यान्ययएव कदा
रपितिप्रासोऽप् वाध्यते नत्वर्याश्च
या. स्त्रीप्रत्यया. ॥
कारकः । त्रि । कर्त्तरि । क्रियाजनके



॥ भाष्ये करोति क्रियां निर्वर्त्तयती
त्यव्युत्पत्तिदर्शनात् । ण्वुल् ॥ न ।
क्रियोपाधिके ॥ साक्षात् क्रियानि
मित्ते । कर्मादिष्वन्यतमे । तानि तु ।
कर्त्ता कर्म्म च करणञ्च सम्प्रदानं त
थैव च । अपादानाधिकरणे इत्याहुः
कारकाणि षट् ॥ कर्त्ता १ यथा पु
रुषैः शिवो दृष्टः । कर्म २ यथा रा
मं प्रणमति । करणं ३ यथा नेत्रैः
शिवो दृष्टः । सम्प्रदानम् ४ यथा ह
रिः सद्भ्यः सुखं ददात् । अपादानम्
५ यथा विभीषणः पदाच्च्युतः । अधि
करणम् ६ यथा रेमे शरदि गोवि
न्दः ॥ सर्वत्र सर्वकारकशक्तिसम्भवः
। उक्तञ्च । अनेकशक्तियुक्तस्य विश्व
स्यानेककर्मणः । सर्वदा सर्वथाभावा
त् क्वचित् किञ्चिद् विवक्ष्यते इति । य
था । सर्वप्रयत्नेन च भूमिपालास्त
स्मिन् प्रजासु धिसर्वएवेच्छन्तकर्मणो
धिकरणविवक्षायां सप्तमीति ॥ कार
कोऽम्बुजले ॥

कारकदीपकम् । न । अलङ्कारविशेषे
। यथा । क्रमिकैकगतानां गुम्फः
कारकदीपकम् । गच्छत्यागच्छ
ति पुनः पान्थः पश्यति पृच्छति ॥
यथावा । निद्राति स्नाति भुङ्क्ते चल
ति कचभरान् शोषयत्यन्तरास्ते दी

न्यत्यचैनैसाय गदितुमवसरो भूय
आयाद्धियाहि ॥ इत्युद्दण्डैः प्रभूणा
मसकृदधि कृतैर्वारितान् द्वारि दी
नान् पश्यास्मानन्धिकन्ये सरसि वरुण
चामन्तरङ्गैरपाङ्गैः ॥ आद्योदाहरणे
श्रुतस्य पान्थस्य कर्तृकारकस्य गमना
दिष्वन्वयः ॥ द्वितीये त्वध्याहृतस्य
प्रभोः कर्तृकारकस्य निद्रादिष्वन्वयः
इत्येकस्यानेकवाक्यान्वयेन दीपक-
त्वाच्छायापत्त्याकारकदीपकम् ॥

कालकूलीयः । पुं । शाल्वदेशे ॥ तद्दे
शीयजने बहुवचनान्तः ॥

कारणम् । न । करणे ॥ साधने ॥ वधे
॥ इन्द्रिये ॥ देहे ॥ कर्मणि ॥ का
यस्थे ॥ वाद्यप्रभेदे ॥ गीतप्रभेदे ॥
अव्यक्ते । बीजभावे ॥ ईश्वरे । अ
भिन्ननिमित्तोपादाने ॥ वेदान्ति
नोमुखादीश्वरस्याभिन्ननिमित्तोपा
दानकारणतां श्रुत्वा मातङ्गलीयः-
सक्रोधमाह । आः पाप कथमीश्वर
मेवविकारिणं कृत्वा विनाशधर्मि
णमुपपादयसि । अस्यायम्भावः वेदा
न्तीहि भगवतः सकलकार्योपादान
त्वं मन्यते तच्चमृद्द्रव्यविकारितया
सङ्गच्छते । यथाहिमृत् स्वयं विकुर्वा
णाघटशरावाद्युपादानं भवति तथा
स्वयंविकुर्वन्नीश्वरो जगदुपादानमि

त्यभ्युपगन्तव्यम् । तथाच भगवतो
मृद्द्रव्यविकारित्वादिनाशित्वं सिद्ध
तीति ॥ सांख्यस्त्वाह ननु रे प्रकृते
र्विश्वोत्पत्तिः पुरुषस्तूदासीन इति
। एतच्छ्रुत्वा वेदान्ती सखेदमाह ।
दुर्बुद्धीहो मा एतदपि न जानीतः य
त् सर्वं प्रमेयजातं घटादिवत् कार्य
मिति प्रधानोपादानकारणमप्ययेव
णीयमेवेति अतस्तयं विकारशङ्काम
ग्धवधूविकल्पविलसितमिव । तथाहि
। शान्तं ज्योतिः कथमनुदितानस्त
मित्यमकार्यं विश्वोत्पत्तौ व्रजति वि
कृतिं निष्कलं निर्मलञ्च । शश्वन्नी
लोत्पलदलरुचामम्बुवाहावलीनां-
प्रादुर्भावे भवति नभसः कीदृशो वा
विकार इति ॥ हेतौ । बीजे । येन विना
यन्न भवति तस्मिन् ॥ तच्च निमित्तो
पादानभेदाद्द्विविधम् । कारणत्व
माह । अन्यथासिद्धिशून्यत्वे सति नि
यतपूर्ववर्त्तित्वम् । तच्च समवाय्यस
मवायिनिमित्तभेदात् त्रिविधम् ।
परमाणुपरिमाणभिन्नानां कारण
त्वमिति भाषापरिच्छेदः ॥ अणुपरिमा
णन्तु नकस्यापि कारणमिति सिद्धान्त
मुक्तावली ॥ कार्यते ऽनेन । णिजन्ता
त् कृञोल्युट् ॥

कारणकारणम् । न । प्रकृतेरधिष्ठानभू

ते तच्छ्रयि॥

कारणगुणोद्भवगुणः। पुं॰। कारणगुण पूर्वकगुणे॥ तद्यथा। रूपम् १ रसः २ गन्धः ३ अपाकजस्पर्शः ४ संख्या ५ स्नेहः ६ वेगः ७ गुरुत्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम् ११ स्थितिस्थापकसंस्कारः १२। इति भाषा परिच्छेदः॥

कारणता। स्त्री॰। } हेतुत्वे। पुष्य
कारणत्वम्। न॰। }

कारणे कारणत्वम्॥ तत्तत्त्वादि रूपायां सर्वविकाराधिष्ठानतायाम्॥

कारणमाला। स्त्री॰। अलङ्कारविशेषे। यथोत्तरञ्चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता। तदा कारणमाला स्यात्॥ उत्तरमुत्तरं याति यथोत्तरम्। उदाहरणम्। जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते। गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवाहि सम्पदः॥ अपिच। गुम्फः कारणमालाख्या यथा प्राक्तनकारणैः। नयेन श्रीः श्रियात्यागस्त्यागेन विपुलं यशः॥ उत्तरोत्तरकारणभूतपूर्वपूर्व. पूर्वपूर्व कारणभूतोत्तरोत्तरैर्वा वस्तुभिःकृतो गुम्फः कारणमाला। आद्योदाहृता द्वितीया यथा। भवन्तिनर-



काः पापात् पापंदरिद्रा सम्भवम्। दरिद्रत्वमप्रदानेन तस्माद्दानपरो भव॥

कारणशरीरम्। न॰। सत्त्वप्रधानेऽज्ञाने। आनन्दमयकोषे। सुषुप्तौ॥ अनाद्यविद्यानिर्वचनीयं शरीरद्वय कारणमात्रं सत्स्वरूपाऽज्ञानं यद स्तितकारणशरीरमित्याहुः॥

कारणा। स्त्री॰। यातनायाम्। गाढवेदनायाम्॥ नरकवेदना यमयातनेति केचित्॥ णिजन्तात् कृञोयुच्। आसश्रन्थेतियुच्। टाप्॥

कारणिकः। त्रि॰। परीक्षके॥ करणेचरति। चरतीतिठक्॥

कारणोत्तरम्। न॰। प्रत्यवस्कन्दने॥ सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूल रूपकारणंब्रूयात् तदा तदुत्तरं कारणोत्तरम्। तत् त्रिविधम्। वलवत् १ तुल्यवलम् २ दुर्वलम् ३। आद्यं यथा। मयात्त्वत्तः शतङ्गृहीतमितिसत्यम् किन्तु तत् परिशोधितम्। द्वितीयं यथा। मदीये यम्भूमिःक्रमागतत्वादिति यावुक्ते प्रतिवादिनोपि तयोत्तरम्। तृतीयं यथा। ममैयम्भूमिः क्रमागतत्वात् इतियावुक्ते ममैयम्भूमिः दशवर्षोपभुज्यमानत्वात् इति प्रत्युत्त

कारस्कराटिका । स्त्री । कर्णजलौका याम् ॥

कारा । स्त्री । बन्धनालये । कारागारे ॥ दूत्याम् ॥ प्रसेवके । वीणाधःका ष्ठभाण्डे ॥ सुवर्णकारिकायाम् ॥ व न्धने ॥ पीडायाम् ॥ कीर्यते । कृविं० । भि० अङ् । ऋदृशोऽङीतिगुणे दीर्घत्वंनिपात्यते ॥

कारागारम् । न । बन्धनशालायाम् ॥ कारैव आगारम् । कारायै बन्धाय वा आगारम् ॥

कारागुप्तः । त्रि । बन्धनागारस्थे ॥ का रायां गुप्तः ॥

कारापथः । पुं । देशविशेषे । लक्ष्म- णात्मजयो रङ्गदचन्द्रकेत्वोर्विषये ॥

कारावरः । पुं । मारवग्राहैद्यामुत्पन्ने । चर्मकारे ॥ कारावरोनिपादात्तु चर्मकारःप्रसूयते ॥

कारावेश्म । न । बन्धनालये । बधाय के ॥ कारैव कारायै वावेश्म ॥

कारिः । स्त्री । क्रियायाम् ॥ त्रि । शिल्पि नि ॥ करोति । डुकृञ्० । कृञादी नांकारव्विति इञ् ॥

कारिका । स्त्री । नटयोषिति ॥ कृतौ ॥ स्वल्पार्थबहुव्याख्यानग्रन्थसामिका- यांकवितायाम् । विवरणश्लोके ॥ शि ल्पे ॥ यातनायाम् ॥ नापितादिकम

णि ॥ करणम् । धात्वर्थनिर्देशे करो ते र्णुल् । शित्वाट्टाप् ॥ यद्वा । क रोति । ण्वुल् । प्रत्ययस्थादितीत्व म् ॥

कारितः । त्रि । कुर्वन् प्रेरितः कारित इत्युच्यते । कराया इतिभाषा ॥

कारिता । स्त्री । कारिकायाम् । कारि ताष्टौ । अधिकस्रुद इतिभाषा ॥ यथा । ऋणिकेनतुयावृद्धिरधिका सम्प्रकीर्तिता । आपत्कालकृतानि त्यं दातव्या सा तुकारिता ॥ इति कात्यायनः ॥

कारी । स्त्री । कारिकायाम् । कटुपत्रि कायाम् ॥ कराटकारी आकर्षकारी त्येपादिषा ॥

कारीरम् । न । भस्मनि ॥ करीरस्या वयवे । काष्ठे ॥ टींट इतिप्रसिद्धे क रीरफले । तत्पुष्पे ॥ फलकरीरस्य च बीजवर्जितं संस्कारितं सोदक माजनेषु । सुचिक्कणोऽष्टदिनं सुस न्धितं सन्धानरीत्यासुधियाविपाचि तम् ॥ कारीरकट्वम्लमुष्णि फलम् प्यध्विप्रदम् । कफपित्तकरडकि विनतकषायंवातहृद्धरम् ॥ करीरकुसु मसमाकस्तु । कारीरकुसुमंसुधर्म निरिक्तंसदारिणां संयुतं सपाद्देन विपाचितं सघवणं हिङ्ग्वाद्यतैलोभ्

शम् । घिसंतक्रतरंसुकाञ्जिकमथो सहेसवाराञ्चितं भोक्ता केनसमर्च्चितः प्रतिदिनंश्रीपार्वतीशः स्वयम् ॥ कारीरकुसुमम्भेदि कटुकं कफनाशनम् । पित्तकृद्रुचिरं भव्यं कषायंप थ्यदम्भृशम् ॥ कारीरकुसुमंकथ्यंशीतलङ्गुल्मनाशनम् ॥ कारीरस्यायंवा विकारोवा । अण् । पलाशाद्यणा ॥

कारीरी । स्त्री । वृष्ट्यादिफलेयाग विशेषे ॥

कारीषम् । न । शुष्कगोमयसमूहे । बिटौरा-उपलौंकाढेर इतिभाषा ॥ करीषाणां समूहः । भि० अञ् ॥

कारुः । त्रि । शिल्पिनि ॥ कारयित्त्वात्तु कर्म्माणि कारुं पश्चान्नवध्वयेदिति कूर्म्मपुराणम् ॥ कारके ॥ पुं । विश्वकर्म्मणि ॥ शिल्पे ॥ करोति । डुकृञ्० । कृवापेत्युण् ॥

कारुकः । त्रि । सूपकारादिशिल्पिनि ॥ स्वार्थेकः ॥

कारुककर्म्म । न । सूपकारादीनाङ्कर्म्मणि ॥ यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्तेद्विजातयः । तानिकारुककर्म्माणि शिल्पानिविविधानिच ॥

कारुचौरः । पुं । सन्धिचौरे ॥

कारुजः । पुं । करभे । गजार्भके ॥ फेने ॥ वल्मीके ॥ नागकेशरे ॥ गैरिके ॥ शिल्पिनां चित्रे ॥ स्वयञ्जाततिले ॥

कारुणिकः । त्रि । दयालौ ॥ करुणाशीलमस्य । शीलमिति ठक् । करुणाप्रयोजनं यस्यवा । प्रयोजनमिति ठक् ॥

कारुण्डी । स्त्री । जलौकायाम् ॥

कारुण्यम् । न । परदुःखदुःखित्त्वे । करुणायाम् ॥ करुणः करुणावान् तस्य भावः । ना० ष्यञ् ॥

कारुपः । पुं । सुधन्वाचार्य्ये । विजन्मनि ॥

कारूषाः । पुं । करूषदेशवासिषु । वृहद्गृहेषु ॥ बहुवचनान्तोयम् ॥

कारोत्तरः । पुं । सुराग्रभागे । सुरामण्डे ॥ कूपे ॥ त्रि । कार्य्यचर्म्मे ॥ कारेण क्रियया उत्तरः ॥

कार्कन्धवम् । न । कर्कन्ध्वाविकारे ॥ तदवयवे ॥ बिल्वादयण् ॥

कार्कश्यम् । न । कठोरतायाम् ॥ कर्कशस्यभावः । ष्यञ् ॥

कार्णाटः । पुं । कर्णाटदेशे ॥ स्वा० अण् ॥

कार्त्तवीर्य्यः । पुं । चन्द्रवंशीयकृतवीर्य्यराजपुत्रे । अर्ज्जुने । हैहये । हरेस्त्रयस्तारे ॥ तस्यध्यानम् । उद्यत्सूर्य्यसहस्रकान्तिरखिलक्षोणीधवैर्व-

भूतभविष्यद्वर्त्तमानाख्यः कालाइति वैयाकरणाः॥ कालोहिं भगवद्विभूतिः। कालः कलयतामहम्। कलयतां सङ्ख्यानं कुर्वतांमध्ये॥ क्रियाशक्त्युपहितः सर्वस्य संहर्त्तापरमेश्वरः कालः॥ अप्रमेयाव्ययःकालः। अव्ययकालाभिमान्यऽव्ययः परमेश्वराख्यःकालः॥ कलनात् सर्वभूतानां ब्रह्मादीनांनिमेषतः। कालश्शब्देन निर्दिष्टो ह्यखण्डानन्दअव्ययः॥ कलयत्यायुः। कालसङ्ख्याने। पचाद्यजन्तात् प्रज्ञाद्यण्॥ कल्यते। कलसङ्ख्याने शब्देच। कर्मणिघञ्॥ कालयति सर्वमिति वा। कलप्रेरणे। ण्यन्तात्पचाद्यच्॥ यद्वा। काल्यते। कालउपदेशे। घञ्॥ यस्याऽऽद्यःप्रथमं रूपमरूपस्यतथानिशा। सन्ध्याच परमेशस्य तस्मै कालात्मनेनमः॥

कालकः। पुं। जटुले। जतुके। पिप्रौ। देहस्थचिह्न विशेषे। लसन इति भाषा॥ अलगर्दे॥ न। कालखण्डे॥ यकृति॥ अनित्ये वर्णे रक्तेचार्थे कालाच्च तिकन्॥ कालकः पटः कालिकाशाटी कालकम्मुखम्॥ कालयति। कलक्षेपे। चु०। ण्वुल्॥

कालकटङ्कटः। पुं। शिवे॥



कालकण्ठः। पुं। शिवे॥ पीतसारे॥ मयूरे॥ खञ्जने॥ कलविङ्के॥ दात्यूहे॥ कालःकृष्णवर्णः कण्ठो यस्य सः॥ काले प्रावृषिकण्ठो ध्वनिरस्यवा॥

कालकण्ठकः। पुं। दात्यूहपक्षिणि॥ कालकण्ठे॥ कालःकण्ठोऽस्य। कप्॥ स्वा० कन्वा॥

कालकन्दकः। पुं। जलसर्पे॥

कालकन्या। स्त्री। जरायाम्॥ कालस्यकन्या॥

कालकर्णिका। स्त्री। अलक्ष्म्याम्॥ कालस्यकर्णिका॥

कालका। स्त्री। कालकेयनाम्नोऽसुरगणस्यजनन्याम्॥

कालकालः। पुं। सदाशिवे। देवदेवे॥

कालकीलः। पुं। }
कालकीलकः। पुं॥ } कोलाहले॥

कालकुष्ठम्। न। पर्वतीयमृत्तिकाविशेषे। कङ्कुष्ठे। विरङ्गे॥

कालकूटम्। न। विषे॥ योरौ॥ पुं। न। स्थावरेलीनविषविशेषे॥ देवासुररणेदेवैर्हतस्यपृथुमालिनः। दैत्यस्यरुधिराज्जातस्तरुरश्वत्थसन्निभः॥ निर्यास:कालकूटोऽस्यमुनिभिः परिकीर्त्तितः। सोऽहिक्षेत्रेशृङ्गवेरे कोङ्कणे मलये भवेत्॥ कालमपि

दित्वात् ङीप् ॥

कालयुक्तः । पुं । वत्सरे ॥ यथा । गोम र्ह्यियोविनश्यन्तियेचान्येनटनर्त्तकाः । वासवोवर्षते देविमस्त्वम्ब नक्षिना यते ॥ तिलसर्षपमाषादिकार्पासा नां महार्घता । गोमहिष्यः सुवर्णा नि कांस्यताम्रावशेषतः ॥ तत्तर्वं- देविविक्रीयकर्त्तव्योधान्यसञ्चयः । तेनधान्येनलोकोयं निस्तरिष्यति दुर्द्दिनम् ॥ पार्थिवामेषका दीनाः कालयुक्ते प्रपीडिताः ॥ इति ॥

कालरात्रिः । स्त्री । सर्वभूतापहारिण्यां मृत्युदेव्याम् ॥ सर्वमारकस्याधिका लस्य रात्रिर्नाशिका । प्रलयेकाल स्यापिनाशात् ॥ कालरात्रिर्यमभगि नीतिभावप्रकाशः ॥ कल्पान्तरात्रौ ॥ भीमरथ्याम् ॥ निशाविशेषे । दी पावल्याम् ॥ दीपावलीतुयाप्रोक्ता कालरात्रिश्चसामतेत्यागमवचना त् ॥ दुर्गायाः शक्तिविशेषे ॥ दैनन्दि नप्रलयेऽपीतिकश्चित् ॥ कालः सं हारोमरणं तदुपलक्षिता रात्रिः ॥

कालरुद्रः । पुं । कालाग्निरुद्रे ॥

काललवणम् । न । विड्लवणे ॥

काललोहम् । न । तीखा इति गौड भाषाप्रसिद्ध कृष्णायसे । वक्रमे । ती क्ष्णे ॥



कालवित् । पुं । ज्योतिर्विदि ॥ ज्योति र्विद्धि कालः परमार्थ इत्याह ॥ त न्न । कालैक्ये मुहूर्त्तादिव्यवहारा योगात् ॥ तन्नानात्वेपि न स्वातन्त्र्य म् । अन्यविषयत्वेन प्रतीतेः । उदय कालइत्यादिनाक्रियाधर्मत्वेन प्रती तेः स्फुटत्वात् ॥ नचक्रियाधर्मत्वं कालेपितदुत्पत्तिदर्शनात् । अन्य थाकालानवच्छिन्नत्वेनक्रियानित्य त्वापातात् ॥ त्रि । अवसरज्ञे ॥

कालविभक्तिः । स्त्री । मासर्त्वयनादौ ॥

कालहन्तः । पुं । कुलत्थवृक्षे ॥

कालहन्ती । स्त्री । पाटलावृक्षे ॥

कालवेला । स्त्री । क्रियानर्हकालवि शेषे ॥ यथा । पञ्चद्विषड्भिनगेन्द्र वेदद्विन्दव्स्तिनस्थापिदिवाऽथरात्रौ । षट्तूर्यरामाद्रिशराग्निचन्द्रनागा स्तुर्व्यादिषुकालवेला इति ॥ का लस्यशनेस्तत्सुतस्यार्द्धरूपावेला ॥ इतिदीपिका ॥

कालशाकम् । न । नाडिकम् श्राद्धशा कम् कालकमितिपर्यायप्रसिद्ध शाक विशेषे । नरिका नरचा इतिगौड भाषा ॥ कालशाकंसरंकच्चं वातकृ त्कफशोफहृत् । बल्यंरुचिकरंमेध्यं रक्तपित्तहरंहिमम् ॥

कालशालिः । पुं । कृष्णशालौ ॥

कालशेयम् । न । गोरसे घोले ॥ कालश्यामि मन्थनपात्रे भवम् । इति कुक्षिकलशिवस्यास्य ढेञ् ॥

कालसंरोधः । पुं । चिरकालावस्थाने ॥

कालसर्पः । पुं । कृष्णसर्पे महाविषे ॥

कालसारः । पुं । कृष्णसारे मृगे ॥ न । पीतचन्दने । कालानुसार्य्ये का-लिया इति गौडभाषा ॥

कालसूत्रम् । न । अयुतयोजनपरिमण्डले ताम्रमये तप्तसमे देशे उपर्यधस्तादग्न्यर्काभ्यामतितप्यमाने नरके ॥ कुलालचक्रवच्छेदनरूपेण नरके ॥

कालसेयम् । न । घोले ॥

कालस्कन्धः । पुं । तमालवृक्षे ॥ तिन्दुकवृक्षे ॥ जीवकद्रुमे ॥ कृष्णखदिरे ॥ उदुम्बरे ॥ कालः स्कन्धो यस्य ॥

कालहानिः । स्त्री । विलम्बे ॥

कालहीनः । पुं । लोध्रे ॥

काला । स्त्री । कृष्णत्रिवृतायाम् ॥ कालयति । कलविक्षेपणे । प्रायन्तः ॥ मञ्जिष्ठायाम् ॥ नीलिकायाम् ॥ कल्यते । कल क्षेपे कर्मणि घञ् ॥ कृष्णजीरके ॥ अश्वगन्धायाम् ॥ पाटलावृक्षे ॥ कालियाकडा । इति गौडभाषाप्रसिद्धे कुलिकवृक्षे ॥ कालोवर्णोऽस्यास्ति । अर्श आद्यच् ॥



गौरीम् ॥ वर्षाष्टवर्षिका गौरी नानमदेति न ङीष् ॥

कालाचरिकः । त्रि । भिक्षितारे ॥

कालाख्या । स्त्री । नवविधासु तुष्टिषु तृतीयायाम् ॥ यथा प्रव्रज्यापि न सद्योनिर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तापितयेत्युपदेशे यातुष्टिः सा कालाख्याम्भोघ उच्यते ॥

कालागुरु । न । कृष्णागुरुणि ॥ कालञ्च तत् अगुरुञ्च ॥ अयं प्राग्ज्योतिषे भवतीति प्रसिद्धिः ॥

कालाग्निरुद्रः । पुं । संहारकारिरुद्रे ॥

कालाग्निः । पञ्चमुखे रुद्राक्षे ॥

कालाङ्गः । पुं । काद्रवेयप्रभेदे ॥

कालाङ्गम् । न । कालपुरुषस्याङ्गे ॥ यथा मेषः शिरो वृषोवक्रं मिथुनं बाहुयुग्मकम् । कर्कटो हृदयञ्चैव सिंहस्तूदरमेव च ॥ कन्याकटिस्तुलावस्तिर्वृश्चिको गुह्यमेव च । धनुरूरू मृगो जानू कुम्भोजङ्घे प्रकीर्त्तिते ॥ मीनौ पादद्वयञ्चैव कालाङ्गानि यथाक्रमम् ॥ इति कालनरस्याङ्गे सदसद्भ्यो गतः । पुंसामपि तदङ्गेषु शुभाशुभफलं वदेदिति ॥

कालाञ्जनी । स्त्री । नीलाञ्जन्याम् । रेचन्याम् ॥

कालिका । स्त्री । गौर्य्याम् ॥ चण्डिकाभेदे ॥ कार्ये ॥ वृश्चिकपत्रवृक्षे ॥ क्रमदेयवस्तु मूल्ये ॥ धूम्यायाम् ॥ नवमेघे ॥ पटोलशाखायाम् ॥ रोमावल्याम् ॥ मांस्याम् ॥ काक्याम् ॥ शिवायाम् ॥ मेघपङ्क्तौ ॥ स्वर्णादिदोषे ॥ सुरायाम् ॥ क्षीरकीटे ॥ काकोल्याम् ॥ श्यामाख्यविहगे ॥ प्रविमासीयवृद्धौ ॥ यथा । प्रतिमासस्य वर्त्तिता वृद्धिः सा कालिका मतेति नारदः ॥ कुज्झटिकायाम् ॥ हिमांचलभवायां त्रिशिरायां हरीतक्याम् । सा गन्धयोगकरणे प्रशस्ता भवति ॥ कालोवर्णः समयश्चास्त्यस्याः । अत इनिठनाविति ठन् ॥ स्वा० कन् वा । केण इति ह्रस्वः ॥

कालिकापुराणम् । न । उपपुराणविशेषे ॥

कालिकाव्रतम् । न । अमावास्यायां स्त्रीकर्त्तव्ये भविष्यपुराणोक्ते व्रतविशेषे ॥

कालिङ्गः । पुं । भूमिकर्कारौ ॥ हस्तिनि । द्विपे ॥ सर्पे ॥ लौहविशेषे ॥ अस्य लक्षणं यथा । कालिङ्गोऽलिङ्गवान् यः स्यात् घनः स्वच्छाङ्गकोमल इति ॥ कलिङ्गानां राजनि ॥ न । कर्कोटकलिङ्गस्तरमसादृश ॥ न । कर्कोटक तरमूज इति ख्याते फलविशेषे सुवर्त्तुले । कालिन्दके ॥ गुणा यथा । कालिङ्गं ग्राहि हृत्कफपित्तशुक्रदृष्टि-शीतलं गुरु । पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजित् ॥ कालिङ्गाः । पुं भूम्नि । नीवृति ॥ कलिङ्गदेशमारभ्य पञ्चाष्टयोजनं शिवे । दक्षिणस्यां हि भागे कालिङ्गाः परिकीर्त्तिताः ॥

कालिङ्गिका । स्त्री । त्रिवृति ॥

कालिङ्गी । स्त्री । राजकर्कट्याम् ॥

कालिदासः । पुं । विक्रमादित्यसभायां नवरत्नमध्यगणिते प्रसिद्धकविविशेषे । मेधारुद्रे ॥ काल्याः दासः । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वः ॥

कालिनी । स्त्री । आर्द्रानक्षत्रे ॥ इति हेमचन्द्रः ॥

कालिन्दम् । न ।
कालिन्दकम् । न । } कलींदा इति प्रसिद्धे फलविशेषे । कालिङ्गे ॥

कालिन्दी । स्त्री । यमुनायाम् ॥ कलिन्दस्येयम् । तस्येदमित्यण् । ङीप् ॥ रक्तत्रिवृति ॥

कालिन्दीभेदनः । पुं । कालिन्दीकर्षणे । बलदेवे ॥ कालिन्द्याः भेदनः ॥

कालिन्दीसूः । स्त्री । सूर्यपत्न्याम् । यमुनामातरि ॥

कालिन्दीसोदरः । पुं । यमे ॥ कालि

तत् शिरस्त्काण्डयमदण्ड इवैष भुजः ॥ एकपदार्थता यथा । भस्मो द्धूलनभद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परां गिरिसुतां कान्तालयालङ्कृतिम् ॥ अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ एषु स पराधद्वये पूर्वापरजन्मनोरनेमनम् भुंजपाते अक्षेपिचेपो महामोहे सुखालोकोच्छेदित्वञ्च यथाक्रमं मुक्तरूपे हेतुः ॥

काव्या । स्त्री । पूतनायाम् ॥ बुद्धौ ॥

काव्यार्थापत्तिः । स्त्री । अर्थालङ्कारप्रभेदे ॥ कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते । स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहाम् ॥ अत्र सहस्यनेन पद्मानि येन जितानि इति विवक्षितम् । तथाच सोपि येन जितस्तेन पद्मानि जितानीति किमुवक्तव्यमितिदण्डापूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः ॥ तान्निकार्यापत्तिव्याविरसैनाय काव्यविशेषणाम् । यथा वा ॥ अधरोयमधीराक्ष्या बन्धुजीवप्रभाहरः । अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥ स्वकीयहृदयं



भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥

काशः । पुं । रोगविशेषे ॥ क्षुते । पुं । कण्ठकण्डूयने ॥ कास इति प्रसिद्धे तृणविशेषे । इक्षुगन्धायाम् ॥ काशः स्यान्मधुरस्तिक्तः स्वादुपाको हिमः सरः । मूत्रकृच्छ्राश्मदाहास्रक्षयपित्तजरोगजित ॥ न । काशपुष्पे ॥ काशते । काशृदीप्तौ । पचाद्यच् ॥

काशकः । पुं । काशे । कास इति भाषा ॥

काशाल्मलिः । स्त्री । कूटशाल्मलिवृक्षे ॥

काशिः । स्त्री । देशविशेषे । काश्याम् । काशते । काशृ० । सर्वधातुभ्य इन् ॥

काशिका । स्त्री । काश्याम् । महाश्मशाने ॥ प्रकाशिकायाम् ॥ काश्येव । स्वार्थे कन् ॥ काशिकायाम् । काश्यादित्वाट्ठञ् । इकारश्चोच्चारणार्थः ॥

काशिकाप्रियः । पुं । दिवोदासे । धन्वन्तरौ ॥

काशिकी । स्त्री । काश्यां जातायाम् ॥ काश्यां जाता तत्रभवा तत आगता वा । काश्यादिभ्यष्ठञ्ञिठौ इति ठञ् । ङीप् ॥

काशिराजः । पुं । नृपतिविशेषे । धन्व

न्तरौ । सुधोद्भवे ॥ काश्याः राजा । राजाहःसखिभ्यष्टच् ॥

काशी । स्त्री । वाराणस्याम् । तपःस्थस्थाम् । अविमुक्ते । आनन्दवने ॥ मुने प्रलयकालेऽपि न तत् क्षेत्रं कदाचन । विमुक्तं न शिवाभ्यां यद्विमुक्तं ततो विदुः ॥ न यदा भूमिवलयं न यदापां समुद्भवः । तदा विहर्त्तुमीशेन क्षेत्रमेतद्विनिर्म्मितम् ॥ इत्यगस्त्यम्प्रतिस्कन्दवचनम् ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥ एतास्तु पृथ्वीमध्ये न गण्यन्ते कदाचन । पुरी द्वारावती विष्णोः पाञ्चजन्ये परिस्थिता ॥ एताश्च मुक्तिदाः सर्व्वा एकपञ्चाशता सुरैः । यानि यानि च क्षेत्राणि काशीप्राप्तिकराणि षट् ॥ शिवा भिक्षमोचार्थं सदा करुणिकः शिवः । तारोपदेशं कुरुते श्रुत्याहुः शास्त्रकोविदाः ॥ यथोक्तं द्रयामले । काशीपुरीपरिसरे सुरसिन्धुतीरे कर्णे जपत्यनुदिनं किल देहभाजाम् । मोक्षार्थमेव दयया शिवखण्डमौलिः श्रीशक्तिबीजमनघं सुरसंघसेव्यमिति ॥ तत्र चैव्य विश्वाराममन्त्रमार्गे वैष्णवस्याचरण

कृष्णाज्ञावालोक्य शाक्तेभ्यः शक्तिबीजस्य भुवनेश्वरीमन्त्रस्य यतिभ्यः प्रणवस्येतिव्यवस्था ॥ सदा कृतयुगञ्चास्तु सदा चास्तु तदायनम् । सदा महोदयश्चास्तु काश्यां निवसतां सताम् ॥ लोलार्ककेशवौ कोटी गङ्गा ज्या नगरं धनुः । असि र्लक्ष्यः शरो ब्रह्मी शिवो धन्वी पुनातु माम् ॥ अथवा सर्व्वक्षेत्राणि काश्यां सन्ति नगोत्तम । तत्र नित्यं वसेन्नित्यं देवीभक्तिपरायणः ॥ तानि स्थानानि सम्पश्यन् जपन् देवीं निरन्तरम् । ध्यायंस्तच्चरणाम्भोजं मुक्तो भवति बन्धनादिति देवीगीता देवीभागवते ॥ काशते । काशृ दीप्तौ । पचाद्यच् । गौरादित्वात् ङीष् ॥

काशीनाथः । पुं । विश्वेश्वरे । शिवे ॥

काशीराजः । पुं । शिवे ॥ धन्वन्तरौ ॥ काश्याः राजा । टच् ॥

काशीशम् । न । धातुकाशीशे । हीराकसीस इति भा० । उपधातुविशेषे ॥ तद्द्विविधम् । चरिदवर्णं लोहितञ्च धातुकाशीशमित्युच्यते । शुक्लवर्णं तथाकृष्यमुष्पकाशीशमुच्यते ॥

काशूकारः । पुं । गुवाके ॥

काश्मरी । स्त्री । गम्भार्याम् ॥ काशते । काशृ० । अन्येभ्योऽपीति मनिन् । प्र

नोरचेति ङीपौ ॥

काश्मर्य्यः । पुं । काश्मरीवृक्षे । गम्भा-
रीम् ॥ काश्मरीशब्दोऽप्यस्य । अन्ये
ऽप्योपीतियप ॥

काश्मीरम् । न । पुष्करमूले ॥ कुङ्कुमे ॥
टङ्के ॥ पुं भूम्नि । देशविशेषे । शास्त्रशि
ल्पिषु ॥ संप्रदायविशेषे ॥ यथा । शा
रदामठमारभ्य कुङ्कुमाद्रितटान्तक-
म् । तावत्काश्मीरदेशः स्यात्पञ्चा
शद्योजनात्मकः ॥ काश्मीरेषु भवम् ।
तत्र भवइत्यर्थे कच्छादिभ्यश्चेत्यण्
॥ स्वार्थेऽणा ॥

काश्मीरजम् । न । कुष्ठे । परिभाव्ये
॥ कुङ्कुमे ॥ पुष्करमूले ॥ काश्मीरे
जायते । जनीरु ॥ सप्तम्यांजनेर्डः ॥

काश्मीरजन्म । न । कुङ्कुमे ॥ कुष्ठे ।
परिभाव्ये ॥ काश्मीरे जन्मास्य ॥

काश्मीरजा । स्त्री । अतिविषायाम् ।
महौषधे ॥

काश्मीरा । स्त्री । अतिविषायाम् ॥ क
पिलद्राक्षायाम् ॥ पृथिव्याम् ॥

काश्मीरी । स्त्री । गम्भार्याम् ॥ गुणा
यथा । काश्मीरी तुवरा तिक्ता वीर्यो
ष्णा मधुरा गुरुः । दीपनी पाचनी
मेध्या भेदिनी भ्रमशोषजित् ॥ दोष
तृष्णाम शूलार्शोविषदाहज्वरापहा । तत्फलं बृंहणं वृष्यं गुरुकेशरसा



यनम् । वातपित्ततृषारक्तक्षयमूत्र
विबन्धहृत् ॥ स्वादुपाके हिमं स्निग्धं
तुवराम्लं विशुद्धिकृत् । हन्याद्दाहतृ
षावातरक्तपित्तक्षतक्षयानिति ॥

काश्यः । पुं । काशिराजे ॥ न । मद्ये ॥

काश्यपः । पुं । मुनिविशेषे ॥ कणाद
मुनौ ॥ मृगविशेषे ॥ मीनवि० ॥
गोत्रवि० ॥ तत्प्रवरान्तर्गतमुनिवि०
॥ कश्यपस्यात्मजमात्रे ॥ कश्यपस्य गो
त्रापत्यम् । विदाद्यञ् ॥ न । मांसे
॥ इति हेमचन्द्रः ॥

काश्यपिः । पुं । अरुणे । गरुडाग्रजे ॥ ग
रुडे ॥ कश्यपस्यापत्यम् । बा० इञ् ॥

काश्यपी । स्त्री । पृथिव्याम् ॥ भूमौ ॥
कश्यपस्येयम् । तस्येदमित्यण् । ङी
प् ॥ अम्बिकायाम् ॥

काश्यपेयः । पुं । सूर्य्ये ॥

काश्मरी । स्त्री । काश्मर्याम् । गम्भा
रीम् ॥ काशते । काशृ० । अन्येभ्यो
ऽपीति ष्वनिप् । वनोरचेति ङीपौ ॥

काषः । पुं । कषणे ॥ कषणपाषाणे ॥
कष्यतेऽनेन ॥ कष० । घञ् ॥

काषायम् । त्रि । कषायेण रक्ते वस्त्रादौ
॥ तेन रक्तं रागादित्यण् ॥

काषायी । त्रि । कषायरक्तवस्त्रवति ॥

काष्ठम् । न । दारुणि । इन्धने । अर्क
निष्कास नार्थे काष्ठे ॥ यथा । सुसा

रमति शुष्कं यत् शुष्टिमयोसमेष्य ति। ततः काष्ठङ्काष्ठमित्याहु खदिरादिसमुद्भवम् ॥ काश्यते । काशृ० । हनिकुषीत्यादिना क्थन् । ग्रस्येति यत्वम् । तितुत्रेतिनेट् ॥

काष्ठकम् । न । अगुरुणि ॥

काष्ठकदली । स्त्री । वनकदल्याम् । भिस्सारस्थायाम् । काठकेला इतिभाषा ॥

काष्ठकीटः । पुं । घुणे ॥

काष्ठकुट्टः । पुं । शतच्छदखगे । खुटकबढैया इति भाषा ॥

काष्ठकुद्दालः । पुं । अम्भ्राम् । नौकादेर्मलापनयनार्थे काष्ठघटितकुद्दाले ॥ कमुद्दालयति । दलविदारणे । कर्मण्यण् । ग्रकंत्यादि । काष्ठस्य कुद्दालः ॥

काष्ठजम्बू । स्त्री । भूमिजम्ब्वाम् ॥

काष्ठातट् । पुं । वर्णसङ्करजातिविशेषे । रथकारे । बर्द्धकौ । बढइ इति भाषा ॥ काष्ठं तक्षति । तक्षूतनूकरणे क्विप् । काष्ठतक्षौ । काष्ठतक्ष्यामित्यादिरूपाणि ॥

काष्ठतक्षक । पुं । रथकारे । तक्षणि ॥ काष्ठंतक्षति । तक्ष्० । ण्वुल् ॥

काष्ठतन्तु । पु । कोषकारे । काष्ठकृमौ ॥

काष्ठदारुः । पु । देवकाष्ठे ॥

काष्ठद्रु । पुं । पलाशवृक्षे ॥

काष्ठधात्रीफलम् । न । आमलके ॥

काष्ठपाटला । स्त्री । सितपाटलिकायाम् ॥

काष्ठमठी । स्त्री । चितायाम् ॥ इति त्रिकाण्डशेषः ॥

काष्ठमल्लः । पुं । शवयाने । अर्थी इति भाषा ॥

काष्ठमौनम् । न । इङ्गितेनापिस्वाभिप्रायाप्रकाशने ॥

काष्ठलेखकः । पुं । घुणे ॥

काष्ठलोही । पुं । काष्ठलोहयुक्तपाचे । वातर्द्दी ॥

काष्ठवल्लिका । स्त्री । कटुकायाम् ॥

काष्ठशारिवा । स्त्री । शारिवायाम् । अनन्तमूल इतिगौडभाषा ॥

काष्ठा । स्त्री । दारुहरिद्रायाम् ॥ स्थितौ । स्थानमात्रे । दिशि । आशायाम् ॥ उत्कर्षे । प्रकर्षे ॥ मर्यादायाम् । सीमनि ॥ निष्ठायाम् ॥ पर्यवसानभूमौ ॥ अष्टादशनिमेषात्मके काले ॥ दशचषपरिमितेकाले ॥ काश्यते । काशृ० । हनिकुषिनीरमिकाशिभ्यः क्थन् । ग्रस्येतिषत्वम् । टाप् ॥

काष्ठाम्बुवाहिनी । स्त्री । द्रोण्याम् । काष्ठादिकृतच्छिद्राग्रनौकाकृतिजलसेचन्याम् ॥ पुन पुनरम्बुवहति । व

हुलमाभीदयइतिख्यातिः । काष्ठस्य अम्बुवाहिनी । काष्ठेत्युपलक्षणम् । शिलामय्या अपि द्रोणीत्वात् ॥

काष्ठालुकम् । न । काठिन्ययुक्ते कन्दविशेषे ॥

काष्ठीलः । पुं । राजार्के ॥

काष्ठीला । स्त्री । कदल्याम् ॥ काष्ठिना इल्यते । इलँ स्वप्नक्षेपणयोः । घञ् ॥ काष्ठवत् अष्ठीलमस्या वा ॥

काष्ठोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कासः । पुं । खाँसीति प्रसिद्धे रोगे । क्षवथौ ॥ पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः । क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥ कासते अनेन । कासृ शब्दकुत्सनयोः । हलश्चेति घञ् ॥

कासकन्दः । पुं । कोकशादेश प्रसिद्धे । कासालौ । विशालपत्रे ॥

कासघ्नः । पुं । मोदकविशेषे ॥ यथा । हरीतकीकणाशुण्ठीमरिचंगुडसंयुतम् । कासघ्नोमोदकः प्रोक्तस्तृष्णारोचकनाशनइति ॥

कासघ्नी । स्त्री । कण्टकार्याम् ॥

कासजित् । स्त्री । भार्ग्याम् ॥

कासनाशिनी । स्त्री । कर्कटशृङ्ग्याम् ॥

कासन्दीवटिका । स्त्री । वेसवारविशेषे ॥

कासमर्दः । पुं । कालकासुन्दा इति गौडभाषाप्रसिद्धे गुल्मप्रभेदे । अरिमर्दे । जरणे ॥ पुं । न । कासुन्दी इति गौडभाषाप्रसिद्धे वेसवारे ॥ पेषितजलमिश्रितवस्त्रगलितवेसवार इति पाकराजेश्वरः ॥

कासमर्ददलम् । न । कसौंदी इति ख्यातशाके ॥ कासमर्ददलं रुच्यं वृष्यं कासविषास्रनुत् । मधुरं कफवातघ्नं पाचनं कण्ठशोधनम् ॥ विशेषतः कासहरं पित्तघ्नं ग्राहकं लघु ॥

कासमर्दनः । पुं । पटोले ॥

कासरः । पुं । महिषे ॥ केजले सरति सृगतौ । अच् ॥ यद्वा ॥ कु ईषत् सरति । स्थूलकायत्वात् । ईषदर्थे च सिकोः कादेशः ॥

कासहा । पुं । क्वाथविशेषे ॥ यथा । कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहेति ॥

कासारः । पुं । सरोवरे । सपद्मे निष्पद्मे वा महाजलाशये ॥ कृत्रिमे पद्माकरे ॥ कासते । कासृ शब्दे । तुषारादयश्चेत्यारन् ॥ यद्वा ॥ कु ईषत् सारोऽस्य । ईषदर्थे चेति कोः कादेशः । अर्शआद्यच् ॥ यद्वा । केन जले

यः ॥

किंवदन्तिः । स्त्री । जनश्रुतौ ॥ कोपि वादः । किम्पूर्वाद्वदेः भुवोझिच् । बाहुलकाद्वदेरपि । ततोङीषवि कल्प ॥

किंवदन्ती । स्त्री । जनश्रुत्याम् । सत्ये असत्येवालोकवादे ॥ कोपिवादः । किम्पूर्वाद्वदेः तृभूवहिवसीति बाहुलकाज्झच् । झोन्तः । गौ० ङीष् ॥

किंवा । अ । विकल्पे । अथवा ॥

किंशारुः । पुं । सस्यशूके । धान्याग्रभागे ॥ बाणे ॥ कङ्कपक्षिणि ॥ किञ्चित् कुत्सितं वा शृणाति । शॄहिंसायाम् । किञ्जरयोः श्रिणः इतिञुण् ॥

किंशुकः । पुं । पलाशवृक्षे ॥ नन्दीवृक्षे ॥ किञ्चित् शुकइव । शुकतुण्डाभपुष्पत्वात् ॥

किंशुलुकः । पुं । पलाशवृक्षविशेषे ॥

किंसखा । पुं । कुत्सिते सख्यौ । दुर्मन्त्रिणि ॥ कुत्सितः सखा । किमः क्षेपइ समासान्तप्रतिषेधः ॥

किकिः । पुं । किकिदिवे । चाषे ॥ नारिकेले ॥

किकिदिवः । पुं । } चापखगे ॥
किकिदिविः । पुं । }

किकिदीवः । पुं । चापविहगे ॥ नीलकण्ठे ॥

किकिदीविः । पुं । सोनाचिड़ा इतिगौड भाषाप्रसिद्धे स्वर्णचातके । चाषपक्षिणि ॥ बाहुलकाद्ह्रस्वदीर्घयोर्विनिमयः ॥

किकीदिवः । पुं । किकिदिवौ ॥ किकिदीविकिकीदिवाविति द्विरूपकोशात् पादकारान्तोपि ॥

किकीदिविः । पुं । चाषे ॥ किकीतिदिव्यति वासते । दिवुक्रीडादौ । कृविघृष्विच्छविस्थविः किकीदिविरिति साधुः ॥

किकीदीवः । पुं । } चाषपक्षिणि ॥
किकीदीविः । पुं । }

किखिः । पुं । वानरे । कपौ ॥ स्त्रीभेरौ । लघुशृगाले । लोमड़ी इति भाषा ॥

किङ्करः । त्रि । दासे । सेवके ॥ विप्रक्षत्रिकिङ्करोभूपोवैश्यो भूपस्यभूमिप । सर्वेषांकिङ्करारः शूद्रा ब्राह्मणस्यविशेषतः ॥ किञ्चित् कुत्सितंवाकरोति । दिवाविभेत्यनकिंयत्तदहुविष्वयच ॥

किङ्करा । स्त्री । दास्याम् ॥ अजन्तात्टाप् ॥

किङ्करी । स्त्री । दास्याम् ॥ किङ्करस्य स्त्री । पुंयोगादाख्यायामितिङीष् ॥

किङ्किणी । स्त्री । क्षुद्रघण्टिकायाम् । घाघरः इति गौडभाषा प्रसिद्धे कट्याभरणविशेषे । करधनी कौंधनी इति भाषा ॥ किञ्चित् किणाङ्करोति किणशब्दात् तत् करोतीति णिजन्तात् अच् । गौ० ङीप् ॥ विकङ्कतद्रुमे ॥

किङ्किणीका । स्त्री । क्षुद्रघण्टिकायाम् ॥ पञ्चरात्रे । कणशब्दे अस्मात् यङ्लुगन्तात् पचादित्वात् किङ्किणीचेति ईकन् । धातोः किङ्कणादेशश्च ॥

किङ्किरः । पुं । कोकिले । भ्रमरे ॥ हये ॥ कामदेवे ॥ न । गजकुम्भे ॥

किङ्किरा । स्त्री । रक्ते । रुधिरे ॥

किङ्किरातः । पुं । अशोकद्रुमे ॥ कामदेवे ॥ रक्ताम्लाने ॥ शुके ॥ पिके ॥ पुष्पविशेषे ॥ हेमगौरे । पीताम्लाने ॥ अस्य गुणाः । किङ्किरातो विशदस्तिक्तः कषायश्च सरो दीप्तः । कफपित्तपिपासास्रदाहशोषघ्नमिकृमीनिति ॥

किङ्किरालः । पुं । बर्वुरवृक्षे ॥

किङ्किरी । पुं । विकङ्कते । स्रुवावृक्षे । बुंइंचि इति गौडभाषा ॥

किञ्च । अ । आरम्भे ॥ साकल्ये ॥ सम्भावनायाम् ॥ किम् च चेति विग्रहः ॥



किञ्चन । अ । अकात्स्न्ये । असाकल्ये । अल्पे ॥

किञ्चनः । पुं । हस्तिकर्णपलाशे ॥

किञ्चित् । अ । स्वल्पे । ईषत् । मनाक् ॥ इदन्तयानिर्देष्टुमशक्ये ॥ किञ्च चिच्च अनयोः समाहारः ॥

किञ्चिलिकः । पुं । किञ्चुलुके ॥

किञ्चुलिका । स्त्री ।

किञ्चुलुकः । पुं । केंचुआख्ये कीटविशेषे । गण्डूपदे ॥ किञ्चिल्लुम्पति । कास्यनेकाजग्रहणंचुलुम्पाद्यर्थमिति वार्त्तिकनिर्दिष्टचुलुम्पधातुः । अन्येभ्योपीतिड । टेरिति ककार मकारपकाराणां लोपः । ततः संज्ञायां कन् ॥

किञ्जम् । न ।<br>किञ्जः । पुं । } किञ्जल्के ॥

किञ्जल्कः । पुं । केसरे । पुष्परेणौ ॥ किञ्जल्कः शीतलो रूक्षः कषायो ग्राहकोविषः । कफपित्ततृषादाहरक्तार्शोविषशोथजित् ॥ पद्मकिञ्जल्क इति शेषः ॥ किञ्चिज्जलति । जल अपवारणे । बाहुलकात्कः ॥ न । नागकेशरपुष्पे ॥ पद्माभ्यन्तरस्थे केशाकारे कर्णाटकपेष्टने केसर इतिख्याते । पीतपरागे ॥

किञ्जल्कविभेदः । पुं । केसरागमे ॥

किटिः । पुं । पोत्रे । शूकरे ॥ केटति । किटगतौ । इगुपधात्कित् ॥

किटिभः । पुं । केशकीटे । जूं खीख इति भाषा ॥ इतिहेमचन्द्रः ॥

किट्टम् । न । मले । तैलाद्यधोभागस्थे ॥ शिङ्घाणादौ ॥ यथा । ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते । यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणमिति ॥ केटसिक्त । किट० । गन्धर्वेत्तिक्तः । आगमशास्त्रस्यानित्यत्वान्नेट् ॥

किट्टवर्जितम् । न । शुक्रे ॥ इतिहेमचन्द्रः ॥

किट्टालः । पुं । ताम्रकलशे ॥ लोहगूथे ॥

किणः । पुं । शुष्कव्रणे । मांसग्रन्थौ ॥ निघर्षणजव्रणचिह्ने । घट्टा इति भाषा ॥ घुणे ॥

किणिः । स्त्री । अपामार्गे ॥

किणिही । स्त्री । खरमञ्जर्याम् । अपामार्गे ॥ किणिनो व्रणान् जिहीते । ओहाङ्गतौ । आतोनुपेतिकः । गौरादित्वान् ङीष् ॥

किण्वः । पुं । न । सुराबीजे । नग्नहौ ॥ न । पापे ॥ कणनम् । कणशब्दे । उल्वादयश्चेति साधुः । कर्मक्रिया ॥ कणति वा । सर्वधातुभ्य इन्निति कन् । बाहुलकादित्वम् ॥

कितवः । पुं । द्यूतकृति । अक्षदेविनि ॥ द्यूतसमाह्वयदेविनि ॥ मत्ते ॥ भ्रमके ॥ खले ॥ चोरनामनिगन्धद्रव्ये ॥ किञ्ज्ञाने । भावेक्तः । कितं वायति कितेनवातिवा । ओवैशोषणे वागन्धनेषा । आतोनुपेतिकः ॥ कनकाह्वये । धत्तूरे ॥ कितवाः सन्त्यस्य ग्राहकाः । अर्शआद्यच् ॥ कितान् बध्नातिमा । अन्येभ्योपीतिडः ॥

किनाटम् । न । वृक्षस्य त्वचोऽभ्यन्तरे काष्ठसंसक्तवल्कलरूपे ॥ वेदेप्रसिद्धम् ॥

किन्तनुः । पुं । अष्टपादे । मकडामकडी इति भाषा

किन्तमाम् । अ । पृष्टे कतमे ॥ इदमेषामतिशयेन किमित्यर्थे अतिशायनेतमप् । किमेत्तिङव्ययेघादाम्वद्रव्यप्रकर्षे ॥

किन्तराम् । अ । पृष्टे कतरे ॥ इदमनयोरतिशयेनकिम् । द्विवचनविभज्योपपदेतरबीयसुनौ इत्यादिनातरप् । किमेत्तिङव्ययेघादाम्वद्रव्यप्रकर्षे ॥

किन्ता । स्त्री । कुत्सितत्वे ॥ कस्य केशस्य वा भावः । तल् ॥

किन्तु । अ । किम्पुनः । पूर्ववाक्यसङ्कोचप्रापके । प्रागुक्तिविरुद्धार्थे ॥ यथा । भूयाभावे भवति मरणं किन्तु स

म्याबितानाम् । इति प्राचीनाः ॥

किन्तुघ्नः । पुं । बवादिकादशकरणान्तर्गतशेषकरणे ॥ तत्रजातस्यफलम् । मित्रामित्रे नैवकिञ्चिद्विशेषो धर्माधर्मे तुल्यता मानवस्य । लोके वादे सर्वदाप्रीतियुक्तः किन्तुघ्नाख्येयस्य नूनं जनिः स्यादितिकोष्ठीप्रदीपः ॥

किन्दी । पुं । } घोटके । अश्वे ॥ ना
किन्धी । पुं । } त्वाचेतौ ॥

किन्नरः । पुं । किम्पुरुषे । मयौ । अश्वमुखदेवयोनिनरविग्रहे देवगायने ॥ किञ्चिन्नरः अश्वमुखत्वात् । कुत्सितोवा नरः किन्नरः । किंक्षेप इति समासः । कुत्साच कस्यचिन्नरमुखाश्वकायत्वात् कस्यचिदश्वमुखनरशरीरत्वात् ॥ अर्हदुपासकविशेषे इति हेमचन्द्रः ॥

किन्नरेशः । पुं । वैश्रवणे । कुबेरे ॥ किन्नराणामीशः ॥

किन्नरेश्वरः । पुं । कुबेरे । नरवाहने ॥

किन्नु । अ । प्रश्ने ॥ वितर्के ॥ स्थाने ॥

किम् । अ । कुत्सायाम् । गर्हणे ॥ वितर्के ॥ निषेधे ॥ प्रश्ने ॥ प्रकारे । कुत्सितं करोतिवा । कुशब्दे । बाहुलकाट् डिम् । कायतेर्डिमिर्वा ॥ ईषदर्थे ॥ अतिशये ॥

का । त्रि । क्षेपे ॥ वितर्के ॥ निन्दायाम् परिप्रश्ने ॥ कानम् कायनिवा । कै शब्दे । कायतेर्डिमिः ॥ स्त्री । का । न । किम् ॥

किमिच्छकः । पुं । मार्कण्डेयपुराणोक्तव्रतविशेषे ॥

किमु । अ । सम्भावनायाम् ॥ विमर्शे ॥ किम्च उच ॥

किमुत् । अ । किमुतार्थे ॥

किमुत । अ । प्रश्ने ॥ वितर्के ॥ विकल्पे ॥ अतिशये ॥ किम्च तदुत च । समाहारोवा ॥

किमूत । अ । वितर्के ॥ किम्च ऊतच अनयोः समाहारः ॥

किम्पचः । त्रि । किम्पचाने ॥ किम्पचति । पचाचच् । किंक्षेप इतिसमासः ॥

किम्पचानः । त्रि । कृपणे ॥ किञ्चित् पचति । औणादिकश्चानजितिस्वामी ॥ किम्पचति । ताच्छील्येति चानशानच्चा । अनित्यमागमशासनमितिनमुक् । किंक्षेपइतिसमासः ॥

किम्पाकः । पुं । माकाल इतिगौडभाषाप्रसिद्धमहाकालखतायाम् ॥ तत्फले ॥ त्रि । अज्ञे ॥ माहशासिते ॥

किम्पुरुषः । पुं । किन्नरे ॥ किञ्चित् कुत्सितो वा पुरुषः । किंक्षेपइतिसमा

र्पभीत्यादेः सङ्करः किलकिञ्चित-मितिच ॥ अपिच । गर्वाभिलाषरुदितस्मितासूयाभयक्रुधाम् । सङ्करीकरणंहर्षात् स्यादुच्यते किलकिञ्चितमिति उज्ज्वलकौस्तुभः ॥

किलकिला । स्त्री । हर्षध्वने । सिंहनादे ॥ वानराणांशब्दानुकरणे ॥

किलाटः । पुं । क्षीरविकृतौ ॥ नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः ॥ दधिकूर्चिकातक्रकूर्चिकयोः पिण्डे ॥

किलाटी । पुं । वंशे । बाँस इति भाषा ॥ इतिहारावली ॥

किलाटी । स्त्री । क्षीरविकृतौ । कूर्चिकायाम् ॥

किलासम् । न । सेहुआँ इति ख्याते सिध्मरोगे । त्वक्पुष्पे ॥ किलति । किलश्वैत्यक्रीडनयोः । इगुपधेतिकः । अस्यति । असुक्षे° । अच् । किलञ्च तदसञ्च ॥ यद्वा । केलनम् । भि° अड । किलमस्यति । अण् । किलेनश्वैत्येन असति वा । अस दीप्तौ । अच् ॥

किलासघ्नः । पुं । काँकरोल इतिगौड भाषा प्रसिद्धे वृक्षविशेषे । कर्कोटके । तिक्तपत्रे । सुगन्धके ॥

किलासी । त्रि । सिध्मले । किलासरोगवति ॥ किलासमस्यास्ति । इन्द्रोपतापेति इनि प्रत्ययः ॥

किलिः । अ । कण्ठकूजिते ॥

किलिकिला । स्त्री । सिंहनादे ॥ जितशापवद्दर्पस्य प्रतिज्ञापूरणीकृतः । वीरस्य गर्जितंसिंहनादः किलि किलाऽथ तेतिविश्वः ॥

किलिकिलितम् । न । शौर्यगर्जिते ॥

किलिञ्जः । पुं । किलिञ्जके । कटे ॥ किल्यतेनेन । किल° । इगुपधादिति इन् । वेत्रवीरणादेः किलेर्जातः । जनी° । पञ्चम्यासजातौ विति डः । पृं° ॥ सूक्ष्मदारुणि ॥

किलिञ्जकः । पुं । वीरणादिकटे ॥ किलिञ्जात् स्वार्थे । कन् ॥

किलिमम् । न । देवदारुणि ॥ इतिराजनिर्घण्टः शब्दरत्नावलीच ॥ इकिलिमम् किलिमम् । भीमसेनो भीम इतिवत् ॥

किल्बिषम् । न । अपराधे ॥ पापे ॥ रोगे ॥ धर्माधर्मफलभूते अनिष्टे संसारे ॥ पापवत् पुण्यस्याप्य निष्टफलत्वेन किल्बिषत्वमेव । कीर्त्तरम्यमदः ॥ केलनम् । किल्यतेवा । किलश्वैत्ये । किलेर्बुक्चेतिटिषच् प्रत्ययः ॥

किल्ली । पुं । घोटके ॥ किक्कीतिपाठा

कीकशः । पुं । चण्डाले ॥ कीं इति कशति शब्दे । पचाद्यच् ॥
कीकसः । पुं । कृमिजातौ ॥ न । अस्थिनि ॥ त्रि । कर्कशे ॥ कीति कसति कसगतौ ॥ पचाद्यच् ॥
कीकसास्यः । पुं । पक्षिणि ॥ इति हारावली ॥
कीचकः । पुं । दैत्यविशेषे ॥ राक्षसविशेषे ॥ द्रुमभेदे ॥ नले ॥ केकयनृपात्मजे । विराटराजश्याले ॥ सुपुष्पान्तरागर्भे वेणुजातौ ॥ अनिलयोगात् शब्दायमानवंशे ॥ चीकति शब्दायते । चीकमर्षणे । वुन् । चीकयते वा । वन्तविपर्ययश्चेति वुन् ॥ यद्वा । कीत्यव्यक्तं शब्दं चकति । प्रकटयति । अचि च ॥ कीचेत्यव्यक्तं कायति वा । मूलकः । अन्येभ्योपीति डो वा ॥
कीचकजित् । पुं । भीमसेने ॥ कीचकमजैषीत् । जी । क्विप् । तुक् ॥
कीचकभित् । पुं । वृकोदरे । भीमसेने ॥ कीचकम् भिनत्ति । भिदिर् । सत्सूद्विषेति क्विप् । तुक् ॥
कीटः । पुं । कृमिभ्यः किञ्चित्स्थूले चुद्रजन्तुमात्रे ॥ कीटति । कीट । अच् ॥
कीटकः । पुं । कृमिजातौ ॥ मागधजातौ ॥ त्रि । निष्ठुरे ॥ स्वार्थे कः ॥ कन्या ॥

कीटघ्नः । पुं । गन्धके ॥ कीटं हन्ति । हन् । अमनुष्यकर्तृके चेति टक् ॥
कीटजा । स्त्री । अलक्तिः लाक्षायाम् ॥ कीटेभ्यो जाता । जनी । डः ॥
कीटपादिका । स्त्री । हंसपदीवृक्षे ॥
कीटमणिः । पुं । खद्योते ॥ कीटेषु मणिरिव ॥
कीटमाता । स्त्री । हंसपदीवृक्षे ॥
कीटमारी । स्त्री । हंसपदीवृक्षे ॥
कीटसेयः । पुं । मृगशिरा इति प्रसिद्धे कीटे । अयं नदीतीरे सिकतामध्ये तिष्ठति ॥
कीटसंचयः । पुं । राशिविशेषस्य संज्ञायाम् । मकरान्तादि कर्कटमीन वृश्चिकाश्च कीटाख्याः ॥
कीडेरः । पुं । तण्डुलीयशाके ॥
कीदृक् । त्रि । } किम्प्रकारे ॥
कीदृशः । त्रि । }
कीनाशः । पुं । यमे । कृतान्ते ॥ यथा । किङ्कीनाश पाशधर गर्जसि मामुपगम्य हासभर सज्जेसि । हरिचरणं शरणं न हि पश्यसि यन्नामस्मरणादपि नश्यसीति ॥ वानरविशेषे ॥ त्रि । कर्षके ॥ क्षुद्रे ॥ पशुघातिनि ॥ कीत्यव्यक्तं कुत्सायाम् । की कुत्सितं नाशयति । पचाद्यच् ॥ यद्वा । क्लिश्नाति क्लिश्यते वा । क्लिशू विबाधने क्लि

अवघेवा। क्लिशेरीच्चोपधायाः कन् लोपश्चलोनाम् चेतिकन् उपधाया ईत्त्वम् ललोपोनामागमश्च ॥

कीरः। पुं। शुके। मेधाविनि। फलाशने ॥ कीराः। पुंभूम्नि। काश्मीरदेशे ॥ न। मांसे ॥ कीति ईरयति। ईर०। णिजन्तः। अच् ॥

कीरिकः। पुं। वृक्षविशेषे ॥ चपणके ॥ प्रापणे ॥ शुकशावके ॥

कीरवर्णकम्। न। स्थौणेयकनामनि सुगन्धिद्रव्ये ॥

कीरेष्टः। पुं। अचोट वृक्षे ॥ आम्रद्रुमे ॥ जलमधूकवृक्षे ॥ कीराणामिष्टः ॥

कीर्णः। त्रि। दत्ते ॥ आच्छन्ने ॥ विक्षिप्ते ॥ हते। हिंसिते ॥ कीर्यतेस्मो। कृ०। क्तः। नत्वणत्वे ॥

कीर्त्तनम्। न। उत्तैर। कथने ॥ कालापास्तुयुचमपीच्छन्तीति कीर्त्तयतीत्यत्रप्रसादकारः ॥

कीर्त्तना। स्त्री। यशसि ॥

कीर्त्तयन्। त्रि। कथयति ॥ कृतेर्लटः शत्रादेशः ॥

कीर्त्तिः। स्त्री। प्रसादे ॥ विस्तारे ॥ कर्दमे ॥ शब्दे ॥ दीप्तौ ॥ मातृकाविशेषे ॥ यशसि। समज्ञायाम् ॥ धार्मिकत्वनिमित्तायां प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषयतारूपायांख्यातौ ॥ परोचख्यातौ। मृतस्यख्यातौ ॥ यस्य कीर्त्तिर्हता लोके धिक् तस्यैव कुजीवितम्। दानादिप्रभवा कीर्त्तिः शौर्यादि प्रभवं यशः ॥ कीर्त्तिं स्वर्गफलामाहुरासंसारं विपश्चितः। अकीर्त्तिन्तु निरालोकनरकोद्देशदूतिकाम् ॥ तस्मात्कीर्त्तिमुपादद्यादकीर्त्तिञ्च-व्यपोहयेत ॥ सुकर्मपत्नी संसिद्धा कीर्त्तिर्धन्यैश्चपूजिता। ययाविना जगत्सर्वंयशोहीनंमृतंयथा ॥ कीर्त्त्यते। कृतसंशब्दने। कृतियूतिनिपातनात् साधुः। कीर्त्तनम्। कीर्त्तिः सौत्रः। हृपिशिरवीत्यादिनेक्तिः ॥



कीर्त्तितः। त्रि। कथिते ॥

कीर्त्तिभाक्। पुं। द्रोणाचार्ये ॥ त्रि। कीर्त्तियुक्ते ॥

कीर्त्तिमान्। पुं। वसुदेवस्य ज्येष्ठपुत्रे ॥ त्रि। कीर्त्तिसंयुक्ते ॥

कीर्त्तिशेष। पुं। मरणे ॥ यशसोऽवधौ ॥

कीलः। पुं। स्त्री। अग्निशिखायाम्। ज्वालायाम् ॥ शङ्कौ ॥ शस्त्रे ॥ कफोणौ ॥ कफोणिकाघाते ॥ स्तम्भे ॥ लेशे ॥ कीलति बध्नाति। कील बन्धने। इगुपधेतिक. ॥ कील्यते

अज्ञानेन वा । कर्मणिघञ् पुंसीति घोषा ॥

कीलकः । पुं । शिवके । गवांस्तम्भे । यत्रवद्धागौर्दृश्यते तस्मिन् । खूंटा इति भाषा ॥ गवा गात्रकण्डूयना र्थं गोष्ठे निखातस्तम्भे ॥ कीलशब्दार्थे ॥ वत्सरविशेषे । यथा । जायन्तेसर्वसस्यानि सुभिक्षं निरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजा कीलकेच शुभं वदेदिति ॥ कील्यते । कील० । ह लश्चेति घञ् । स्वा० कन् ॥

कीलसंस्पर्शः । पुं । गाब इति गौड भाषा प्रसिद्धे वृक्षविशेषे ॥

कीला । स्त्री । पुं । कीले ॥ स्त्री । रतवतौ । रतौ प्रतिहतिविशेषे ॥ यदा वात्स्यायनः । कीला उरसि कर्त्तरी शिरसि विद्धाकर्मोस्तयोरिति ॥ कीलति । कील० । इगुपधेतिकः । टाप् ॥

कीलालम् । न । रुधिरे ॥ जले ॥ अमृते ॥ मधुनि ॥ कीलांवह्निज्वाला मलति वारयति । अलभूषणादौ । कर्मण्यण् ॥ औणादिके कीलां लाति वा । कीलेन प्रतिवन्धेन अल्यते वार्यते । अल० । घञ् । कीलम् प्रति बन्धम् अलति वा । कर्मण्यण् ॥ पुं । पशौ ॥ कीलवन्धनम् अलंयोग्यम स्येति ॥

कीलालधिः । पुं । समुद्रे ॥ कीलाला निधीयन्तेऽस्मिन् । डुधाञ्० । अधि करणेकिः ॥

कीलालपः । पुं । राक्षसे ॥ कीलालं पिवति । पा० । आतोनुपसर्गे इति कः ॥

कीलितः । त्रि । वद्धे ॥ निखातकीले ॥ कील्यतेस्म । कील० । क्तः ॥

कीशः । पुं । कपौ । वानरे ॥ सूर्ये ॥ पक्षिणि ॥ त्रि । दिगम्बरे । नग्ने ॥ की इति शब्दमीष्टे । ईश० । मू० कः ॥ यद्वा । कस्यवायो रपत्यम् । अ तद्रूप । किः हनूमान् ईशो यस्यसः ॥

कीशपर्णः । पुं । अपामार्गे ॥

कीशपर्णी । स्त्री । अपामार्गे ॥ कपिलोमतुल्यानि लोमशानि पर्णान्यस्याः । पाककर्णेतिङीष् ॥

कीशफलम् । न । कक्कोले । गन्धद्रव्य विशेषे ॥

कु । अ । पापे ॥ कुत्सायाम् ॥ ईषदर्थे ॥ निवारणे ॥ कवते । कूयते वा । कुङ् शब्दे । मित० डुः ॥

कुः । स्त्री । अचलायाम् । धरायाम् । भूमौ ॥ प्रथमाङ्के १ ॥ कवते । कुङ्० । मित०डुः ॥

कुकः । त्रि । समर्थे ॥ कोकते आदत्ते

। कुक० । इगुपधेतिकः ॥

कुकभम् । न । मद्ये ॥ इति शब्दचन्द्रिका ॥

कुकरः । त्रि । रोगकुञ्चितकरे । कुणौ ॥

कुकीलः । पुं । पर्वते । शिलोच्चये ॥

कुकुटः । पुं । स्वस्तिके । सितावरे । सुनिषण्णशाके ॥

कुकुदः । पुं । कूकुदे । सत्कृत्यकन्यादातरि ॥

कुकुन्दरः । पुं । कुक्कुरद्रुमे ॥ न । कूपके । नितम्बस्थकूपकद्वये । स्त्रियाः पृष्ठवंशादधोगर्त्ते ॥ कुम्भूमिं दरयति । दृभये । ण्यन्तः । कर्मण्यण् । णिलोपस्यस्थानिवत्त्वान्नवृद्धिः । तत्पुरुषेकृतीति बाहुलकादलुक् । कुत्सितं कुन्दरम् ईषत्कुन्दरमेवेति वा ॥ यद्वा । स्कुन्द्यते कामिना । स्कुदि आप्रवणे । मद्गुरादयश्चेति साधु ॥

कुकुभा । स्त्री । रागिणीविशेषे ॥

कुकुरः । पुं । यदुवंशीयान्धकराजस्य तनये ॥ कुक्कुरे ॥ न । ग्रन्थिपर्णीवृक्षे ॥ कोकते । कुक आदाने । कोकतेर्वा कुगित्युरच् ॥

कुकुराः । पुंभूम्नि । देशविशेषे । यदुषु । दाशार्हेषु । सात्वतेषु ॥ नित्यं बहुवचनान्तः ॥



कुकूटी । पुं । शाल्मलीपादपे ॥

कुकूलः । पुं । तुषानले ॥ शिरीषादपि मृद्वङ्गी केयमायतलोचना । अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥ न । शङ्कुभिःसङ्कीर्णबिले ॥ तनुत्रे । दंशने ॥ कोर्भूमेःकूलम् । कुत्सितंवाकूलम् ॥ यद्वा । कवते । कुङ्शब्दे । पिञ्जादित्वादूलच् । धातोःकुगागमः ॥

कुकोलम् । न । कोलिवृक्षे ॥

कुक्कुटः । पुं । कालत्ते । ताम्रचूडे । चरणायुधे । कुकुडा इतिभाषा ॥ अस्यमांसगुणायथा । कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलहृद्गुरुः । चक्षुष्यः शुक्रकफकृद्बल्यो वृष्यः कषायकृदिति ॥ कुक्कुटलक्षणंयथा । कुक्कुटस्तनुतनूरुहाङ्गुलिस्ताम्रवक्त्रनखचूलिकसितः । रौति सुस्वरमुषात्यये च यो वृद्धिदः स नृपराष्ट्रवाजिनाम् ॥ यवग्रीवो यो वा बदरसदृशो वा विहगो बृहन्मूर्द्धा वर्णैर्भवति बहुभिर्वश्चचिरः । स शस्तः सङ्ग्रामे मधुमधुपवर्णश्च जयकृन्न शस्तो योऽतोऽन्यः कृशतरस्वरः खञ्जचरणः ॥ इति वाराहीसंहिता ॥ निषादपुत्रे ॥ शूद्रपुत्रे ॥ तृणोल्कायाम् ॥ कुक्कुभपक्षिणि ॥ प

झिकणे । स्फुलिङ्गे ॥ वनकुक्कुटे ॥ यथा । सुरासमण्डापानाय भोजने चरणायुधाः । तित्तिराविष्किराः प राथ्याः कुक्कुटाविषमज्वरे इत्यग्निवे शः ॥ अत्र चरणायुधोग्रहकुक्कुटः । कुक्कुटोवनकुक्कुटइतिव्याख्यानात् ॥ कोकनम् । कुकआ० । सं० क्विप् । कुटति [ कुटकौ० । इगुपधेतिकः । कुकाकुटः । कर्तृकरणयोरितिसमा सः ॥ कुत्सितः कुटः कोः पृथिव्याः कुटो वा । पुं० ॥

कुक्कुटमण्डपः । पुं । काश्यांप्रसिद्धे मुक्ति मण्डपे ॥

कुक्कुटकः । पुं । कुक्कुटार्थे ॥ शूद्राज्जा तोनिषाद्यान्तुसवैकुक्कुटकःस्मृतः । इतिमनुः ॥

कुक्कुटमस्तकम् । न । चव्ये । चैइ इति गौडभाष ॥

कुक्कुटव्रतम् । न । सन्तानार्थंस्त्रीकर्त्त व्ये व्रतविशेषे । ललितासप्तमीव्रते ॥ भाद्रेमासि सिते पक्षे सप्तम्यां नियमेनया । स्नात्वा शिवं लेखयि त्वा मण्डलेचसहाम्बिकम् । पूजये च्च तद्वातस्याः दुष्प्रापंनैव विद्यते ॥

कुक्कुटशिखः । पुं । कुसुम्भवृक्षे ॥

कुक्कुटाभः । पुं । } कुक्कुटतुल्यवर्णे सर्प
कुक्कुटाहिः । पुं । } विशेषे ॥

कुक्कुटिः । स्त्री । दम्भचर्यायाम् ॥

कुक्कुटी । स्त्री । अल्पतचर्यायाम् ॥ ज्ये ष्ठ्याम् । छिपकली इति भाषा ॥ शाल्मलीवृक्षे ॥ कुक्कुटयोषिति ॥ अस्यालर्ग कुक्कुटी च । सुंदुचारुभा- षिणीस्निग्धमूर्त्ति रुचिराननेचणा । सा ददातिसुचिरं मंहीक्षितां श्री यशोविजयवीर्यसम्पदः ॥ जातेरस्त्री विषयादिति ङीष् ॥

कुक्कुटीव्रतम् । न । भाद्रशुक्लसप्तम्यां कर्त्तव्ये नियमविशेषे । ललिता स प्तम्याम् ॥

कुक्कुभः । पुं । पातकुक्का इतिगौडभा षाप्रसिद्धे पक्षिणि ॥ वनकुक्कुटे ॥ कुगित्यव्यक्तं शब्दं कौति । वाकुख कान्तभक ॥ कुक्कुशब्दंभाषते वा । भाषव्य० । अन्येष्वपीतिडः ॥

कुक्कुरः । पुं । कूकर इतिभाषाप्रसिद्धे कौलेयके । सारमेये ॥ कोकते । कुकआदाने । क्विप् । कुरति । कुरश ब्दे । इगुपधेतिकः । कुक्चासौ कुर श्च ॥ न । ग्रन्थिपर्णे । कुकुरौंदा इति ख्यातौषधौ ॥ कुक्कुरोऽस्यास्ति । कुक्कु रशब्दस्तदन्ये लाचणिकः । अर्शआद्य च् । यद्वा । कोकते । कुक० । कोका नेवकिंकुरिर्च्छुरच् । कुगागमश्च ॥

कुक्कुरद्रुः । पुं । मृदुच्छदे । स्वल्पपत्रे

। कुक्कुरवन्दो कुकुरोंदा इतिचभाषा ॥ कुक्कुरद्रु कटु स्तिक्तो ज्वररक्तकफा पहः । तन्मूलम द्रेनि.चिप्तं वदने मुखशोषहृत् ॥

कुक्कुरी । स्त्री । शुन्याम् । सारमेय्याम् । कूकरी कुत्ती इतिचभाषा ॥ जातेरिति ङीष ॥

कुक्कुवाच् । पुं । सारङ्गमृगे ॥

कुक्षः । पुं । कुक्षौ । जठरे ॥ गर्भे ॥ कुष्णाति । कुषनिष्कर्षे । स्नुव्रिशुषि कुषिभ्यश्चेति स.कित् ॥

कुक्षिः । पुं । उदरे ॥ कुष्यते निष्कास्यते मलोऽस्मात् । कुष । प्लुषिकुषिशुषिभ्य.क्सि. ॥ केतुमालवर्षस्य देशविशेषे । समुद्रमध्यप्रदेशे ॥ कुक्षिपार्श्वोदरकटीपृष्ठवत् पर्वभेदन मित्यपक्कुक्षिशब्द उदरस्य वामदक्षिणभागद्वयवाचीतिभावप्रकाशः । कूख इतिभाषा ॥

कुक्षिम्भरिः । त्रि । आत्मम्भरौ । स्वोदरमात्रपूरके ॥ कुक्षिविभर्त्ति इति विग्रहे कुक्षेर्मुमागमो भृञइन्प्रत्ययस्तु निपातसिद्ध. ॥

कुक्षिरन्ध्रः । पुं । नले ॥

कुङ्कुमम् । न । कुमकुम् केसर इति च नाम्ना विख्ते गन्धद्रव्ये । काश्मीरजन्मनि ॥ काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धितत् । सूक्ष्मकेशर मारक्तं पद्मगन्धि तदुत्तमम् ॥ वाल्हीकदेशसंजातं कुङ्कुमं पाण्डुरं भवेत् । केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् ॥ कुङ्कुमं पारसीके यन्मधुगन्धि तदीरितम् । ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम् ॥ कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित् । तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम् ॥ कुमकुम् इतिशब्दोक्ति वाचकत्वेनास्य । शर्मे आदयच ॥ यद्वा । कुक्यते । कुक० । वा० उमक्रमस्यय. । आच्छीत्यच नुमितियोगविभागान्नुम् ॥

कुङ्कुमाद्रिः । पुं । पर्वतविशेषे ॥

कुङ्गनी । स्त्री । महाज्योतिष्मत्याम् ॥

कुच । पुं । स्तने ॥ कुचति । कुचसङ्कोचे । इगुपधेतिकः ॥

कुचण्डिका । स्त्री । मूर्वाणतायाम् ॥

कुचण्डी । स्त्री । मूर्वायाम् ॥

कुचन्दनम् । न । रक्तचन्दने ॥ वकम् इति भाषाप्रसिद्धे पत्राङ्गे ॥ द्रुमविशेषे ॥ निर्गन्धत्वात् कुत्सितं चन्दनम् । कोश्चन्दनमिव वा । कुत्सितान्यन्यचन्दनान्यस्मादा ॥

कुचफलः । पुं । दाडिमद्रुके ॥

कुचरः । त्रि । कुवादे । परदोषकथने

कुण्डलिका । स्त्री । मात्रावृत्तभेदे ॥ यथा । कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र । दोहाचरणचतुष्टयं प्रभवति विसर्गं तत्र ॥ प्रभवति विरलं तत्र पदमपि सुललितयमकम् अष्टपदी सा भवति विमलकविकौशलगमकम् । अष्टपदी सा भवति सुखितपविकतमण्डलिका कुण्डलिनायकभणितविबुधकण्ठ कुण्डलिकेति ॥ जलेबी इति प्रसिद्धे पक्वान्ने ॥

कुण्डली । पुं । फणिनि । सर्पे ॥ वरुणे ॥ मयूरे ॥ चित्रमृगे । चितल इति भाषा ॥ त्रि । कुण्डलयुक्ते ॥ कुण्डलम् कुण्डलाकारो वा सोऽस्यास्ति । अ तइनिः ॥

कुण्डलिनायकः । पुं । पिङ्गलसर्पे ॥

कुण्डलिनी । स्त्री । मूलाधारनिवासिन्याम् कुलकुण्डलिनीशक्तौ ॥ उरगयाम् ॥ गुडूच्याम् ॥ कुण्डलानां समूहे ॥ खलादित्वादिनिः ॥ जलेबीति ख्यातपक्वान्नविशेषे ॥ तस्याः पाकप्रकारो यथा । नूतनं घट मानीय तस्यान्तः कुशलो जनः । प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत् ॥ द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम् । घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत् ॥ आतपे स्थापयेत्तावद्यावद्याति तदम्लताम् । ततस्तत् प्रक्षिपेत् पात्रे सच्छिद्रे भाजनञ्च तत् ॥ परिभ्राम्य परिभ्राम्य तत्सन्तप्ते घृते क्षिपेत् । पुनःपुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम् ॥ तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे । कर्पूरादिसुगन्धे च स्नपयित्वा हरेत्ततः ॥ एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा । धातुवृद्धिकरी वृष्या रुच्या चेन्द्रियतर्पणीति ॥ कुण्डलिनो ङीप् ॥



कुण्डली । स्त्री । गुडूच्याम् ॥ काञ्चनद्रुमे ॥ कपिकच्छ्वाम् ॥ सर्पिण्यां वृक्षे ॥ जलेबीति प्रसिद्धे मिष्टान्नविशेषे । कुण्डलिन्याम् ॥ इति माकरानेश्वरः ॥ कुलकुण्डलिन्यां शक्तौ ॥

कुण्डाशी । त्रि । कुण्डगृहसङ्करविशेषस्यान्नभोजिनि ॥ अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः । यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते ॥ इति देवलः ॥ कुटना इति प्रसिद्धे भगभक्षके ॥ महाभारते दानधर्मे तथा दर्शनात् ॥

कुण्डिका । स्त्री । कमण्डलौ ॥ पिठरे । स्थाल्याम् ॥ कूंड कूंडा इति च प्रसिद्धे पात्रविशेषे ॥ स्वार्थे कः ॥

कुण्डिनः । पुं । ऋषिविशेषे ॥ न । वि

दर्भेनगरे ॥ यथा । अथ भीमसुता
मलोकनैः सफलं कर्तुमेव स्तदेव
ताः । क्षितिमण्डलमण्डनायितं न
गरं कुण्डिनमण्डनीययायिति पूर्वं
नैषधे २ सर्गः ॥ कुण्डते । कुण्डिदा
हे वेष्टने अन्यत्रापीति इनच् प्र० ॥
कुण्डी । स्त्री । भ्रमरविशेषे । कमण्ड
लौ ॥ कुण्डी कमण्डलु कपालानि मधु
पूर्णानि विभ्रतः । किं न पश्यसि लो
कार्थं ब्रह्मविष्णुमहेश्वरान् ॥ जान
पदकुण्डेत्यादिना अमत्रे ङीष् ॥
भर्तरि जीवति जारजातायाम् ॥ अमनु
नुष्यजातित्वात् जातिलक्षणो ङी
ष् ॥ कुण्डति वा । कुणशब्दोपकरण
योः । अमन्ताड्डः ॥

कुण्डीरः । पुं । मनुष्ये । त्रि । बलव
ति ॥ इति धरणी ॥

कुतनुः । पुं । कुवेरे ॥ त्रि । कुत्सित
शरीरे ॥

कुतपः । पुं । सूर्य्ये ॥ वैश्वानरे ॥ द्विज
न्मनि ॥ अतिथौ ॥ गवि ॥ भागिने
ये ॥ पुं । न । दौहित्रे ॥ वाद्ये ॥ छाग
लकम्बले । नेपालकम्बले । खारूचा
इति पर्वतीयभाषा ॥ कुतपश्च
दिनस्याष्टमांशे । अष्टमो मुहू-
र्त्ते । पञ्चदशदण्डदिनमाने द्विती-
यप्रहरशेषदण्डाद्यतृतीयप्रहरप्र-
थमदण्डपर्यन्ते काले । अयमेको
द्दिष्टश्राद्धारम्भकालः ॥ यथा ॥ आर
भ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं
न तु लङ्घयेदिति ॥ दिवसस्या
ष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपो ज्ञेयः पितॄणां द
त्तमक्षयम् ॥ अपि च ॥ अह्नो मुहूर्त्ता
विख्याता दश पञ्च च सर्व्वदा । तत्राष्ट
मो मुहूर्त्तो यः स कालः कुतपः स्मृतः
इति मत्स्यपुराणम् ॥ ॥ परिभाषि
ककुतपास्तु । मध्याह्नः खड्गपात्रञ्च त
था नेपालकम्बलः । रौप्यं दर्भास्तिला
गावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं
कुत्सितमित्याहुस्तस्य सन्तापका
रिणः । अष्टावेते यतस्तस्मात् कुत
पा इति विश्रुताः ॥ इति मिताक्षरा
या आचाराध्यायः ॥ कुत्सितं तप
ति । तप० । संज्ञायाम्भृतृवृजीति
खच् । अनव्ययस्येति न मुम् । यद्वा
। कुम्भुवं तपति । आगमशास्त्रस्यानि
त्यत्वान्न मुम् ॥

कुतः । अ । प्रश्ने ॥ पञ्चम्यर्थे । कस्मा-
दर्थे ॥ निक्षेपे ॥ कस्मात् किमस्त
सिल् । कुतिहोः ॥

कुतुकम् । न । कौतुके ॥ फलनिरपे-
क्षतया चिकीर्षिते ॥ कुतं चर्म नि

मितसेइपार्श्व कायति । कै० । आ-तोनुपेतिकः । उपपदसमासः । इ-कोह्रस्वोऽङ्योगालवस्येति ह्रस्वः ॥ य-द्वा । कुत्वाम्मयम् । अध्या० ठक् । इ-सुसुगितिकः । केय इति ह्रस्वः । सं-ज्ञापूर्वकत्वात् पचेवृद्ध्यभावः ॥

कुतुपः । पुं । चर्मसप्ते स्नेहसेइपात्रे । कुप्पी इतिभाषा ॥ ह्रस्वा कुतूः । कुत्वाडुपच् ॥

कुतमुर्ख । न । कुतसिततिन्दुकीफले ॥

कुतूः । स्त्री । चर्मनिर्मिते स्नेहपात्रे । कुप्पा इतिभाषा ॥ कुतसितं तन्यते । तनु० । वा० कू. टिलोपश्च ॥ कौ-तिम्रा । कुपब्दे । वा० कृतकर्च । कुत्वाडुपजितिनिर्देशात् ॥

कुतूणकः । पुं । कतुया इति गौडभा-षाप्रसिद्धे बालानां नेत्ररोगे ॥ तस्य ल० । यथा । कुतूणकः क्षीरदोषा-च्छिशूना मेव वर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन् मुहुः ॥ शिशुः कुर्याल्ललाटाक्षि कूटना-साव घर्षणम् । शक्तोनार्कप्र-भां द्रष्टुं न वर्त्मोन्मीलनक्षमः इति ॥

कुतूहलम् । न । अपूर्ववस्तुदिदृक्षाया-तिशये चेष्टाविशेषे । कौतुके । कौ-तूहले ॥ कुतूहलं रम्यदृष्टौ चाप-



ल्यं परिकोर्तितम् ॥ फलनिरपेक्ष विकीर्षिते ॥ त्रि । प्रशस्ते ॥ अद्भुते ॥ कुतं इलति । इलविलेखने । मू० कः ॥ यद्वा । इलति । पचाद्यच् । कुत्वा इलम् ॥

कुतूहली । त्रि । विनोदार्थिति ॥

कुटणम् । न । कुत्सितकायाम् । मरिप-र्ययाम् । जलपत्ती काई इतिभाषा । पाना इति गौडभाषा ॥

कुत्र ॥ अ । देशप्रश्ने ॥ कस्मिन् । सप्त-म्याक्त्रल् ॥

कुत्रचित् । अ । कुत्र । किसी ठिकाने इति भाषा ॥

कुत्सनम् । न । निन्दने ॥ कुत्स० । ल्युट् ॥

कुत्सला । स्त्री । नीलीवृक्षे ॥

कुत्सा । स्त्री । निन्दायाम् ॥ कुत्सन । अ । कुत्स अवक्षेपणे । गुरोश्च हलइति स्त्रियाम् । टाप् ॥

कुत्सितम् । न । कुष्ठनामौषधे ॥ त्रि । निन्दिते । निकृष्टे । प्रतिकृष्टे । रेफे ॥ कुत्सा सञ्जातास्य । ता० इतच् ॥

कुथः । पुं । वर्हिषि । दर्भे ॥ पुं । स्त्री । आस्तरणकम्बले । गजपृष्ठस्थितचि-त्रकम्बले । प्रवेण्याम् । सर्वो । हा-थीकीभूल इति भाषा ॥ कुष्णाति । कुन्थसंक्लेपणे । अचः । इगुपधेति निर्देशात् क्वचिदकिन्यपि नलोपः ॥

यद्वा । कुन्थ्यथ्योर्भा । कुथिहिंसा संक्लेशनयोः । आगमशास्त्रस्यानित्य त्वाद्मुम्न । इगुपधेतिकपि अन्वा । ॥ कुथ्यति वा । कुथपूतीभावे । इगुपधेतिकः ॥ कुथा कन्था समाख्याता कुथः स्या त्करिकम्बलम् । कुथः कुशः कुथः कीटः मासः सायी द्विजः ॥ कुथइत्त्याहकश्चित् ॥

कुथा । स्त्री । आस्तरणे ॥ टाप् ॥

कुथोदरी । स्त्री । कल्किपुराणेप्रसिद्धा यां कुम्भकर्णपौत्र्यां निकुम्भदुहितरि ॥ साकल्किनाहतेति पुराणे प्रसिद्धिः ॥

कुदृष्टिः । स्त्री । वेदबाह्यतार्किककल्पनायाम् ॥ यावेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । इतिमनुः ॥

कुद्दालः । पुं । कोविदारे । काञ्चनारे ॥ भूमिदारणाख्ये । कुदाल इति भाषा ॥ कुम् भूमि मुद्दालयति । दलविदारणे । कर्मण्यण् । शकन्ध्वादि. ॥

कुद्रङ्कः । पुं । गृहविशेषे । मञ्चोपरिमण्डपे । उद्‌घाटे । पिठरे ॥ इतिचिकाण्डशेषः ॥

कुद्रङ्गः । पुं । पिठरे । कुद्रङ्के ॥

कुद्रवः । पुं । कोद्रवे ॥

कुद्रवन. । पुं । कोद्रवे ॥

कुधान्यम् । न । क्षुद्रधान्ये ॥

कुधीः । त्रि । विपरीतबुद्धिमति ॥

कुध्रः । पुं । पर्वते ॥ कुंधरति । धृञ् । मूलविभुजादित्वात्कः ॥

कुनखः । पुं । क्षुद्ररोगविशेषे ॥ तल्ल० यथा । नखमांसमधिष्ठाय वातः पित्तञ्च देहिनाम् । कुर्वीते दाहपाकौ च तं व्याधिंचिप्प मादिशेत् ॥ तदेवाल्पतरैर्दोषैः परुषं कुनखं वदेदिति ॥ त्रि । कुत्सितनखयुक्ते ॥

कुनखी । त्रि । कुनखरोगयुक्ते ॥ सङ्कुचितनखे ॥

कुनटः । पुं । श्योनाकप्रभेदे ॥ कुत्सितनटे ॥

कुनटी । स्त्री । नैपाल्याम् । मनःशिलायाम ॥ धन्याके ॥ कौनटति । नट अवस्यन्दने । अच् । गौरादित्वात् ङीष् ॥ कुत्सिता नटी इव वा ॥

कुनखी । पुं । यकृद्‌वृक्षे ॥

कुनाभिः । पुं । निधौ ॥ वातमण्डलाम् । वगूला ववण्डर इतिच भाषा ॥

कुनाशकः । पुं । दुरालभायाम् । यवासे ॥ कुंनाशयति । णश० । ण्यन्तः । अच् । स्वा० कन् ॥

कुन्तः । पुं । गवेधुकायाम् ॥ प्रासायुधे । भल्ले । भाला इति भाषा ॥ प्रायोऽस्त्रचेप्यशस्त्रे इति स्वामी ॥ कुं शरीर मुनत्ति । उन्दी० । बाहुलका

न्तः । शकन्ध्वादिः ॥

कुन्तलः । पुं । केशे । चिकुरे । वाले ॥ ह्रीवेरे ॥ चषके ॥ यवे ॥ हले ॥ कुन्तं कुन्ताग्राकारं लाति । ला० आतोऽनुपेति कः ॥ कुन्तलाः । पुं भूम्नि । जनपदविशेषे ॥ यथा । कामगिरिं समारभ्य द्वारकान्तं महेश्वरि । श्रीकुन्तलाभिधो देशो वर्णितः शक्तिसङ्गमे इति ॥

कुन्तलवर्द्धनः । पुं । भृङ्गराजे । भिंगरा इति भाषा ॥

कुन्तलिका । स्त्री । दध्यादिच्छेदन्याम् । पालिकायाम् । दही काटनेकी छुरी वा कटोरी इति भाषा ॥

कुन्तलोशीरम् । न । वालके । वाला इति भाषा ॥

कुन्तिः । स्त्री । युधिष्ठिरादिपाण्डवानां मातरि ॥ वा० कर्मभिश्च । प्रत्यया द्विलोपे कुशब्दादेशः ॥ देशविशेषे ॥

कुन्ती । स्त्री । युधिष्ठिरादीनां जनन्याम् । शूरसेनसुतायाम् । पृथायाम् ॥ गुग्गुलुवृक्षे ॥ शल्लक्याम् ॥ इतो मनुष्यजातेरिति ङीष् ॥

कुन्तीपुत्रः । पुं । युधिष्ठिरादिषु ॥ कुन्तीच शूरसेनराजस्य कन्या पृथानाम्नाख्याता । तत्पिता तां कुन्तिभोजराजाय दत्तवान् । अतः कुन्तीति विश्रुता । साचाङ्गीभूतस्य मुनेः शापान्मैथुनरहितस्य स्वामिन आज्ञया धर्मात् युधिष्ठिरं पवनाद्भीममिन्द्रात् दर्जुनमश्विनीकुमाराभ्यां नकुलसहदेवौ जनयामास ॥ साच कन्यावस्थायां आदित्यात् कर्णञ्च जनयामास । अतः । कर्णोऽपि कुन्त्याः पुत्रः ॥

कुन्थुः । पुं । बौद्धविशेषे ॥ जिनचक्रवर्त्तिविशेषे ॥

कुन्दः । पुं । अच्युते । मुकुन्दे ॥ सर्वपापविनाशाय वाजिमेधेन चेष्टवान् । तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः । मारीचाय ददौ प्रीतः कश्यपाय वसुन्धरामिति हरिवंशोक्तेः ॥ कुंधरां कश्यपाय ददाति । डुदाञ्० । आतोऽनुपसर्गे इति कः । पृषोदरादित्वाद्वर्णागमः । कुंद इति गौड भाषाप्रसिद्धे भ्रमियन्त्रे । चक्रभ्रमौ ॥ कुवेरस्य निधिविशेषे ॥ कुन्दुरुनामगन्धद्रव्ये ॥ करवीरवृक्षे ॥ पालङ्क्यशाके ॥ पुं । न । पुष्पविशेषे । माघ्ये ॥ कुन्दं शीतं लघु श्लेष्मशिरोविषपित्तहृत् ॥ कुम्भु संदायति दाति वा । दैप् शोधने दो अवखण्डने वा । आत इति कः । तत्पुरुषे इति द्वितीयाया अलुक् ॥ य-

द्रा । कुम् भूमिम् उनत्ति । उन्दी० । कर्मण्यण् । अ० ॥ यद्वा । कौति । कुशब्दे । अन्द्रादित्वात् कौतेर्नुमित्वादिन् ॥

कुन्दकः । पुं । कुन्दुरुके ॥

कुन्दमः । पुं । मार्जारे ॥ इति त्रिकाण्डशेषः ॥

कुन्दरः । पुं । कुन्दरा इति कलिङ्गेषु ख्याते तृणविशेषे दीर्घपत्रे । खरच्छदे ॥ कुन्दराति । रा० । आतोनुपसर्गे इतिकः ॥

कुन्दिनी । स्त्री । पद्मसमूहे । पद्मिन्याम् ॥

कुन्दुः । पुं । मूषिके ॥ स्त्री । कुन्दुरुनामगन्धद्रव्ये ॥

कुन्दुरुः । पुं । स्त्री । स्वनामाख्यातेसुगन्धिद्रव्ये । यस्य निर्यासे कुन्दुरुखोटि इतिगौडानांख्यातिः । पालङ्क्यायाम् । सौराष्ट्रे । बहुगन्धे ॥ कुन्दुरुर्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यः कटुर्हरेत् । ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान् ॥ कुम्भूमि मुनत्ति उदयति वा । अन्वादयश्चेति साधुः ॥ पालङ्क्याकेपीतिरक्षितः ॥

कुन्दुरुकः । पुं । कुन्दुरुनाम्नि सुगन्धिद्रव्ये ॥

कुन्दुरुकी । स्त्री । शल्लकीवृक्षे ॥ कुन्दु

हरिवप्रतिकृतिः ॥ इवेप्रतिकृताविति कन् । गौरादित्वात् ङीष् ॥

कुपथः । पुं । वाद्यध्वनि । कापथे ॥

कुपाणिः । त्रि । कुकरे । वक्रहस्ते । टुण्डा इतिभाषा ॥

कुपितः । त्रि । रुषिते । रुष्टे ॥

कुपिनी । पुं । कैवर्ते । जालिया मछुवा इतिचभाषा ॥

कुपिनी । स्त्री । खालुइ इतिगौडभाषामसिद्धायां स्वल्पमत्स्यधान्याम् ॥

कुपिन्दः । पुं । तन्तुवाये ॥ कुप्यति । कुप० । कुमेर्वाश्चेतिकिन्दच ॥

कुपीलुः । पुं । कारस्करवृक्षे । काकेन्दौ ॥ कुचला इतिभाषा ॥ कुपीलुः शीतलस्तिक्तो वातलो मदकृल्लघुः । परं व्यथाहरो ग्राही कफपित्तास्रनाशनः ॥

कुपुरुषः । पुं । कुत्सितनरे ॥ कुत्सितःपुरुषः । कुगतीति समासः ॥

कुपूयः । त्रि । कुत्सिते । आख्याचारादिनिन्दिते ॥ कुत्सितं पूयते । पूयी विसरणे । पचाद्यच् ॥

कुप्यम् । न । स्वर्णरूप्याभ्या मन्यस्मिन् तैजसे ताम्रादिधातौ ॥ अष्टधातुमध्येदस्ता इतिख्याते धातौ ॥ गुप्यते । गुपूरक्षणे । राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्या इतिक्यप्

त्वोनिपातितःकुप्यशब्दः । तत्रगुणे रादेःकल्मसंज्ञायाम् ॥

कुप्यशाला । स्त्री । स्वर्णरजतभिन्नतैजसपात्रादिनिर्माणगृहे । सन्धान्याम् । ठठेरचट्टी इतिभाषा ॥

कुप्रियः । त्रि । अधन्ये ॥

कुप्लवः । पुं । तृणादिनिर्मिते कुत्सितो डुपादौ ॥

कुबेरः । पुं । धनदे । यक्षराजे ॥ नन्दीवृक्षे ॥ अर्हदुपासकविशेषे ॥ त्रि । कुदेहे ॥ मन्दे ॥ कुत्सितं वेरं शरीरमस्य कुत्सितत्वात् । यथाहुः । कुत्सायां क्षितिशब्दोयं शरीरं वेरमुच्यते । कुवेरः कुशरीरत्वान्नाम्ना तेनैवसोङ्कितः ॥ इतिवायु पुराणम् ॥ यद्वा । कुम्बति धनम् । कुवि आच्छादने । कुम्बेर्नलोपश्चेत्येरक् । औणादिकः ॥

कुबेरकः । पुं । नन्दिवृक्षे ॥ कुबेरे ॥ स्वार्थेकः ॥

कुबेराक्षी । स्त्री । पाटलावृक्षे ॥ लताकरञ्जे । सितपाटलिकावृक्षे ॥ कुबेरस्येवाक्षियस्याः । अक्ष्णोदर्शनादित्यच् । गौरादित्वान् ङीष् ॥

कुबेराचलः । पुं । } कैलासपर्वते ॥
कुबेराद्रिः । पुं । }

कुब्जः । पुं । खड्गे ॥ अपामार्गे ॥ त्रि । गडुले । कुबडा इतिभाषा ॥ अस्यलक्षणं यथा । हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत् । इति ॥ कुं ईषत् उब्जमार्जवमस्य । श० ॥

कुब्जकः । पुं । पुष्पविशेषे । भद्रपुष्पे ॥ महासहे । कण्टकाढ्ये । कुब्ज कूजा कूजे इतिभाषाप्रसिद्धे सेवतीप्रभेदे । यथा । चम्पकात् पुष्पशतकादशोकंपुष्प मुत्तमम् । अशोकात् पुष्पसाहस्रात् सेवतीपुष्प मुत्तमम् । सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तममितिनारसिंह पुराणम् ॥ अस्यगुणा यथा ॥ कुब्जकः सुरभिः स्वादुः कषायानुरसः सरः । त्रिदोषशमनो वृष्यः शीतवर्णाचसंस्कृतः इति ॥ कौ उब्जति । उब्ज आर्जवे । अच् । यद्वा । कुं ईषत् उब्जमार्जवमस्य । श० । स्वार्थेकः ॥

कुब्जकण्टकः । पुं । श्वेतखदिरे ॥

कुम्बम् । न । वने ॥ कुम्बति । कुवि आच्छादने । बाहुलकेतिरन् ॥

कुम्भेखिकः । पुं । समभ्रशाकचक्रे ॥

कुमनीषः । त्रि । कुत्सितबुद्धिमति ॥ कुत्सिता मनीषाऽस्य ॥

कुमारः । पुं । शुके ॥ कार्त्तिकेये । स्कन्दे ॥ नाट्योक्त्यायुवराजे ॥ अश्वार

के ॥ पञ्चवर्षीयबालके ॥ वरुणद्रुमे ॥ अर्हदुपासकविशेषे ॥ सिन्धुनदे । न । जात्यकाञ्चने । उत्तमस्वर्णे ॥ कुमारयति क्रीडति । कुमारक्रीडायाम् । पर्यायश्च ॥ कुत्सितो मारोऽस्येति वा ॥ कौमारयति दुष्टान् । अच् ॥ सदाबालत्वाद्वा कुमारः ॥ यद्वा । कामयते । कमु ० । कमेः कि दुच्चोपधाया इच्चारन प्रत्ययः ॥

कुमारकः । पुं । वरुणवृक्षे ॥ कुमारश्चिरतरुणत्वात् ॥ कुमारयति । पचा । द्यच् । कुमार इव । इवे प्रतिकृताविति कन् ॥ बालके ॥ जात. कुं पृथिवीं पश्चात् मारयेत् तत् कुमारकः ॥

कुमारपालः । पुं । शालिवाहनन्दपे ॥ इति हेमचन्द्रः ॥

कुमारभृत्या । स्त्री । गर्भिण्याः परिचर्यायाम् । बालतन्त्रे ॥

कुमारयुः । पुं । युवराजे ॥

कुमारवः । त्रि । कुमार वक्ति ॥ कुमारोऽस्यास्ति । अन्येभ्योऽपि दृश्यते इति घः ॥

कुमारवाही । पुं । मयूरे ॥

कुमारसूः । स्त्री । गङ्गायाम् ॥ दुर्गायाम् ॥ कुमारं सूते । षूङ् । क्विप ॥

कुमारहा । त्रि । बालघातिनि ॥

कुमारिकः । त्रि । कुमारीमति ॥ कुमार्यस्त्यस्य । व्रीह्यादित्वात् ठन् ॥

कुमारिका । स्त्री । कुमार्यां ॥ नवमल्लिकायाम् ॥ भारतवर्षस्य खण्डविशेषे । भरतखण्डे ॥ यथा । वर्षस्य स्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे इति ॥ स्थूलैलायाम् ॥

कुमारिणी । स्त्री । चण्ड्याम् ॥ कुत्सितान् दैत्यान् मारयति तच्छीला ॥

कुमारी । स्त्री । शैलतनयायाम् । पार्वत्याम् ॥ नवमल्लिकायाम् ॥ नदीप्रभेदे । शुक्तिमत्पादोद्भवायां सरिति ॥ सहायाम् । घृतकुमार्याम् ॥ यथा । कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी । मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत् ॥ गुल्मप्लीहयकृद्वृद्धिकफज्वरहरी हरेत् । ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयानिति ॥ अपराजितायाम् ॥ जम्बुद्वीपविभागे ॥ रामतरुण्याम् ॥ वन्याकर्कोटक्याम् ॥ स्थूलैलायाम् ॥ मेदिनीपुष्पे ॥ तरुणीपुष्पे ॥ श्यामापक्षिणि ॥ कन्यायाम् ॥ द्वादशवर्षीयायां कन्यायाम् ॥ यथा । अष्टवर्षा भवेद्गौरी दशवर्षा च कन्यका । सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते । इत्यमृते भेदः ।

कन्याकुमारीत्यमरे तूपचाराद्भेदः॥ आगमेतु कुमारीपूजने ऋजातपुष्पा चेत् तदा षोडशवर्षपर्यन्तवयस्कापि कुमारीत्युच्यते। तस्याः वयोभेदेन नामभेदाः। यथा॥ एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती। त्रिवर्षातु त्रिधामूर्त्तिं श्चतुर्वर्षातु कालिका॥ सुभगा पञ्चवर्षा च षड्वर्षा चउमा भवेत्। सप्तभिर्मालिनी साक्षात् अष्टवर्षा च कुब्जिका॥ नवभिः कालसङ्कर्षा दशभिश्चापराजिता। एकादशेसु रुद्राणी द्वादशाब्देतु भैरवी॥ त्रयोदशे महालक्ष्मी द्विसप्तापीठनायिका॥ क्षेत्रज्ञा पञ्चदशभिः षोडशे चान्नदा मता॥ एवक्रमेण सम्पूज्या यावत् पुष्पं न जायते। पुष्पितापि च सम्पूज्या तत् पुष्पादानकर्मणीति॥ कुमारयति कुमारक्रीडायाम्। अच्। गौरादिः॥ यद्वा। कामयते। कमु०। कमेः किदुच्चोपधायाश्चेति रन्। वयसिप्रथम इति ङीप्॥ काम्यते वा॥ कुत्सितो मारोऽस्याश्चा वा॥

कुमालकः। पुं। सौवीरदेशे॥

कुमुत। न। कैरवे। कुमुदे॥ रक्तोत्पले॥ त्रि। कृपणे॥ अप्रीते॥

कुमुदम्। न। कुमुदि। कैरवे। कच्छारे। सुन्दिकमले। कोइं इतिभाषा॥ कुमुदं पिच्छिलं स्निग्धं मधुरं ह्लादि शीतलम्॥ रूप्ये॥ रक्तपद्मे॥ पुं। नैर्ऋतकोणस्थ दिग्गजस्ति नि॥ रक्तोत्पलतुल्यवर्णत्वात्॥ नागविशेषे। तच्चकस्यपञ्चमे पुत्रे॥ यक्षपाला बहुव्यामा दीर्घलाङ्गुलमाश्रिताः। ताम्राः पीताः सिताश्चैव प्रकीर्णा घोरकर्म्मणा इति रामायणमस्ति॥ वानरविशेषे॥ दैत्यविशेषे॥ सितोत्पले॥ कर्पूरे॥ कौमोदके। मुद्दहये। गुग्गुलविशेषे॥ पर्वतविशेषे॥ मुषकविशेषे॥

कुमुदखण्डम्। न। कुमुदानां समूहे॥ कमलादिभ्यः खण्डः॥

कुमुदबान्धवः। पुं। चन्द्रे। शशिनि॥ कुमुदानां बान्धवः॥ कर्पूरे॥

कुमुदवती। स्त्री। कुमुदन्याम्॥

कुमुदबीजम्। न। कुमुदतीबीजे।

कुमुदा। स्त्री। कुम्भिकायाम्। पारिपर्ण्याम्। काइं इति भाषा। पाना इति गौडभाषा॥ गम्भारीवृक्षे॥ शालपर्णीवृक्षे॥ धातकीवृक्षे॥ कट्फले॥ अजादित्वात्टाप्॥

कुमुदाभिख्यम्। न। रूप्ये॥ कुमुदमिव अभिख्या शोभायस्य॥

कुमुदादासः। पुं। कुमुदप्रायदेशे॥ कु

मुदाना भावाबो यस्मिन् ॥

कुमुदिका । स्त्री । कट्फले ॥ कौमोदते । मुदीहर्षे । इगुपधेतिकः । स्वार्थे कन् ॥

कुमुदिनी । स्त्री । कुमुदयुक्तपुष्करिण्यादौ ॥ कुमुदलतायाम् ॥ उत्पलिन्याम् । छोटी कोंची इतिभाषा ॥ कुमुदान्यत्रदेशे सन्ति । पु० इनिः ॥ कुमुदखण्डे ॥ कुमुदानांसमूहः । ख खा० इनिः ॥ पद्मिन्यां ये गुणाः प्रोक्ताः कुमुदिन्याम्बते स्मृताः । सातु मूलादिसर्वेऽ रक्तासमुदितावुधैः ॥

कुमुदिनीनायकः । पुं । } चन्द्रमसि ॥
कुमुदिनीपतिः । पुं ।

कुमुदी । स्त्री । कट्फले ॥

कुमुदेश । पुं । चन्द्रे । इन्दौ ॥

कुमुद्वान् । त्रि । कुमुदप्रायदेशे ॥ कुमुदानि प्रायाण्यत्र । कुमुदनड्वेतसेभ्योड्मतुप् । झयद्वः ॥

कुमुद्वती । स्त्री । कुमुदिन्याम् ॥ उगितश्चेति ङीप् ॥ रामपुत्रस्य कुशस्य पत्न्याम् ॥ कुमुदनागस्य कनिष्ठायाम् ॥

कुमुद्वतीबीजम् । न । येरा इतिप्रसिद्धे फैरविणीफले ॥ भवेत् कुमुद्वतीबीजं स्वादुरूक्षं हिमं गुरु ॥

कुमोदकः । पुं । विष्णौ ॥ इतिहेमच-



न्द्रः ॥ कोः पृथिव्याः मोदकः पालकत्वात् ॥

कुम्पः । त्रि । बाहुकुण्ठे । टोंटा । टुण्डा । इति भाषा ॥

कुम्बा । स्त्री । सुगहनायां वृत्तौ । नि विडवेष्टने । अस्पृश्यादिदर्शनवारणाय वेष्टने ॥ कुम्बति अनयाया ॥ कुबि आच्छादने । चितिपूजिकथिकुम्बिचर्चश्चेत्यङ् । टाप् ॥

कुम्भः । पुं । एकादशे राशौ । हृद्रोगे ॥ जन्मकालिकचन्द्राश्रितैतद्राशिफलम् । यथा । अवसतासहितो ऽन्यशुभप्रियः कुशलता कलितो ऽतिविचंचणः । कलशगामिनि शीतकरे नरः सदसि सज्जनमान सुरोचनः इति ॥ तल्लग्नेजातस्य फलन्तु । कुम्भलग्नेसमुद्भूतस्त्वसन्निर्चोतिलोलुपः । परदाररतो नित्यं सत्त्वकार्येषु हा मुखी ॥ करिमूर्द्धमांसे ॥ गजशिरसःपिण्डद्वये ॥ यथा ॥ ते पत्रियाः कुम्भकिनेर युधानः परस्परं सायकविक्षताङ्गाः । कुम्भेषु लग्नाः सुपुंगवानां कुचेषु लग्ना इव कामिनीनामिति ॥ राक्षसान्तरे । कुम्भकर्णस्य पुत्रे । वेश्यापतौ ॥ प्राणायामाङ्गकुम्भके ॥ परिमाणान्तरे ॥ तच द्विपलप्रमाणं द्रोणो विंशतिरोणः

खकुम्भः इति धान्यं द्रव्यं: कुम्भेभ्य इत्यत्राह कुल्लूकभट्टः ॥ अन्यच्च । द्रोणैर्विंशतिभिः खारी कुम्भस्तु द्रोण विंशतिरिति प्रायश्चित्ततत्त्वेकात्यायनवाक्यम् ॥ वैद्यकपरिभाषयातु द्रोणद्वयपरिमाणे । ६४ सेर इति भाषा ॥ कलशे । घटे ॥ अस्य परिमाणं यथा । षट्त्रिंशदङ्गुलायामं षोडशाङ्गुलमुच्छ्रितं । चतुरङ्गुलकं कण्ठं मुखं तस्य षडङ्गुलम् ॥ पञ्चाङ्गुलमितं मूलं विधानं घटनिर्मितामिति ॥ कलशस्तदैवोक्तमानं यथा । पञ्चाशदङ्गुलव्याम उत्सेधः षोडशाङ्गुलः । कलसानां प्रमाणन्तु मुखमष्टाङ्गुलं स्मृतम् ॥ षट्त्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम् । षोडशं द्वादशं वापि ततो न्यूनं न कारयेदिति ॥ न । गुग्गुलौ ॥ त्रिवृति ॥ कुम्भमिं कलसिसेषा उ म्भति । उम्भपूरणे । कर्मण्यण् । पचा द्यच्वा । अकंस्त्वादिः ॥

कुम्भकः । पुं । दक्षिणहस्तेन नासापुटद्वयं धृत्वा प्राणायामाङ्गे वायुस्तम्भने । पूरकेण पूरितस्य वायोः स्तम्भेन निरोधे ॥ कुम्भको निश्चलश्वास इति याज्ञवल्क्यः ॥ सद्वृत्तिनैश्चल्ये ॥ आत्मानुसन्धानदार्ढ्ये ॥ त्यागसङ्कल्पे शित्वा निरोधः कुम्भकः स्मृतः । रोधशक्ति सद्भ्यासात् दीप्तिमेत्यग्निमारिता ॥

कुम्भकर्णः । पुं । रावणानुजे ॥

कुम्भकारः । पुं । शूद्रागर्भे विश्वकर्मोरसजाते जातिविशेषे । कुलाले । च क्रिणि ॥ कुम्भं करोति । कुम्भं कर्मण्यण् । उपपदसमासः ॥ कुम्भपक्षिणि ॥

कुम्भकारिका । स्त्री । कुलत्थायाम् ॥

कुम्भकारी । स्त्री । कुलत्थिकायाम् ॥ मनःशिलायाम् ॥ कुलिलाञ्जने ॥ कुम्भकारस्य योषिति ॥ अर्शन्तात् टिड्ढेति ङीप् ॥

कुम्भतुम्बी । स्त्री । अलाबूभेदे । गोलाकृतितुम्ब्याम् । गोलमुखी गोलतुम्बी इतिभाषा ॥

कुम्भदासी । स्त्री । कुट्टन्याम् ॥

कुम्भयोनिः । पुं । अगस्त्यमुनौ ॥ वशिष्ठमुनौ ॥ द्रोणाचार्ये ॥ कुम्भो योनिरस्य ॥ द्रोणपुष्प्याम् ॥

कुम्भला । स्त्री । मुण्डितिकायाम् । मुण्डी इति भाषा ॥

कुम्भबीजकः । पुं । रीठाकरञ्जे ॥

कुम्भशाला । स्त्री । कुम्भनिर्माणादिगेहे । पाकपृथ्व्याम् ॥ इति हेमचन्द्रः ॥

कुम्भसन्धिः । पुं । आरचौ हस्तिकुम्भ

-द्वयमध्यस्थाने॥

कुम्भसम्भवः। पुं। अगस्त्यमुनौ॥ कुम्भात् कलशात् सम्भव उत्पत्तिर्यस्य सः॥

कुम्भा। स्त्री। वेश्यायाम्॥ नागहुली इति प्रसिद्धे भेषजे। नागदन्त्याम्॥

कुम्भाण्डः। पुं। बाणासुरस्य मन्त्रिविशेषे॥ कुष्माण्डे॥

कुम्भाण्डी। स्त्री। कुष्माण्ड्याम्॥

कुम्भाधिपः। पुं। शनिग्रहे॥

कुम्भालावुः। स्त्री। कुम्भतुम्ब्याम्॥

कुम्भिका। स्त्री। पाना इति गौड भाषा प्रसिद्धे जलजतृणविशेषे। काश्यादिदेशेषु कुम्भीति ख्याते। पानीयपृष्ठजे। वारिपर्ण्याम्॥ वारिपर्णी वृत्तपत्रा कुम्भिकेति प्रकीर्त्तिता॥ पाटलावृक्षे॥ द्रोणपुष्प्याम्॥ नेत्ररोगविº॥ यथा। वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च। कुम्भीकाबीजसदृशाः कुम्भिकाः सन्निपातजाः इति माधवः॥ कुम्भोऽस्त्यस्याः। अतइनिठनाविति ठन्॥

कुम्भी। पुं। हस्तिनि॥ कुम्भीरे॥ गुग्गुलौ॥

कुम्भिनीबीजम्। न। जयपाले॥

कुम्भिपाकी। स्त्री। कट्फले॥

कुम्भिमदः। पुं। हस्तिमदे॥

कुम्भिलः। पुं। चौरे॥ श्यालमत्स्ये॥ श्लोकार्थचौरे॥ श्याले॥ इति हेमचन्द्रः॥

कुम्भी। स्त्री। उखायाम्॥ पाटलावृक्षे॥ वारिपर्ण्याम्॥ कट्फले॥ कुम्भीपुष्प इति कोंकणदेशे प्रसिद्धे वृक्षविशेषे। रोमालुविटपिनि॥ घण्टिकायाम्॥ गर्गर्याम्॥ कुम्भीव कुम्भो रसाधारत्वात्॥

कुम्भीकः। पुं। देववल्लभे। पुन्नागवृक्षे॥ कुम्भिकायाम्॥ नपुंसकभेदे॥ तस्य लक्षणं यथा। स्वे गुदेऽब्रह्मचर्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते। स कुम्भीक इति ज्ञेयो गुदयोनिः स उत स्मृत इति॥

कुम्भीका। स्त्री। कच्छदेशे दाडिमाकारफलायां लतायाम्॥

कुम्भीधान्यः। पुं। } वर्षनिर्वाहोचित धान्यादिधने गृहस्थब्राह्मणे॥
कुम्भीधान्यकः। पुं।

कुम्भीनसः। पुं। क्रूरसर्पे॥

कुम्भीनसी। स्त्री। लवणासुरमातरि। रावणभगिन्याम्॥

कुम्भीपाकः। पुं। नरकविशेषे। स्मृतापने॥ य इह पशून् पक्षिणो वा प्राणतो रन्धयति तं परत्र यमानुचरा उष्णतैले पचन्ति यत्रत्ययमिति कु-

। स्त्रीपाक इति श्रीभागवतम् ॥

कुम्भीरः । पुं । कुम्भीर इति नाँका इति च भाषा प्रसिद्धे मारके जलजन्तुविशेषे । नक्रे । गिलग्राहे ॥ कुम्भिनं हस्तिनं भीरयति । कर्मण्यण् । उपपदसमासः ॥

कुम्भीरमक्षिका । स्त्री । कुम्भीरपोका इति गौड भाषा प्रसिद्धे मक्षिकाविशेषे । कणायाम् ॥ इति हारावली ॥

कुम्भीबीजम् । पुं । जयपाले ॥

कुम्भोलूः । न । गुग्गुलौ ॥

कुम्भोलूखलकम् । न । गुग्गुलौ ॥ कुम्भोलूखलकाकाराद्वृक्षकोटराच्चि र्यातम् ॥

कुरका । स्त्री । सल्लकीवृक्षे ॥

कुरङ्करः । पुं । } सारसपक्षिणि । पुष्कराह्वे ॥
कुरङ्कुरः । पुं । }

कुरङ्गः । पुं । हरिणविशेषे ॥ कुरङ्ग ईषत्ताम्रः स्याद्धरिणाकृतिको महान् ॥ कुरङ्गोऽथ हरिणो लघुः शीतलः पित्तहा गुरुः । मधुरो वातहृद्ग्राही किञ्चित् कफकरो मतः इति । हरिणस्य गुणैस्तुल्यः कुरङ्गः कथितो बुधैः इति च भावप्रकाशः ॥ मृगे । यातायौ ॥ कौ रङ्गति । रगि० अच् ॥ कौरङ्गो ऽस्यास्य वा । अर्शआद्यच् ॥ यद्वा । किरति । कृ वि० । भिदादिभ्यः किदिच्

इच् प्र० । बाहुलकात् उत्वम् । कुरशब्देवाऽस्तु ॥

कुरङ्गनयना । स्त्री । मृगनयनायां नार्याम् । कुरङ्गाक्ष्याम् ॥

कुरङ्गनाभिः । पुं । कस्तूर्याम् ॥

कुरङ्गमः । पुं । मृगे । ऋष्ये ॥ हरिणविशेषोयम् ॥

कुरङ्गाक्षी । स्त्री । मृगीनयनायाम् ॥

कुरङ्गिका । स्त्री । मुद्गपर्ण्याम् ॥

कुरङ्गी । स्त्री । कुरङ्गयोषायाम् । मृग्याम् ॥

कुरचिल्लः । पुं । कर्कटे ॥

कुरटः । पुं । चर्मकारे ॥

कुरण्टः । पुं । } पीतायां झिण्ट्याम् । पीताम्लाने ॥ कुण्टते । कुरशब्दे । बाहुलकात् अण्टः । स्वार्थे कन् ॥
कुरण्टकः । पुं । }

कुरण्डः । पुं । मुष्कवृद्धिरोगे । अण्डवर्द्धने ॥ साकुरुण्डवृक्षे ॥

कुरण्डकः । पुं । त्रिसन्ध्यादेव्याःस्थाने ॥

कुररः । पुं । उत्क्रोशखगे ॥ कवते । कुङ्शब्दे । कुवःकरन् ॥

कुरराङ्घ्रिः । पुं । देवसर्षपे । रक्तमूलके । सूक्ष्मदले ॥

कुररी । स्त्री । मेष्याम् ॥ कुररस्त्रियाम् ॥

कुररीगता । स्त्री । छन्दोविशेषे ॥ कुर

रीक्षिता नजभजैर्लगयुक् । यथा । अ नतिचिरोज्झितस्य जलदेन चिर स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् । विरलविकीर्णवज्रशकलासकला मिह विदधाति धौतकलधौतमहीति ॥

कुररः । पुं । उत्क्रोशे । कुररे ॥ चूर्णं कुन्तले ॥ इतिधरणी ॥

कुरवः । पुं । पीतझिण्ट्याम् ॥ कुरवके । रक्तझिण्ट्याम् ॥ सितमन्दारे ॥ कुत्सितशब्दे ॥ त्रि । कुत्सितशब्दयुक्ते ॥

कुरवकः । पुं । रक्ताम्लाने । रक्तसैरेयाम् । रक्तझिण्ट्याम् ॥ पीतझिण्ट्याम् ॥ त्रि । कुत्सितरवे ॥ कुत्सितः ईषद्वा अलीनां मत्तमकरन्द त्वात् रवोऽत्र । बहुव्रीहित्वान्न का देशः ॥

कुरसः । पुं । मद्यभेदे ॥ कुत्सितरसे ॥ त्रि । कुत्सितरसयुक्ते ॥ कुत्सितो रसोऽत्र ॥

कुरसा । स्त्री । गोजिह्वालतायाम् ॥

कुराहः । पुं । कुलाहे । ईषत्पाण्डौक्षणजङ्घे घोटके ॥ इतिहेमचन्द्रः ॥

कुरी । स्त्री । तृणधान्यप्रभेदे ॥

कुरीरः । पुं । कम्बले ॥ न । मैथुने ॥ क्रियते । डुकृञ्० । कृगउरचेति ईरन्प्रत्ययः । उदन्तादेशश्च ॥

कुरुः । पुं । आग्नीध्रराजपुत्रे । प्रियव्रतस्य पौत्रे ॥ चन्द्रवंशीयराजविशेषे । सम्बरणराजभार्यायां सूर्यकन्यायां तपत्यां जाते ॥ ओदने ॥ भक्ते ॥ श्रीकण्ठजाङ्गले ॥ कण्टकारिकायाम् ॥ कर्त्तरि ॥ करोति । डुकृञ्० । कृग्रोरुञ्चेति कुः ॥ जम्बूद्वीपस्य नवपर्यन्तर्गते वर्षविशेषे ॥ कुरवश्च क्षत्रियाः । तेषां निवासो जनपदः कुरवः । निवासेऽर्थो जनपदे लुप् । लुपि युक्तवद्व्यक्तिवचने ॥ पुंभू । नीवृद्विशेषे ॥ हस्तिनापुरमारभ्य कुरुक्षेत्राद्दक्षिणे । पञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्त्तितः ॥

कुरुकन्दकम् । न । मूलके ॥

कुरुक्षेत्रम् । न । देवयजने । देशविशेषे । धर्मक्षेत्रे । कुरुपाण्डवानां युद्धभूमौ ॥ तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते ॥ नयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते । अर्हतस्तु कुरुक्षेत्रमर्हतस्तु पृथूदकम् ॥ कुत्सितं रौतीति कुरु पापं कर्म तस्य क्षेपणात् गमनकारणत्वात् क्षेत्रम् ॥ यद्वा । कुः पृथिवी तस्यां रौति शब्दं करोति यः प्राणस्तस्य निवासभूतम् ॥ स्थाणु

प्रियादेव्याःस्थानमेतत् ॥

कुरुक्षेत्रीयोगः । पुं । एकस्मिन् सावनदिने तिथित्रयनक्षत्रत्रययोगत्रयाणां स्पर्शे । कुरुक्षेत्रे मरणयोगे ॥ यथा । पञ्चग्रहयुते सिंहस्थे बृहस्पतौ । सौम्यक्षेत्रगते लग्ने कुरुक्षेत्रे मृतिर्भवेदिति जातकामृतसङ्ग्रहे योगाध्यायः ॥

कुरुटः । पुं । सितावरशाके ॥

कुरुण्टः । पुं । पीतझिण्ट्याम् ॥ पीताम्लाने ॥

कुरुण्टकः । पुं । पीतपुष्पाम्लाने ॥ पीतझिण्ट्याम् । सैरेयकम् ॥ कुरुण्टि वटिस्तेयकरणे । क्वुन् कुन्वा । कुत्सितः कौषा कुरुण्टकः । कुगतीति समासः ॥

कुरुण्टी । स्त्री । दारुपुत्तलिकायाम् ॥

कुरुपतिः । पुं । युधिष्ठिरे ॥

कुरुम्बम् । न । कुलपालके । कमला नेवू इति गौडभाषाप्रसिद्धे । नारङ्गविशेषे ॥

कुरुम्बा । स्त्री । } द्रोणपुष्प्याम् ॥
कुरुम्बिका । स्त्री । }

कुरुम्बिका । स्त्री । सैंहलीरम्भे ॥

कुरुराट् । न । दुर्योधने ॥

कुरुराजः । पुं । दुर्योधने ॥ कुरूणां देशविशेषाणां राजा । टच् ॥

कुरुलः । पुं । भालस्थितचूर्णकुन्तले । भ्रमरके । भ्रमरालके ॥

कुरुवकः । पुं । शोणाम्लाने । रक्ताम्लाने । रक्तझिण्ट्याम् ॥ पीतझिण्ट्याम् ॥ ईषद्रौति । रु शब्दे । संज्ञायां कुन् । ण्वुल् ॥

कुरुवर्षः । पुं । कुरुसंज्ञके वर्षे ॥

कुरुविन्दः । पुं । मेघनामनि । मुस्तायाम् ॥ कुल्माषे ॥ व्रीहिभेदे ॥ मुकुरे ॥ हिङ्गुले ॥ न । पद्मरागमणौ । माणिक इति भाषा ॥ काचलवणे ॥ कुरून् विन्दति । विद्लृ लाभे । अनुपसर्गाल्लिम्पविन्दधारिपारि वेद्युदेजिचेतिसातिसाहिभ्यश्चेति शः ॥

कुरुविल्वः । पुं । पद्मरागमणौ ॥

कुरुविस्तः । पुं । स्वर्णपले । ४ तोला सोना इतिभाषा ॥ कुरुषु विस्तः ॥

कुरुवृद्धः । पुं । भीष्मपितामहे ॥ कुरु पु कुरुवंशजेषु वृद्धः ॥

कुरूद्वहः । पुं । युधिष्ठिरे ॥

कुरूत्थम् । न । रङ्गे ॥

कुर्चिगः । पुं । कुलञ्जनवृक्षे । गन्धमूले ॥

कुर्पूरः । पुं । कफोणौ ॥ जानुनि ॥ कुरति । कुर शब्दे । क्विप् ॥ कोरणम् । सम्पदादित्वात् । पिपर्त्ति । पृ अच् । कुरः पालीपरस्य । कुरा शब्देन पूरो वा ॥

कुर्पासः । पुं । अर्द्धचोलके ॥

कुर्पासकः । पुं । कञ्चुलिकायाम् । आंगी काँचुली चोली इतिचभाषा ॥

कुर्वत् । त्रि । कर्मकारे । भृत्ये ॥ करोति । डुकृञ्० । शतृ ॥ तनादिकृञ्ज्यउः । अतउत्सार्वधातुके ॥ यण् ॥

कुर्वाणः । त्रि । भृत्ये ॥ कारके ॥ कुरुते । डुकृञ्० । शानच् ॥

कुलम् । न । जनपदे ॥ मध्यमरत्नद येनयावती भूमि र्वोह्यते तावत्या भूमौ । द्वयी कुलन्तु भूमीनेतिम न्तुः ॥ गोत्रे ॥ सजातीयगणे ॥ यथा । विप्रकुलम् ॥ आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ॥ निष्ठावृत्ति स्तपो दानं नवधा कुललक्षणम् ॥ भवने ॥ तनौ । देहे ॥ सब इति भाषा प्रसिद्धेषु । जीवादिषु यथा । जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेवच । क्षित्यप्तेजो वायवश्च कुलमित्य भिधीयते इति ॥ पुं । कुलिके । शिल्पिकुलप्रधाने ॥ कोलति । कुलसंस्त्यानेवन्धुषुच । इगुपधेतिकः ॥ यद्वा । कूयते । कुङ् शब्दे । वा० कलक ॥ कुम् भूमिंलातिवा । कोलीयते वा । कुल संपरौ । क

न्येभ्योपीतिडः ॥

कुलकः । पुं । वल्मीके ॥ काकतिन्दुके ॥ कुलश्रेष्ठे ॥ मदनवृक्षे ॥ इ रितसर्पे ॥ न । पटोले ॥ पद्यादि सम्बन्धको कसमूहे ॥ त्रि । शिल्पि कुलप्रधाने । कुलश्रेष्ठिनि ॥ कुलस्य गृहस्य प्रतिकृतिरिव । इवेप्रतिकृतावितिकन् ॥ यद्वा कोलति ॥ कुलसंस्त्याने । इगुपधेतिकः ॥ स्वार्थे कन् कुन् वा ॥

कुलकर्कटी । स्त्री । चीनाककर्काम् ॥

कुलकुण्डलिनी । स्त्री ॥

कुलकुण्डली । स्त्री । मूलाधार पद्म स्थितशिवशक्तिविशेषे ॥

कुलकः । पुं । करताल्याम् । तालमर्दले ॥ इतिहारावली ॥

कुलक्षया । स्त्री । शूकशिम्ब्याम् ॥

कुलजः । पुं । कुलीने । सत्कुलप्रसूते ॥ कुले जातः । सप्तम्यांजनेर्डः ॥

कुलजा । स्त्री । कुलपालिकायाम् ॥ डान्ताट्टाप् ॥

कुलञ्जः । पुं । कुलञ्जनवृक्षे ॥

कुलञ्जनः । पुं । स्वनामाख्याते कुलञ्जे । गन्धमूले ॥ कुलञ्जनस्य स्वरकृत् हृत्कण्ठमुखशोधनः । अर्के इतिशेषः ॥

कुलटा । स्त्री । असत्याम् । पुंश्चल्या

म्। बन्धक्याम्॥ अभिचारार्थं कुलानि अटति। अट॰। पचाद्यच्। शकन्ध्वादिः॥ भिक्षुक्याम्। सा ह्या भिक्षार्थं कुलानि अटति। पूर्ववत् प्रक्रिया॥ परकीयान्तर्गतनायिकाविशेषे॥

कुलतिथिः। पुं। स्त्री। चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु॥ यथा। द्वितीया दशमी षष्ठी कुलाकुल मुदाहृतम्। विषमास्ता ऽकुलाः सर्वाः शेषाश्चतिथयः कुलाः॥ इति तन्त्रशास्त्रम्।

कुलत्थः। पुं। स्वनामख्यातेऽन्नविशेषे। ताम्रबीजे। कुलथ कुलथी इति च भाषा॥ कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत्। लघुर्विदाही वीर्योष्णः कासश्वासकफानिलान्॥ हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान्। स्वेदसङ्ग्राहको मेदः कफज्वरकृमीन् हरेत्॥

कुलत्था। स्त्री। कुलत्थिकायाम्। दृक्प्रसादायाम्। वनकुलत्थे॥ अस्या गुणा यथा। कटुत्वम्। तिक्तत्वम्। अर्शःशूलनाशित्वम्। विबन्धाध्मानशमनत्वम्। चक्षुर्हितत्वम्। व्रणरोपणत्वञ्चेति॥ कुलत्थाञ्जने॥

कुलत्थाञ्जनम्। न। कुम्भकायाम्। प्रलापहायाम्॥

कुलत्थिका। स्त्री। कुलत्थिकाख्याञ्जनप्रस्तरविशेषे। चक्षुष्यायाम्। खापरिया इति भाषा॥ वनकुलत्थे॥ कुलस्यप्रतिकृतिः। इवेप्रतिकृताविति कन्॥ यद्वा। कुले तिष्ठति। स्था॰। सुप्रीतिकः। स्वार्थे कन्। पृ॰॥

कुलधर्मः। पुं। असाधारणकुलोचितधर्मे। स्वजातीयधर्मे। कुलाचारे॥ यथा। उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन। नरके नियतं वासो भवतीत्यनुशुश्रुमेति भगवद्गीता॥ दिव्यवीरपशुभावान्तर्गतदिव्यधर्मे। यथा। कुलधर्मात् परो धर्मो नास्ति ज्ञाने ऽत्र मामके। यस्यानुष्ठानमात्रेण ब्रह्मज्ञानी नरो भवेदिति॥ कुलस्य धर्मः॥

कुलधारकः। पुं। औरसात्मजे। पुत्रे॥ कुलस्य वंशस्य धारकः॥

कुलनक्षत्रम्। न। भरणीरोहिणीपुष्यमघोत्तरफल्गुनीचित्राविशाखाज्येष्ठाश्रवणोत्तरभाद्रपत्सु॥ यथा। वारुणार्द्राभिजिन्मूलं कुलाकुल मुदाहृतम्। कुलानि समधिष्ण्यानि शेषाणि चाकुलानि चेति तन्त्रशास्त्रम्॥

कुलनाथः। पुं। कुलपतौ॥

कुलनाशः। पुं। उष्ट्रे॥ कुलध्वंसे॥

स्त्वाकारणंयथा । कूर्मपरिभागे १५ ऽध्याये । अन्नतात् पारदार्याञ्च तथाऽभक्ष्यस्य भक्षणात् । अश्रौतधर्माचरणात् चिप्रंनश्यतिवैकुलम् ॥ अश्रोत्रियेवेददानात् वृषलेषुतथैव च । विहिताचारहीनेषु चिप्रंनश्यतिवैकुलमिति ॥ तदभावस्य कारणन्तु । यावच्च वेदधर्मास्तु यावत्याऽच्छूद्रार्चनम् । यावत्याच्छुचिकूर्चश्च तावत्कालोभवेतृतीति ॥

कुलपतिः । पुं । मुनिविशेषे । यथा । मुनीनां दशसाहस्रं यो ऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः । इतिपुराणे रक्तचन्द्रिचिते ॥ गणमुख्ये । जमादार हौलदार इत्यादि यवनभाषा प्रसिद्धे । यथा । शिविकावाहानां कुलपतिः ॥ कुलश्रपतिः ॥

कुलपनः । पुं । दमनकवृक्षे ॥

कुलपर्वतः । पुं । महेन्द्रादिसप्तशैलेषु ॥ यथा । महेन्द्रो मलयः सह्यः शुक्तिमान्ऋक्षपर्वतः । विन्ध्य श्चपारियात्र श्चसप्तात्र कुलपर्वताः इति । अत्र भारतेवर्षे । इतिविष्णुपुराणम् ॥

कुलपालकम् । न । कुकुन्दे । कमलानेबु इति गौड भाषा प्रसिद्धे जार ङ्गविशेषे ॥ त्रि । वंशप्रतिपालके ॥

कुलपालि । स्त्री । कुलवत्याम् ॥

कुलपालिका । स्त्री । कुलस्त्रियाम् । साध्व्याम् । अभिचारवारणेन कुलकुलाचारायाम् ॥ यथा । एकत्र कौलव्रतभङ्गशङ्का विदग्धता भङ्गभयं परत्र । इत्याकुलानां कुलपालिकानां गतागतैरेव गतात्रियामेति॥ अपिच । सुखयतितरां नरं वचति परिचयलेशं गणाङ्गनेव श्रीः । कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापीति॥ कुलम् पालयतिं पालरचणे । कर्मण्यण् । स्त्रा० कन् ॥

कुलम्भरः । पुं । कुलम्भले । सन्धिचौरे ॥

कुलवान् । त्रि । कुलिनि ॥ कुलमस्त्यस्य । प्रशस्तत्वात् मत्वे मतुप् ॥

कुलवर्णा । स्त्री । रक्तत्रिवृति ॥

कुलवारः । पुं । भौमशुक्रयोः ॥ यथा । रवि श्चन्द्रो गुरुः सौरि श्चत्वारश्चाकुला इमे । भौमशुक्रौ कुलाख्यौच बुधवारः कुलाकुलः ॥ इतितन्त्रसारम् ॥

कुलविप्रः । पुं । कुलपुरोहिते ॥

कुलश्रेष्ठी । त्रि । शिल्पिकुलप्रधाने । कुलिके ॥ कुलश्रेष्ठमस्त्यस्य । इनिः ॥

कुलसंज्ञक: । पुं । तिथिवारनक्षत्र विशेषे ॥ यथा । अर्काष्टेन्दुवेदतिथिषु । कुलसंज्ञकाः । पूर्वाश्वोज्यमघेन्दुकर्णाद्रनद्यीमिन्द्रचित्रासु ॥

कुलसत्तमः । त्रि । कुलश्रेष्ठिनि ॥

कुलसम्भवः । पुं । बीज्ये ॥ कुलेसम्भवतीति । अच् ॥ कुलेसम्भवोऽस्य वा ॥ यद्वा । सम्भवत्यस्मात् । अपादाने । कुलस्य सम्भवः ॥

कुलसौरभम् । न । मरुवकवृक्षे ॥

कुलस्त्री । स्त्री । कुलपालिकायाम् । नान्यगामिन्यां कुलरक्षिकायाम् ॥ कुलस्य पालिका स्त्री । शा० ॥

कुलहण्डकः । पुं । आवर्ते । आवर्त्ते ॥

कुलाकुलतिथिः । पुंस्त्री । द्वितीयाषष्ठी दशमीषु ॥ यथा । द्वितीयादशमीषष्ठी कुलाकुल मुदाहृतमिति तन्त्रशास्त्रम् ॥

कुलाकुलनक्षत्रम् । न । आर्द्रामूलाऽभिजिच्छतभिषासु ॥ यथा । वारुणार्द्राभिजिन्मूलं कुलाकुल मुदाहृतमिति ॥

कुलाकुलवारः । पुं । बुधवारे ॥ यथा । भौमशुक्रौकुलाख्यौ हि बुधवारः कुलाकुल इति ॥

कुलाकुलसंज्ञकः । त्रि । तिथिवारनक्षत्रविशेषे ॥ यथा । द्वितीयाषष्ठीदशमीषु ॥ बुधे ॥ मूलाशतभिषार्द्राभिजित्सु ॥



कुलाचलः । पुं । कुलपर्वते ॥

कुलाचारः । पुं । कुलधर्मे ॥ धर्मकामार्थमोक्षप्रदे आगमोक्ताचारविशेषे ॥ यथा । जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च । क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते ॥ ब्रह्मबुद्ध्यानिर्विकल्पमेतेष्वाचरणञ्च यत् । कुलाचारः स एवाद्ये धर्मकामार्थमोक्षद इति ॥ त्रि । कुलाचारविशिष्टे ॥ कुलेआचारः ॥ कुलाचारोऽस्त्यस्य । अर्श० अच् ॥

कुलाचार्यः । पुं । कुलाचाराभिज्ञे ॥

कुलाटः । पुं । क्षुद्रमत्स्यभेदे ॥

कुलाद्रिः । पुं । कुलाचले । कुलपर्वते ॥

कुलाधारकः । पुं । पुत्रे ॥ कुलस्य आसन्तान धारकः ॥

कुलायः । पुं । यन्त्रविशेषे ॥ स्थानमात्रे ॥ नीडे । पक्षिनिलये । घोंसला कोसला इति भाषा ॥ न । शरीरे ॥ कुलः पक्षिसङ्घातोऽयतेऽत्र । अयगतौ । हलश्चेतिघञ् ॥ यद्वा । कौ लायोगतिरस्मात् ॥

कुलायस्थः । पुं । पक्षिणि ॥ कुलाये तिष्ठति छा० । सुपिस्थ इतिकः ॥

कुलायिका । स्त्री । पक्षिशालायाम् ॥

कुलिरः । पुं । कुलीरे । कर्कटे ॥

कुलिशः । पुं । न । दम्भोलौ । वज्रे ॥ कुलौ हस्तैकदेशे अन्येभ्योपीतिडः ॥ कुलिनः पर्वतान् श्यति वा । शोत० । आतोनुपसर्गे कः ॥ कुत्सितम् ईषद्वा लिशति । लिश अल्पीभावे । इगुपधेति कः ॥ अस्थिसञ्चारवृक्षे ॥ पुं । मत्स्यविशेषे । कण्टकाष्ठीले ॥

कुलिशद्रुमः । पुं । स्नुहीवृक्षे । थूहर इति भाषा ॥

कुलिशनायकः । पुं । शृङ्गारबन्धविशेषे ॥ यथा । स्त्रीपादद्वय माकृष्य स्मुच्छ्रितलिङ्गकः । योनिञ्च पीडयेत् कामी बन्धः कुलिशनायक इति ॥

कुलिशपाणिः । पुं । इन्द्रे ॥

कुलिशाङ्कुशा । स्त्री । बौद्धानां विद्यादेवीविशेषे ॥

कुलिशासनः । पुं । शाक्यमुनौ ॥

कुली । स्त्री । कण्टकार्य्याम् ॥ पत्न्याः ज्येष्ठभगिन्याम् ॥ गौ० ङीष् ॥

कुलीनः । पुं । आजानेये । श्रेष्ठहये ॥ त्रि । कुलाचारस्थिते । कौले ॥ वीरे ॥ कुलोद्भवे । महाकुले । आर्य्ये ॥ कुलस्यापत्यम् । कुलात्खः ॥ उत्कर्षविशेषविशिष्टवंशजकुलीन इति गौडाः ॥ सच षड्ग्रजकुलाचार्य्यग्रन्थे कुलदीपिकायामाधुनिककुलीनत्वे न घर्षितो द्रष्टव्यः ॥

कुलीनकः । पुं । वनमुद्गे ॥

कुलीनसम् । न । जले ॥ इति हेमः ॥

कुलीरः । पुं । काँकडा इति प्रसिद्धे जलचरे । कर्कटे ॥ कर्कटराशौ ॥ कोलति । कुल सं० । गम्भीरादयश्चेति ईरन् ॥ कौलीयते । लीङ् श्लेषणे । बा० रक् ॥ यद्वा । कुलमस्यास्ति । अतइनिः । तमीरयति । कर्मण्यण् । जनकभक्षकत्वात् ॥ श्वयनंशीः ॥ सं० क्विप् । कुत्सिताशीः । तां राति ॥ कुरीरशब्दस्य कपिलकादित्वाल्लत्वेपि कुलीरः ॥

कुलीरविषाणी । स्त्री । शृङ्ग्याम् ॥

कुलीरशृङ्गी । स्त्री । कर्कटशृङ्गीवृक्षे ॥

कुलीरान् । पुं । कर्कटशिशौ । स्नेगवैः ॥ इति त्रिकाण्डशेषः ॥

कुलुकम् । न । जिह्वामले ॥ इति हेमचन्द्रः ॥

कुलुकगुञ्जा । स्त्री । उल्कायाम् ॥

कुलेशः । पुं । सदाशिवे ॥ कुलपतौ ॥

कुलेशानी । स्त्री । उमायाम् । पार्व्वत्याम् ॥

कुलेश्वरः । पुं । सदाशिवे ॥ कुलस्य भैरविशेषस्य ईश्वरः ॥ गोत्रपतौ ॥

कुलेश्वरी । स्त्री । पार्व्वत्याम् । शिवायाम् ॥ कुलस्य ईश्वरी ॥

कुवलयम्। न। उत्पले। चन्द्रविकाशिनि। कमोदिनी कोमी इतिभाषा। श्वेतं कुवलयमोक्तं कुमुदं कैरवन्तथा॥ नीलोत्पले॥ इतिराजनिघण्टः॥ यथा। कुवलयदलनीलंबर्वरीस्निग्धकेशमिति॥ कमलकुमुदादिसामान्ये जलज पुष्पे॥ कौ वलयमिव शोभाकरत्वात्॥ भूमण्डले। भूमिवलये॥

कुवलयापीडः। पुं। कंसस्य हस्तिरूपे दैत्यविशेषे॥

कुवलयिनी। स्त्री। उत्पलिन्याम्॥

कुवलाश्वः। पुं। धुन्धुमारन्‌पे॥

कुवली। स्त्री। कोलिवृक्षे॥ कौ वलति। वल प्राणने। पचाद्यच्। गौ॰ ङीष्॥

कुवलेशयः। पुं। विष्णौ॥ कुं भूमिं वलते संवृणोतीति कुवलं तोयम्। वल संवरणे। पचाद्यच्। कुवले जले शेते। शीङ्। अधिकरणेशेतेरित्यच्। शयवासेष्वलुक्॥

कुवादः। पुं। कुत्सितवादे॥ त्रि। कुचरे। परदोषकथनशीले॥ कुत्सितो वादो ऽस्य। अर॰ अच्॥

कुवित्। अ। भूर्यर्थे॥ प्रशंसायाम्॥

कुविन्दः। पुं। शूद्रागर्भे विश्वकर्मबीजाते। तन्तुवाये॥ कुम् भुवं विन्दति कुत्सितं वा विन्दति। विद्लृ लाभे। गवादिषु विन्देः संज्ञायामिति शः॥ यद्वा। कुप्यति कुपक्रोधे। कुपेर्वा वचेति किन्दच्॥



कुवृत्तिकृत्। पुं। काँटाकरञ्ज इतिगौडभाषाप्रसिद्धे करञ्जभेदे। पूतिके॥ त्रि। कुवृत्तिकर्त्तरि॥

कुवेणिः। स्त्री। मत्स्याधान्याम्॥

कुवेणी। स्त्री। खालुइ इतिगौडभाषाप्रसिद्धे मत्स्यस्थापनपात्रे। मत्स्याधान्याम्॥ कुत्सितं वेणान्ते मत्स्या अस्याम्। वेणृगतौ। इलश्चेति घञ्। गौरादित्वान्ङीष्॥

कुवेलम्। न। कुवलये॥ इतिहेमचन्द्रः॥

कुशः। पुं। रामसुते॥ कुशेन सृष्टः कुशः। वाल्मीकिना कुशै संसृष्टो गर्भक्लेदो ऽस्य॥ योक्त्रे॥ हलसमुद्रेणावृतेद्वीपविशेषे॥ कुशोभूत्का अञ्जनः कौशेस्यं पुम्भुविधियच्छति। अयमेवास्यकुशसंज्ञायां कारणम्॥ न। जले॥ पुं। न। कुशा इतिभाषा प्रसिद्धतृणे। दर्भे॥ अस्योत्पत्तिर्यथा। बर्हिष्मतीनामपुरी सर्वसम्पत्समन्विता। न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः॥ कुशकाशा स एवासन् शश्वद्धरितवर्चसः।

ऋषयो यैः पराभाव्य यज्ञान् यज्ञमीजिरे ॥ इतिश्रीविष्णुभागवतम् ॥ अस्यगुणा यथा। ह्रस्वदीर्घप्रभेदात् कुशस्तु द्विविधो मतः। दर्भं दर्भं त्रिदोषघ्नं मधुरं तुवरं हिमम्। मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक् प्रदरास्रजिदिति ॥ अथ कुशधारणविधिस्तत्रतिनिषिद्धा। पूजाकाले सर्वदैव कुशहस्तो भवेच्छुचिः। तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया॥ कुशकार्यकरं यस्मान्न तु तस्याः कुशाः कुशाः। कुशेन रहिता पूजा विफला कथिता मया ॥ नान्यस्य रजतस्य वर्णं धार्यं हि निजमङ्गले। इतिवरदातन्त्रे १ पटल.॥ नस्पृशेत् तिलदर्भौ स्वसववातकथञ्चनेति ब्राह्मण सर्वस्वम् ॥ त्रि। पापिष्ठे ॥ मत्ते ॥ कौ भूते तिष्ठति। अन्येभ्योपीतिडः ॥ कुश्यतिवा। कुशश्लेषणे। इगुपधेति कः ॥ कुपापं श्यति वा। श्योऽन्त सुपीति योगविभागात् कः

कुशध्वजः। पुं। राज्ञो जनकस्यानुजे ॥

कुशपः। पुं। पानपात्रे ॥

कुशपुष्पम्। न। ग्रन्थिपर्णे। गांठियाला इतिभाषा ॥

कुशलम्। न। कल्याणे। क्षेमे॥ पुण्ये। सुकृते ॥ पर्याप्तौ ॥ त्रि। शिक्षिते ॥ नहि कुशलो वृथा कालं यापयति ॥ मोक्षे ॥ कुत्सितम् अशुभरूपं शलते ऽनेन। शल चलने। प-चाद्यच् ॥ कुशान् लाति वा। लादाने। आतइति कः ॥ यद्वा। कौ पृथिव्यां शलति। शलचलने। अच्। शिअर्थसङ्घणा वा। कौशलति चालयति राजकार्याणि ॥ यद्वा। कुपापेषु द्वयोः। पापात् शलति वुद्धिवैभवात् ॥ यद्वा। कुशयति। कुशसंश्लेषणे। सौत्रो धातुर्वा। इषा०। कलः ॥ मत्वर्थे सिध्मादित्वात् लिच्या ॥

कुशलप्रश्नः। पुं। कौशल्याम्। कुशलजिज्ञासायाम् ॥ कुशलस्यप्रश्नः ॥

कुशलवौ। पुं। द्विवचनान्तः। एकयोक्त्या रामपुत्रयोः ॥

कुशलानुशिष्टः। त्रि। निपुणाचार्यशिक्षिते ॥ कुशलेन अनुशिष्टः ॥

कुशली। त्रि। कुशलयुक्ते ॥ इनिः ॥

कुशली। स्त्री। अश्मन्तकवृक्षे। चुक्रिकायाम् ॥

कुशस्थलम्। न। कान्यकुब्जदेशे ॥

कुशस्थली। स्त्री। द्वारकायाम् ॥

कुशा। स्त्री। रज्वाम्। वल्गायाम् ॥ मधुकर्कट्याम् ॥ छन्दोगाः सोमयागयानार्थे नौदुम्बरान् शङ्कून् कुशा इति व्यवहरन्ति ॥

कुशाकरः । पुं । वह्नौ ॥

कुशाग्रीयः । त्रि । कुशाग्रसदृशे ॥ कुशाग्रमिव । कुशाग्राच्छः ॥

कुशाग्रीयमतिः । त्रि । तीक्ष्णबुद्धौ । प्रत्युत्पन्नमतौ । सूक्ष्मदर्शिनि ॥ स्त्री । सूक्ष्मायांबुद्धौ ॥ कुशाग्रीयामतिर्यस्य ॥ कर्मधारयोऽप्यत्र ॥

कुशाग्रीया । स्त्री । तीक्ष्णायां बुद्धौ ॥

कुशार्दिनिः । पुं । दुर्वासोमुनौ ॥

कुशाल्मलि । पुं । रोहितकवृक्षे ॥

कुशावती । स्त्री । रामात्मजस्य कुशस्य राजधान्याम् ॥ अस्त्यर्थेमतुप् ॥

कुशिंशपा । स्त्री । कपिलशिंशपायाम् ॥

कुशिकः । पुं । मुनिविशेषे । जमदग्नेः पितरि ॥ फाले ॥ सर्जवृक्षे ॥ विभीतकवृ० ॥ अश्वकर्णवृ० ॥ तैलशेषे ॥ त्रि । केकरे ॥ विश्वामित्रस्य पितरि ॥

कुशितः । त्रि । जलमिश्रिते ॥

कुशी । पुं । वाल्मीकिमुनौ ॥

कुशी । स्त्री । फाले । लौहविकारे ॥ कुशशब्दाद्योविकारेर्थेजानपदेतिङीप् ॥

कुशीदम् । न । रक्तचन्दने ॥ वृद्धिजीविकायाम् । वृद्ध्यै धनप्रयोगे ॥

कुशीलवः । पुं । वाल्मीकौ । प्राचेतसे ॥ कीर्तिसञ्चारकनटे । चारणे ॥ याचके ॥ कुत्सितं शीलमस्यास्य । कुगतीतिसमासः । अन्यत्रापिदृश्य तेइतिवः ॥ कुशीलं वाति वा । वागन्यादौ । कः ॥ नर्त्तनटयौ ॥

कुशीलवौ । पुं । एकयोक्त्यारामात्मजयोः ॥

कुशीवशः । पुं । वाल्मीकिमुनौ ॥

कुशूलः । पुं । तुषाग्नौ ॥ अन्नकोष्ठके इष्टकादिनिर्मिते धान्यस्थापनार्थस्थाने । व्रीह्यगारे ॥ इतित्रिकाण्डशेषः ॥

कुशूलधान्यकः । पुं । ब्राह्मणविशेषे । नित्यनैमित्तिकधर्मकृत्ययोग्यवर्गसहितस्य गृहिणो यावता धान्यादिधनेन वर्षत्रयं समधिकंवा निर्वाहो भवति तावद्धने विप्रे ॥ कुशूलं कुशूलपरिमितं धान्यं यस्यसः ॥

कुशेशयः । पुं । कर्णिकारवृक्षे ॥ न । पद्मे ॥ सारसपक्षिणि ॥ कुशेजलेशेते । अधिकरणेशेतेरित्यच् । शयवासेत्यादिनाऽलुक् ॥

कुशेशयकरः । पुं । रवौ ॥ त्रि । अन्यत्र ॥ कुशेशयंकरे यस्य ॥

कुषाकुः । पुं । वानरे ॥ वह्नौ ॥ सूर्ये ॥ त्रि । परोत्तापिनि ॥ कुष्णाति । कुषनिष्कर्षे । कठि कुषिभ्याङ्काकुः ॥

कुषितः । त्रि । जलमिश्रिते ॥

कुषीदम् । न । कुसीदे ॥

कुष्ठः । पुं । न । पुष्करभेषजे । कूट

इति गौ०भाषा ॥ पारिभाव्ये ॥ कुष्ठमुत्पाडं कटुस्वादुशुक्लं तिक्तकं लघु । हन्तिवातास्रवीसर्पकासकुष्ठमरुत्कफान् ॥ कोढ इतिप्रसिद्धे पापरोगे । श्विचे ॥ म्रियतेयदि कुष्ठेन पुनर्जातस्य तद्भवेत् । नातो निन्द्यतरो रोगो यथा कुष्ठं प्रकीर्त्तितम् ॥ विषभेदे ॥ कुष्णाति रोगम् । कुष० । हनिकुषिनीरमिकाशिभ्यः क्थन् ॥

कुष्ठकेतुः । पुं । भूम्याहुल्ये । मार्कण्डिकायाम् । भुजिखखसा इतिभाषा ॥

कुष्ठगन्धि । न । एलवालुके ॥

कुष्ठगन्धिनी । स्त्री । अश्वगन्धायाम् ॥

कुष्ठघ्नः । पुं । हिलावल्याम् ॥

कुष्ठघ्नी । स्त्री । काकोदुम्बरिकायाम् ॥ वाकुच्याम् ॥

कुष्ठनाशनः । पुं । वाराहीकन्दे ॥ गौरसर्षपे ॥ चीरीशवृत्ते ॥

कुष्ठनाशिनी । स्त्री । वाकुच्याम् ॥ सोमराज्याम् ॥

कुष्ठषम् । न । कुत्सितस्थले ॥

कुष्ठसूदन । पुं । आरग्वधे ॥

कुष्ठहन्ता । पुं । हस्तिकन्दे ॥

कुष्ठहन्त्री । स्त्री । वाकुच्याम् ॥

कुष्ठहृत् । पुं । खदिरे ॥

कुष्ठारिः । पुं । विट्खदिरे ॥ पटोले ॥ आदित्यपत्रे ॥ खदिरे ॥ गन्धके ॥

कुष्ठितः । त्रि । कुष्ठरोगवति ॥ कुष्ठं सञ्जातमस्य । ता० इतच् ॥

कुष्ठी । त्रि । कुष्ठरोगयुक्ते ॥ इन्द्रोपतापेति इनिः ॥

कुष्मलम् । न । छेदने ॥ छादने ॥ विकसिते ॥ कुष्णाति । कुष० । कुटिकुषिभ्याङ्क्मलन् ॥

कुष्माण्डः । पुं । कुंहडा इतिप्रसिद्धे फलशाके । कर्कारौ ॥ कुष्माण्डं वृंहणं वृष्यं गुरु पित्तास्रवातनुत् । बालं पित्तापहं शीतं मध्यमं कफकारकम् ॥ वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु । वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित् ॥ अस्य प्रकाराः । यथा । घृते तप्तेविनिःक्षिप्य खण्डान् कुष्माण्डसंभवान् । वार्त्ताकविधिना कुर्यात प्रलेहतलनादिकम् ॥ सुस्वादुसुन्दरम् ॥ यथा । वेसवारान्वितञ्चैव घृतेतलनपूर्वकम् । कुष्माण्डकफलं सिद्धं विदुः सुस्वादुसुन्दरम् ॥ गुलिका । घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । रन्धितान् जीरमरिचै रिमान् सुगुलिकां विदुः ॥ * ॥ खण्डकुष्माण्डकम् । चतुरस्रायतान् स्थूलान् स्विन्नान् चीरेण घोदितान् । सुपाच्यान ख

पक्वसर्पिर्भ्यां मरिचैलादिवासितान् ॥ * ॥ भर्जिताम्लकुष्माण्डम् । कुष्माण्डखण्डानि सचैन्धवानि तनूनि सम्मर्दितपिण्डितानि । जम्बीरनीराश्रितभृष्टवेरै र्भवन्ति पक्वेरपितो यथाय ॥ * ॥ कोलिका । कुष्माण्डसम्भवाः खण्डाः सुस्विन्नाः खण्डकान्विताः । वेषवारयुतैस्तैले तलये दाप्रलेपयेत् ॥ * ॥ राजिकाकस्तूरी । सुपक्वं कनिष्ठिकाकारं कौष्माण्डं स्वेदापिण्डितम् । राजिकादधिसिद्धस्थं मिश्रितं कास्तुरीयकम् ॥ एवं बहुविधाः कार्याः कौष्माण्डादिविचक्षणैः । प्रलेपतलनस्वादुचारसन्धानराजिकाः ॥ ईषत पित्तलत्वात् कुष्मा अण्डेषु वीजेषु यस्य । पृ० ॥ शिवस्य गणदेवताविशेषे ॥ भूतविशेषे ॥

कुष्माण्डकः । पु । कुष्माण्डे ॥

कुष्माण्डी । स्त्री । उमायाम् । अम्बिकायाम् ॥ ओषधौ ॥ कर्कारौ ॥ यागक्रियाविशेषे ॥

कुसितः । पुं । जनपदे ॥ कुस्यति । कुस संश्लेषणे । कुसेरुम्भोमेदेता इति इत प्रत्ययः ॥

कुसितायी । स्त्री । } कुसिदाय्याम् ।
कुसिदायी । स्त्री । } वृद्धिजीविपत्न्याम् ॥ कुसितस्य कुसिदस्य वा



स्त्री त्यर्थे वृषाकप्यग्नि कुसितकुसिदानामुदात्तइति प्रकृतेरैकारादेशोङीप्च प्रत्ययः ॥

कुसिन्धी । स्त्री । शिम्ब्याम् ॥

कुसीदम् । न । अर्थप्रयोगे । वृद्धिजीविकायाम् । वृद्ध्याजीवने । सूदकी जीविका इति भाषा ॥ पुनर्देयत्वेन स्वीकृत्य गृहीते ऋणविशेषे ॥ ॥ यथा । स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते । तत् कुसीदमिति प्रोक्तं तेनवृद्धिः कुसीदिनाम् ॥ इतिनारद । अस्यार्थः । स्थानं मूलधनावस्थानम् । लाभोवृद्धिः । दानग्रहणपदे कर्मणिल्युट । साध्ये तेन मूलधनाऽवस्थानेसत्येव योलाभ स्तदर्थं यद्दानं धनिकेन दीयमानं मूलधनम् अधमर्णेनच ग्रहणं तथास्वीकृत्यगृह्यमाणं यत् तदृणमिति ॥ कलाशून्ये तु अवश्यापाकरणीयत्वरूपगुणयोगाद् गौणप्रयोग । अतएव वाणिज्यार्थप्रयुक्तस्य न ऋणत्वम् इति मिश्रा ॥ अपिच । कुतसितात् सीदतश्चैव निर्विशङ्कैः प्रगृह्यते । चतुर्गुणंवाष्टगुणं कुसीदाख्य मतः स्मृतः । इति वृहस्पतिः । अस्यार्थः । कुतसितात् सीदतश्चाधमर्णात सकलधनं यत

गृह्यते निर्विशङ्कै रुत्तमर्णैः चतुर्गुणं वेतिवाकारोऽनास्थायाम् तेनद्वैगु ण्यादिलाभः इति ॥ कुसीदे विशे षो गारुडे २१५ अध्याये उक्तः यथा। कुसीदकृषिवाणिज्यं प्रकुर्वीता स्वयंकृतम्। आपत्काले स्वयं कुर्वे न्नैनसा युज्यते द्विजः ॥ वृत्त्येवात्र्नेनोपाया ऋषिभिः परिकीर्त्तिताः । सर्वेषा मपि चैवैषां कुसीद मधिकं विदुः ॥ अनावृष्ट्याराजभयान् मूसिकाद्यैरुपद्रवैः। कृष्यादिके भवे द्वाधा साकुसीदे न विद्यते ॥ शुक्ल पक्षे यथा कृष्णे रजन्यांदिवसेपि वा। उष्णेवर्षतिशीते वा वर्द्धनं न निवर्त्तते ॥ देशांगतानां या वृद्धिर्नानापण्योपजीविनाम्। कुसीदंसर्वतः सम्यक् संस्थितस्यैवजायते ॥ लब्ध लाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत्। तेतुष्टास्तस्य तद्दोषं शम यन्ति न संशयः ॥ वणिक्कुसीदेद द्यात्तुवस्त्रंगां काञ्चनादिकम् । कृ षीवलोऽन्नपानानि यानशय्यास नानिच ॥ पशुभ्योविंशतिंदत्त्वा प शुस्वर्णादिकंशतम्। पादेनायस्यपा रक्यंकुर्यात् सञ्चय मात्मवान् ॥ अ र्द्धेनचात्मभरणं नित्यनैमित्तिका न्वितम्। पादञ्च प्राथमानस्य मूल



भूतं विवर्द्धयेत् ॥ विद्याशिल्पं भृतिः सेवा गोरक्ष्यंविपणिः कृषिः । वृत्ति र्भैक्ष्यं कुसीदञ्च दशजीवनहेतवः इति ॥ त्रि । कुसीदिके ॥ कुस्यते । कुससंश्लेषणे । कुसेरुम्भोमेदेताद्-तीदः । इत्यत्र्चेट्तीयोह्रस्वादि र्दीर्घादिश्चतन्त्रेणोपात्तः । इत्या कायनीतिसूत्रे ह्रस्व एवेतिदृत्तिका रहरदत्तादिग्रन्थो पष्टम्भेननिर्णीतम् ॥

कुसीदिकः। त्रि। वार्द्धुषिके। वृद्ध्याजीवे॥ कुसीदं वृद्धिस्तदर्थं, द्रव्यं कुसीदम्। तत् प्रयच्छति। कुसीददशैकादशात् ष्ठन् ष्ठचाविति ष्ठन् ॥ स्त्रियां। षित्वात् ङीषि कुसीदिकी ॥

कुसुमम्। न। स्त्रीरजसि ॥ नेत्ररोग विशेषे ॥ फले ॥ पुष्पे ॥ मात्रामाचे पञ्चमासिकस्य। ऽ॥ षष्ठप्रभेदे ॥ कु स्यति कुस०। कुसेरुम्भोमेदेता इ त्युमः ॥ अत्रकुसुमश्रुताध्यायो यथा। फलकुसुमसम्प्रवृद्धिं वनस्पि तीनां विलोक्य विज्ञेयम्। सुलभ त्वं द्रव्याणां निष्पत्तिः सर्वसस्यानाम् ॥ केनकस्यवृद्धिर्जायतदाह । शाले न कलमशालीरक्ता शोकेनरक्तशा लिश्च ॥ पाण्डूकः क्षीरिकया नीला शोकेनसूकरकः ॥ न्यग्रोधेनचयव

क सिन्दुकवृक्षाच्चषष्टिको भवति । अश्मन्तेन ज्ञेया निष्पत्तिः सर्वशस्या नाम् ॥ जम्बूभिस्तिलमाषाः शिरीषवृक्षाच्चकङ्गु निष्पत्तिः । गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन ॥ अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेदसनैः । बदरीभिश्च कुलत्थांश्चिरविल्वेनादिशेन्मुद्गान् ॥ अतसी वेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः । तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणाः ॥ करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन । गावश्च पाटलाभिः कदलीभिरजाविकं भवति ॥ चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन । कुरुवकवृक्षाद्वज्रं वैदूर्यं नन्दिकावर्त्तैः ॥ विन्द्याच्च सिन्दुवारेण मौक्तिकं कावनाः कुसुमेन । रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥ श्रेष्ठी सुवर्णपुष्पान्न पद्मैर्विप्राः पुरोहिताः कुमुदैः । सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः ॥ आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम् । खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥ पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन । निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजकुसुमेन ॥ दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण । श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति ॥ अथैताभिर्वृष्टिं लक्षणमाह । यस्मिन् काले स्निग्धनिश्छिद्रपत्राः संदृश्यन्ते वृक्षगुल्मालतास्तु । तस्मिन् वृष्टिः शोभना सम्प्रदिष्टा रूक्षैश्छिद्रैरल्पमम्भः प्रदिष्टम् ॥ इति वाराह्यां २९ अध्यायः ॥



कुसुमकार्म्मुकः । पुं । कामदेवे ॥

कुसुमपुरम् । पटना इति प्रसिद्धेपुरे । पाटलिपुत्रे ॥

कुसुममध्यम् । न । चालितागाछ इति गौडभाषा प्रसिद्धे वृक्षविशेषे । भव्यवृक्षे ॥

कुसुमशरः । पुं । कामदेवे ॥

कुसुमाकरः । पुं । वसन्तर्त्तौ ॥

कुसुमाढ्यः । त्रि । पुष्पयुक्ते ॥ इति ॥

कुसुमागमः । पुं । वसन्ते ॥

कुसुमाञ्जनम् । न । पुष्पाकाररीतिभवजसम्भवेऽञ्जने । पौष्पके । रीतिपुष्पे ॥

कुसुमाञ्जलिः । पुं । पुष्पाञ्जलौ ॥ उदयनाचार्यकृतग्रन्थविशेषे ॥

कुसुमात्मकम् । न । कुङ्कुमे । घुसृणे ॥

कुसुमाधिपः । पुं ।
कुसुमाधिराट् । पुं । } चम्पकवृक्षे ॥ हेमपुष्पके ॥

कुसुमायुधः । पुं । कामदेवे ॥

कुसुमालः । पुं । चौरे । तस्करे ॥

कुसुमासवम् । न । मधुनि ॥

कुसुमेषुः । पुं । पुष्पबाणे । कामदेवे ॥ कुसुमानि इषवो यस्य ॥

कुसुमोच्चयः । पुं । गुच्छे । स्तवके ॥

कुसुम्भः । पुं । कमण्डलौ ॥ महारजने । न । शातकुम्भे । स्वर्णे ॥ कसुंभा इति प्रसिद्धे । महारजनपुष्पे । कमलोत्तरे । वह्निशिखे ॥ अस्य गुणा यथा । कुसुम्भं वातलं कृच्छ्ररक्तपित्तकफापहमिति ॥ कुषुम्भ इत्यनेन वा ॥ कुषुभ क्षेपे । कण्ड्वादिः । पचाद्यच् । हलश्चेति घ-ञ्वा । पृ० ॥ कुस्यतिवा । कुस० । कुसेरुम्भोमेदेता इति उम्भ प्रत्ययः । वा कुलभान्नगुणः ॥

कुसुम्भतैलम् । न । कुसुम्भस्नेहे ॥ स्नेहे तैलञ्च ॥ कुसुम्भतैलमम्लं स्याद्गुष्णं गुरु विदाहि च । चक्षुर्भ्यामहितं बल्यं रक्तपित्त कफप्रदम् ॥

कुसुम्भबीजम् । न । वरटाख्याम् । वरड करड इतिच भाभाषा ॥

कुस्तुः । पुं । भिक्षुसुते । गगडूमदे ॥

कुस्तिः । स्त्री । माध्ये ॥ इन्द्रजाले ॥ कुत्सिता स्तुतिः । हृगतौ । क्तिन् । कुगतीति समासः ॥

कुस्तुभः । पुं । समुद्रे ॥ कु ईषत् कुसुभुवं वा । स्तुभ्नोति । स्तुन्भु सैाषः । मू० कः । अचि नलोपोगस्यात् ॥ विष्णौ ॥

कुस्तुम्बरी । स्त्री । धन्याके ॥ इत्यम रटीकायांभरतः ॥

कुस्तुम्बुरु । न । धन्याके ॥ कुत्सितं तु म्बति । तुबिअर्दने । बाहुलकात् कुस्तुम्बुरु खिजातिरिति निर्देशाद् उ कमत्ययःसुटच ॥

कुहः । अ । कुत्रार्थे ॥ कुत्र इत्र ॥

कुहः । पुं । कुबेरे । यक्षराजि ॥

कुहकम् । न । इन्द्रजाले । मायायाम् । त्रि । दाण्डाजिनिके । ध्वंसके । मायिनि । धूर्त्ते ॥ कुहयते । कुह विस्मापने । बी० कुन् ॥

कुहकजीवी । त्रि । मायाजीविनि । बाजीगर इतिभाषा ॥

कुहकस्वनः । पुं ।
कुहकस्वरः । पुं । } कुक्कुटे । ताम्रचूडे ॥

कुहकः । पुं । तालप्रभेदे ॥ यथा । द्रुतद्वन्द्वं लघुद्वन्द्वं ताले कुहकसंज्ञकेइति ॥

कुहनः । पुं । मूषिके ॥ सर्पे ॥ न । स्तुद्राण्डवि० ॥ काचभाजने ॥ त्रि । ईर्ष्यालौ ॥

कुहना । स्त्री । दम्भचर्यायाम् । दम्भे

नकृतध्यानमौनादौ ॥ अर्थलिप्स यामिथ्याधर्माश्रयणे ॥ कुहवि॰चु॰ अदन्तः । प्यासश्रन्योयुच ॥

कुहनिका । स्त्री । कुहनायाम् ॥

कुहरः । पु । नागविशेषे ॥ न । गह्वरे ॥ शुषिरे ॥ छिद्रे ॥ कर्णे ॥ कण्ठे ॥ कण्ठशब्दे ॥ समीपे ॥ कुंहरति । हरतेरनुद्यमनेऽच् ॥ यद्वा । कुहवि स्मापने । इगुपधत्वात्कः । कुहंराति । रा॰ । आतश्चोपसर्गे कः ॥

कुहरितम् । न । पिकालापे ॥ रतध्वनौ ॥ रटिते ॥ त्रि । कृतच्छिद्रे ॥

कुहलि. । पुं । पूगपुष्पिकायाम् । पान इतिभाषा ॥

कुहा । स्त्री । कुज्झटिकायाम् ॥ कटुकायाम् ॥

कुहु. । स्त्री । कुह्वाम् ॥ कुहयति । कुहविस्मापने । स॰कुः ॥

कुहूः । स्त्री । नष्टेन्दुकलायाममायाम् । उदयेऽमायोगाद्दृष्टचन्द्रकलाऽमा कुहूपदवाच्या ॥ ग्रहादुहिलिभि ॥ कुहयति । कुहवि॰ ॥ ह्वतिगृध्योः कूरिति कूप्रत्यये बाहुलकादिह्वापि ॥

कुहूकण्ठ । पुं । } कोकिले । पिके ॥
कुहूमुख । पुं । } कोयल इतिभाषा ।
कुहूरव । पु । }

कुहूलम् । न । सशल्योर्ध्वरन्ध्रे ॥

कुहेडिका । स्त्री । } कुज्झटिकायाम् ॥
कुहेडी । स्त्री । }

कुहेलिका । स्त्री । कुज्झट्याम् । धूमिकायाम् । नभोरेणौ ॥

कुह्वानः । पु । सुतसिलशब्दे ॥

कूः । स्त्री । पिशाच्याम् ॥

कूकुदः । त्रि । सत्कृत्यालङ्कृतकन्याप्रदातरि ॥ सत्कृत्यालङ्कृताङ्कन्यां यो ददाति स कूकुदः ॥ कोकति । कुकआदाने । इगुपधेतिकः । पृ॰॥ यद्वा । कवनं कू. । कूङ्शब्दे । तु॰ । सं॰ । कुश शब्दस्य कु. भूः कीर्त्तिभूमिरितियावत् । कूकुद्ददाति । आतोऽनुपेति सुपीति योगविभागात्कः ॥

कूच. । पुं । कुचे । स्तने ॥ कवते । कुङ॰ । कुवश्चट्दीर्घश्च ॥

कूचिका । स्त्री । } तूलिकायाम् । चित्रलेखनिकायाम् ॥ टिड्ढाणञिति ङीप् ॥
कूची । स्त्री । }

कूजनम् । न । कूजने ॥

कूजितम् । न । रुते । पक्षिध्वनौ ।

कूट । पु । अगस्त्यमुनौ ॥ पु । स्त्री । गृहे ॥ पुं । न । निश्चले ॥ राशौ । धान्यादिपुञ्जे ॥ अयोघने ॥ लोहमुद्गरे ॥ दम्भे ॥ मायायाम् । विपरीतदर्शने । यथार्थवस्त्वाच्छादनेना ऽ

ऽयथार्थवस्तुप्रकाशने ॥ अद्रिशृङ्गे ॥ तुच्छे ॥ सीरावयवे । फालाधारे ॥ यन्त्रे । मृगबन्धनवि° ॥ अनृते ॥ भग्नशृङ्गपशौ ॥ पूर्द्वारि । कूटयते । कूटआप्रदाने । पचाद्यच् ॥ कूटयति वा । कूटदाहे । अच् ॥ कूट्यतेवा । घञ् ॥

कूटकः । पुं । गन्धकुथाम् । मुरानाम गन्धद्रव्ये ॥ कवर्याम् । पर्वत विशेषे ॥ न । फाले ॥ कूटयति । कूटच्छेदने । पचाद्यच् । स्वा° कन् ॥

कूटकारकः । पुं । साक्षिवादे मृषावादस्यकर्त्तरि ॥

कूटकार्षापणः । पुं । मिथ्याभूतरौप्यादिमुद्रायाम् । कृत्रिमरौप्यादौ ॥

कूटकृत् । पुं । शिवे ॥ कायस्थे ॥ त्रि । कितवे ॥

कूटजः । पुं । कुटजवृक्षे ॥

कूटपालकः । पुं । पित्तज्वरे ॥ कुलालस्यपचने ॥

कूटपूरी । स्त्री । करायिकायाम् ॥

कूटपूर्वः । पुं । हस्तिनश्चिदोषजेज्वरे ॥ मायिनि ॥

कूटयन्त्रम् । न । उन्माथे । आमिषन्यासमृग पक्षिबन्धनार्थंछन्नपातितयन्त्रे । फन्दाफाँद इतिजाल इतिच भाषा ॥ कूटस्वरूपं यन्त्रम् ।

कूटशाल्मलिः । पुं । शाल्मलि विशेषे । कृष्णशाल्मल्याम् । रोचने ॥ कूटशाल्मलिकस्तिक्तः कटुकः कफवातनुत् । भेद्युष्णःश्रीहजठरयकृद्गुल्म विषापहः ॥ भूतनाश विबन्धास्रमेदःशूलकफापहः ॥ कूटशाल्मलिस्त्रि ॥

कूटसङ्क्रान्तिः । स्त्री । अर्द्धरात्रातीते सूर्यस्यराश्यन्तरगमने ॥ यथा । अर्द्धरात्रेव्यतीतेतु यदासङ्क्रमते रविः । साक्षेया कूटसंक्रान्ति र्मुनिभिः परिकीर्त्तिता इति ॥

कूटसाक्षी । त्रि । मिथ्यासाक्षिणि । साक्ष्ये मिथ्याभिधायिनि ॥

कूटस्थः । त्रि । कालमभिव्याप्यस्थिते । एकरूपतयाकालव्यापिनि । एकेनैव स्वभावेननिरवधिकालस्थः व्यापके आकाशादौ ॥ अज्ञानतत्कार्याधिष्ठाने ॥ विषयसन्निधावपि विकारशून्ये ॥ अधिष्ठानतयादेहद्वयावच्छिन्नचेतनः कूटवन्निर्विकारेणस्थितः कूटस्थउच्यते ॥ न । ब्रह्मणि । परिणामरहिते ॥ कूटोनिश्चलस्तिष्ठति । यद्वा । कूटमयोघनस्तद्वत्तिष्ठति । संसर्गिनाशेपिस्वयमनष्ट इत्यर्थः ॥ ष्ठा० ॥ सुपिस्थ इति कः ॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥

कूटागारम् । न । चन्द्रशालिकायाम् । वलभ्याम् ॥ सर्पागारे ॥ स्त्रीणां क्रीडागृहे ॥

कूटायुधम् । न । बहिः काष्ठादिमये ऽन्तर्गुप्तनिशितशस्त्रे ॥ अधर्मप्रधानैः प्राणिभिः कृतव्यवहाराणि तानिव कूपकाणि सन्ति ॥

कूटार्थभाषिता । स्त्री । प्रबन्धकल्पनायाम् । कथायाम् । रूपकथा इति गौडभाषा ॥ प्रहेलिकायाम् ॥

कूणिः । त्रि । रोगादिनाकुञ्चितकरे । कुकरे ॥

कूणिका । स्त्री । शृङ्गे ॥ कलिकायाम् । वीणामूलस्थवंशशलाकायाम् ॥

कूणितः । त्रि । मुद्रिते । संकुचिते ॥

कूदरः । पुं । जातिविशेषे ॥ यथा ब्राह्मण्यां क्षत्रियवीर्येण स्तेनः प्रथमयासरे । कुत्सिते चोदरे जातः कूदरस्तेन कीर्त्तितः ॥ तदशौचं विप्रतुल्यं पतितो युतदोषतः । सद्यः कोटकसंसर्गादधमो जगतीतले ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

कूपः । पुं । स्वनामाख्याते जलाधारे । उदपाने ॥ परिमाणम् । यथा । भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः । बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते ॥ गर्त्ते ॥ गुणवृक्षे ॥ सन्माने ॥ कूपके । कुप्पा इति भाषा ॥ कुर्वन्ति मण्डूका अस्मिन् कु शब्दे । कुपुभ्यामिति पोदीर्घश्च ॥ कुत्सिताः ईपदा आपोऽत्र ॥ कुपूरित्थिः । उदनोरित्यत्र दीर्घनिर्देशादन्यत्राप्यूदिति वा ॥

कूपकः । पुं । गुणवृक्षे । नौमध्यस्थरज्जुबन्धनकाष्ठे । गुणधरा मास्तूल इति भाषा ॥ कुप्पा इति भाषा प्रसिद्धे तैलादिपात्रे ॥ कुकुन्दरे ॥ उदपाने ॥ नद्यादौ स्रोतोऽधकारिणि तरुशिलादौ ॥ विदारके । शुष्कनद्यादौ जलार्थं कृतगर्त्ते ॥ कुत्सितः कूपः । कुत्सिते इति कः । कूपस्य प्रतिकृतिरिति वा । इवे प्रतिकृताविति कन् ॥ कूपे कायतीति वा । कै० । सुपीति कः ॥

कूपखानकः । पुं । कूपस्य खनक चौरे ॥

कूपत् । अ । प्रश्ने ॥ प्रशंसायाम् ॥

कूपाङ्कः । पुं । } रोमाञ्चे ।
कूपाङ्गः । पुं । }

कूपारः । पुं । अकूपारे ॥

कूपिका । स्त्री । जलान्तर्गते शैले । जलमध्यस्थितपर्वतादौ ॥

कूपी । स्त्री । पात्रविशेषे ॥

कूम्मम् । न । सरोवरे ॥

कूरः। पुं। न। अन्ने। भक्ते।
कूर्च्चः। पुं। न। भ्रुवोर्मध्ये॥ कत्थने॥ श्मश्रुणि॥ कैतवे। दम्भे॥ मयूरपुच्छमुष्टौ। मुट्ठा इति भाषा॥ कुशमुष्ट्याम्॥ अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे॥ पुं। शीर्षे॥ आसनविशेषे॥ न। सन्तापकर्षणार्थं सुशीरादिनिर्मिते सुष्टिमाने॥ यथा च। नरसिंहपुराणम्। ततः समर्पयेत् कूर्च्चं सुशीरादिविनिर्मितम्। सन्तापकर्षणार्थं श्रीमन्मूर्त्त्यङ्गसन्धितः इति॥ विष्णुधर्मोत्तरे। पितृशरीरकूर्च्चकं दत्त्वा सर्वपापैः प्रमुच्यते। दत्त्वा गोवालजं कूर्च्चं सर्वान् तापान् व्यपोहति॥ दत्त्वा चामरजं कूर्च्चं नियमं मोक्षमुत्तमम्। इति हरिभक्तिविलासस्य ६ विलासे ४८ श्लोकः॥ कुरति। कूर्यते वा। कुरशब्दे न वा॰ चट् प्रत्ययः॥

कूर्च्चशिरः। न। अङ्घ्रिस्कन्धे। गुडमुडा इति गौड भाषा॥

कूर्च्चशीर्षः। पुं। अष्टवर्गमध्यपठिते जीवकौषधौ। मधुरके॥ नारिकेरे॥ कूर्च्चश्मश्रुतदच्छीर्षमस्य॥

कूर्च्चशीर्षकः। पुं। जीवके॥ नारिकेरे॥

कूर्च्चशेखरः। पुं। नारिकेरे॥

कूर्च्चिका। स्त्री। क्षीरविकृतौ। क्षीरसा इति गौडभाषा॥ सा द्विधा। यथा। दध्नासह च यत् पक्वं क्षीरं सा दधिकूर्च्चिका। तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्च्चिका॥ सूचिकायाम्॥ तूलिकायाम्। आलेख्यकूर्च्चिकायाम्। तुली इति गौडभाषा॥ कुञ्चले॥ कुञ्चिकायाम्। कपाटोद्घट्टने॥ द्रव्यमार्जनसाधने॥ तृणगुच्छे॥ कूर्च्चति। कूर्च्चविकारे स्वादेः कूर्त्ति ग्रणात्वाद्रोधः। संचार्यागुल। कूर्च्चः श्मश्रुवादिरूस्यास्या। अर्त्तइनि ठनाविति ठन्॥

कूर्द्दनम्। न। क्रीडायाम्। खेलायाम्॥ कुर्द्द क्रीडायाम्। ल्युट्। वेदम् धायादीर्घः इकः॥

कूर्द्दनी। स्त्री। चैत्राख्याम्। मधूत्सवे॥

कूर्पम्। न। भ्रुवोर्मध्ये॥ इति हेम॥

कूर्परः। पुं। कुर्परे॥

कूर्पासः। पुं। अर्द्धचोलके॥ कूर्परः कफोणि अ... स्यते। च कुर्परे आस्ते वा। अमुचेपसे आसउपवेशने वा। घञ्। पृ॰॥

कूर्पासकः। पुं। चोले। स्त्रीणामाप्रपदीनकञ्चुके। स्त्रीणां कञ्चुलिकायाम्॥ स्वार्थे कन्॥

कूर्म्मः। पुं। उन्मीलननिमीलनकरे वायुरस्थवायुविशेषे॥ उन्मीलने स्मृतः कूर्म्मो भिन्नाञ्जनसमप्रभः इत्यु

कूर्म्मः

। मध्ये सारस्वता मत्स्याः शूरसेनाः समाथुराः । पञ्चालसाल्वमाण्डव्य कुरुक्षेत्रजाङ्गलाः । मरुनैमिषविन्ध्याद्रिपाण्ड्यघोषाः सयामुनाः । काश्यपेयाध्याप्रयागगया वैदेहकादयः ॥ * ॥ तत्रपूर्वस्य देशाः । प्राच्यां मागधशोणौच वारेन्द्री गौडराढकाः । वर्द्धमानतमोलिप्तप्राग्ज्योतिषोदयादयः ॥ * ॥ तत्राग्नेयकोणस्य देशाः । आग्नेय्या मङ्गवङ्गोपवङ्गचैपुरकोसलाः । कलिङ्गौड्राम्ध्रकिष्किन्धाविदर्भशवरादयः ॥ * ॥ तत्र दक्षिणस्य देशाः । दक्षिणे ऽवन्तिमाहेन्द्रमलयाः ऋष्यमूककाः । चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः । कावेरीताम्रपर्णीलङ्कात्रिकूटकादयः ॥ * ॥ तत्र नैरृतकोणस्य देशाः । नैरृते द्रविडानर्त्तमहाराष्ट्रस्वरैवताः । यवनः पह्लवः सिन्धुः पारसीकादयोमताः ॥ * ॥ तत्र पश्चिमस्य देशाः । पश्चिमे हैहयास्ताद्रिम्लेच्छवासमकादयः ॥ * ॥ तत्र वायुकोणस्य देशाः । वायव्ये गुर्जराटसनाटजालन्धरादयः ॥ * ॥ तत्रोत्तरस्य देशाः । उत्तरे चीननेपालहूणकैकेयमन्दराः । गान्धारहिमवत्क्रौञ्चगन्धमादनमालवाः ॥ कैलासमद्रकाश्मीरम्लेच्छदेशाः खसादयः ॥ * ॥ तत्रेशानकोणस्य देशाः । ऐशाने स्वर्णभौमस्त्रगङ्गाद्वारस्फटिकवाल्हीकब्रह्मपुरकिरातदरदादयः ॥ इति ज्योतिस्तत्त्वम् ॥ * ॥ अपि च । कर्म्मोक्ते कमठाकारचक्रे । कूर्म्मचक्रं मविचार्य्य यः कुर्य्याज्जपयज्ञकम् । तस्य यज्ञफलं नास्ति सर्व्वानर्थाय कल्प्यते ॥ इति तन्त्रशास्त्रम् ॥

कूर्म्मपुराणम्, क्ली, कौर्म्मं सप्तदशसहस्रश्लोकात्मके महापुराणे । यथा । सप्तदशसहस्रञ्च पुराणं कूर्म्मभाषितमिति ॥

कूर्म्मपृष्ठः, पुं, अश्वानवृक्षः । कमठपृष्ठदेशे । न, भरावे । न, कूर्म्मपृष्ठकसरा, न, शरावे, सकोरा इति भाषा ॥

कूर्म्मराजः, पुं, कच्छपराजे । अकूपारे । आदिकच्छपे विष्णोरवतारे । यथा । पृथ्वि स्थिरा भव भुजङ्गम धारयैनां त्वं कूर्म्मराज तदिदं द्वितयं दधीथाः । दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां मार्य्यः करोतु हरकार्म्मुकमाततज्यमिति हनूमन्नाटकम् ॥

कूलम्, न, रोधसि । तीरे । तटे । नद्यादिजलसमीपस्थाने । इत्यमरः ॥

प्रतिरूपे । द्रुमाश्रये ॥ कृकंशिरोग्रीवा कण्ठञ्च लासयति । लसश्लिष्ट योगे । चु॰ कर्मण्यण् ॥

कृकवाकुः । पुं । कुक्कुटे ॥ मयूरे ॥ सरटे ॥ कृकेन गलेनवक्ति । वचपरिभाषणे । कृकेवचः कश्चेतिञ्जुण ॥

कृकवाकुध्वजः । पुं । कार्त्तिकेये । स्कन्दे ॥ कृकवाकुर्ध्वजोऽस्य ॥

कृकाटिका । स्त्री । घाटायाम् । ग्रीवायामुन्नतभागे ॥ ग्रीवापश्चाद्भागे ॥ कृकम् कण्ठम् अटति । अटगतौ । इन् । स्वा॰ कन् ॥

कृच्छ्रम् । न । आभीले । कष्टे । दुःखतत्कारणयोः ॥ अंहसि । पापे ॥ सान्तपनादिव्रते ॥ मूत्रकृच्छ्ररोगे ॥ त्रि । तद्वति ॥ स्मृतौ व्रतेपुल्लिङ्गोप्ययम् ॥ कृन्तन्ति अनेनवा । कृतीछेदने । कृतेश्छक्रूचेतिरक् प्रत्ययः छश्चान्त्यस्यादेशः ॥

कृच्छ्रसान्तपनम् । न । व्रतविशेषे ॥ यथा गोमूत्रं गोमयं चीरं दधि सर्पिःकुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतमिति ॥ गोमूत्रादीन्येकीकृत्य एकस्मिन् दिने भक्षयेत् तद्दिनेनान्यत् किञ्चिद्द्यात् । अपरदिने चोपवास इत्यर्थः ॥ सम्यक् तपनमत्र । प्रज्ञाद्यण् यद्वा । सन्तपति । ल्युः । तस्येदम् कर्म । अण् । कृच्छ्रञ्चतत्सान्तपनञ्च ॥

कृच्छ्रातिकृच्छ्रः । पुं । व्रतविशेषे ॥ यथा इर्वशिष्ठ. । अवभक्षस्तृतीयः कृच्छ्रातिकृच्छ्रोयावत् सकृदादीत । यावदेकवारमुदकं हस्तेन ग्रहीतुंशक्नोति तावन्नवसुदिवसेषुभक्षयित्वा व्यहमुपवासः कृच्छ्रातिकृच्छ्रः ॥ सुमन्तुर्यथा । द्वादशरात्रंनिराहारःस कृच्छ्रातिकृच्छ्रः । एतत् कृच्छ्रातिकृच्छ्रदयं द्वादशाहसाध्यमशक्तविषयम् ॥ ब्रह्मपुराणम् । चरेत् कृच्छ्रातिकृच्छ्रञ्च पिबेत्तोयञ्चशीतलम् । एकविंशतिरात्रन्तुकाले ष्वेतेषु संयतः ॥ कालेषु प्रातःसायंमध्याह्नेष्वित्यर्थः । इति प्रायश्चित्तविवेकः ॥

कृच्छ्रारिः । पुं । विल्वान्तरवृक्षे ॥

कृच्छ्रार्द्धः । पुं । दिनषट्कसाध्यव्रतविशेषे ॥ यथाह्यापस्तम्बः । सायम्प्रातस्तथैवैकंदिनद्वयमयाचितम् । दिनद्वयञ्चनाश्नीयात् कृच्छ्रार्द्धःसोभिधीयते ॥ इति प्रायश्चित्तविवेकः ॥

कृणुः । पुं । चित्रकारजातौ । चित्रेरा इतिभाषा ॥ इति त्रिकाण्डशेषः ॥

कृतम् । न । सत्ययुगे ॥ यथा । दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितमिति । मनुश्च । चत्वार्याहुःसहस्राणि

मर्षाणान्तु कृतं युगम् । तस्य तावच्छती सन्ध्यासन्ध्यांशश्च तथाविधः ॥ सन्ध्यासन्ध्यांशयो रन्तर्यं कालो मुनिसत्तम । युगाख्यः स तु विज्ञेय कृतत्रेतादिसंज्ञक इति ॥ पर्याप्ते । अलमर्थे ॥ फले ॥ त्रि । विहिते ॥ हिंसिते ॥ —अकारि । डुकृञ्० । क्तः ॥ निष्पादिते ॥ पुं । कृताख्ये ॥

कृतकम् । क्ली । विड्लवणे ॥ त्रि । कृत्रिमे ॥ कृन्तति । कृतीच्छेदने । कृणत्ति वा । कृती वेष्टने । वा० कुन् ॥

कृतकर्म्मा । त्रि । निपुणे । प्रवीणे । शिक्षिते ॥ पुण्यवति ॥ कृतङ्कर्म तत्त्वदर्शाश्रमाभिमाननिमित्त मन्तःकरणशोधकं येन ॥

कृतकृत्यः । त्रि । कृतार्थे । निष्पन्नकर्म्मणि । सम । सकार्ये ॥ धन्ये ॥ विदुषि ॥ कृत कृत्यंवर्णाश्रमोचितमन्तःकरणशोधकं कर्त्तव्यं येन नपुनः कृत्यान्तरं यस्यास्ति सः । कृतकृत्य स्तु सन्त्यस्य स्वात्ममात्ररति र्भवेत् ॥ कृताप्याद्रिमुक्त ॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवाऽस्ति किञ्चित्कर्त्तव्यमस्तिचेन्नस तत्त्ववित् ॥ अकृत कृत्यो हि मृत्योर्बिभेति । यथाहुः ॥ प्रायेणाकृतकृत्यत्वान् मृत्योरुद्विजते जन इति ॥



कृतकोटिः । पुं । काश्यपमुनौ ॥ उपवर्षमुनौ ॥ इतित्रिकाण्डशेषः ॥

कृतक्रियः । त्रि । कृतकार्ये ॥

कृतक्षणः । त्रि । लब्धावकाशे ॥

कृतघ्नः । त्रि । कृतघ्नकारि । कृतोपकारस्यापकारे प्रवर्त्तमाने ॥ कृतमुपकारमपकाराचरणेन यो विनाशयति सकृतघ्नइत्यर्थः । सचानेकविध प्रोक्तः पुराणे स्कान्दसंज्ञके । यथा । भर्त्तृपिण्डापहर्त्ता च पितृपिण्डापहारकः । यस्माद् गृहीत्वा विद्याञ्च दक्षिणां न प्रयच्छति ॥ पुमान् स्त्रिय श्च यो द्वेष्टि यस्तान् घातयेन्नरः । कृतस्य दोषं वदति सकामान् नकरोति यः ॥ नस्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत् । सर्वांस्तान् ऋषिभिः सार्द्धं कृतघ्नानब्रवीन्मनु रिति ॥ तस्य प्रायश्चित्तमपि नास्ति । यथा । ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिरिति ॥

कृतच्छिद्रा । स्त्री । कोषातकीलतायाम् ॥

कृतज्ञः । पुं । हरौ ॥ कृतं कार्यं जगद्रूपम् । जानातीति ज्ञः आत्मा । कृतञ्चासौ ज्ञश्चेति तथा । यद्वा । कृतं जगत् ज्ञः आत्मा यस्य । प्राणिनां पुण्यपाप

कोकिलोत्सवः । पुं । आम्रवृक्षे ॥

कोङ्कः । पुं । देशविशेषे ॥

कोङ्कणः । पुं । कोंकन इतिप्रसिद्धे देशे ॥ अथाभ्यङ्गं समारभ्य कोटिदेशस्य मध्यगे । समुद्रप्रान्तदेशोऽपि कोङ्कणः परिकीर्त्तितः ॥ न । अस्त्रभेदे ॥

कोङ्कणासुतः । पुं । परशुरामे ॥

कोचः । पुं । सङ्करजातिविशेषे ॥ स तु मांसच्छेदिगर्भे तीवरस्योरसजातः । इतिब्रह्मवैवर्त्तपुराणम् ॥

कोजागरः । पुं । आश्विनपौर्णमास्याम् । द्यूतपूर्णिमायाम् । कौमुद्याम् ॥

कोटः । पुं । दुर्गे । कुटे । गढ इति भाषा ॥ कुटनम् । कुट० । भावे घञ् ॥

कोटकः । पुं । घरामि राज इति भाषा प्रसिद्धे गृहकारके ॥ सतु कुमकार्या गर्भे अट्टालिकाकारस्योरसजातः ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

कोटरः । पुं । न । वृक्षस्थितगह्वरे । निष्कुहे ॥ कोटं राति । रा० । आत इतिकः ॥

कोटवी । स्त्री । चण्डिकायाम् । दुर्गायाम् ॥ नग्निकायाम् । विवसनायां स्त्रियाम् ॥ कोटं वाति । वा० । आतो नुपेतिकः ॥ गौ० ङीष् ॥



कोटिः । स्त्री । धनुषोऽग्रभागे ॥ अस्त्रौ । अस्त्रादेरग्रभागे ॥ परीक्षकपरिकल्पितनिर्णयनिरूपणीये । प्रासादुकशास्त्रनिर्णयान्ते ॥ उत्कर्षे । प्रकर्षे ॥ दशप्रयुते । शतलक्षसङ्ख्यायाम् । १०००००० ॥ पिडङ्गशाक इति गौड प्रसिद्ध शाके । पृक्कायाम् ॥ कूटयते ऽनया वा । कूटआमदाने । चु० । अचइः ॥ कोटयति कोट्यते वा । कुटकौटिल्ये । इः ॥ कुष्यते वा । इनजादिभ्यइतीञ् । सर्वधातुभ्यइतीन् वा । वा० गुणः ॥

कोटिकः । पुं । शक्रगोपकीटे ॥

कोटिजित् । पु । कालिदासे । मेधारुद्रे ॥

कोटिपात्रः । पुं । केनिपातके । अरित्रे इति हेमचन्द्रः ॥

कोटिरः । पुं । नकुले ॥ शक्रे । इन्द्रे ॥ इन्द्रगोपकीटे ॥

कोटिवर्षम् । न । वाणासुरपुरे ॥

कोटिवर्षा । स्त्री । पिडिङ्गशाक इति गौडप्रसिद्ध पृक्कायाम् । आसारक इतिभाषा ॥ कोटिभिरग्रैर्वर्षति । म पु । वृष सेचने । अच् ॥

कोटिशः । पुं । लोष्टभेदने । हेंगा इति भाषा ॥ कोटिना अग्रेण श्यति । शो तनूकरणे । सुपीतिकः ॥ कोटिर

स्यादीति वा । लोमादित्वात् शः ॥

कोटिशः । त्रि । कोटीकोटौ ॥

कोटीरः । पुं । किरीटे ॥ जटायाम् ॥

कोटीवर्षम् । न । वाणासुरपुरे ॥

कोटीशः । पुं । कोटिशे ॥

कोट्टः । पुं । पुरस्थ दुर्गे । राजधान्याम् ॥ न । दुर्गे । किल्ला गढ इतिभाषा ॥ कुट्टच्छेदनभर्त्सनयोः । अच् ॥

कोट्टवी । स्त्री । मुक्तकेश्याम् । नग्नायां स्त्रियि ॥ याश्चवासामुक्तकेशी कोट्टवीनग्निकाचसेतिजटाधरः ॥ दुर्गायाम् ॥ वाणासुरमातरि ॥ कुट्टनम् । कुट्ट । घञ् । वा । गुणाभावः । कोट्टंवाति । वा । आत इति कः । गौरादित्वात् ङीप् ॥

कोट्टवीपुरम् । न । वाणासुरपुरे ॥ कोट्टव्याःपुरम् ॥

कोट्टारः । पुं । नागरे ॥ कूपे ॥ पुष्करिण्याः पाटके ॥ कुट्यते । कुट्टच्छेदने प्रतापनेवा । घा । आरन् गुणश्च ॥

कोठः । पुं । चक्राकारे कुष्ठरोगे । मण्डलके । त्वग्दोषे ॥ यथाच चरणम् । असम्यग्वमनोदीर्णपित्तश्लेष्मान्निग्रहैः । मण्डलानि सकण्डूनि रागवन्तिबहूनि च ॥ उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयतेइति ॥ अन्यच्च । वरटीदष्टनिकाशः कफकोपात् लोहितोऽसकफपित्तात् । क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैरिति ॥ कुण्ठति । कुठिप्रतिघाते । अच् । आगमशास्त्रस्यानित्यत्वान्ननुम् ॥

कोठरः । पुं । अङ्कोटवृक्षे ॥

कोठरपुष्पी । स्त्री । वृद्धदारके ॥

कोणः । पुं । वाद्यभेदे ॥ वीणादीनां वादने । येन धनुषाकृतिना वीणादिर्वाद्यते तस्मिन् । नेपालभाषया गज्जा इति ख्याते वाद्यवादनकाष्ठे । बाजानेकीलकडी इति भाषा ॥ गृहादीनामेकदेशे । कोना इतिभाषा ॥ अस्रौ । अस्त्रादीनामग्रभागे । पाल्याम् ॥ लगुडे ॥ मङ्गलग्रहे । भौमे ॥ द्वयोर्दिशोर्मध्यभागे । विदिशि ॥ लग्नान्नवमपञ्चमयोः ॥ शनौ ॥ कुण्यते ऽनेन । कुणशब्दोपकरणयोः । हलश्चेति घञ् । कुणत्यनेन । कर्तर्यप् ॥

कोणकुणः । पुं । उत्कुणे । उद्दंशे । उडुस खट्मल मङ्कुण इत्यादिभाषाप्रसिद्धे मत्कुणे

कोथः । पुं । कोथ इति गौड भाषा प्रसिद्धे नेत्ररोगविशेषे ॥ त्रि । मथिते ॥ शटिते ॥ यथा । मांसकोथः मांसगलनमिति ॥

कोलम्बकः । पुं । वीणायाः कायेः । तन्त्रीहीने अलाबूदण्डककुभसमुदाये ॥ कोलति । कुल० । बाहुलकाद म्बच् । ततः संज्ञायां कन् । को मुखं मध्यः ॥

कोलवल्ली । स्त्री । वशिरे । करिपिप्पल्याम् । कोलद्रुवल्ली तत्तुल्यरोमत्वात् ॥

कोलवालुकम् । न । कक्कुष्ठे ॥

कोलशिम्बिः । स्त्री । कालकुशीति गौडभाषाप्रसिद्धे लताविशेषे । शूकरपादिकायाम् ॥ कोलशिम्बिः शिमी रुक्षोगुर्व्यथा कफपित्तकृत् । शुक्रविसादकृद्बल्या वृष्यकृद्दृष्टिरुद्गुरुः ॥

कोला । स्त्री । पिप्पल्याम् ॥ चव्यभेषजे ॥ कोलिद्रुमे ॥ सुरथस्य राजधान्यन्तरे ॥ अश्वविशेषे ॥ कोलति । कुल० । ज्वलितीतिणः । पचाद्यच्। टाप् ॥

कोलाञ्चः । पुं । देशविशेषे ॥

कोलापुरम् । न । दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्याः स्थानविशेषे ॥

कोलाविध्वंसी । पुं । कोलावासिनि ॥ कोलां विध्वंसितुं शीलमस्य । विस शब्देन धातोः रन्यार्थं करणम् ॥ पर्वतवासिनि म्लेच्छविशेषे ॥ एवंपालतस्तस्य म्लेच्छाः पर्वतवासिनः । कोलाविध्वंसिनः प्राप्ताः पृथ्वीप्रवेशतत्पराः इति देवीभागवतोक्तेः । अत्र नामैकदेशेनामग्रहणमिति न्यायात् कोलाशब्दः कोलाहल वाचकः । तथा च कोलाहलेनान्यायेनैव मथुरा व्यविध्वंसनशीलाः ननु युद्धनीत्यव लम्बिन इत्यर्थः इति भागवतव्याख्यानेनीलकण्ठोक्तैः ॥ यद्वा । कोलां कांचित् सुरथस्य राजधानीं विध्वंसितुमुपमर्दितुं शीलमस्येति ॥

कोलाहलः । पुं । कलकले । बहुविधदूरगामिशब्दे ॥ कुल० । कोलनं कोलः एकीभावः समाहलति । हल विलेखने । अच् ॥ गिरिविं ॥

कोलिः । पुं । स्त्री बदर्याम् ॥ कोलति । कुल० । इन् ॥

कोली । स्त्री । बदर्याम् । बेर इति प्रसिद्धे वृक्षे ॥ कोलति घनीभवति । कुल० । अच् । गौरा० ङीष् ॥

कोविदः । पुं । धीरे । पण्डिते । विदुषि ॥ विवेककरि ॥ कौति धर्मादि । कुशब्दे । कवते वा । कुङ् शब्दे । विच् । गुणः । कोर्वेदस्य विदः वेत्ता । इगुपधेतिकः ॥ कवि वेदे विदो यस्य वा ॥

कोविदारः । पुं । रक्तकाञ्चनारे । चमरिके । कचनार इति भाषा ॥ को

—नं। कर्पूरसुगन्धद्रव्यविशेषे। क
कोले। कोषे फलमध्ये॥
कोषफला। स्त्री। पीतघोषायाम्॥
कोषवृद्धिः। स्त्री। अण्डवृद्धौ॥ कु
रण्डे॥
कोषशायिका। स्त्री। क्षुरिकायाम्॥
कोषस्थः। पुं। जलचरजीवविशेषा
णाङ्गणे॥ यथा। शम्बूकः शङ्खनकश्चा
पि शुक्तिमत्कश्च कर्कटः। जीवा ए
वंविधाश्चान्ये कोषस्थाः परिकीर्त्ति
ता इति॥ कोषस्था मधुराः स्निग्धाः
पित्तवातहरा हिमाः। वृंहणा बहु
वर्चस्का वृष्या श्च बलवर्द्धना इति॥
कोषातकः। पुं। केशे। क्रोशे। काठे
कोषमतति। अत्। कुन्॥
कोषातकी। स्त्री। श्वेतघोषे। घोषके
ज्योत्स्निकायाम्। पटोल्याम्॥
कोषमतति। अत्। कुन्। गौ
रादित्वान् ङीष्॥
कोषाम्रम्। न। केओडा इति गौड
भाषाप्रसिद्धे फलविशेषे॥ अस्य गुणाः।
कफवायुनाशित्वम् अग्निदीपन
त्वम् मलवद्धताकारित्वञ्चेति॥
कोषी। पुं। आम्रवृक्षे॥
कोषी। स्त्री। पादुकायाम्॥
कोष्ठः। पुं। कुसूले॥ गृहमध्ये॥ कु
क्षौ मध्ये॥ यथा। स्थानान्यामाग्नि

पक्वानां मूत्रस्य रुधिरस्य च। हृदय
कः पुप्फुसश्च कोष्ठ इत्यभिधीयते
॥ इति। त्रि। आत्मीये। निजे॥ कु
ष्यते। कुष्। उषिकुषिगार्त्तिभ्य
स्थन्। इति थन्॥
कोष्ठकः। पुं। पर्वतान्तरे॥
कोष्ठागारम्। न। धान्यादिकोष्ठके।
कोठार इति भाषा॥
कोष्णम्। न। ईषदुष्णे। मन्दोष्णे॥ त्रि
। तद्वति॥ ईषदुष्णं कोष्णम्। ई
षदर्थे इति कादेशः॥
कोसलः। पुं। सरयूतीरनिविष्टे जनप
दविशेषे। अयोध्यानगर्याम्॥ कुस्य
ति। कुस संश्लेषणे। इत्यस्मान्निर्वि
वादः। बाहुलकात् कलप्रत्ययो गु
णश्च॥ यद्वा। कोषु क्ष्मायां सरति ग
च्छति। सलगतौ। पचाद्यच्। पृषो
दरादित्वात् कुशब्दस्य गुणः॥
कोहलः। पुं। वाद्यभेदे॥ नाट्यशा
स्त्रप्रवक्तरि मुनिविशेषे॥ मद्ये इति
हेमचन्द्रः॥
कौकृत्यम्। न। अनुतापे॥ अयुक्त
करणे॥
कौक्कुटिकः। पुं। दाम्भिके॥ अदूरप्रे
रितचक्षुषि। भिक्षौ॥ कुक्कुटीमाया
पादपातश्च। नोपश्यति। संज्ञायां
ललाटकुक्कुट्यौ पश्यतीति ठक्॥ कु

म् पापम्। तत्साधनत्वात् तद्गोप्यत्वात् पुरुषलिङ्ग मपिकौपीनम्। तत् सम्बन्धात् तदाच्छादन मपि कौपीनम्। शालीनकौपीने अधृष्टा कार्ययोरितिसाधु। नानावयवार्थे ऽतीवाभिनिवेष्टव्यम्। रूढिमत्त्वात्॥

कौमारम्। न। जन्मावधिपञ्चमाब्दपर्य्यन्तायामवस्थायाम्। पञ्चमाब्दमभिव्याप्यावस्थायाम्॥ कौमारम्पञ्चमाब्दान्तमित्युक्तः॥ कुमारस्यकर्म भावोवा। वयोवचनत्वादण्॥ तन्त्रमते षोडशवर्षपरिमितायामवस्थायाम्॥ जातः कुंपृथिवीं मह्यां मारयेत् तत्कुमारकः। इति प्रमाणतो विद्धि कौमारं प्राग्भवाब्दतः॥ तद्वति। पुं। स्त्री॥ पुं। युवराजे। कंवरइति भाषा॥ सर्गविशेषे॥ पत्यौ॥ अपूर्वपतिङ् कुमारीं पतिरुपपन्नः। कौमारापूर्ववचन इतिद्वितीयान्तादुपयमनकर्त्तर्य्यण् प्रत्ययेनसाधुः॥

कौमारभृत्यम्। न। वैद्यविद्याङ्गविशेषे॥ यथा। कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थाना ञ्च व्याधीना मुपशमनार्थंयत् तत्॥

कौमारी। स्त्री। मातृकाविशेषे। कार्त्तिकेय शक्तौ॥ वाराहीकन्दे॥ भार्य्यायाम्॥ अपूर्वपतिःकुमारी पतिमुपपन्ना। कौमारापूर्व वचनेइति प्रथमान्तात् स्वार्थेऽण् प्रत्ययेनसाधुः॥

कौमुदः। पुं। कार्त्तिकमासे॥

कौमुदिका। स्त्री। उमासखीविशेषे॥

कौमुदी। स्त्री। ज्योत्स्नायाम्। प्रकाशिकायाम्॥ आश्वयुज्यां पूर्णिमायाम्॥ कुमुदानामियम्। तस्येदमित्यणिटिड्ढेतिङीप्॥ कार्त्तिक्याम्। कार्त्तिकोत्सवे॥ कुशब्देन मही ज्ञेया मुदहर्षे ततोद्वयम्। धातुज्ञैर्नियमैश्चैव तेन सा कौमुदीस्मृता॥ कौ मोदन्ते जना यस्यां नानाभावैः परस्परम्। हृष्टा स्तुष्टाः सुखापन्ना स्तेन सा कौमुदी स्मृता॥

कौमुदीचारः। पुं। न। कोजागरपूर्णिमायाम्। शारद्याम्॥

कौमुदीपतिः। पुं। इन्दौ॥ कौमुद्याः पतिः॥

कौमुदीवृक्षः। पुं। दीपवृक्षे। दीपट इति भाषा॥

कौमोदकी। स्त्री। विष्णोर्गदायाम्॥ कोः पृथिव्याः मोदकः पालकत्वात् कुमोदको विष्णुः तस्येयम्। अण्। ङीप्॥

कौमोदी । स्त्री । कौमोदक्याम् ॥

कौरवः । पुं । कुरुराजसन्ततौ । धृतराष्ट्रादिषु । पाण्डवेषु च ॥ पाण्डोः कुरुवंशजत्वात् । कुरोरयम् । कच्छादिभ्यश्चेत्यण् ॥

कौरवकः । पुं । कौरवे ॥ कुरुषु भवः कुरोरयं वा । विभाषा कुरुयुगन्धराभ्यामिति वुञ् ॥

कौरव्यः । पुं । कौरवे ॥ कुरोरपत्ये । कौरव्यः कौरव्यौ कौरव्याः ब्राह्मणाः । कुर्वादिभ्यो ण्यः ॥ क्षत्रिये तु । कुरुनादिभ्यो ण्य इति ण्ये कृते तद्राजस्य बहुषु तेनैवास्त्रियामिति बहुत्वे लुकि कौरव्यः कौरव्यौ कुरवः इति बोध्यम् ॥

कौर्प्यः । पुं ।
कौर्प्याख्यः । पुं । } वृश्चिकराशौ ॥

कौलः । त्रि । आन्वयिके । सत्कुलोत्पन्ने । कुलीने ॥ दिव्यवीरपशुभावान्तर्गते दिव्यभावरते । कुलाचाररते । ब्रह्मविदि ॥ यथा । दिव्यभावरतः कौलः सर्वत्र समदर्शनः इति ॥ अपि च । पशो यैक्का ह्यधमन्त्रः पशुरेव न संशयः । वीरा ह्यधमनु वीरः कौला ब्रह्माधिकं वेदिति महानीलतन्त्रम् ॥ कुले भवः । अण् ॥

कौलटिनेयः । पुं । स्त्री । कौलटेये । सतीभिक्षुक्याः सुते । सत्या भिक्षार्थं गेहाद्गेहमटन्त्याः पुत्रे ॥ कुलटाया अपत्यम् । कुलटाया वेतीनङ् । स्त्रीभ्यो ढक् ॥

कौलटेयः । पुं । स्त्री । कौलटिनेये । सतीभिक्षुकीपुत्रे ॥ असतीपुत्रे । बान्धकिनेये । बन्धुले ॥ कुलटाया अपत्यम् । स्त्रीभ्यो ढक् ॥

कौलटेरः । पुं । असतीसुते । बान्धकिनेये । कौलटेये ॥ कुलटाया अपत्यम् । क्षुद्राभ्यो वेति ढ्रक् । अङ्गहीना शीलहीनापि क्षुद्रा ॥

कौलत्थः । त्रि । कुलत्थसम्बन्धिनिरसादौ ॥ कुलत्थस्यायम् । तस्येदमित्यण् ॥ कुलत्थैः संस्कृते ॥ कुलत्थकोपधादण् ॥

कौलत्थीनम् । त्रि । कुलत्थोद्भवक्षेत्रे ॥ कुलत्थानाम्भवनङ्क्षेत्रम् । धान्यानाम्भवने क्षेत्रे खञिति खञ् ॥

कौलवः । पुं । ववादिषु तृतीयकरणे ॥ तत्रजातस्य फलं यथा । वाग्मी विनीतो नितरां व्यतन्द्रः प्रागल्भ्ययुक्तोऽनुजो महौजाः । सुसम्मतः स्याद्विदुषां कुलस्य स्वेत् कौलवाख्यं करणं प्रसूतामिति ॥

कौलालकम् । त्रि । कुलालेन कृते ॥ कुलालादिभ्यो वुञ् ॥

कौलिकः । पुं । तन्तुवाये ॥ कुलमार्गप्रवर्त्तके परशिवे ॥ यतःकौलिक इतिश्रुतेः ॥ त्रि । कुलमार्गस्थे । ब्रह्मविदि ॥ पाषण्डे ॥ कुलपरम्परायाते ॥ यथाकौलिक धर्मएषः ॥

कौलीनम् । न । गुह्ये ॥ जन्ये । परीवादे । लोकापवादे ॥ अकार्ये । कुकर्मणि ॥ कुलीनत्वे ॥ अहिपशुपक्षिशुनां युधि । प्राणिद्यूते ॥ कुलीनस्य कर्मभावोवा । युवादित्वादण् ॥

कौलीन्यम् । न । कुलीनत्वे ॥

कौलीरा । स्त्री । कर्कटशृङ्ग्याम् ॥

कौलेयः । त्रि । कुलीने ॥ इतिद्विरूपो भरतस्य ॥

कौलेयकः । पुं । कुक्कुरे । शुनि ॥ कुलेभवः । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढकञ् ॥ त्रि । कुलीने ॥ कुलस्यापत्यम् । अपूर्वपदादन्यतरस्यांयड्ढकञाविति ढकञ् ॥

कौल्माषीणम् । त्रि । कुल्माषोद्भवेक्षेत्रे ॥ कुल्माषाणांभवनम् क्षेत्रम् । धान्यानामितिखञ् ॥

कौल्यः । त्रि । कुलीने ॥ इतिद्विरूपकोषः ॥

कौवलम् । न । कुवले । कोलिफले ॥

कौवेरम् । न । कुष्ठौषधौ ॥ त्रि । कुवेरानुगे ॥ कुवेरसम्बन्धिनि तस्येदम् ॥ कुवेरस्येदमित्यर्थे ऽण् ॥

कौवेरी । स्त्री । मातृभेदे ॥ उत्तरदिशि ॥ कुवेरस्येयम् ॥ अणन्तात् ङीप् ॥

कौशम् । न । कान्यकुब्जदेशे ॥

कौशलम् । न । क्रियायां नैपुण्ये । कुशलतायाम् ॥ यथा । क्वचातिकर्कशः शान्तः क्वचातिललितः शुचिः । एकत्र काव्ये व्याख्यातु स्सा वहो कौशलं कवेः ॥ इत्यमरव्याख्यातटीका ॥ कुशलस्य कर्मभावोवा । यु० अण्

कौशलिका । स्त्री । प्राभृते । उपायने ॥ कुशलप्रश्ने ॥

कौशली । स्त्री । कुशलप्रश्ने ॥ प्राभृते ॥

कौशलेयः । पुं । श्रीरामे । रघूत्तमे ॥

कौशल्यम् । न । कुशलतायाम् ॥ कुशलस्य कर्मभावो वा । ब्राह्मणादित्वात् ष्यञ् ॥ त्रि । कौशल्यायांभवे ॥

कौशल्या । स्त्री । राममातरि ॥ कुशलेव । स्वार्थे ष्यञ् ॥

कौशल्यायनिः । पुं । कौसल्यायनौ ॥

कौशल्येयः । पुं । सीतापतौ । श्रीरामे ॥ कौशल्यायाअपत्यमितिढक् ॥ अनेनमयादृान्तरे विज्ञानमयेकोषे ॥ कौशल्या सर्वधीवृत्तयोनसतस्याः सुखित्वमाभयः ॥

कौशाम्बी । स्त्री । कुशाम्बनिर्मितायां

नगर्याम् । वत्सपत्तने ॥ कुशाम्बेन निर्वृत्ता । तेननिर्वृत्तमित्यण् । ङीप् ॥

कौशिकः । पुं । विश्वामित्रमुनौ ॥ कुशिकस्यापत्यम् ऋष्यण् । गोत्राऽपत्येतु विदाद्यञ् ॥ कोशेभवो वा ॥ अध्या० ठञ् ॥ नकुले ॥ व्यालग्राहे ॥ गुग्गुलौ ॥ शक्रे ॥ कोषज्ञे । उलूके ॥ शृङ्गाररसे ॥ मज्जनि ॥ अश्वकर्णवृक्षे ॥

कौशिकप्रियः । पुं । रामचन्द्रे ॥

कौशिकफलः । पुं । नारिकेले ॥

कौशिका । स्त्री । नारिकेफलनिर्मिते पानपात्रे ॥ इति हेमचन्द्रः ॥

कौशिकात्मजः । पुं । अर्जुने । पार्थे ॥

कौशिकायुधम् । न । इन्द्रचापे ॥

कौशिकारातिः । पुं । काके ॥

कौशिकी । स्त्री । चण्डिकायाम् ॥ कोशाद्विनिर्गता । तदुक्तम् । शरीरकोशाद्यत्तस्याः पार्वत्यानिःसृताम्बिका । कौशिकीतिसमस्तेषुततोलोकेषुगीयत इति पृषोदरादित्वात्साधुत्वम् ॥ तत्स्थाने ॥ नदीविशेषे ॥ नाट्यवृत्तौ ॥

कौशिकबीजः । पुं । आखोट वृक्षे ॥

कौशीतकी । स्त्री । उपनिषद्विशेषे ॥ अगस्त्यमुनेर्भार्यायाम् । लोपामुद्रायाम् ॥

कौशीलवम् । न । नृत्यगीतवादित्रानुबन्धे ॥

कौशेयम् । त्रि । कृमिकोशोत्थवस्त्रादौ । रेशमकपडा इति भाषा ॥ कोशेसम्भूतम् । कोशाड्ढञ् । कोशस्यविकारो वा । विकारे वा ढञ् ॥

कौषिकः । पुं । कौशिकार्थेषु ॥

कौषिकी । स्त्री । उमायाम् । नदीविशेषे ॥

कौसल्या । स्त्री । श्रीरामचन्द्रजनन्याम् ॥ कोसलस्य राज्ञो ऽपत्यं स्त्री । वृद्धेत्कोसलाजादाञ्ञ्यङ् इति ञ्यङ् । यङश्चापितिचाप् ॥ सूत्रनिर्देशात् कोसलशब्दो दन्त्यसकारमध्यः ॥

कौसल्यानन्दनः । पुं । श्रीरामे ॥ कौसल्याया नन्दनः ॥

कौसल्यानन्दवर्द्धनः । पुं । श्रीरामचन्द्रे ॥ कौसल्याया आनन्दं वर्द्धयति तच्छीलः । अनुदात्तेतश्चेतियुच् ॥ कौसल्यानन्दस्य वर्द्धनो वा ॥

कौसल्यायनिः । पुं । श्रीरामे ॥ कौशल्यायापत्यम् । कौशल्यकार्मार्याभ्याञ्चेतिफिञ् । परमप्रकृतेरेवायमिष्यते । तर्हिंसूत्रे विकृतिनिर्देशोव्यर्थः स्यात् । नव्यर्थः । यतः प्रत्ययस

न्नियोगेन प्रकृतिरूपं निपात्यते ॥ कौसल्यादयस्तासामपत्यमप्यध्यापि-

वाध्याः ॥

कौसीदम् । न । आलस्ये । तन्द्रायाम् ॥ कुसीदस्यभावे ॥

कौसुमम् । न । कुसुमाञ्जने । पुष्पाञ्जने ॥

कौसुम्भः । पुं । अरण्यकुसुम्भे ॥ न । शाकविशेषे ॥ यथा । कौसुम्भं कोमलं शाकं कासमर्दविमर्दितम् । पाचितं तप्तसृष्टे माषिमन्यविमिश्रितम् ॥ कौसुम्भं कातजि च्छ कं रुच्यं मुष्णञ्च पित्तलम् । सुस्वादु मधुरं पाके लघु, कृष्यं सरं हितमिति ॥ वि । कुसुम्भपुष्परागयुक्ते । कसुंभा कसुंभी इति भाषा ॥ कुसुम्भेन रक्तम् । तेनरक्तं रागादित्यण् ॥ तस्येदमित्यण् वा ॥

कौसृतिकः । वि । मायाकारे ॥ कुसृत्याचरति । ठक् ॥

कौस्तुभः । पुं । विष्णोर्मणिप्रभेदे ॥ यथा । आत्मानमस्य जगतो निर्लिप्तमगुणामलम् । बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिरिति विष्णुपुराणम् ॥ कुसमर्व स्तुभ्नाति व्याप्नोति इतिकुस्तुभो ऽब्धिः । तत्रभवः । अण् ॥ कु सोभते इति कुस्तुभो विष्णुः । स्तुभ स्तम्भे । सूत्रकः । तस्यायमिति वा ॥

कौस्तुभलक्षकः । पुं । विष्णौ ॥

कौस्तुभवक्षाः । पुं । पृश्निगर्भे । विष्णौ ॥

क्रकचः । पुं । ग्रन्थिलाख्यतरौ ॥ पुं । न । करपत्रे । करवत् करौत आरा इति भाषा ॥ योगविशेषे ॥ पद्यथाहिति यथो मन्दो दिलोमं क्रकचः स्मृतः ॥ क्र० इति कचति । कचशब्दे । पचाद्यच् ॥

क्रकचच्छदः । पुं । केतकीवृक्षे ॥ क्रकचसदृशा च्छदाः यस्य सः ॥

क्रकचपत्रः । पुं । शाकवृक्षे ॥

क्रकचपात् । पुं । कृकलासे ॥

क्रकचपादः । पुं ।

क्रकचपृष्ठी । स्त्री । कुपयी इति प्रसिद्धे मत्स्ये ॥

क्रकणः । पुं । कयार इति गौडभाषाप्रसिद्धे पक्षिविशेषे । क्रकरे ॥ क्रइति कणति । कण० । अच् ॥

क्रकरः । पुं । करीरवृक्षे ॥ क्रकये ॥ दीने ॥ क्रकचे ॥ क्रइतिकरोति । अच् ॥ क्रइतिशब्दकरणशीलः । कृणो हेतुताच्छील्येति टः ॥

क्रतुः । पुं । यज्ञे । अश्वमेधाग्निष्टोमादौ ॥ सोमसाध्ययागे । यूपरहिते यज्ञे ॥ कामः क्रतुः कर्म तन्मे पयोपामेव

क्रमोभवेत् तथकामक्रोधरभेदमा शङ्खात् । पुंसो या विषयापेक्षा स काम इतिभण्यते ॥ स एव वर्द्धमानः सन् क्रतुत्वं प्रति पद्यते । क्रत्वे इति न्याय: काम्ये विषये क्रतुरीर्यते इति ॥ सङ्कल्पे ॥ ब्रह्मणः कराज् जातेम रीच्याद्यन्तर्गते मुनिविशेषे ॥ अध्यवसाये । एवमेवनान्वधेष्य विचल प्रत्यये ॥ विश्वदेवविशेषे ॥ करोति क्रियते वा । कृञः कतुः ॥ इन्द्रियेषु ॥

क्रतुच्छदः । पुं । वृहद्भेदे ॥

क्रतुदोषनुत् । पुं । प्राणायामे ॥ क्रतुशब्देनेन्द्रियाणि सङ्कल्पोवा तेषां दोषाः । विहितानानुष्ठाननिषिद्धाचरणकृता, तान् नुदतिउपशमयती ति क्रतुदोषनुत् । उक्तञ्च । दह्यन्तेध्मायमानानां धातूनाञ्च यथा मलाः । तथा प्राणायामैर्दोषा ध्माम्यन्तीन्द्रियगोचिरादिति ॥

क्रतुभुक् । पुं । असुरे ॥ नास्तिके ॥

क्रतुद्विट् । पुं । असुरे ॥ नास्तिके ॥ क्रतुं द्वेष्टि । द्विष अप्रीतौ । सत्सूद्विषेतिक्विप् ॥

क्रतुध्वंसी । पुं । वृषाङ्के । शिवे ॥ क्रतुं दक्षयज्ञं ध्वंसयति । ध्वंसु० । सुप्यजाताविति णिनिः ॥

क्रतुपशु । पुं । अश्वे ॥ इति हारावली ॥

क्रतुपुरुषः । पुं । विष्णौ ॥

क्रतुभुक् । पुं । अमरे । देवे ॥ क्रतुं क्रतौ वा भुङ्क्ते । भुजपालनाभ्यवहारयोः । अन्येभ्योपिदृश्यते इति क्विप् ॥

क्रतुराज् । पुं । राजसूययज्ञे ॥ क्रतूनां राजा । टच् ।

क्रतुविक्रयी । पुं । क्रतुविक्रायके ॥ म दीर्घयागस्य फलं तव भवत्विक्त्यभिधायधनग्रहीतरि ॥

क्रतूत्तमः । पुं । राजसूययज्ञे ॥ क्रतुषु उत्तमः ॥

क्रथकैशिकाः । पुं । भूम्नि । विदर्भदेशेषु ॥

क्रथनम् । न । मारणे ॥ क्रथहिंसायाम् । भावे ल्युट् ॥ शुक्लामुरुणि ॥

क्रथनकम् । न । क्रथनार्थे । स्वार्थे कः ॥

क्रन्दनम् । न । रोदने । शोकादिना ऽश्रुपतने ॥ आह्वाने ॥ क्रदिआह्वाने रोदने च । भावे ल्युट् ॥ योधसंरावे ॥ पुं । बिडाले ॥ इतिशब्दमाला ॥

क्रन्दितम् । न । आह्वाने ॥ रुदिते ॥ युधिचीत्कृतौ ॥ क्रदि० । क्त ॥

क्रमः । पुं । अनुक्रमे । नियतपूर्वापरभावात्मनि ॥ शक्तौ ॥ विधाने । कल्पे ॥ आक्रमणे ॥ चरणे ॥ पादक्षेपे ॥ वितति विशेषे ॥ अपिजामिते विधिना सार्थम् ॥ क्रमणं ल्नेनवा । क्रमु०

। घञ् । नोदात्तोपदेशेति न वृद्धिः ॥ क्रामति गच्छति वा । क्रमैः पदाद्य च ॥ पादविक्षेपे ॥

क्रमकः । पुं । क्रमज्ञे ॥ क्रममधीते वेदवा । क्रमादिभ्योवुन् ॥

क्रमघ्नः । पुं । चरणे ॥ न । अतिक्रमे ॥

क्रमनिग्रहः । पुं । हठनिग्रहादन्यस्मिन्मनसो निग्रहे ॥ क्रमनिग्रहश्चाऽध्यात्मविद्याभ्यासादयउपायाः । अध्यात्मविद्या च दृश्यमिथ्यात्वं दृग्वस्तुनः स्वप्रकाशत्वञ्च बोधयति । तथा च सति एतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनाभावं प्रयोजनवति दृग्वस्तुनि चागोचरत्वञ्च बुद्ध्वा निरिन्धनाग्निवत् स्वयमेवोपशाम्यति । तथा च श्रूयते । यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यतीति ॥ वेदान्तसारः ॥

क्रमपूरक । पुं । वकवृक्षे ॥

क्रमशः । अ । क्रमेण क्रमेणेत्यर्थे । ढ यडवसे इतिभाषा ॥

क्रमागतम् । त्रि । क्रमायाति । पितृपितामहादिक्रमेण प्राप्ते ॥ यथा । अस्वतन्त्राः स्त्रियः सर्वाः पुत्रदासपरिग्रहाः । अस्वतन्त्र स्तत्र गृही यत्र तत्स्यात् क्रमागतमिति नारदः ॥

क्रमायातः । त्रि । क्रमागते ॥

क्रमुः । पुं । गुवाके ॥ क्रामति । क्रमु॰ । बाहुलकादुः ॥

क्रमुकः । पुं । भद्रमुस्तके ॥ ब्रह्मदारुणि ॥ कार्पासिकायाः फले ॥ पट्टिकालोध्रे ॥ पुगे । गुवाके ॥ क्रमति । क्रमु॰ । बाहुलकादुः । कन् ॥

क्रमुकफलम् । न । गुवाके ॥

क्रमुकी । स्त्री । गुवाकद्रुमे ॥

क्रमेलः । पुं । उष्ट्रे ॥

क्रमेलकः । पुं । उष्ट्रे । महाङ्गे ॥ क्रामति । क्रमु॰ । विच् । एलति इलगतौ । एलयतिवा । इलक्षेपे । एवुल् । क्रम् चासौ एलकश्च ॥

क्रयः । पुं । मूल्येनपरस्माद्द्रव्यग्रहणे द्रव्यदानेनान्यस्वत्वस्वीकारे ॥ यथा । निश्चित्य यस्तु तन्मूल्य मुभयोः सम्मतौ शिवे । परस्पराङ्गीकरणं क्रयसिद्धिस्तदाभवेदिति ॥ अपि च । क्रयसिद्धिरदृष्टानां गुणश्रवणतोभवेत् । विपर्यये तद्गुणानामन्यथाभवतिक्रयइतिश्रीमद्दानिर्णयतन्त्रम् ॥

क्रयलेख्यम् । न । भूम्यादिक्रयविषये क्रयपत्र कवाला इतिभाषा ॥ यथा । गृहं क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥ इतिबृहस्पतिः ॥

क्रयविक्रयः । पुं । वाणिज्ये । वणज इति भाषा ॥

क्रयविक्रयानुशयः । पुं । क्रयविक्रययो पश्चात्तापे । अष्टादशविवादान्तर्गत विवादविशेषे ॥ यथा । क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् । सोन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वेतिमनुः ॥

क्रयविक्रयिकः । पुं । वणिजि ॥ क्रयविक्रयाभ्यां जीवति । वृक्षक्रयविक्रया-ट्ठन् ॥

क्रयविक्रयी । त्रि । क्रयविक्रयकर्त्तरि ॥

क्रयशीर्षम् । न । कपिशीर्षे । प्राकारा

क्रयशीर्षकम् । न । ग्रे ॥ इतित्रिकाण्ड शेषः ॥

क्रयारोहः । पुं । हट्टे । हाट इति भाषा ॥

क्रयिकः । त्रि । क्रायके क्रेतरि ॥ क्रय जीवनार्थी । वणिजि ॥ क्रयेण जीवति । वृक्षक्रयविक्रयाट्ठन् । क्रयविक्रयशब्दयं सङ्घातविगृहीतार्थम् ॥ यद्वा । क्रीणाति । डुक्रीञ् द्रव्यविनिमये । मियष्ठकन् ॥

क्रयी । त्रि । क्रयकर्त्तरि । क्रेतरि ॥ क्रयोऽस्त्यस्य । इनिः ॥

क्रय्यम् । त्रि । हट्टासादितवस्तुनि । क्रेतारो गाहकाः क्रीणीयुरितीदृशं बुध्या आपणे प्रसारिते द्रव्ये ॥ क्रीयते । डुक्रीञ् ० । अचोयत् । क्रय्यस्तदर्थे इति साधु ॥

क्रव्यम् । न । मांसे ॥

क्रव्यघातनः । पुं । मृगे ॥

क्रव्यात् । पुं । कौणपे । राक्षसे ॥ त्रि । आममांसभोजिनि गृध्रादौ ॥ क्रव्यमाममांसं अत्तीतिविग्रहे क्रव्येचेतिविट् ॥

क्रव्यादः । पुं । अग्नौ । राक्षसे ॥ सिंहे ॥ श्येने ॥ क्रव्यादोऽमृतभक्षश्च इत्युक्तेः शवभक्षकाग्नौ ॥ त्रि । मांसाऽशिनि ॥ मांसमत्तीतिविग्रहे अदः कर्मण्यण् । पृषोदरादित्वादुपपदस्य क्रव्यादेश ॥ कृत्तं छिन्नं तदेव पुनर्विशेषतःकृत्तं पक्वश्च भुङ्क्ते इतिक्रव्यादः । कृत्तविकृत्तपक्वशब्दस्य पृ० क्रव्यादेशः इतिकाशिका ॥

क्रशितः । त्रि । कृशीकृते ॥ कृशशब्दात् तत्करोतीतिण्यन्तात् कर्मणि क्त । णाविष्टवद्भावे । रऋतोहला देर्लघोरित्यृकारस्यरेफादेश ॥

क्रशिमा । पुं । कार्श्ये ॥ कृशस्य भावः । पृथ्वादित्वादिमनिच् । रऋतोहला देरितिरेफादेश ॥

क्रशीयान् । त्रि । अत्यन्तकृशतरे ॥ स्वल्पे ॥ तनीयसि ॥ द्वयमनयोरतिशयेनकृशः । द्विवचनविभज्येतीयसु

सिवसिहनिक्लिदिनिम्नमनिभ्यश्चे
त्युः॥ क्लिद्यति वा॥ क्लिदिपरिदेव
ने॥

क्लेशः। पुं। दुःखे॥ कोपे॥ व्यवसाये॥
रोगादौ॥ अविद्यास्मितारागद्वेषा
भिनिवेशेषु॥ तत्र विद्याविरोधिनी
अविद्या। अहं मस्मीत्यहङ्कारोऽ
स्मिता। इच्छाविशेषो रागः। वै
रभावो द्वेषः। मरणभयमभिनि
वेशः॥ क्लिश्यन्त्यनेन। क्लेशनं वा।
क्लिशूविबाधने। घञ्। अन्वाकर्षे॥

क्लेशकः। पुं। क्लेशशीले॥ क्लिश्यते
तच्छीलः। क्लिश उपतापे क्लिशू
वा। निन्दहिंसक्लिशखादविनाशप
रिक्षिपपरिरटपरिवादिव्याभाषासू
यो वुञ् इति वुञ्॥

क्लेशापहः। पुं। पुत्रे॥ क्लेशमपहन्ति
इति विग्रहे अपे क्लेशतमसोरिति
अपपूर्वाद्धन्तेः क्लेशकर्मोपपदे डः प्र
त्ययः॥

क्लेशितः। त्रि। क्लेशयुक्ते॥

क्लैतकिकम्। नं। मद्ये॥

क्लैब्यम्। नं। ओजस्तेजआदिमत्त्व-
पाधैर्ये। निर्वीर्यत्वे॥ क्लीबस्यभा
वः कर्म वा। ष्यञ्॥

क्लोम। नं। फुप्फुसे। औदर्यजलाधा
रे। तिलके॥ वाक्को हृदयोर्मध्ये च
तन्मध्ये हृदयम् तत्पार्श्वे क्लोमपिपा
सास्थानमिति वैद्याः। अपरे तु दक्षि
णभागे हृदयात् क्लोम तिष्ठति
जलवाहिशिरामूलं तृष्णाच्छादन
कं मतम्॥ एतत्तु वातरक्तजम्।
तदुक्तं वृद्धवाग्भटेन। रक्तादनिल
संयुक्तात् कालेयकसमुद्भवः इति॥

क्वते। कुङ् गतौ। मनिन्॥

क्व। अ। कुत्रेत्यर्थे। कहाँ इति भाषा॥
कस्मिन्। किमोऽद्धयति प्रत्यये क्वा
तीति किमः क्वादेशः॥ अत्यन्तास
म्भावनायां क्वयं प्रयुज्यते॥ क्वेक
शब्दौ महदन्तरं सूचयतः॥

क्वचन। अ। कचिदर्थे॥

क्वचित्। अ। कस्मिंश्चित्काले॥ कस्मिं
श्चिद्देशे॥ कदाचिदर्थे॥

क्वण। पुं। वीणायाः क्वणिते। निक्वा
णे॥ ध्वनिमात्रे॥ कटकादिभूषण
शब्दे॥ शब्दकरणे॥ क्वणनम्। क्वण
शब्दे। क्वणो वीणायाञ्चेत्यप्॥

क्वणनम्। न। वीणायाः क्वणिते। क
णे॥ क्वणो वीणायाञ्चेत्ययभावे ल्यु
ट्॥ पुं। दण्डिकासुते। छोटीदांडी
इति भाषा। मजु मजट्ट इति च पर्वती
यभाषा इति त्रिकाण्डशेषः॥

क्वथितः। त्रि। अतिशयपक्वव्यञ्जनद्रव
मूलादौ। निष्पक्वे। कषाये। क्वाथे

याम् ॥

खटी । स्त्री । कठिन्याम् । धवलमृत्तिकायाम् ॥ खटी दाहास्रजित् च्छीता मधुरा विषशोथजित् । लेपादैतद्गुणाः प्रोक्ता भक्षितास्त्विका समा ॥ खटी गौरखटी द्वेच गुणै स्तुल्ये प्रकीर्त्तिते ॥

खट्टनः । त्रि । खर्वे ॥

खट्टाश । पुं । गन्धौतौ । वनवासने ॥ खाटास गन्धगोकुला इतिच गौड भाषा ॥

खट्टाशी । स्त्री । पूतिशारिजायाम् ॥

खट्टि । पुं । शवयाने । अन्तशय्यायाम् ॥

खट्टिकः । पुं । खटीक इतिख्याते मांसविक्रयिणि ॥ मद्यपी चौरमीने॥ शाकुनिके । चिड़ीमार इतिभाषा ॥

खट्टिका । स्त्री । क्षुद्रखट्वायाम् । निघृष्टायाम् ॥ शवयाने ॥

खट्टेरक । त्रि । खर्वे ॥

खट्वका । स्त्री । खट्विकायाम् ॥ अमाधितपुंस्कात्वेति पक्षेइत्त्वाभावः ॥

खट्वा । स्त्री । पर्यङ्के । शयने । मञ्चे ॥ खट्यते निद्राकुभिः । खटकाङ्क्षायाम् । अशूप्रुषीतिकन् । टाप् ॥ अष्टाभिः काष्ठखण्डैश्च खट्वेति प्रतिचक्षते ॥ विशेषोयुक्तिकल्पतरौ ॥ कोलशि-
- ख्याम् ॥

खट्वाका । स्त्री । खट्विकायाम् ॥ आदाचार्याणामितिपक्षे आत्त्वम् ॥

खट्वाङ्ग । पु । सूर्यवंशीयराजर्षिविशेषे ॥ न । नरपञ्जरे ॥ दण्डारोपितनरशिरस्के ईशायुधविशेषे ॥ पृष्ठवंशे ॥ खट्वापादे ॥

खट्वाङ्गभृत् । पु । शिवे ॥

खट्वाङ्गी । पुं । शिवे ॥

खट्वारूढ । त्रि । खट्वाश्रिते ॥ जाल्मे । निषिद्धानुष्ठानपरे ॥ वेदं व्रतानिच समाप्य समावर्त्तनेन विखट्वारोढव्या न्नियमेनैव भूमिशयनादिविधायः खट्वामारोहति सजाल्मः । रूढशयम् । तेन खट्वा मारोहतु माषा निषिद्धानुष्ठानपरः सर्वोपिखट्वारूढउच्यते । खट्वाक्षेप इति निन्दायांतत्पुरुषः ॥

खट्विका । स्त्री । शयने । क्षुद्रखट्वायाम् । खटिया खटोला इतिभाषा ॥ स्वल्पाखट्वा । कन् । ह्रस्व । अभाषितपुंस्कात्वेतीत्त्वम् ॥

खड । पु । पानान्तरे ॥ भेदे ॥ पु । न । लघुदृषे । खड इतिभाषा ॥

खडक्किका । स्त्री । } पक्षद्वारे । खि-
खडक्की । स्त्री । } ड़की इतिभाषा

॥ इति शब्दावली ॥

खडयूष । पु । यूषविशेषे ॥ यथा । तक्रं

कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः। सुपक्कं खडयूषोऽयं चक्रदत्तेन भाषित ॥

खडिका। स्त्री। } सेलखडी इतिभाषा प्रसिद्धायां कठिन्याम् ॥
खडी। स्त्री। }

खडु। पुं। स्तनशय्यायाम् ॥

खड्गम्। न। लोहे ॥

खड्गः। पुं। खागइतिख्याते गण्डकशृङ्गे ॥ बुद्धभेदे ॥ गण्डके ॥ गैंडा इति प्रसिद्धवनमृगे ॥ चोरकनामगन्धद्रव्ये ॥ खाँडा तरवारिइतिच ख्याते शस्त्रे। असौ। चन्द्रहासे ॥ खण्डति। खडिभेदने। छापूखडिभ्यः किदितिगन्। आगमशास्त्रस्यानित्यत्वान्नुम् ॥ अथ खड्गविषयकत्रयोदशविधसञ्चरणं महाभारते। यथा सव्यस्याकारतः खड्गस्य भ्रमणं भ्रान्तमुच्यते १। तदेववाहुसव्यकृतमुद्भ्रान्तमीरितम् २॥ भ्रामणं स्वस्य परितः खड्गस्याविद्धमुच्यते ३। परप्रयुक्तशस्त्रस्य वारणार्थ मिदं त्रयम् ॥ अग्रेऽरातिक्रमणार्थाय गमनं त्वाप्लुतं मतम् ४। खड्गस्याग्रेण तद्देहस्पर्शनं प्रसृतं मतम् ५॥ यत्नवित्त्वारिपोः शस्त्रपातनं गदितं स्मृतम् ६। परिवृत्त्य भवेत् स्पर्शो यो सद्भिर्गतो गतिः ७॥ पश्चात् पदापसरणं निवृत्तं समुच्यते ८। अन्योन्यताडनं प्राहुः सम्पातमुभयोरपि ९॥ आधिक्यमात्मनो यत् तत् समुदीर्णं मुदीरितम् १०। चक्रमत्यङ्गदेशेषु भ्रामणं भारतं स्मृतम् ११॥ विचित्रखड्गसञ्चारदर्शनं कौशिकं स्मृतम् १२। निखीय चर्मणि क्षेपो यदसेः सात्वतं हितम् १३॥ इति ॥

खड्गकोषः। पुं। असिविधाने। खड्गपत्रे ॥

खड्गज्ञानम्। न। खड्गपरीक्षायाम् ॥

खड्गटः। पुं। दृढकाशे ॥

खड्गधेनुः। स्त्री। खड्गपुत्रिकायाम्। छुरी इति भाषा ॥ गण्डकस्त्रियाम् ॥

खड्गपत्रः। पुं। असिकोषे ॥ खड्गलतायाम् ॥

खड्गपरीक्षा। स्त्री। खड्गज्ञाने ॥ यथा। अङ्गं रूपं तथा जाति र्नेत्रारिष्टे च भूमिका। ध्वनि र्मान मिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ॥ अभिन्ने दृश्यते यादृक् विभिद्य घटिते तथा। यदेव दृश्यते चिह्नं तदङ्गं सम्प्रचक्षते १॥ नीलकृष्णादिकं खड्गे रूप मित्यभिधीयते २। तेनैव यत् प्रतीतं स्यात् तज्जाति रिति गद्यते ३॥ अङ्गातिरिक्तं यज्जातिरत्नाद्यात्यो सङ्घकम्। तन्नेत्र

मिति। जानीयात् खड्गे खड्गविशार
दः ४॥ अङ्गातिरिक्तं खड्गादि यच्छु
द्व्यापसूचकम्। तदरिष्टमिति
प्राहुः ५ भूमिरङ्गादिधारणम् ६॥
यः खड्गे जायते शब्दो नखदण्डादि
ना हते। स ध्वनिः ७ स्तु तुलना
मानं ८ ज्ञानमष्टविधन्त्विदम्॥ प
श्चाद्या निपुणैः खड्गे सम्भाव्यन्ते
पिकृत्रिमाः। अन्त्या वकृत्रिमा ज्ञेया
ता लेव सहजा इति॥ मत अङ्का
नि चत्वारि रूपाणि जातय स्तथा।
चिंशन्नेत्राणि जानीयादरिष्टानि
तथैव च॥ भूमिस्तु द्विविधा ज्ञेया
ध्वनिरष्टविधो मतः। मानन्तु
द्विविधं प्रोक्तमित्येषां सङ्ग्रहो मतः॥
इति॥ विशेषस्तु लोहार्णवे हेदी
पयुक्तिकल्पतरुप्रभृतिग्रन्थेषु द्रष्टव्यः॥

खड्गपिधानम्। न। } खड्गकोषे। प
खड्गपिधानकम्। न। } रीवारे। प्र
त्याकारे। कोषे॥

खड्गलक्षणम्। न। खड्गस्वरूपज्ञाने॥
तत्रादौ खड्गस्य प्रमाणं व्रणानाञ्च शु
भाशुभज्ञानार्थमाह। अङ्गुलशतार्द्धं
मुत्तमः स्यात् पञ्चविंशतिः ख
ड्गः। अङ्गुलमानात् ज्ञेयो व्रणोऽशु
भो विषमपर्वस्थः॥ * ॥ व्रणानामाकृ
तिलक्षणमाह। श्रीवृक्षवर्द्धमानात

पत्रशिवलिङ्गकुण्डलाब्जानाम्। स
दृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्ति
कानाञ्च॥ * ॥ अशुभलक्षणानि।
कृकलासकाककङ्कक्रव्यादकबन्धवृश्चि
काकृतयः। खड्गे व्रणा न शुभदा वं
शानुगताः प्रभूताश्च॥ स्फुटितो ह्र
स्वः कुण्ठो वंशच्छिन्नो नदृङ्मनोऽनु
गतः। अस्वन इति चानिष्टः प्रोक्तवि
पर्यस्तदृष्टफलः॥ * ॥ खड्गचेष्टित
माह। क्वणितं मरणायोक्तं पराज
यायाप्रवर्त्तनं कोशात्। स्वयमुद्गी
र्णे युद्धं ज्वलिते विजयो भवति ख
ड्गे॥ * ॥ अथ परिभाषार्थमाह।
नाऽकारणं विवृणुयान्न विघट्टयेच्च
पश्येन्न तत्र वदनं न वदेच्च मूल्यम्। दे
शं न चास्य कथयेत् प्रतिमानयेच्च
नैवं स्पृशेन्नृपतिरप्रयतोऽसियष्टिम्॥
॥ * ॥ अन्यल्लक्षणमाह। गोजिह्वा
संस्थानो नीलोत्पलवंशपत्रसदृश
श्च। करवीरपत्रशूलाग्रमण्डलाग्राः
प्रशस्ताः स्युः। निष्पन्नो न च्छेद्यो
निकषैः कार्यः प्रमाणयुक्तः सः।
मूले म्रियते स्वामी जननी तस्याग्र
तश्छिन्ने॥ * ॥ अथ सुष्टौ दृष्टायां
व्रणज्ञानमाह। यस्मिन् तत्सरुप्रदे
शे व्रणो भवेत्तद्वदेव खड्गस्य। वनि
तानामिव तिलको गुह्ये वाच्यो मु

खेट्टष्टा ॥ * ॥ अथव्रणोपायमाह ।
अथवा स्पृशति यदङ्गं महानिस्त्रिंश
भृत् तदवधाय । कोशस्थस्यादेश्यो
ऽष्टवोऽपि शास्त्रं विदित्वैवम् ॥ शिर
सिस्पृष्टे प्रथमेऽङ्गुले द्वितीयेललाट
संस्पर्शे । भ्रूमध्ये च तृतीये नेत्रस्पर्शे च
तुर्थे त्र ॥ नासोष्ठकपोलहनुश्रवणग्री
वांसकेषु पञ्चाद्याः । उरसि द्वादश
संस्थस्त्रयोदशःकक्षयोर्ज्ञेयः ॥ स्तन
हृदयोदरकुक्षौ नाभौ तु चतुर्दशा
द्यो ज्ञेयाः । नाभीमूले कट्यां गुह्ये
एकोनविंशतितः ॥ ऊर्वोर्द्वाविंशेस्या
दूर्वोर्मध्येत्रयस्त्रयोविंशे । जानुनि च
चतुर्विंशजङ्घायां पञ्चविंशे च ॥ जङ्घा
मध्ये गुल्फे पार्ष्णौ पादे तथा ऽङ्गुलिष्व
पि च । षड्विंशादिषु यावत् त्रिंशदि
ति मतेन गर्गस्य ॥ * ॥ अथैतेषां व्र
णानां फलान्याह । पुत्रमरणं धना
प्ति र्धनहानिः सम्पदश्च बन्धश्च ।
एकाद्यङ्गुलसंस्थे व्रणैः फलं निर्दिशे
त् क्रमशः ॥ सुतलाभः कलहो ह
स्तिलब्धिः पुत्रमरणधनलाभः । क्रम
शो विनाशवनितासिचित्तदुःखानि
पट्प्रभृति ॥ लब्धिर्हानिः स्त्रीलब्ध
यो वधहृद्भिरणपरितोषाः । ज्ञेया
स्त्रयोदशादिषु धनहानि श्चैकविंशे
स्यात् ॥ वित्ताप्ति र्निर्यानिर्धनता
सौख्यसम्पदोऽस्वत्वम् । ऐश्वर्य
मृत्युराज्यानि च क्रमात् त्रिंशदिति
यावत् ॥ अनिर्वासिर्मृत्युः ॥ परतो
न विशेष फलं विषमंसमस्थाश्च पा
पशुभफलदाः केचिदफलाः प्रदिष्टा
स्त्रिंशतपरतोऽयमितियावत् ॥ * ॥
अथ गन्धलक्षणमाह । करवीरोत्प
लगजमदघृतकुङ्कुमकुन्दचम्पकसग
न्धः । शुभदो निष्टो गोमूत्रपङ्कजमे
दसः सदृशगन्धः ॥ कूर्मवसासृक्क्षी
रोपमश्चभयदुःखदो भवतिगन्धः । वै
दूर्यकनकविद्युत् प्रभोजयारोग्यवृ-
द्धिकरः ॥ * ॥ अथशस्त्रपानम् । इ
दमौशनसञ्च शस्त्रपानं रुधिरेण
श्रियमिच्छतः प्रदीप्ताम् । हविषा
गुणवत्सुताभिलिप्सोः सलिलेनाक्ष
यमिच्छतश्च वित्तम् ॥ वडवोष्ट्रकरेणु
दुग्धपानं यदि पापेन समीहतेऽर्थसि
द्धिम् । झषपित्तमृगाश्वबस्तदुग्धैः क
रिहस्तच्छिदये सतालगर्भैः ॥ आर्क
पयोहुडविषाणमसीसमेतं पारावत
लाखुशकृता च युतः प्रलेपः । शस्त्रस्य
तैलमथितस्य ततोऽस्य पानं पश्चाच्छि
तस्य न शिलासु भवेद्विघातः ॥ क्षारे
कदल्या मथितेन युक्ते दिनोषिते पाय
यसमायसं तत् । सम्यक् छितं चाश्म
निनैतिभङ्गं न चान्यलोहेष्वपितस्य

कौण्व्यम् ॥ इतिवाराह्याम् ॥४८ ऽध्याये ॥

खड्गिक. । पुं । महिषीचीरफेने ॥ चौनिके । मांसविक्रयिणि ॥

खड्गी । पुं । गण्डके । तुङ्गमुखे । खड्गवर्म्मणि ॥ खड्गःशृङ्गमस्यास्तीति ॥ इनिः ॥ मञ्जुघोषे ॥ त्रि । खड्गधरे ॥

खण्डः । पुं । इक्षोर्विकारविशेषे । एचवे । चीनी इतिभाषाप्रसिद्धे ॥ प्रयुज्यतेचरसालायाम् । खण्डस्यषोडशपलानिशशिप्रभस्येत्यच - ॥ खण्डस्तुमधुरोवृष्यश्चक्षुष्योबृंह - णोहिम । वातपित्तहर स्निग्धोबल्योवान्तिहर परः ॥ मणिदोषे ॥ न । विडलवणे ॥ * ॥ पु । नि । भिन्ने । शकले ॥ खण्ड्यते । खडिभेदने । कर्मणि भावेवा घञ् ॥ खन्यते वा । खन० । अमन्ताड्. ॥

खण्डकः । पु । सितायाम् । चीनी इतिभाषा ॥ त्रि । छेदकारिणि ॥

खण्डकथा । स्त्री । वाङ्मयप्रभेदे ॥

खण्डकर्णः । पुं । आलुविशेषे । वज्रकन्दे । सकरकन्द इतिभाषा ॥ कटुपाकी खण्डकर्णः कफपित्तविनाशन. ॥

खण्डकालु । न । आलुविशेषे ॥

खण्डखर्ज्जूरम् । न । खजुरइतिख्याते प्रकारे ॥

खण्डजः । पुं । गुडे ॥ यवासशर्करायाम् ॥

खण्डजोद्भवजः । पु । सर्वरानेोद्भवखण्डे ॥ इतिराजनिर्घण्ट ॥

खण्डतालः । पु । तालविशेषे ॥ यथा ॥ द्रुतमेक भवेद्यत्र खण्डतालः स उच्यते । अपरं नियतं विनेति दामोदर. ॥

खण्डधारा । स्त्री । कर्त्तर्याम् । कैंची इतिभाषा ॥

खण्डनम् । न । भञ्जने ॥ निराकरणे ॥ छेदने । भेदने ॥

खण्डपरशु । पुं । शिवे ॥ खण्डयतीति खण्ड । खण्डे परशुरस्य ॥ जामदग्न्ये ॥ खण्डयति शत्रून् । खडि० । पचाद्यच् । खण्ड. परशुरस्य ॥

खण्डपर्शुः । पुं । पर्शुरामे । भार्गवे ॥ शङ्करे । शिवे ॥ चूर्णलेपिनि ॥ खण्डामलकभैषज्ये ॥ राहौ । सैंहिकेये ॥ खण्डयतीति खण्ड । सदाऽसुरवधे खण्ड पर्शुरस्य ॥ भग्नदन्तहस्तिनीतिशब्दरत्नावली ॥

खण्डपाल' । पुं । शूद्रायां चत्रियाज्जाते । मयरा इतिगौडभाषा प्रसिद्धे वर्णसङ्करविशेषे । खाण्डिके । मोदके ॥ इतिहारावली ॥

इतिभाषा ॥

खदिरिका । स्त्री । लाक्षायाम् ॥

खदिरी । स्त्री । शाकभेदे । लज्जालुकायाम् । नमस्कार्याम् । छायाजोडी इतिभाषा ॥ खदति । खदेः किरच् । ङीप् ॥

खदिरोपमम् । न । खदिराभे । श्वेतखदिरे । सोमवल्के । काँटावावला इतिगौडभाषा ॥

खदूरवासिनी । स्त्री । तारायाम् । बुद्धशक्तिविशेषे ॥

खद्योतः । पुं । ज्योतिरिङ्गणे । कीटमणौ । प्रभाकीटे ॥ खेद्योतते । द्युत दीप्तौ । अच् ॥ खंद्योतयति वा । अ सूर्ये ॥

खद्योतनः । पुं । अर्के । सूर्ये ॥ खस्य द्योतनः ॥

खधूपः । पुं । अग्निक्रीडाविशेषे । हवाई इतिभाषा ॥ यथा । उच्चां प्रचक्रु नँगरस्य मार्गान् खजान् यबन्धुर्मुमुचुः खधूपान् । इतिभट्टिः ॥ बन्धूक इतिप्रसिद्धे बन्धूके ॥

खनकः । पुं । उन्दुरौ ॥ सन्धिचौरे ॥ त्रि । अवदारके । खननकर्त्तरि ॥ भूमिवित्तज्ञे । स्वर्णाद्युत्पत्तिस्थानाभिज्ञे ॥ खनति । खनु अवदारणे । शिल्पिकिष्वुन् ॥ स्त्रियांषित्वात् ङी खनकी ॥

खननम् । न । विदारणे । खोदना इतिभाषा ॥

खनयित्री । स्त्री । अस्त्रभेदे ॥

खनिः । स्त्री । आकरे । गङ्गायाम् । धातुरत्नाद्युत्पत्तिस्थाने ॥ खन्यते । खनु । खनिकष्यज्यसीति इः ॥ खनने ॥

खनित्रम् । न । अवदारणे । कुदाल इतिभाषा ॥ खन्यतेऽनेन । खनखनने । अर्त्तिलूधूसूखनसहचर इत्रः ॥

खनिनिमः । त्रि । खननेननिर्वृत्ते ॥

खनी । स्त्री । खनौ ॥ कृदिकारादक्तिनः इति वा ङीष् ॥

खपान्थः । पुं । ग्रहे ॥ खस्य पान्थः ॥

खपुरः । पुं । क्रमुके । गुवाके । सुपारी इति भाषा ॥ भद्रमुस्तके ॥ व्यालनखे ॥ न । घटे ॥ गन्धर्वपुरे । नभःपर्याम् । हरिश्चन्द्रपुरे । हरचंदावली इति भाषा ॥ त्रि । अलसके ॥ खम् इन्द्रियम् आकाशं वा पिपर्त्ति । पृपालनपूरणयोः । मूलविभुजादित्वात् कः । उदोष्ठ्यपूर्वस्य ॥

खभ्रान्तिः । पुं । चिल्ले । चील इति प्रसिद्धे खगे । नभो भ्रमे ॥ खे आकाशे भ्रान्तिर्भ्रमणं यस्य ॥

खमणिः । पुं । सूर्ये ॥ खस्य मणिरिव ॥

खमीलनम् । न । तन्द्रायाम् ॥

खमूलिः । स्त्री । वारिपर्णाम् । कुम्भिकायाम् ॥

खमूलिका । स्त्री । } वारिपर्णाम् ॥
खमूली । स्त्री । }

खरः । पुं । गर्दभे । रासभे ॥ खं मुखविलमतिशयितमस्य । रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानमिति रः ॥ धर्मे ॥ राक्षसान्तरे । रावणभ्रातरि दैत्ये ॥ कण्टकिवृक्षविशेषे ॥ कङ्के ॥ काके ॥ कुररपक्षिणि ॥ ३५ वत्सरे ॥ उपद्रुतं जगत्सर्वं तस्करैर्मूषिकैः खगैः । पीडिताश्च प्रजाः सर्वा देशभङ्गः खरे भये ॥ पर्यङ्कस्थाने ॥ रवेः पार्श्वगे ॥ लिङ्गे तीक्ष्णे ॥ त्रि । नृशंसे ॥ दुःस्पर्शे ॥ कठिने ॥ यथा । खरविशदमभ्यवहार्यं भक्ष्यमिति ॥ खमिन्द्रियं राति अभिभवति । रा० । क० ॥

खरकाष्ठिका । स्त्री । बलायाम् ॥

खरकुटी । स्त्री । नापितशालायाम् ॥

खरकण्ठः । पुं । तित्तिरिखगे ॥

खरगन्धा । स्त्री । नागबलायाम् ॥

खरगृहम् । न । } गर्दभशालायाम् ॥
खरगृहः । पुं । }

खरघातनः । पुं । नागकेशरे ॥

खरच्छदः । पुं । उलूखड़ इति गौडे भाषा प्रसिद्धे तृणविशेषे उलूके ॥ इत्कटे । ओकड़ा इति गौडभाषा ॥ कुररतृणे ॥ शाखोटे ॥ भूमीसिहे ॥

खरणाः । त्रि । खरणसे ॥ खरा तीक्ष्णा नासिकास्य । खुरखराभ्यां वा नस । पूर्वपदाद्दिति णत्वम् ॥

खरणसः । त्रि । तीक्ष्णनासिके । खरणसि । खरा तीक्ष्णा नासिकास्य । खुरखराभ्यां वा नसिति पक्षे अनासिकायाः नसादेशः ॥ णत्वम् ॥

खरत्वक् । स्त्री । अलम्बुषायाम् । खकोसुमभेदे ॥

खरदण्डम् । न । पद्मे ॥

खरदला । स्त्री । काष्ठोदुम्बरे ॥

खरदूषणः । पुं । धत्तूरे । धुस्तूरे ॥ खरेण सह दूषणे ॥ दीर्घवहुले ॥

खरध्वंसी । पुं । रघूत्तमे । श्रीरामचन्द्रे ॥ खरं ध्वंसयति । ध्वंसु० सुपीति णिनिः ॥

खरनादिनी । स्त्री । रेणुकानामगन्धवस्तुनि ॥

खरपत्रः । पुं । शाकाख्यद्रुमे ॥ चुञ्चपत्रतुलस्याम् । मरुबके ॥ पार्वनामखरे ॥ तालादि पत्राणि यस्य ॥

खरपत्रकः । पुं । तिलकवृक्षे ॥

खरस्क

खरपर्णी । स्त्री । गोजिह्वायाम् । दा-विकायाम् । अधःपुष्प्याम् । का-कोदुम्बरिकायाम् ॥

खरपात्रम् । न । लौहपात्रे ॥

खरपादाख्यः । पुं । कपित्थद्रुमे ॥

खरपुष्पः । पुं । मरुबके ॥

खरपुष्पा । स्त्री । बर्बराशाके । कर्बर्या-म् । बाबुइतुलसी इति गौडभाषा ॥ खराणि पुष्पाण्यस्याः ॥

खरपुष्पी । स्त्री । बर्बराम् । पाकफर्णे तिलपर्णे ॥

खरप्रियः । पुं । कपोते । पारावते ॥

खरमञ्जरी । स्त्री । अपामार्गे ॥ खरा मञ्जरिरस्याः । गौरादित्वात् ङीष् ॥

खररोमा । पुं । नागभेदे ॥

खरवल्लिका । स्त्री । नागवल्लायाम् ॥

खरशब्दः । पुं । कुररखगे ॥ खरस्य शब्दे ॥

खरशाकः । स्त्री । खलत्वे ॥ अह्रोःहिंसि तथा शाम्ले विशेषः खलता स्मृता ॥ भावकर्मणोःल ॥ गगनलतिकाया-म् ॥ खलूलता ॥

खलतिः । पुं । खल्वाटे । शिपिविष्टे । ऐन्द्रलुप्तिके । इन्द्रलुप्तरोगवति ॥ खलति । खलसञ्चलने । खलति रिति खलतिः सलोमोऽपि च मत्त्या-दात्तस्य इत्यन्वयनियाप्यते ॥

खर्जन

खरस्वरा । स्त्री । वनमल्लिकायाम् ॥

खरा । स्त्री । देवताडवृक्षे ॥ तीक्ष्ण-त्वात् ॥

खरांशुः । पुं । सूर्ये ॥ खरास्तीक्ष्णा अंश-वोऽस्य ॥

खराश्मिः । पुं । अर्कार्यमणिविशेषे ॥

खराब्दाङ्कुरकम् । न । वैदूर्यमणौ ॥

खराश्वा । स्त्री । मयूरशिखायाम् । रु-द्रजटा इति गौडभाषा । कारव्याम् । अजमोदायाम् । भाषायामिति केचित् ॥ खरम-श्नुते खरैरश्यते वा । अश्नुव्याप्तौ । अश भोजने वा । खलूत्वाद-यश्चेतिवः ॥

खराह्वा । स्त्री । अजमोदायाम् ॥

खरिका । स्त्री । कस्तूरीविशेषे । सा तु चूर्णाकृतिरिति जरानिर्घण्टः ॥

खरी । स्त्री । गर्दभ्याम् ॥ [illegible] ॥ खुरे ॥ क्षये ॥ दन्ते च ॥ दन्तिशब्दस्यचक्षेतीनिः ॥

खलिवर्द्धनः । पुं । दन्तरोगविशेषे ॥ मारुतेनाधिको दन्तो जायते तीव्र-वेदनः । खलिवर्द्धन संज्ञोऽसौ जा-ते रुक् च प्रशाम्यति ॥

खलिशः । पुं । खलिशमाछ इति गौ-भाषा प्रसिद्धे मत्स्ये । कङ्कत्रोटे । खलेशये ॥

खलीकारः । पुं । अपकारे । द्रोहे ॥

निर्भर्त्सने ॥

खलीनः । पुं । न । कविकायाम् ॥ खे ऽश्वमुखविले लीनः ॥

खलीनकः । पुं । कविकायाम् ॥ कडियाली इति गौडभाषा ॥ स्वार्थे कन् ॥

खलु । अ । वाक्यभूषायाम् ॥ जिज्ञासायाम् ॥ सान्त्वने ॥ वीप्सायाम् ॥ माने ॥ निषेधे ॥ पदपूरणे ॥ वाक्यपूरणे ॥ अनुनये ॥ निश्चये ॥ खलति । खलसञ्चये । बाहुलकात् उः ॥

खलुकः । पुं । अन्धकारे ॥ जान्तः ॥

खलुरेषः । पुं । मृगभेदे ॥

खलूरिका । स्त्री । शस्त्राभ्यासभूमौ ॥

खलेवाली । स्त्री । मेधिकाष्ठे ॥ बलीवर्द्दबन्धनाय निखाते मेढिः खलेवालीति मीमांसकाः ॥

खलेशः । पुं । } खलिशे ॥ खले
खलेशयः । पुं । } शये ॥

खल्या । स्त्री । खलिन्याम् ॥ खलानां समूहः । खलगोरथादिति यत् ॥ त्रि । खलहिते ॥ खलाय हितम् । खयवमाषतिलवृषब्रह्मणश्चेति यत् ॥

खल्लः । पुं । वस्त्रभेदे ॥ गर्त्ते ॥ निम्ने ॥ चर्मणि ॥ चातके ॥ औषधमर्द्दनपात्रे । खरल इति भाषा ॥ हस्ताभ्र पयन्ताम्लमसक इति च भाषा ॥

खल्ली । स्त्री । हस्तपादावमर्द्दनाख्यरोगे ॥ तल्लक्षणं यथा । खल्ली तु पादजङ्घोरुकरमूलावमोटनीति ॥ तस्यौषधं यथा । कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः । सुखोष्णो मर्द्दने योज्यः खल्लीशूलनिवारणः ॥

खल्लीटः । त्रि । खलतौ । खल्वाटे ॥

खल्वपि । अ । निश्चयार्थे ॥ खलु च अपि चेति विग्रहः ॥

खल्वाटः । पुं । इन्द्रलुप्ते । निष्केशशिरसि ॥

खल्विका । स्त्री । अभीषे । पिष्टकादिभर्जनपात्रे ॥

खवल्लरी । स्त्री । खवल्ल्याम् ॥

खवल्ली । स्त्री । आकाशवल्ल्याम् ॥ खवल्ली ग्राहिणी तिक्ता पिच्छिला ऽक्ष्यामयापहा । तुवराऽग्निकरी हृद्या पित्तश्लेष्मामनाशिनी ॥

खवारि । न । दिव्योदके ॥

खवाष्पः । पुं । रजनीजले । हिमे । ओस इति भाषा ॥

खशः । पुं । देशविशेषे ॥ हिमालयप्रान्तैकदेशे ॥ खशदेशोद्भवः । सा दैः क्षत्रियविशेषः क्रियालोपात् ब्राह्मणानामदर्शनात् याजनाध्यापनप्रायश्चित्ताद्यदर्शनाभावेन शनैः शनैः शूद्रतामापन्ने दस्युपदवाच्ये ॥

खशा । स्त्री । तालपर्ण्याम् । मुराना मगन्धद्रव्ये ॥ कश्यपपत्न्यां दक्षकन्यायाम् । यक्षरक्षसांमातरि ॥

खशेटः । पुं । खजेये । खशिशामच्छी इतिभाषा ॥

खश्वासः । पुं । पवने । वायौ ॥

खष्पः । पुं । क्रोधे । बलात्कृतौ ॥ खनति । खनु अवदारणे । खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः इतिपः निपातनात् खनतेर्नकारस्य षत्वम् ॥

खसः । पुं । पामरोगे । विचर्चिकायाम् ॥ प्राच्यात् क्षत्रियात् सवर्णायामुत्पन्ने सङ्कीर्णजातौ । तस्यनामानि यथा । झल्लो मल्लश्च राजन्यात् प्राच्यान्निच्छिवि रेवच । नटश्च करणश्चैव खसो द्रविड एवचेति ॥

खसकन्दः । पुं । क्षीरकञ्चुकी वृक्षे ॥

खसतिलः । पुं । खसखसे । खसुखसे ॥

खसमः । पुं । सौगते । बुद्धे ॥

खसम्भवा । स्त्री । आकाशमांस्याम् ॥

खसर्पणः । पुं । बुद्धविशेषे ॥

खसवीजम् । न । खाखसतिले ॥ खसवीजानि वल्यानि वृष्याणि सुगुरूणि च । जनयन्ति कफं तानि शमयन्ति समीरणम् ॥ तैलन्तु खसवीजानां बल्यं वृष्यं गुरु स्मृतम् । वातहृत् कफकृच्छीतं स्वादुपाकरसञ्चतत् ॥

खसा । स्त्री । राक्षसमातरि ॥

खसात्मजः । पुं । राक्षसे । खसायाः आत्मजः ॥

खसूमः । पुं । विप्रचित्तेःपुत्रे ॥

खस्खसः । पुं । वृक्षविशेषे । खुश्खाबीजे । पोस्त इतिभाषा ॥

खस्खसरसः । पुं । अहिफेने । अफीम् इतिभाषा ॥

खस्तनी । स्त्री । भूमौ । धरायाम् ॥

खस्फटिकः । पुं । चन्द्रकान्तमणौ ॥ सूर्यकान्तमणौ ॥

खाखसः । पुं । खसतिले । खस्खसे ॥ स्यात् खाखसफलोद्भूतं वल्कलं शीतलं लघु । ग्राहि तिक्तं कषायञ्च वातकृत् कफकासहृत् ॥ धातूनां शोषकं रूक्षं मदकृद्वाग्विवर्द्धनम् । मुहुर्मोहकरं रुच्यं सेवनात् पुंस्त्वनाशनम् ॥

खाखसतिलम् । न । खसवीजे ॥

खाङ्गाहः । पुं । श्वेतपिङ्गलाश्वे ॥

खाजिकः । पुं । लाजेषु ॥

खाटिः । स्त्री । असद्बुद्धे ॥ किणे ॥ शवरथे ॥ खटति । खट काङ्क्षायाम् । वाहुलकादिञ् ॥

खाटिका । स्त्री ।<br>खाटी । स्त्री । } खाटिशब्दार्थे ॥

खाडवम् । न । चूर्णविशेषे ॥ यथा । कोशामलकजं चूर्णं गुडश्चैलाशक

चे । नापितकाचुरधान इतिभाषा ॥ उपधाने ॥ खराखिकोपिपाठः ॥

खुरासानः । पुं । देशविशेषे ॥ हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि । खुरासानाभिधो देशो म्लेच्छमार्गपरायणः ॥

खुल्लम् । न । नखीनामगन्धद्रव्ये ॥ त्रि । नीचे ॥ अल्पे ॥ खर्दनम् । खर्दहिंसायाम् । संपदादित्वात् क्विप् । पृ० । खुदं लाति । कः ॥

खुल्लकः । पुं । नीचे ॥ स्वल्पे ॥ खुदं लाति । ला० । कन् ॥

खुल्लमः । पुं । अयने । पथि । मार्गे ॥

खेखीरकः । पुं । सशब्दवंश्याम् ॥

खेगमनः । पुं । काखकराठविहगे ॥

खेचरः । पुं । विद्याधरे ॥ ग्रहे ॥ शिवे ॥ पारदे ॥ त्रि । आकाशचारिणि ॥ न । कासीसे ॥

खेचरी । स्त्री । मुद्राविशेषे ॥ यथा । चित्तं चरति खे यस्मा ज्जिह्वा चरति खेगता । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ नचासनं सिद्धसमं नकुम्भसदृशोनिल । नखेचरी समा मुद्रा सत्यंसत्यञ्च नारदेति ॥

खेटः । पुं । ग्रहे ॥ कफे ॥ यष्ट्याम् ॥ ग्रामभेदे । कर्षकग्रामे ॥ पु । न० । चर्मणि ॥ त्रि । स्फारे ॥ अगन्धे ॥ सर्वंति । अधमे ॥ खेटति ॥ खिटत्रासे । पचाद्यच् ॥

खेटकः । पुं । कर्षकग्रामे ॥ यष्ट्यभिधाने ऽस्त्रे ॥ न । चर्मणि । फलके ॥ कूलार्थवृद्धे । वसुनन्दके ॥ स्वार्थेकः ॥

खेटिताखः । पुं । खेखिताले ॥

खेटी । पुं । नागरे ॥ त्रि । खेटवति ॥

खेड्डम् । न । तृण विशेषे ॥

खेडिताखः । पुं । वैतालिके ॥

खेदः । पुं । अवसादे ॥ शोके ॥ निर्वेदे ॥ खेदयतीति खेदो रोग इतिकैयटः ॥

खेदितः । त्रि । खेदयुक्ते ॥

खेदिनी । स्त्री । लतायाम् ॥ अशनपर्ण्याम् ॥

खेयम् । न । परिखायाम् । दुर्गादिपरितः खाते । खाई इति भाषा ॥ खन्यते । खनु० । ईचखन इतिक्यप् । ईकारश्चान्तादेशः । गुणः ॥ त्रि । खननीये ॥

खेलनम् । न । क्रीडने । विहरणे ॥

खेलनी । स्त्री । शारिफले ॥ शारौ ॥

खेला । स्त्री । कूर्दने । क्रीडायाम् ॥ खेलनम् । खेलृचलने । गुरोश्चेत्यः ॥

खेलिः । स्त्री । गीते ॥ वाणे ॥ सूर्ये ॥ पचिणि ॥ जन्तौ ॥

खेसरः । पुं । खच्चर इति प्रसिद्धे अश्वखरजे । मिश्रशब्दे । खच्चरे ॥

ङ्गनम् ॥ यथा ॥ गिरिवरतनयाकुच रसपानविमुद्रितलोचने निद्रावसित समीरणदूरदुरितभयमोचने। अतिवलविचरदसुरवरतारितसुरवरनायके अनुगतजनतातारिणि मम नतिरस्तु विनायके ॥

गगनाध्वगः। पुं। सूर्ये ॥

गगनेचरः। पुं। ग्रहे ॥ नचत्रे ॥

गगनोल्मुकः। पुं। कुजे। मङ्गलग्रहे॥

गगनोपमः। त्रि। सर्वगते ॥ गगनमुपमा यस्य ॥

गङ्गका। स्त्री। गङ्गायाम् ॥ अज्ञाताद्यर्थेकः। अभाषितपुंस्काच्चेति पाचिक इत्वाभावः ॥

गङ्गा। स्त्री। स्वनाम्नातिप्रसिद्धायां देवनद्याम्। भागीरथ्याम् ॥ विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम्। समन्ता ब्रह्मणः पुर्यां गङ्गा पतति वै दिव ॥ सा तत्र पतिता दिक्षु चतुर्द्धा प्रतिपद्यते। सीता चालकनन्दा च वङ्क्षुर्भद्रा च वै क्रमात् ॥ ध्यानम् ॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलसोद्यत्सोत्पलाभीत्यभीष्टाम्। विधिहरिहररूपां सेन्दुकोटीरजूटां कलितसितदुकूलां जाह्नवीं तां नमामीति। गच्छ



ति गम्यतेऽर्थिभिर्वा। गम्॰। गङ्गमगम्ययोरितिगन् ॥

गङ्गाका। स्त्री। गङ्गायाम् ॥ अज्ञाताद्यर्थेकः। केण इतिह्रस्वः। आदाचार्याणामितिपाक्षिक आदादेशः ॥

गङ्गाचेत्रम्। न। गङ्गातीरविशेषे ॥ तीराद्गव्यूतिमात्रन्तु परितः चेत्रमुच्यते। अत्रयेयत् कृतं कर्मगङ्गायां नाचसंशयः ॥ अत्रस्थास्त्रिदिवं यान्ति येमृता स्ते ऽपुनर्भवाः ॥

गङ्गागर्भः। पुं। गङ्गाया गर्भ ॥ सयथा। भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम्। तावद्गर्भं विजानीयात्तदूर्द्ध्वं तीरमुच्यते ॥ तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥

गङ्गाचिल्ली। स्त्री। चिल्लविशेषे। देवट्याम्। विश्वकायाम् ॥

गङ्गाजः। पुं। कार्त्तिकेये। षडानने॥ भीष्मे ॥ गङ्गाया जातः। जनी॰। ड ॥

गङ्गाटेयः। पुं। चिङ्गिडिमाच इतिगौडभाषाप्रसिद्धे मत्स्ये। गङ्गाले ॥

गङ्गातीरम्। न। गङ्गागर्भादूर्द्ध्वप्रदेशे॥ सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते। तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥

गङ्गाधरः। पुं। शिवे ॥ समुद्रे॥ धर

ति । धृत० । अष्ट । गङ्गाया धरः ॥ जीर्णातिसारनाशके चूर्णे ॥ यथा

चक्रपाणिसंग्रहः । धातक्यामलकी पयोधरवकीकट्वङ्गयष्टीमधुश्रीजंब्वा सफलास्थिनागरविषाह्रीबेरलोध्रे-न्द्रजै । तुल्यांशं विहितं सतण्डुल जलं गङ्गाधराख्यं महच्चूर्णं तूर्णमपाकरोति सकलं जीर्णातिसारं परमिति ॥

गङ्गापत्री । स्त्री । हत्तविशेषे । गन्धपत्रिकायाम् ॥

गङ्गापुत्रः । पुं । भीष्मपितामहे ॥ वर्णसङ्करजातिविशेषे । लेटात् तीवरकन्यायां जाते । मुरदारफरोस इति पारस्यभाषा ॥ इति ब्रह्मवैवर्त्त पुराणम् ॥

गङ्गासुतः । पुं । कार्त्तिकेये ॥ भीष्मे ॥ गङ्गायाः सुतः ॥ गङ्गापुत्रे ॥

गङ्गास्वरूपम् । न । तद्ध्याननिरूपित स्वरूपे ॥

गङ्गिका । स्त्री । गङ्गायाम् ॥ अज्ञाता र्थेकः । ह्रस्वः । अभाषितपुंस्काच्चेति पक्षे विकोत्तरपदादेशः ॥

गच्छः । पुं । वृक्षे । गाछ इति भाषा ॥ इति त्रिकाण्डशेषः ॥

गजः । पुं । मानविशेषे ॥ अरत्नीनां शतान्यष्टौ च कथ्यन्ते धनूंषि च । गजप्रमाणं संख्यातं मुनिभिर्ब्रह्म वादिभिः ॥ मानसामान्ये ॥ साधारणौ नराङ्गुल्या त्रिंशदङ्गुलको गजः ॥ हस्तद्वये पादोनहस्तद्वयेच ॥ हस्तिनि । मतङ्गजे ॥ भद्रो मन्द्रो मृगश्चैव विज्ञेया स्त्रिविधा गजः ॥ वास्तुस्थान विशेषे । प्रस्तारे दैर्घ्य मानन्तु स्वहस्तेन तथा नरैः । कृत्वा त्रिंशं गजैर्हृत्वा वास्तुस्थाननिरूपणम् ॥ ध्वजो धूमश्च सिंहश्च श्वा वृषः खर एवच । गजः काकपदश्चैव स्थानान्यष्टौच वास्तुनः ॥ ध्वजे विभूति मरणञ्च धूमे सिंहेजयः श्वाचक रोत्यनर्थम् । वृषेचभोगी च्चयणं खरेच पुष्टिर्गजे काकपदे विनाशः ॥ औषधपाकार्थं गर्त्तविशेषे । गजपुटे ॥ अष्टसु ॥ चतुर्मात्रिकत्वादिमे ऽऽ पर्याये ॥ डगणे । ऽ । मध्यगुरु संज्ञायाम् ॥ गजति । गजमदे । मचाद्यच् ॥

गजकन्दः । पुं । हस्तिकन्दे । स्थूलकन्दे ॥

गजकर्णी । स्त्री । औषधिविशेषे ॥ गजकर्णीतु तिक्तोष्णा तथा वातकफान् जयेत् । शीतज्वरहरी स्वादुः पाके तस्यास्तुकन्दकः ॥ पाण्डुरोग कृमिप्लीहगुल्मानाहोदरापहः । ग्रहण्यर्शोविकारघ्नो मनस्तरण

कल्पद्रुमः ॥

गजकूर्म्माशी । पुं । गरुडे ॥ इति शब्दरत्नावली ॥

गजकृष्णा । स्त्री । कपिवल्ल्याम् । गजपिप्पल्याम् ॥ गजेन्द्रकृष्णा । वृहत्स्यात् ॥

गजगतिः । स्त्री । अनुष्टुप्छन्दोभेदे ॥ यथा । नभलगा गजगतिः । यथा । रविसुतापरिसरे विहरतो दृशि हरेः । व्रजवधूगजगति र्मुदं मनस्यतनुत ॥

गजचिर्भटा । स्त्री । इन्द्रवारुण्याम् ॥

गजचिर्भटः । पुं । गोडुम्बायाम् ॥

गजचिर्भिटा । स्त्री । महेन्द्रवारुण्याम् ॥

गजच्छाया । स्त्री । दर्शे पराह्णे ॥ दिगुणात्मनश्छाया दर्शेऽस्ति द्वाम राह्णिकी । गजच्छायेति सा प्रोक्ता पितृणां तृप्तिकारिणी ॥ कुञ्जरच्छायायाम् । योगविशेषे ॥ यदेन्दुः पितृदैवत्ये हंसश्चैवकरे स्थितः । याम्यातिथिर्भवेत् साहि गजच्छायाप्रकीर्त्तितेति मिताक्षरापरिभाषा ॥ अपिच । कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः । यदा तदा गजच्छायाश्राद्धे पुण्यैरवाप्यत इति कृत्यचिन्तामणिः ॥ अमावास्याश्राद्धकाले ॥ यथा । अमावास्यां गते सोमे छायायामसुखीभवेत् ॥ गजच्छायातु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेदिति ॥ चन्द्रार्कयोर्ग्रहणकाले ॥ यथा । सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु । गजच्छायातु सा प्रोक्ता श्राद्धं तत्र प्रकल्पयेदिति वराहः ॥

गजढक्का । स्त्री । मेदामाने । गजोपरिस्थवृहड्ढक्कायाम् ॥

गजता । स्त्री । गजसमूहे । हास्तिके ॥ गजानां समूहः । गजसहायाभ्यामितल् ॥

गजतुरगविलसितम् । क्ली । ऋषभगजविलसिताख्यवृत्ते ॥

गजदघ्नः । त्रि । गजपरिमाणे ॥

गजदन्तः । पुं । श्रीगणेशे ॥ गजस्य दन्ताविव दन्तावस्य ॥ गजस्य दन्तः । हाथीदाँत इति भाषा ॥ नागदन्ते । द्रव्यस्थापनार्थं भित्तिस्थे दारुदण्डे ॥ खूंटा इति भाषा ॥

गजदन्तफला । स्त्री । डङ्गरीलतायाम् ॥

गजदानम् । न । हस्तिमदे ॥ मतङ्गजस्य त्यागे ॥ गजस्य दानम् ॥

गजाधिपः । पुं । गन्धोष्णे । स्वामी हस्ते ॥

गजपिप्पली । स्त्री । इभकणायाम् ॥

करिपिप्पल्याम् ॥ चविकायाः फल प्राज्ञैः कथिता गजपिप्पली ॥ गज कृष्णा कटु र्वातश्लेष्मनुद्वह्निवर्द्धिनी ॥ उष्णा निहन्त्यतीसारं श्वासकण्ठा मयक्रमीन् ॥ गजद्दवपिप्पली । वृ हत्त्वात् ॥

गजपुट । पुं । औषधपाकार्थं हस्तपरि मिते गर्त्ते ॥ यथा । हस्तप्रमाणो गर्त्तोयः पुट. सतु गजाह्वयः । इत्थं वारत्निकेकुण्डेपुटो वाराह उच्यते॥

गजपुष्पी । स्त्री । नागपुष्प्यां लता याम् ॥

गजप्रिया । स्त्री । शल्लकीवृक्षे ॥

गजबन्धः । पुं । आकरैष्योगजग्रहणे ॥

गजबन्धनी । स्त्री । हस्तिबन्धनशाला याम् । वार्थ्याम् । हथीयान इति भाषा ॥ बध्यन्त ऽस्याम् । बन्धबन्ध ने । ल्युट् । ङीप् । गजस्य बन्धनी ॥

गजभक्षक. । पुं । अश्वत्थवृक्षे ॥

गजभक्ष्या । स्त्री । शल्लकीद्रुमे । सा लैं इति भाषा ॥ गजैर्भक्ष्यते । भक्ष्या ॥

गजमाचल: । पु । स्त्री । सिंहे ॥

गजमात्र । त्रि । गजदघ्ने ॥

गजवदन: । पुं । लम्बोदरे । हेरम्बे ॥ गजस्यवदनमिव वदनमस्य ॥

गजवल्लभा । स्त्री । गिरिकदल्याम् । श दुधीजायाम् । वनरम्भायाम् ॥ श ल्लक्याम् ॥

गजवीथी । स्त्री । उत्तरमार्गे । नक्षत्र विशेषाणां संज्ञायाम् ॥ यथा । रो हिण्यार्द्रामृगशिरो गजवीथ्यभिधीय त इति ॥

गजसाह्वयम् । न । हस्तिनापुरे॥ गजे नसहित आह्वयो नामयस्य। हस्ती नामराजा तेन निर्मितत्वात्॥

गजाख्यः । पुं । चक्रमर्द्दवृक्षे ॥

गजाग्रणीः । पुं । ऐरावतगजे ॥ गजा ना मग्रणीः ॥

गजाजीवः । पुं । आधोरणे । हस्तिप के । हस्तिपालके॥ गजआजीवोयस्य॥

गजाण्डम् । न । पिण्डमूले ॥

गजानन । पुं । गजवदने । विनायके ॥ यथा । वागीशाद्याः सुमनसः स र्वार्थानामुपक्रमे । यं नत्वा कृतकृ त्या. स्युस्तं नमामि गजानन मिति ॥ गजआनन मस्य । समुदायशब्दा अवयवेऽपिवर्त्तन्तइति गजमुखपरो गजशब्दः ॥ गजानन मिवानन म स्येतिवा । उष्ट्रमुखवत् समासोत्तर पदलोपौ ॥

गजारिः । पुं । तरुविशेषे ॥ सिंहे ॥ इ तिहड्डचन्द्रः ॥

गजारोह. । पुं । हस्तिपके ॥ गजमारो

इति । इन्द्रैः कर्मसाधनम् ॥

गजाशनः । पुं । पिप्पलवृक्षे ॥ गजेन अश्यते । अश० । कर्मणिल्युट् ॥

गजाशना । स्त्री । भङ्गायाम् ॥ पद्ममूले ॥ शल्लक्याम् ॥

गजास्यः । पुं । गणाधिपे । द्वैमातुरे ॥ गजस्य आस्यमिव आस्यं यस्य ॥

गजाह्वम् । न । हस्तिनापुरे ॥

गजाह्वयम् । न । हस्तिनापुरे ॥

गजाह्वा । स्त्री । गजपिप्पल्याम् ॥

गजेष्टा । स्त्री । विदार्याम् ॥

गजोषणा । स्त्री । करिपिप्पल्याम् ॥

गञ्जः । पुं । रीढायाम् । अवज्ञायाम् ॥ पुं । न । भाण्डागारे ॥ खनौ ॥ गोष्ठागारे ॥

गञ्जनम् । न । नाशे ॥

गञ्जा । स्त्री । मदिरागृहे ॥ खन्याम् ॥ पामरसद्मनि ॥ मद्यभाण्डे ॥ गञ्जन्याम् । गञ्जिशब्दे । गुरोश्चहलइत्यप्रत्ययः ॥

गञ्जिका । स्त्री । मदिरागृहे ॥ गञ्जैव स्वार्थे कः । प्रत्ययस्थादितीत्वम् ॥

गडः । पुं । गड़इमाछ इतिगौडभाषाप्रसिद्धेमत्स्ये ॥ पुच्छशीर्षेण रहिताः कासमर्दैर्विमर्द्दिताः । हिङ्गुतैलेच सन्तप्ता गडमत्स्यास्वगडकाः ॥ गडो वातहरो मल्योदग्यः पथ्यो ऽग्निवर्द्धनः । मुखव्यः शुक्रदो रुच्यः किञ्चित्कफकरः सरः ॥ अन्तराये ॥ परिखायाम् ॥ व्यवधाने ॥ शाकम्भरीये । साँभर इतिभाषाप्रसिद्धे लवणे ॥ गडाख्यं लघु वातघ्नमत्युष्णं भेदि पित्तलम् । तीक्ष्णं व्यवायि सूक्ष्मञ्च अभिष्यन्दि कटुपाकि च ॥ गडति । गड० । अच् ॥ देशविशेषे ॥

गडकः । पुं । मत्स्यविशेषे । गज्जुयाभेके । गड़इमाछ इतिगौडभाषा ॥ गडति । गडसेचने । क्वुन् शिल्पिसंज्ञयोरितिक्वुन् ॥

गडयन्तः । पुं । मेघे ॥ गडेस्तूभूवञ्चीति आप् । घटादित्वात् मित्त्वे ह्रस्वः । अयामन्तेतिणेरयादेशः ॥

गडदेशजम् । न । साम्भरे । साँभरलून इतिभाषा ॥

गडलवणम् । न । साँभर इति प्रसिद्धलवणे । साम्भरे । शुभ्रे । पृथ्वीजे ॥

गडाख्यः । पुं । शाकम्भरीयेलवणे ॥

गडिः । पुं । वत्सतरे ॥ अलसेगवादौ । गड़िया इति भाषा ॥ यथा । गुणानामेव दौरात्म्या द्धुरि धुर्यो नियुज्यते । असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिरितिकाव्यप्रकाशः ॥

गडुः । पुं । पृष्ठगुडे । घाटामस्तकयोर्मध्येमांसवृद्धौ ॥ कुब्जे ॥ किञ्चलुके ॥

रेव प्रदिष्टो दनुजविबुधयोः साद्धे रमेकान्त मेवेति रामः ॥

गणकः । पुं । सांवत्सरे । ज्यौतिषिके । दैवज्ञे ॥ वर्णसङ्करजातिविशेषेयम् । देवलाद्वैश्यागर्भजातः । तिथिवारादिज्ञापनञ्च तस्य कर्मोक्तं पराशरपद्धतौ ॥ तल्लक्षणं यथा । ज्योतिःशास्त्रविशेषज्ञः सुन्दराङ्गः सभापटुः । कुलक्रमागतः शुद्धो गणकः स्यान्महीपतेरिति युक्तिकल्पतरुः ॥ अस्पृश्योयधर्मानुष्ठाने । यथा । कलिकाले महेशानि पापण्डा बहवो जनाः । सङ्गदोषान् महेशानि तत्स्पर्शाद्गुणितां व्रजेत् ॥ तस्मात् प्रयत्नतो देवि संसर्गं वर्जयेत् सुधीः । वरं चण्डालसंस्पर्शं कुर्यात्तु साधकोत्तमः ॥ तथाप्यस्पृश्यगणकं सर्वदा तं परित्यजेदिति महिषमर्दिनीतन्त्रम् ॥ चि । गणेनक्रीते ॥ सङ्ख्याया इतिकन् ॥ गणयति वा । गण० । ण्वुल् ॥

गणकर्णिका । स्त्री । इन्द्रवारुण्याम् ॥

गणकारः । पुं । धातुसङ्ग्रहकर्त्तरि भीमसेने ॥

गणकी । स्त्री । गणकस्य पत्न्याम् ॥ गणकस्य स्त्री । पुंयोगादितिङीष् ॥

गणकूटः । पुं । न । गणभेदे ॥

गणचक्रम् । न । }
गणचक्रकम् । न । } धार्म्मिकाणां सम्भूय भोजने ॥ गणानां चक्रं ॥

गणता । स्त्री । गणसमूहे ॥

गणतिथः । त्रि । गणानां पूरणे ॥ तस्य पूरणे डट् । तस्य तिथुगागमः ॥

गणदीक्षी । पुं । बहुयाजके ॥

गणदेवता । स्त्री । सङ्घचारिदेवताविशेषे ॥ यथा । आदित्यविश्ववसवस्तुषिता भास्वरानिलाः । महाराजिकसाध्याश्च रुद्राश्च गणदेवताः इति ॥ तत्र आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः । वसवश्चाष्टसङ्ख्याताः षट्त्रिंशत्तुषिता मताः ॥ आभास्वराश्चतुःषष्टि र्वाताः पञ्चाशदूनकाः । महाराजिकनामानो द्वे शते विंशतिस्तथा ॥ साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः । एते च संहता देवाः पुराणेषु निरूपिता इति विशेषः ॥ समुदायेष्वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते इतिन्यायादमीषां शब्दानामेकवचनमपि साधु ॥

गणद्रव्यम् । न । साधारणद्रव्ये ॥

गणनम् । न । सङ्ख्याने । गिणना ठीकदेना इति भाषा ॥ येनैव लिख्यते सङ्ख्या तेनैव गणनं स्मृतम् ॥

गणना । स्त्री । गणने । सङ्ख्यायाम् ॥

गणनाथः । पुं । गणेशे ॥ गणानां प्रमथानां नाथः ॥

गणनायकः । पुं । गणेशे ॥

गणनायिका । स्त्री । दुर्गायाम् ॥

गणनीयः । त्रि । सङ्ख्येये । गणेये ॥ गण्यते । गणसङ्ख्याने । अनीयर् ॥

गणपतिः । पुं । श्रीगणेशे ॥ गणानां प्रमथानां पतिः ॥ पुष्टिर्गणपतेः पत्नी ॥

गणपर्वतः । पुं । कैलासाचले ॥

गणपीठः । पुं । न । } वक्षसि ॥
गणपीठकम् । न । }

गणभर्त्ता । पुं । प्रमथनाथे ॥

गणमैत्रम् । न । गणकूटे ॥ पश्यास्य विवरणं गणशब्दे । अश्विन्यादिजन्मनक्षत्रानुसारेण देवमानुषराक्षसगणइति पारिभाषिकं इत्यन्त ॥

गणयाजकः । पुं । विनायकादिगणया जकृतिः ॥ गणानां याजकः ॥

गणरात्रम् । न । रात्रिवृन्दे ॥ गणानां बह्वीनां रात्रीणां समाहारः । गणशब्दस्य सङ्ख्यात्वात् तद्धितार्थे द्विगुः । अच् सर्वैकदेशेत्यच् । सङ्ख्यापूर्वं रात्रं क्लीबमिति लिङ्गानुशासने क्लीबत्वविधानात् रात्राह्नाहाः पुंसीति पुंस्त्वं न ॥

गणरूपः । पुं । अर्कपादपे ॥ श्वेतार्के ॥ नानात्वात् गणा बहूनि रूपाण्यस्य ॥



गणरूपकः । पुं । राजार्के ॥

गणरूपी । पुं । श्वेतार्के ॥

गणवतीसुतः । पुं । दिवोदासे ॥

गणशः । अ । बहुशः । गणान् इति । बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति गणाच्छस् ॥

गणहासः । पुं । } चोरकनामग
गणहासकः । पुं । } न्धद्रव्ये । चण्डायाम् ॥ गणं हासयति । हसे० । ण्यन्तः । अच् ॥ ण्वुल् कुन् वा ॥

गणाग्रणीः । पुं । गणेशे ॥ गणानामग्रणीः ॥

गणाचलः । पुं । कैलासपर्वते ॥ गणानामचलः ॥

गणाधिपः । पुं । गणेशे ॥ शिवे ॥ गणानां प्रमथानामधिपः ॥

गणाधिपतिः । पुं । गणेशे ॥ शिवे ॥ गणानामधिपतिः ॥

गणान्नम् । न । मठशास्त्रसङ्घान्ने ॥

गणाभ्यन्तरः । पुं । गणार्थोत्सृष्टमठधनाद्युपजीविनि । गणार्थोपसृष्टसम्बन्धिधनाद्युपजीविनि ॥

गणिका । स्त्री । वेश्यायाम् ॥ गणः समूहोऽस्त्यस्याः भर्तृत्वेन । ठन् ॥ यूथिकायाम् ॥ चित्ताकर्षकत्वात् गणिकेव ॥ गणकारिकायां चे ॥ इभ्याम् । हस्तिन्याम् ॥ गणयति । गण० ।

ण्वुल् ॥

गणिकारिका । स्त्री । श्रीपर्णी अग्नि मन्थे । बड़गणियारी इति गौडभाषा । अरणी इति भाषा ॥ गणनम् । गण० । इकुकृयादिभ्यः । गणिक रोति । कर्मण्यण् । स्वार्थे कन् ॥ यद्वा । गणयति । गण० । ण्वुल् । गणिका चासावारिका च ॥ जयपर्णी ॥

गणिकारी । स्त्री । गणियारी इति गौडभाषाप्रसिद्धे पुष्पवृक्षविशेषे । काञ्चनिकायाम् । वसन्तदूत्याम् । अग्निमेदायाम् ॥

गणितम् । न । अङ्कशास्त्रे ॥ तद्द्विविधम् । द्विविधं गणितमुक्तं व्यक्तमव्यक्तमिरयुक्तः । व्यक्तं पाटीगणितम् । अव्यक्तं बीजगणितम् ॥ गणने ॥ त्रि । सङ्ख्याते । कृतगणने ॥ गणयतेस्म । गण० । क्तः ॥

गणिपिटका । स्त्री । जिनानां विद्याविभागे । द्वादशाङ्ग्याम् ॥

गणेयः । त्रि । गणनीये । सङ्ख्येये । गणये ॥ गणेर्यः ॥

गणेरुः । पुं । कर्णिकारवृक्षे ॥ स्त्री । करिण्याम् ॥ वेश्यायाम् ॥

गणेरुका । स्त्री । कुट्टन्याम् ॥

गणेरुः । स्त्री । करिण्याम् ॥ वेश्यायाम् ॥

गणेशः । पुं । विनायके । विघ्नराजे । वक्रतुण्डे ॥ यथा । योयः कश्चित्तीर्थयात्रान्तु गच्छेत् सुसंयतः स च पूर्वं गृहेस्वे । कृतोपवासः शुचिरप्रमत्तः संपूजयेद्भक्तिनम्रो गणेशमिति भविष्यपुराणम् ॥ शिवे ॥ गणानामीशः ॥

गणेशकुसुमम् । न । रक्तकरवीरे ॥

गणेशभूषणम् । न । सिन्दूरे ॥

गणेशोत्साहः । पुं । खड्गे । गण्डके । गैंडा इति भाषा ॥

गण्डः । पुं । खड्गिनि । तुङ्गमुखे । मज्जचर्मणि ॥ वीथ्यङ्गे ॥ पिटके ॥ चिह्ने ॥ वीरे ॥ कपोले । गाल इति भाषा ॥ यथा । गण्डे गण्डे सन्दधन्त्या स्वदन्तै ताम्बूलचर्वितमिति श्रीभागवते कौमारचर्यो ॥ हयभूषणबुद्बुदे ॥ करिकपोले । कटे । करटे ॥ गण्डति । गडि वदनैकदेशे । अच् ॥ ग्रहभेदे ॥ विष्कम्भादिषु दशमे योगे ॥ तत्रजातस्य फलम् । स्वकार्यैकसौ परकार्यहर्ता । गण्डोद्भवः स्यादतिगण्डशीलः । अत्यन्तधूर्त्तः पुरुषः कुरूपः सुहृज्जनानामतितापदाता ॥ दोषजनकोऽश्विन्यादीनां भागविशेषे ॥ यथा । अश्विनीमघमूलानां तिस्रो गण्डादनाडिकाः । अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव जवनानगुः

॥ मूलेन्द्रयो दिवागण्डो निशायां पित्सर्पयोः । सन्ध्याद्वये तथाश्वेयो रेवतीतुरगर्क्षयोः ॥ तयोत्पन्नस्य दोषो यथा । सन्ध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः । आत्मानं मातरं तातं विनिहन्ति यथाक्रमम् ॥ चतुष्कले ऽ ॥ आदिगुरोःसंज्ञायाम् ॥ गच्छति । गम्लृ० । अमन्ताड्डः ॥

गण्डकः । पुं । खड्गे । गैंडा इति भाषा ॥ एकचरे ॥ सङ्ख्याप्रभेदे । गण्डा इति भाषा ॥ विद्याप्रभेदे ॥ अवच्छेदे ॥ अन्तराये । विघ्ने ॥ स्वा० कः ॥

गण्डकारी । स्त्री । वराहक्रान्तायाम् । समङ्गायाम् । छाणाओडी इति भाषा ॥ गण्डेषु ग्रन्थिषु कारी ॥

गण्डकाली । स्त्री । खदिर्याम् । नमस्कार्याम् । समङ्गायाम् ॥ गण्डेषु ग्रन्थिषु काली ॥

गण्डकी । स्त्री । नदीविशेषे ॥ गण्डक्याश्चैकदेशेच शालग्रामस्थलंस्मृतम् । पाषाणं तद्भवं यत् तत्शालग्राममितिस्मृतम् ॥

गण्डकीसुतः । पुं । शालग्रामे ॥

गण्डकीशिला । स्त्री । शालग्रामे ॥

गण्डकुसुमम् । न । उत्कटे । मदे । वल्गिनि ॥ इति हारावली ॥

गण्डकूपः । पुं । पर्वतस्योर्द्ध्वस्थले ॥ उद्देशो गण्डकूपस्तु पर्वतस्याभिधीयते ॥

गण्डगात्रम् । न । आत्मये । सीताफल सारीफा इति भाषा । आता इति गौडभाषा ॥ गण्डाः गात्रेयस्य ।

गण्डदूर्वा । स्त्री । गोलोम्याम् । श्वेतदूर्वायाम् । मत्स्याक्ष्याम् । गांडरदुबी इति भाषा ॥ गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः । तिक्ता कषाया मधुरा वातकृतकटुपाकिनी ॥ दाहतृष्णा बलासास्रकुष्ठपित्तज्वरापहा ॥

गण्डमाला । स्त्री । रोगविशेषे ॥ तस्य सम्प्राप्तिरूपे यथा । कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु । मेदः कफाभ्यांचिरमन्दपाकैः स्याद्गण्डमाला बहुभिस्तुगण्डैरिति ॥

गण्डमालिका । स्त्री । लज्जालुकाम् ॥

गण्डमाली । त्रि । गण्डमालाख्यव्याधियुक्ते ॥

गण्डयन्तः । पुं । मेघे ॥ गण्डयति । गडि० । तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेतिझच् सचचित् । गडेर्घटादित्वान्मित्त्वम् । ह्रस्वः । झस्यामन्तेतिरेयादेशः ॥

गण्डलेखा । स्त्री । गण्डस्थल्याम् ॥

गण्डशैलः । पुं । गिरेश्च्युते स्थूलोपले ॥ भूकम्पादिना शैलात् स्खलिते मण्डि प्रस्तरे ॥ ललाटे । गण्डस्थशैलः । शैलशब्दः शैलावयवे वर्त्तते । विशेषणं विशेष्येण बहुलमिति समासः ॥ शैलस्य गण्ड इवेति वा । राजदन्तादिः ॥

गण्डाङ्गः । पुं । खड्गिनि । गण्डके ॥

गण्डान्तम् । न । तिथिनक्षत्रलग्नानां सन्धौ ॥ नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् । नवमपञ्चमचतुर्थानां द्व्येकाङ्क घटिकामितम् ॥

गण्डारिः । पुं । कोविदारवृक्षे ॥

गण्डाली । स्त्री । श्वेतदूर्वायाम् । शतवीर्यायाम् ॥ गण्डयति । गडि० । धात्वर्थकाद्यलच् । गौ० ङीष् ॥ यद्वा गण्ड मलति । अल० । कर्मण्यण् । ङीप् ॥

गण्डिः । पुं । वृक्षस्य मूलात् स्कन्धावधिभागे ॥ इति हेमचन्द्रः ॥

गण्डीरः । पुं । गंडरदुबीति प्रसिद्धे शाके । समष्ठिलायाम् ॥ शूरे ॥ गण्डयति । गडि० । गण्ड्यते वा । वा० ईरन् ॥ यद्वा । गण्डान् ग्रन्थीन् ईरयति । ईर प्रेरणे । कर्मण्यण् ॥

गण्डीरी । स्त्री । मञ्जिष्ठायाम् ॥ सेहुण्डे ॥

गण्डुः । पुं । स्त्री । ग्रन्थौ ॥ उपधाने ॥

गण्डूपदः । पुं । किञ्चुलुके । केँचुआ इति भाषा ॥ गण्डवो ग्रन्थयः पदान्यस्य ॥

गण्डूपदी । स्त्री । किञ्चुलकस्त्रियाम् । क्षुद्र किञ्चुलुकजातौ । स्त्रियाम् ॥ जातेरस्त्रीति ङीष् ॥

गण्डूषः । पुं । मुखपूर्त्तौ । मुखपूर्त्ततोये ॥ यथा । अम्बुदाद्गण्डूषै र्मुखशुद्धिर्विधीयतेइति ॥ हस्तिशुण्डाग्रे । पुष्करे ॥ प्रसृतोन्मिते । प्रसृत्याप्रमिते ॥ कराङ्गुलौ ॥ गण्ड्यते । गडि० । गण्डेरूषन् ॥

गण्डूषा । स्त्री । गण्डूषशब्दार्थे ॥ उणतनाभौ ॥ टाप् ॥

गण्डोलः । पुं । गुडे ॥ ग्रासे ॥ गण्डति । गडि० । कपिगडिगण्डिकटीत्योलच् ॥

गण्यः । पुं । गणनीये । संख्येये ॥ गणसम्बन्धिनि ॥ गणंलब्धा । धनगणंलब्धेति यत् ॥

गतः । त्रि । विज्ञाते । याते ॥ समासे ॥ पतिते ॥ आप्ते ॥ न । गमने ॥ गम्लृ० । गत्यर्थाकर्मकेति क्तः । अनुदात्तोपदेशेति मलोपः ॥

गतत्रपः । त्रि । त्यक्तलज्जे ॥ गता त्रपा यस्य सः ॥

गतनासिकः । त्रि । नासिकारहिते ।

विशेषे ॥ गता नासिकास्य ॥

गतबुद्धिः । त्रि । ज्ञानशून्ये ॥ गता बुद्धि र्यस्य ॥

गतरसः । त्रि । विरसतां प्राप्ते । उद्धृतसारे मथितदुग्धादौ ॥ गतो रसोऽस्मात् ॥

गतव्यथः । त्रि । अनुत्पन्नदुःखे ॥ गता व्यथा यस्य यस्माद्वा ॥

गतसङ्गः । त्रि । फलासङ्गशून्ये ॥ गतः सङ्गो यस्य सः ॥

गतसन्देहः । त्रि । निरस्तसर्वसंशये ॥ गतः सन्देहो यस्य सः ॥

गतसन्नकः । पुं । निर्मदे हस्तिनि ॥

गतस्मयः । त्रि । निरहङ्कारे ॥ गतः स्मयो गर्वो यस्य ॥

गतागतम् । न । यातायाते ॥ गतागतं कामकामा लभन्ते ॥ पक्षिणां गतिविशेषे ॥

गतार्त्तवा । स्त्री । वन्ध्यायाम् ॥ वृद्धायाम् ॥

गतिः । स्त्री । मार्गे ॥ दशायाम् ॥ ज्ञाने ॥ पाद्ययोर्व्यापारे । यात्रायाम् ॥ अभ्युपाये ॥ नाडीव्रणसरण्याम् । व्रणदूषे ॥ कर्मफले स्वर्गादौ ॥ मुक्तौ ॥ आश्रये ॥ प्राप्तौ ॥ गम्यते । गम्° । क्तिन् ॥ यस्य ॥

गतिका । स्त्री । नदीविशेषे ॥ परम्परा विशेषे ॥

गत्वरः । त्रि । गमनशीले ॥ गच्छति । तच्छीलादिः । गम्° । गत्वरश्चेति क्वरप् अनुनासिकलोपश्च निपात्यते । ङीपि गत्वरी ॥

गदः । पुं । श्रीकृष्णानुजे ॥ आमये । रोगे ॥ भाषणे ॥ गदति । गद व्यक्तायां वाचि । पचाद्यच् ॥ न । विषे ॥

गदनम् । न । निगादे ॥ गद° । ल्युट् ॥

गदयित्नुः । पुं । कन्दर्पे । अनङ्गे ॥ शरासने । कार्मुके ॥ जल्पाके ॥ गदयति । गद° । स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् । अयामन्तेति णेर यादेशः ॥

गदा । स्त्री । आयुधे । स्वनाम्ना प्रसिद्धे लोहमये शस्त्रे ॥ पाटलावृक्षे ॥ अजशृङ्गाम् ॥

गदाख्यम् । न । कुष्ठौषधौ । कूठ इति भाषा ॥

गदागदौ । पुं । अश्विनीकुमारयोः । स्वर्वैद्ययोः ॥

गदाग्रजः । पुं । श्रीकृष्णे । श्रीधरे ॥ निगदेन मन्त्रेणाग्रे जायते । निश ब्दलोपं कृत्वा गदाग्रजः ॥ यद्वा । गदोनाम वासुदेवस्यावरः । तस्मादग्रेजातः । सत्यामर्लेर्चः ॥

गदाग्रणीः । पुं । क्षयरोगे ॥

गदाधरः । पुं । हरौ ॥ धरतीति धरः । बुद्धितत्त्वात्मिका कौमोदकी नाम गदा । तस्याः धरः ॥ त्रि । गदाधारिणि ॥

गदाभृत् । न । विष्णौ ॥

गदाम्बरः । पुं । घने । मेघे ॥

गदारातिः । पुं । औषधे ॥

गदार्त्तः । त्रि । रोगिणि ॥ गदेन रोगेण आर्त्तः ॥

गदावान् । त्रि । गदिनि ॥ पुं । अच्युते ॥

गदाह्वम् । न । } कुष्ठौषधे ॥
गदाह्वयम् । न । }

गदी । पुं । कौस्तुभवक्षसि । विष्णौ ॥ गदा अस्ति अस्य । व्रीह्यादित्वादिनिः ॥ त्रि । गदाविशिष्टे ॥ रोगयुक्ते ॥

गदिनी । स्त्री । गदावत्याम् ॥ नान्तलक्षणो ङीप् ॥ रोगिण्याम् ॥

गद्गदः । पुं । वाचःस्खलिते । कण्ठकम्पने ॥ अव्यक्तस्पष्टवक्तरि ॥ तल्लक्षणमासिपूर्वकं लक्षणम् । यथा । आवृत्त्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियान् मूकमिन्मिनगद्गदानिति ॥

गद्गदध्वनिः । पुं । हर्षशोकादिना अस्पष्टध्वनौ । मन्मने ॥ गद्गदश्चासौ ध्वनिश्च ॥ मन्याने ॥ गद्गदोध्वनिर्वेष ॥

गद्यम् । न । पद्यभिन्नेकवित्कृते । अपादे पदसन्ताने ॥ अपादः पदसन्तानं गद्यं तत्तु त्रिधामतम् । वृत्तकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ॥ गद्यते । गद॰ । गदमदचरयमश्चानुपसर्गे इति यत् ॥

गद्याणकः । पुं । अष्टचत्वारिंशद्रक्तिकापरिमाणे ॥ वैद्यकमतेचतुःषष्टिगुञ्जापरिमाणे ॥

गन्तव्यः । त्रि । प्राप्ये ॥

गन्तुः । पुं । पथिके ॥ गच्छति । गम्लृ गतौ । सितनीति तुन् ॥

गन्ता । त्रि । गामुके । गमनशीले ॥ गच्छति तच्छीलः । गम्लृ॰ । ता च्छीलिकेषु वासरूपविधिर्नास्ति यस्य प्रायिकत्वात्तृन् ॥

गन्त्री । स्त्री । कम्बलिवाह्यके । वृषवहनीयशकटे । गाडीइतिभाषा ॥ गम्यतेऽनया । गम्लृ॰ । ष्ट्रन् । ङीष् ॥

गन्त्रीरथः । स्त्री । रथे । शकटे ॥ इति हारावली ॥

गन्धः । पुं । सम्बन्धे ॥ लेशे ॥ गन्धके ॥ गर्वे ॥ शिशौ ॥ घृष्टचन्दने ॥ चन्दनकुङ्कुमादिषु गन्धाः । यथोक्तम् । गन्धस्तु सौरभे योगे गन्धके गर्वलेशयोः । सएवद्रव्यवचनो बहुत्वे पुंसि

च स्मृतः इति ॥ सपञ्चविधो यथा । चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा । रस सम्मर्दजो वापि प्राण्यङ्गोद्भव एव वा । गन्धः पञ्चविधः प्रोक्तो । देवानां प्रीतिदायक इति । स च यांस्तच्छब्देऽष्टव्यम् ॥ गन्धो मलयजो यस्तु देवे यैपेच सम्मतः ॥ कर्पूरगन्धसाराद्याः चोदृष्टेच संस्थिताः । चन्द्रभागादयश्चापि रसेपङ्केच सङ्गताः ॥ गन्धसारस्तु सर्वत्र संसर्गादै मधुज्यते । मृगनाभिर्भवेद् दृष्ट च्चूर्णोऽप्यन्यस्ययोगतः ॥ एवं सर्वस्तु सर्वत्र गन्धो भवति पञ्चधा । घृष्टादिभावादन्योऽपि गन्धः प्रीतिकरः परः ॥ गन्धस्य विस्तरोभेदो प्रोक्तः कालीयकादयः । सर्वे पञ्चविधेष्वेव प्रविष्टो भवतीचेत्यादिति कालिकापुराणम् ॥ आमोदे ॥ सतु घ्राणग्राह्यः पृथिवीगुणः । यथा । घ्राणग्राह्योभवेद् गन्धो घ्राणस्यैवोपकारकः । सौरभ्यश्चासौरभ्यस्सद्वेधा परिकीर्त्तितः ॥ सतु दशविधो यथा । इष्टः १ कस्तूरिकादौ । अनिष्टः २ शवादौ । मधुरः ३ मधुपुष्पादौ । कटुः ४ मरिचादौ । निर्हारी ५ हिङ्ग्वादौ । संहतः ६ चित्रगन्धोऽनेकवस्तुगतः । स्निग्धः ७ सद्यस्तप्तघृतादौ । रूक्षः ८ सार्षपतैलादौ । विसदः ९ शाल्यन्नादौ ॥ अम्लः १० आम्रातकादौ ॥ आश्रा आत्मनि । कृष्णागुरुणि ॥ त्रि । प्रतिवेशिनि ॥ गन्धयते । गन्धमर्द्दने । पचाद्यच् ॥

गन्धकः । पुं । शिग्रौ । शोभाञ्जने ॥ गन्धाश्मनि । सौगन्धिके । उपधातुविशेषे ॥ अस्योत्पत्तिर्यथा । श्वेतद्वीपे पुरा देव्याः क्रीडन्त्या रजसाप्लुतम् । दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ ॥ प्रसृतं यद्रजस्तस्माद् गन्धकः समजायत ॥ तस्य भेदाः । चतुर्द्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः । रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने । व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः स दुर्लभः ॥ श्रेष्ठो हेमक्रियादिषु सर्वेषु प्रशस्ततर इत्यर्थः । अस्य गुणाः । गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः । पित्तलः कटुकः पाके कण्डूवीसर्पजन्तुजित् ॥ हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः ॥ अशोधितो गन्धक एव कुष्ठं करोति तापं विषमं शरीरे । सौख्यञ्च रूपञ्च बलं तथौजः शुक्रं निहन्त्येव करोति चास्रम् ॥ शोधितो यस्तु गन्धः स्यात् जराम्टत्युविनाशकः । अग्निस

गन्धको

न्दीपनः श्रष्ठोवीर्यवृद्धिकरोऽस्थिकृत् ॥ शोधनविधिस्तु । लोहपात्रे विनिःक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ॥ विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिःक्षिपेत् । यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलं क्षिपेत् ॥ एवंस गन्धकः शुध्येत् सर्वकर्मोचितो भवेत् ॥ गन्धोस्त्यऽस्मिः । अर्श आद्यच् । स्वार्थे कन् ॥

गन्धकन्दकः । पुं । कशेरुणि ॥

गन्धकचूर्णः । पुं न । दारु वल्कद इति प्रसिद्धे पदार्थे ॥ गन्धकप्रधान चूर्णः ॥

गन्धकाननम् । न । कैरवे ॥

गन्धकारिका । स्त्री । सैरन्ध्र्याम् ॥

गन्धकालिका । स्त्री । व्यासमातरि ॥

गन्धकाली । स्त्री । रि ॥

गन्धकाष्ठम् । न । प्रमरचन्दने ॥ अगुरुकाष्ठे ॥

गन्धकुटी । स्त्री । मुरानामगन्धद्रव्ये ॥ लेखस्थाने ॥ गन्धककुटी इव ॥

गन्धकुसुमा । स्त्री । गणिकार्याम् ॥

गन्धकेलिका । स्त्री । कस्तूर्याम् ॥

गन्धकोकिला । स्त्री । क्षोयधिविशेषे ॥ सितोष्णा कफहृत् तिक्ता सुगन्धा गन्धकोकिला ॥

गन्धना

गन्धखेडम् । न । गन्धवीरणे । भूतृणे । रौहिषे । गन्धवेणा इति । गौड भाषा ॥

गन्धखेडकम् । न । गन्धतृणे । सुगन्ध भूतृणे ॥

गन्धचेलिका । स्त्री । कस्तूर्याम् ॥

गन्धजलम् । न । केतकादिजले ॥

गन्धजातम् । न । तेजपत्रे ॥

गन्धज्ञा । स्त्री । नासिकायाम् ॥

गन्धतूर्यम् । न । वाद्यविशेषे । रणतूर्ये । महास्वने ॥

गन्धतृणम् । न । सुगन्धभूतृणे । सुरसे । मुखवासे ॥

गन्धतैलम् । न । गन्धद्रव्याणाम् गुर्वादीनां मग्नियोगेन निष्कासिते स्नेहे । अतर इति भाषा ॥

गन्धत्वक । न । एलवालुके ॥

गन्धदला । स्त्री । अजमोदायाम् ॥

गन्धधूमजः । पुं । स्वादुनामगन्धद्रव्ये ॥

गन्धधूलिः । स्त्री । कस्तूर्याम् ॥

गन्धनम् । न । उत्साहे ॥ प्रकाशने ॥ सूचने ॥ हिंसायाम् ॥ तृणविशेषे ॥ गन्ध० । भावकर्मकरणाधिकरणे ल्युट् ॥

गन्धनकुल । पुं । छुच्छुन्दर्याम् ॥

गन्धनाकुली । स्त्री । रास्नायाम् । नां इ इतिभाषाप्रसिद्धे रास्नाभेदे ॥ क

न्धविशेषे। महासुगन्धायाम्। म र्कटिगन्धायाम्॥ गन्धवती ना कुली॥

गन्धनामा। पुं। रक्ततुलस्याम्॥ गन्धपाषाणे॥

गन्धनाम्नी। स्त्री। कक्षासदृशे क्षुद्ररोगे॥

गन्धनाली। स्त्री। नासिकायाम्॥

गन्धनिलया। स्त्री। नवमल्लिकायाम्॥

गन्धनिशा। स्त्री। पलाश इतिमालव देशप्रसिद्धगन्धपत्रायाम्॥

गन्धपत्रः। पुं। श्वेततुलस्याम्॥ मरुवे॥ वर्वरे॥ नारङ्गे॥ विल्वे॥

गन्धपत्रा। स्त्री। शटीभेदे। एकपर्णिकायाम्। तवक्षीर्याम्॥

गन्धपत्रिका। स्त्री। गन्धपत्रायाम्। दीर्घपत्रायाम्। शटीविशेषे॥ अजमोदायाम्॥

गन्धपर्णी। स्त्री। अजमोदायाम्॥ अम्बष्ठायाम्॥ अश्वगन्धायाम्॥

गन्धपलाशिका। स्त्री। हरिद्रायाम्॥

गन्धपलाशी। स्त्री। शट्याम्। गन्धमूल्याम्॥ भवेद् गन्धपलाशीतु कषाया ग्राहिणी लघुः। तिक्ता तीक्ष्णा च कटुका ऽनुष्णास्यमलनाशिनी। शोथकासव्रणश्वासशूलहिध्माग्रहापहा॥

गन्धपाषाणः। पुं। गन्धके॥ गन्धयुक्तः पाषाणः। शाकपार्थिवादिः॥

गन्धपिशाचिका। स्त्री। धूमे॥

गन्धपीता। स्त्री। गन्धपत्रायाम्॥

गन्धपुष्पः। पुं। अङ्कोठे॥ वेतसपादपे॥ अशोकद्रुमे॥ बहुवारवृक्षे॥

गन्धपुष्पा। स्त्री। केतक्याम्॥ गणिकार्याम्॥ नील्याम्॥

गन्धफणिज्झकः। पुं। रक्ततुलस्याम्॥

गन्धफलः। पुं। कपित्थे॥ विल्वे॥ तेजः फलवृक्षे॥

गन्धफला। स्त्री। प्रियङ्गुवृक्षे॥ मेथिकायाम्॥ विदार्याम्॥ शल्लक्याम्। गजभक्ष्यायाम्॥ गन्धः फलेऽस्याः॥

गन्धफली। स्त्री। प्रियङ्गुवृक्षे॥ गन्धवत्फलान्यस्याः। पाककर्णेति ङीष्॥ चम्पककलिकायाम्॥ गन्धः फलं साध्यमस्याः॥

गन्धबन्धुः। पुं। आम्रवृक्षे॥ गन्धोबन्धुरस्य॥ गन्धद्रव्यविशेषे। चीडायाम्॥

गन्धभद्रा। स्त्री। गन्धाल्याम्। गन्धभादालिया इतिगौडभाषा॥ गन्धेन भद्रा॥ गन्धः भद्रोऽस्यां वा॥

गन्धभाण्डः। पुं। गर्दभाण्डवृक्षे॥ गन्धार्थे भाण्डे॥

गन्धमांसी। स्त्री। भूतकेश्यामोषधौ॥

गन्धमाता। स्त्री। भूमौ॥ गन्धस्य माता॥

गन्धमादनः। पुं। न। पर्वतविशेषे।

ध्वविशेषे ॥ लवङ्गलतायाम् ॥ इति
कश्चित् ॥

गन्धराजी । स्त्री । नखीनामगन्धद्रव्ये ॥

गन्धर्वः । पुं । पशुप्रभेदे । स तु कस्तूरी
मृग इति कश्चित् ॥ पुंस्कोकिले ॥
घोटके । तुरङ्गे ॥ अन्तराभवसत्त्वे ॥
अन्तरा मरणजन्मनोर्मध्ये भवं स
त्त्वं यातना शरीरम् तस्मिन्नित्यर्थः
॥ गुप्तप्राणीतिकेचित् । यथा । गन्ध
र्वः पतत्येनमेतिविराटे ॥ गायनध
र्मिणि ॥ खेचरे ॥ स्वर्गगायके । दे
वयोनिविशेषे । हाहाहूहूप्रभृतिषु ॥
यथा । हाहा हूहू श्चित्ररथो हंसो
विश्वावसु स्तथा । गोमायुस्तुम्बुरु
र्नन्दिरेवमाद्यास्ते स्मृताः । इति ॥
गानधर्मी गन्धर्वो द्विविधः । मर्त्यगन्ध
र्वो देवगन्धर्वश्चेति । यथाहुः । अ
स्मिन् कल्पे मनुष्यः सन् पुण्यपाक
विशेषतः । गन्धर्वत्वं समापन्नो म
र्त्यगन्धर्व उच्यते ॥ पूर्वकल्पकृतात् पु
ण्यात् कल्पादावेव चेद्भवेत् । गन्धर्व
त्वं तादृशो ऽत्र देवगन्धर्व उच्यते
इति ॥ गन्धं सौरभम् अर्वति इति ग
न्धर्वः । अर्व गतौ । कर्मण्यण् । ग०
॥ गन्धयति गन्धते वा । गन्ध । चु०
। अच् घञ् वा । अर्वति । अर्व ग
तौ । अच् । गन्धस्य सावर्ण्यस्य । शक
न्ध्वादिवी ॥ गन्धो ऽर्वो ऽस्येति वा ॥

गन्धर्वतैलम् । न । एरण्डतैले ॥

गन्धर्वनगरम् । न । राजनगराकारेनी
लपीतादिमेघरचनाविशेषे ॥ त
स्यादिग्विशेषेण फलप्रदर्शनार्थमाह ।
उदगादिपुरोहितनृपबलपतियुव
राजदोषदं खपुरम् । सितरक्तपीत
कृष्णं विप्रादीनामभावाय ॥ रात्रिद
मशुभप्रदम् ॥ मार्गे नृपविजयावह
मुदग्विदिक्स्थं विवर्णनाशाय । शा
न्तायां तद्दृष्टं सतोरणं नृपतिविज
याय ॥ विषवाः सङ्गराः ॥ सर्वदिगुत्थं
सततोत्थितञ्च भयदं नरेन्द्रराष्ट्राणा
म् । चौराटविकान् हन्या द्धूमानल
शक्रचापाभम् ॥ गन्धर्वनगरं स्थित
मापाण्डुरं मशनिपातवातकरम् ।
दीप्ते नरेन्द्रमृत्यु र्वामे ऽरिभयं जय
प्रदं सव्ये । अनेकवर्णाकृति खे प्रका
शते पुरं पताकाध्वजतोरणान्वितम् ।
यदा तदा नागमनुष्यवाजिनां पिब
त्यसृग् भूरि रणे वसुन्धरा ॥ गन्धर्वा
णां नगरमिव ॥ इन्द्रजाले ॥

गन्धर्वपुरम् । न । गन्धर्वनगरे । शून्या
ऽधिवाने मायाविनिर्मितेपत्तने ॥ ग
न्धर्वाणां पुरमिव ॥

गन्धर्वलोकः । पुं । गुह्यकलोकोपरि
विद्याधरलोकस्याधोवर्त्तमाने लोके ॥

गन्धर्ववेदः । पुं । सङ्गीतविद्यायाम् । साम-वेदस्योपवेदे ॥

गन्धर्वहस्तः । पुं । एरण्डे ॥

गन्धर्वहस्तकः । पुं । गन्धर्वस्य मृगभेदस्य हस्त इव पर्णमस्य ॥

गन्धलता । स्त्री । प्रियङ्गौ ॥

गन्धलोलुपा । स्त्री । मक्षिकायाम् ॥ गन्धे लोलुपः ॥

गन्धवणिक् । पुं । गन्धी इति प्रसिद्धे अम्बष्ठात् राजपुत्र्यां जाते वर्णसङ्करजातिविशेषे । गन्धाजीवे । गान्धिके ॥ अस्य कर्म सिद्धं गन्धदानञ्चेति परा-शरभाष्यम् ॥

गन्धवती । स्त्री । पृथिव्याम् । पुरीभेदे । वरुणपुर्याम् ॥ योजनगन्धायाम् । व्यासमातरि ॥ सुरायाम् । गन्धोत्तमायाम् ॥ वायोर्नगर्याम् ॥ यथा । वायोर्गन्धवती तुङ्गश्वेतपीतध्वजाकुला । बलवद्भूतसंजुष्टा सर्वरत्नविनिर्मितेति खगेन्द्रसंहिता ॥ वनमल्लिकायाम् ॥ सुरानाम गन्धद्रव्ये ॥ गन्धोऽस्त्यस्याम् । रसादिभ्यश्चेति मतुप् । ङीप् ॥

गन्धवधूः । स्त्री । शट्याम् ॥ चीडाख्यगन्धद्रव्ये ॥

गन्धवल्कलम् । न । त्वचे । दारचीनी इति भाषा ॥

गन्धवल्लरी । स्त्री । सहदेव्याम् ॥

गन्धवल्ली । स्त्री । डानिमोखा इति गौडभाषाप्रसिद्धे पीतपुष्पे दण्डोत्पले । गोवन्द्याम् । सहदेव्याम् ॥

गन्धवहः । पुं । वायौ ॥ वहति प्रापयति । अच् । गन्धस्य वहः ॥ त्रि । गन्धयुक्ते ॥

गन्धवहलः । पुं । सितार्जके ॥

गन्धवहा । स्त्री । नासिकायाम् ॥ वहति । वह । पचाद्यच् । टाप् । गन्धस्य वहा ॥

गन्धवहुला । स्त्री । गोरक्षीवृक्षे ॥

गन्धवारि । न । गन्धवासितोदके । गन्धजले ॥

गन्धवाहः । पुं । वायौ ॥ कस्तूरीमृगे ॥ गन्धं वहति । वह । कर्मण्यण् ॥

गन्धवाहा । स्त्री । घ्राणे । नासिकायाम् ॥ गन्धस्य वाहो वहनं यस्यां सा ॥

गन्धविह्वलः । पुं । गोधूमे ॥

गन्धवीजा । स्त्री । मेथिकायाम् ॥

गन्धवृक्षकः । पुं । सालवृक्षे ॥

गन्धव्याकुलम् । न । कक्कोले ॥

गन्धशटी । स्त्री । शट्याम् ॥

गन्धशाकम् । न । गौरसुवर्णशाके ॥

गन्धशालिः । पुं । बासमती इति ख्याते कलमोत्तमे । गन्धतण्डुले ॥

गन्धशुण्डिनी । स्त्री । छुछुन्दर्याम् ॥

गन्धशेखरः । पुं । कस्तूर्य्याम् ॥

गन्धसलिलम् ॥ न । गन्धद्रव्याणां सलिलसंयोगेन निष्कासितेजले ॥

गन्धसारः । पुं । चन्दनवृक्षे ॥ गन्धवान् सारः स्थिरभागोऽस्य । गन्धएव सारोऽस्य वा । मुद्गरवृक्षे ॥

गन्धसारणः । पुं । दक्षचण्याम् ॥

गन्धसोमम् । न । कुमुदे । कैरवे ॥

गन्धहस्ती । पुं । मत्तेभे ॥ यस्य मदगन्धेन अन्ये गजाः पलायन्ते स गन्धहस्तीत्युच्यते ॥

गन्धकारिका । स्त्री । परगृहं गत्वा कर्मकारिण्यां शिल्पिन्याम् ॥ गन्धकर्त्र्याम् ॥

गन्धा । स्त्री । शठ्याम् ॥ शालपर्ण्याम् ॥ चम्पककलिकायाम् ॥

गन्धाखुः । पुं । छुच्छुन्दर्य्याम् ॥

गन्धाजीवः । पुं । गन्धवणिजि ॥ गन्ध आजीवोऽस्य ॥

गन्धाढ्यः । पुं ॥ नारङ्गवृक्षे ॥ न । चन्दने ॥ जवादिनामगन्धद्रव्ये ॥ त्रि । गन्धयुक्ते ॥

गन्धाढ्या । स्त्री । गन्धपत्रायाम् ॥ स्वर्णयूथ्याम् ॥ तरुण्याम् ॥ आरामशीतलायाम् ॥ गन्धाल्याम् ॥

गन्धाधिकम् । न । दृष्टिकुङ्कुमे ॥

गन्धाम्ला । स्त्री । वनवाजपूरके ॥

गन्धारः ॥ पुं । रागे ॥ सिन्दूरे ॥ स्वरविशेषे ॥ पुंबहुत्वे नीवृद्भेदे । कन्धार इति भाषा ॥

गन्धाश्मा । स्त्री । जियतीति गौडभाषाप्रसिद्धे वृक्षविशेषे ॥ इति शब्दचन्द्रिका ॥

गन्धालिका । स्त्री । } लताविशेषे । प्रसारण्याम् । भद्रपर्ण्याम् ॥

गन्धाली । स्त्री । }

गन्धालीगर्भः । पुं । सूक्ष्मैलायाम् ॥

गन्धाश्मा । पुं । गन्धके ॥ गन्धयुक्तोऽश्मा शाकपार्थिवादिः ॥

गन्धाष्टकम् । न । शक्त्यादिदेवताभेदीयसाने गन्धानामष्टके ॥ यथा । चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ॥ १ ॥ चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यकाः । जटामांसी मुरमिति विष्णोर्गन्धाष्टकं विदुः ॥ २ ॥ चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् । कुशीदं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः ॥ ३ ॥ स्वरूपं चन्दनं चोरं रोचनाऽगुरुमेव च । मदं स गन्धयोर्जातं कस्तूरी चन्द्रसंयुतम् ॥ गन्धाष्टकं विनिर्दिष्टं गणेशस्य मनीषिभिः ॥ ४ ॥ इति शारदातिलकम् ॥ अपिच । चन्दनागुरुकर्पूररोचना

कुङ्कुमं मदम् । रक्तचन्दनह्रीवेरं गन्धपञ्चकमुदाहृतम् ॥ ४ ॥ जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः । उशीरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुरितिमेरुतन्त्रम् ॥ ५ ॥ भिषजांगन्धाष्टकं यथा । जातीपत्रं लवङ्गञ्च त्वगेला नागकेसरम् । मरिचं मृगनाभिश्च विदु र्गन्धाष्टकं विदमिति ॥

गन्धि । न । टपककुङ्कुमे ॥ इति राजनिर्घण्टः ॥

गन्धिकः । पुं । गन्धके ॥ गन्धोऽस्यास्ति । अतइनिठनौ इतिठन् ॥

गन्धिनी । स्त्री । गन्धकुट्याम् । मुरायाम् ॥ प्रशस्तोगन्धोऽस्याः । इनिः ॥

गन्धिपर्णः । पुं । सप्तच्छदवृक्षे ॥

गन्धोतुः । पुं । खट्टाशे ॥

गन्धोत्कटा । स्त्री । दमनकवृक्षे ॥

गन्धोत्तमा । स्त्री । मदिरायाम् । मद्ये ॥ गन्धेनोत्तमा । गन्धः उत्तमोयस्या वा । राजदन्तादिः ॥

गन्धोली । स्त्री । वरटायाम् । ततैया बरडे इतिचभाषाप्रसिद्धे सपक्षकीटे ॥ शुण्ठ्याम् ॥ भद्रायाम् ॥ गन्धयति । गन्धअर्द्दने । बाहुलकात् ओलच् । गौरादित्वात् ङीष् ॥

गभस्तिः । पुं । किरणे ॥ सूर्ये ॥ स्त्री । वह्निजायायाम् । स्वाहायाम् ॥ गम्यते । अन्यत्रापीतिडः । गोप्रेयवर्गः तंबभस्ति दीपयति इति गभस्तिः । भसभर्त्सनदीप्त्योः । जु० । क्तिच्क्तौ चेतिक्तिच् ॥

गभस्तिनेमिः । पुं । गभस्तिचक्रस्य मध्ये सूर्यात्मनास्थिते हरौ ॥ नेमिपदेन चक्रावयववाचिनाऽवयविचक्रं लक्ष्यते । गभस्त्यात्मिका नेमिश्चक्रमस्य । गभस्तिचक्रमध्यवर्त्तिनः सूर्यात्मनः परमेश्वरस्येति गभस्तिनेमिः ॥

गभस्तिमान् । पुं । सूर्ये ॥ न । तलातलाख्ये पातालभेदे ॥ भारतवर्षीयद्वीपविशेषे ॥ गभस्तयो विद्यन्तेऽस्यास्मिन् वा । मतुप् ॥

गभस्तिहस्तः । पुं । सूर्ये ॥ गभस्तयोहस्तायस्य सः ॥

गभीरः । त्रि । निम्ने । गम्भीरे ॥ अगाधे ॥ गहने ॥ गाते जलमत्र गच्छति वा । गाङ् गतौ गम्लृ गतौ वा । गभीरगम्भीरौ इति गभीरगम्भीराविति वा गमेरीरन् भश्चान्तादेशः ॥

गभीरिका । स्त्री । दण्डढक्कायाम् । वृहड्ढक्कायाम् । दमामा नगारा इति च भाषा ॥

गभोलिकः । पुं । मसूरे ॥

गमः । पुं । द्यूतप्रभेदे ॥ अविवि

गर्भनाश्ये ग्रामादौ ॥

गम्या । स्त्री । पत्न्याम् ॥ खेदात् स्त्रीषु प्रवृत्तिर्भवति । समानः खेदविगमो गम्यायामगम्यायाञ्च । तत्र नियमः क्रियते इयङ्गम्येतिभाष्यम् । खेदयतीति खेदो रोगः इन्द्रियनियमासामर्थ्यं वा खेद इति कैयटः ॥ एवञ्चागम्यानिषेधस्येतराभ्यनुज्ञाफलकत्वात्तद्वारेणगमने दोषाभावः ॥

गयः । पुं । असुरविशेषे ॥ अमूर्त्तरयःपुत्रे राजर्षिप्रभेदे ॥ वैवस्वतपुत्रे रामायणप्रसिद्धे वानरविशेषे ॥

गयपुरी । स्त्री । गयातीर्थे ॥

गया । स्त्री । तीर्थविशेषे । गयराजर्षिपुर्याम् ॥ गयाशिरश्चादिपरिमाणम् । नागाज्जनार्दनाद् ब्रह्मयूपाच्चोत्तरमानसात् । एतद् गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ पितामहं समासाद्य यावदुत्तरमानसम् । फल्गुतीर्थं तु विज्ञेयं देवानामपि दुर्लभम् ॥ क्रौञ्चपादात् फल्गुतीर्थं यावत् साक्षाद्गयाशिरः । मुखं गयासुरस्यैतत् तस्माच्छ्राद्धमयाच्चम् ॥ मुण्डपृष्ठाच्च पूर्वस्मिन् पश्चिमे दक्षिणोत्तरे । सार्द्धक्रोशद्वयं मानं गयायां ब्रह्मणेरितम् ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । तन्मध्ये सर्वतीर्थानि त्रैलोक्ये यानि सन्ति वै ॥ गयायां नहि तत् स्थानं यत्र तीर्थं न विद्यते । सान्निध्यं सर्वतीर्थानां गयातीर्थं ततो परम् ॥ ब्रह्मज्ञानेन किं साध्यं गोगृहे मरणेन किम् । वासेन किं कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत् ॥ श्राद्धकृद् यो गयाक्षेत्रे पितॄणामनृणोऽपि सः । शिरसि श्राद्धकृद् यस्तु कुलानां शतमुद्धरेत ॥ गयाशिरसि यः पिण्डान् येषां नाम्ना तु निर्वपेत् । नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥ गत्वा वणिग् गयाशीर्षे प्रेतराजस्य पिण्डकम् । प्रददौ मनुजैः सार्द्धं स्वपितृभ्यस्ततो ददौ ॥ प्रेताः प्रेतत्वनिर्मुक्ता वणिक् च गृहमागतः । प्रेतराजः सह प्रेतैर्गयाश्राद्धाद् दिवं गतः ॥ ॥ गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः । अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः ॥ न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ । तथा दैवप्रमादेन प्रवृत्तदुश्चरेषु च ॥ मृतः कर्माधिकारी च श्राद्धकृद् ब्रह्मलोकभाक् ॥ मीने मेषे स्थिते सूर्ये कन्यायां कार्मुके घटे । नारदश्चिषु लोकेषु गयाश्राद्धं सुदुर्लभम् ॥ ॥ मुण्डनवापना

सप्तसर्वतीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ दण्डं प्रदर्शयेद् भिक्षु र्गयांगत्वा न पिण्डदः । दण्डं न्यस्य विष्णुपदे पितृभिः सहमुच्यते ॥ गयागजो गयादित्योगायत्रीच गदाधरः । गया ग या सुरश्चैव षड्गया मुक्तिदायिकाः ॥ इतिगया माहात्म्यादिकं वायु पुराणे॥ गयायां सर्वमङ्गलास्थानं वर्त्तते इतिदेवीगीता । गयायांञ्च गयेश्वरी त्यागमः ॥

गयाक्षेत्रम् । न । पञ्चक्रोशात्मके प्रसिद्धक्षेत्रे ॥

गरः । पुं । उपविषे ॥ विषे ॥ रोगे ॥ न । पञ्चमकरणे ॥ तत्रजातस्यफलम् । विचारदक्षो विजितारिपक्षः शूरो ऽतिधीरो मृदुहास्ययुक्तः । दाता दयालु र्गुणवान् नरः स्याद् गरे परेषामुपकारकर्त्ता ॥ वत्सना भाख्यविषे॥ गरणे॥ गरण म् । गॄ नि गरणे । ऋदोरप् ॥ गिरति वा । गॄ० । पचाद्यच् ॥

गरघ्नः । पुं । कृष्णार्जके ॥ बर्बरे ॥

गरघ्नी । स्त्री । गरद इति प्रसिद्ध मत्स्यविशेषे ॥ गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्यकृत् ॥

गरणम् । न । निगारे । भक्षणे ॥ सेचने ॥ [illegible]

गरदम् । न । विषे ॥ त्रि । विषप्रदे । मरणहेतुद्रव्यस्य दातरि ॥ गरं ददाति । दुदाञ्० । आतद्रति कः ॥

गरभः । पुं । गर्भे ॥ गिरति शृणातिवा । गॄ० । वा० अभच् ॥ शृणे ॥

गरलम् । न । तृणपूले । घासका पूला इति भाषा ॥ पन्नगविषे ॥ विषे ॥ माने ॥ गिरति जीवम् । गॄ० । अच् । गरं लाति । ला० । कः । भावप्रत्ये गरशब्दस्य ॥ गिरतेः बाहुलकात् कलच् वा ॥

गरव्वारिः । पुं । मरकतमणौ ॥

गरव्रतः । पुं । मयूरे ॥

गरा । स्त्री । देवदालीलतायाम् ॥ निगरणे ॥

गरागरी । स्त्री । देवताडद्रुमे ॥ भूषिकविषघ्नत्वात् गरम् आगिरति । अच् । ङीप् ॥

गरात्मकम् । न । शिशुबीजे ॥

गराधिका । स्त्री । लाक्षायाम् ॥

गरिमा । पुं । गुरुत्वे ॥ गुरोर्भावः । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिना गुरोर्गर् आदेशः ॥

गरिष्ठः । त्रि । अतिशयेनगुरौ । गुरुतमे ॥ प्रियस्थिरेति साधुः ॥

गरी । स्त्री । देवताडद्रुमे ॥ गृणाति । गॄ शब्दे । अच् । गौरादिः ॥ पचाद्यौ गरडिति पाठात् ङीष् वा ॥

गरीयान् । त्रि । प्रभूते ॥ गुरुतरे ॥ यथा । उत्पादकब्रह्मदात्रो र्गरीयान् ब्रह्मदः पितेति ॥ अयमनयो रतिशयेन गुरुः । द्विवचनविभज्योपपदे तरबीयसुनाविती यसुन् ॥

गरुडः । पुं । गरुत्मति । तार्क्ष्ये । वैनतेये ॥ गरुद्भिर्डयते । डीङ् विहायसा गतौ । अन्येभ्योपीति डः । पृषोदरादित्वात् तलोपः ॥ गिरडजिति उडजुवा । केचिदिमं न पठन्ति । तदा पूर्ववदेव विग्रहः ॥ पञ्चमात्रिकस्य द्वितीये ऽ।ऽ पर्याये ॥

गरुडध्वजः । पुं । विष्णौ ॥ गरुडोध्वजश्चिह्नमस्य ॥

गरुडपुराणम् । न । गारुडे ॥

गरुडरुतम् । न । अष्टिसंज्ञकषोडशाक्षरवृत्तिप्रभेदे ॥ यथा । गरुडरुतं नजौ भजतमायदाम्बुजदा ॥ अमरमयूरमानसमुदे पयोदध्वनिर्गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने । धरणिभरावतारविधिडिण्डिमाडम्बरः सजयति कंसरङ्गभुवि सिंहनादोहरे रिति ॥

गरुडव्यूहः । पुं । गरुडाकृतिवत् कृतरचने व्यूहप्रभेदे ॥ सूक्ष्ममुखपक्षाङ्गाः पृथुतरमध्यो गरुडव्यूहो भवति । अनेन पार्श्वयो भये सति मार्गं व्रजेत् ॥

गरुडाग्रजः । पुं । अरुणे । सूरसूते ॥ गरुडस्य अग्रजः ॥

गरुडाङ्कितम् । न । }
गरुडाश्मा । पुं । } मरकतमणौ ॥
गरुडोत्तीर्णम् । न । }

गरुत् । पुं । पक्षे । पंख इति भाषा प्रसिद्धे ॥ गिरति । गॄ निगरणे । गृणाति वा । गॄ शब्दे । स्प्रोरुतिः ॥

गरुत्मान् । पुं । पक्षिमात्रे ॥ गरुडे । तार्क्ष्ये ॥ गरुतःपक्षाः सन्त्यस्य । मतुप् । यवादित्वाज्झय इति यत्त्वं न । तसौ मत्वर्थे इति भत्वम् ॥

गरुडोधी । पुं । भारतीपक्षी । भारद्वाज इति गौड भाष ॥

गर्गः । पुं । ब्रह्मणः पुत्रे मुनिविशेषे ॥ वृषे ॥ किञ्चुलुके ॥ गृणाति । गॄ । सुद्दियोर्गगाविति गः ॥ तालविशेषे ॥ यथा । चतुर्द्रुतं विरामान्तं तालो ऽयं गर्गसंज्ञित इति ॥

गर्गरः । पुं । नेलगगरी इति प्रसिद्धे मीनविशेषे । गागरा इति गौड भाषा ॥ गर्गः पित्तलः किञ्चिद्वातजित्कफकोपनः ॥ अस्याकारगुणौ यथा

गरी । स्त्री । देवताडद्रुमे ॥ गृणाति । गृ शब्दे । अच् । गौरादिः ॥ पचा । द्यै गरडितिपाठात् ङीप् वा ॥

गरीयान् । त्रि । प्रभूते ॥ गुरुतरे ॥ यथा । उत्पादकब्रह्मदात्रो र्गरीयान् ब्रह्मदः पितेति ॥ अयमनयो रतिशयेन गुरुः । द्विवचनविभज्योपपदेतरबौ यसुनावितो यसुन् ॥

गरुडः । पुं । गरुत्मति । तार्क्ष्ये । वैनतेये ॥ गरुद्भिर्डयते । डीङ् विहायसागतौ । अन्येभ्योपीतिडः । पृषोदरादित्वात् तलोपः ॥ गिरडडजिति उडजुया । केचिद्गिरंनपठन्ति । तदा पूर्ववदेव विग्रहः ॥ पञ्चमाश्विकस्य द्वितीये ऽ। ऽ पर्याये ॥

गरुडध्वजः । पुं । विष्णौ ॥ गरुडोध्वज



रचने व्यूहप्रभेदे ॥ सूक्ष्ममुखपश्चाद्भागः पृथुतरमध्यो गरुडव्यूहो भवति । अनेन पार्श्वयोर्भये सति मार्गं व्रजेत् ॥

गरुडाग्रज । पुं । अरुणे । सूरसूते ॥ गरुडस्य अग्रजः ॥

गरुडाङ्कितम् । न ।
गरुडाश्मा । पुं । } मरकतमणौ ॥
गरुडोत्तीर्णम् । न ।

गरुत् । पुं । पक्षे । पंख इति भाषा प्रसिद्धे ॥ गिरति । गॄ निगरणे । गृणाति वा । गॄ शब्दे । ग्रमोरुतिः ॥

गरुत्मान् । पुं । पक्षिमात्रे ॥ गरुडे । तार्क्ष्ये ॥ गरुतःपक्षाःसन्त्यस्य । मतुप् । यवादित्वान्मस्य व इति वत्वं न । तसौमत्वर्थे इति भत्वम् ॥

गरुद्योधी । पुं । भारतीखगे । भारद्वाजः ॥ ॥ गरुड

प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ पितामहं समासाद्य यावदुत्तरमानसम् । फल्गुतीर्थं तु विज्ञेयं देवानामपि दुर्लभम् ॥ क्रौञ्चपादात् फल्गुतीर्थं यावत् साक्षाद्गयाशिरः । मुखं गयासुरस्यैतत् तस्माच्छ्राद्धमथाचरेत् ॥ मुण्डपृष्ठाच्च पूर्वस्मिन् पश्चिमे दक्षिणोत्तरे । सार्द्धक्रोशद्वयं मानं गयायां ब्रह्मणेरितम् ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । त

एवं दद्या द्विचक्षणः । अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः ॥ न त्यक्तव्य गयाश्राद्धं सिंहस्थेऽपि वृहस्पतौ । तथा दैवप्रमादेन प्रवसत् सुरगणेषु च ॥ पुत्रः कर्म्माधिकारी च स्यात्कृद् ब्रह्मलोकभाक् ॥ मीने मेषे स्थिते सूर्ये कन्यायां कार्मुके घटे । नारदत्रिषु लोकेषु गयाश्राद्धं सुदुर्लभम् ॥ ॥ मुण्डनञ्चोपवा

गरमी | गरिष्ठः

सप्तसर्वतीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ दण्डं प्रदर्शयेद् भिक्षु र्गयांगत्वा न पिण्डदः । दण्डं न्यस्य विष्णुपदे पितृभिः सहमुच्यते ॥ गयागजो गयादित्यो गायत्री च गदाधरः । गया गया सुरश्चैव षड्गया मुक्तिदायिकाः ॥ इतिगया माहात्म्यादिकं वायुपुराणे ॥ गयायां सर्वमङ्गलास्थाने वर्त्तते इति देवीगीता । गयायाम्बगयेश्वरीत्यागमः ॥

गयाचैत्रम् । न । पञ्चकोशात्मके प्रसिद्धक्षेत्रे ॥

गरः । पुं । उपविषे ॥ विषे ॥ रोगे ॥ न । पञ्चमकरणे ॥ तत्रजातस्फल म् । विचारदक्षो विजितारिपक्षः शूरो ऽतिधीरो मृदुभाषयुक्तः । दाता दयालु र्गुणवान् नरः स्याद् गरे परेषामुपकारकर्त्ता ॥ वत्सनाभाख्यविषे ॥ गरणे ॥ गरण म् । गृनि गरणे । ऋदोरप् ॥ गिरति वा । गृ० । पचाद्यच् ॥

गरघ्नः । पुं । कृष्णार्जके ॥ वर्बरे ॥

गरघ्नी । स्त्री । गरइ इति प्रसिद्धे मत्स्यविशेषे ॥ गरघ्नी मधुरा तिक्ता तुमरा वातपित्तहृत् । कफघ्नी रुचिकृद्धृष्या दीपनी बलवीर्यकृत् ॥

गरणम् । न । निगारे । भक्षणे ॥ सेचने ॥

गरदम् । न । विषे ॥ त्रि । विषप्रदे । मरणहेतुद्रव्यस्य दातरि ॥ गरं ददाति । इदाञ् । आतइति कः ॥

गरभः । पुं । गर्भे ॥ गिरति ग्रसतिवा । गृ० । वा० अभच् ॥ सर्गे ॥

गरलम् । न । तृणपूले । घासका पूला इति भाषा ॥ पन्नगविषे ॥ विषे ॥ माने ॥ गिरति जीवम् । गृ० । कलच् ॥ गरं लाति । ला० । कः । भावगरत्वं गरशब्दस्य ॥ गिरतेः वाहुलकात् कलच् वा ॥

गरलारिः । पुं । मरकतमणौ ॥

गरव्रतः । पुं । मयूरे ॥

गरा । स्त्री । देवदालीलतायाम् ॥ निगरणे ॥

गरागरी । स्त्री । देवताडवृक्षे ॥ मूषिकविषघ्नत्वात् गरम् आगिरति । अच् । ङीष् ॥

गरात्मकम् । न । शिग्रुबीजे ॥

गराधिका । स्त्री । लाक्षायाम् ॥

गरिमा । पुं । गुरुत्वे ॥ गुरोर्भावः । पृथ्व्यादिभ्यइमनिच् । प्रियस्थिरेत्यादिना गुरोर्गर् आदेशः ॥

गरिष्ठः । त्रि । अतिशयेनगुरौ । गुरुतमे ॥ प्रियस्थिरेति साधुः ॥

गरीः । स्त्री । देवताडड्मे ॥ गृणाति । गृशब्दे । अच् । गौरादिः ॥ यद्वा । गरडितिपाठात् ङीष् वा ॥

गरीयान् । त्रि । प्रभूतः ॥ गुरुतरे ॥ यथा । उत्पादकब्रह्मदात्रो गरीयान् ब्रह्मदः पितेति ॥ अयमनयो र तिशयेन गुरुः । द्विवचनविभज्योप पदे तरबीयसुनाविति ईयसुन् ॥

गरुडः । पुं । गरुत्मति । तार्क्ष्ये । वैन तेये ॥ गरुद्भिर्डयते । डीङ् विहा यसागतौ । अन्येभ्योपीतिडः । पृषो दरादित्वात् तल्लोपः ॥ गिरउडजिति उडजवा । केचिद्दिर्मनपठन्ति । तदा पूर्ववदेव विग्रहः ॥ पञ्चमात्रिकस्य द्वितीये ऽ। ऽ पर्याये ॥

गरुडध्वजः । पुं । विष्णौ ॥ गरुडोध्वज श्चिह्नमस्य ॥

गरुडपुराणम् । न । गारुडे ॥

गरुडरुतम् । न । अष्टिसंज्ञकषोडशा क्षरवृत्तिप्रभेदे ॥ यथा । गरुडरुतं नजौ भजतमायदायुक्तदा ॥ अम रमयूरमानसमुदे पयोदध्वनिर्ग रुडरुतं सुरारि भुजगेन्द्रसन्त्रास- ने । धरणिभरावतारविधिडिण्डि मादम्बरः स जयति कंसरङ्गभुवि सिं हनादोहरे रिति ॥

गरुडव्यूहः । पुं । गरुडाकृतिवत् कृत रचने व्यूहप्रभेदे ॥ सूक्ष्ममुखपक्षा ङ्गाः पृथुतरमध्यो गरुडव्यूहो भव ति । अनेन पार्श्वयोः भये सति मा र्गं व्रजेत् ॥



गरुडाग्रजः । पुं । अरुणे । सूरसूते ॥ गरुडस्य अग्रजः ॥

गरुडाङ्कितम् । न । } मरकतमणौ ॥
गरुडाश्मा । पुं । }

गरुडोत्तीर्णम् । न । }

गरुत् । पुं । पक्षे । पंख इति भाषाप्रसि द्धे ॥ गिरति । गृनि गरणे । गृणाति वा । गृशब्दे । सृग्रोरुतिः ॥

गरुत्मान् । पुं । पक्षिमात्रे ॥ गरुडे । तार्क्ष्ये ॥ गरुतः पक्षाः सन्त्यस्य । मतु प् । यवादित्वान्भत्व इति वत्त्वं न । तयोर्मत्वर्थे इति भत्वम् ॥

गरुबोधी । पुं । भारतीखगे । भारद इति गौड भाषा ॥

गर्गः । पुं । ब्रह्मणःपुत्रे मुनिविशेषे ॥ वृषे ॥ विश्वलुके ॥ गृणाति । ग० सुदिग्रोर्गगावितिगः ॥ ताखविशेषे ॥ यथा । चतुर्द्रुतं विरामान्तं तालो ऽयंगर्गसंज्ञित इति ॥

गर्गरः । पुं । वेलागगरी इति प्रसिद्धे मीनविशेषे । नागरा इति गौड भाषा ॥ गर्गरः पित्तलः किञ्चिद्वातजि त्कफकोपनः ॥ अस्याकारगुणौ यथा

यः पीतवर्णोऽसितमिश्चिताङ्गः पृष्ठेषु रेखा बहुलसशल्कः । स गर्गरो निर्वरनादवश्यो जडश्च शीतः कफवातकारी ॥ इति ॥ तत्पर्यायः ॥ दधिमन्थनभाण्डे । गर्ग इति शब्दं राति रा० । आतइति कः ॥ गिरतिवा । गृ० धा० गरन् ॥ गृ० पचाद्यच् उणादयो बहुलमिति बहुलवचनात् द्विर्वचनमभ्यासस्यागमश्च ॥

गर्गरी । स्त्री । मन्थनपात्रे । मन्थन्याम् । मथानी इति भाषा ॥ कलश्याम् । गगरी इति भाषा ॥ यथा । मेघा दासत्वे दैया वारिपूर्णा च गर्गरी इति ॥ गौरादि ङीष् ॥

गर्गाटः । पुं । मत्स्यविशेषे । योगनाविकेः ॥

गर्ज्जम् । न । हस्तिशब्दे । मेघादिशब्दे ॥

गर्ज्जकः । पुं । गजाड इति गौडभाषाप्रसिद्धे शालमत्स्ये । शालजे ॥

गर्ज्जनम् । न । निनदे । स्वनिते ॥ कोपे ॥ गर्ज्जशब्दे । ल्युट् ॥

गर्ज्जरम् । न । गाजर इति प्रसिद्धे मूले । स्वादुमूले । नारङ्गे । पीतकन्दे ॥ इति राजनिर्घण्टः ॥

गर्ज्जाफलः । पुं । विकङ्कतवृक्षे ॥ वुक्ष्हे ॥

गर्ज्जिः । पुं । मेघशब्दे ॥

गर्ज्जितम् । न । मेघनिर्घोषे ॥ पुं । मत्तकुञ्जरे ॥ गर्ज० भावे क्तः ॥ गर्ज्जयति । अकर्म्मकत्वात् कर्त्तरि वा क्तः ॥ गर्ज्जा जाता अस्य । ता० इतच् ॥

गर्त्तः । पुं । अवटे । क्षितिरन्ध्रे । गढा इति भाषा ॥ त्रिगर्त्तदेशांशे ॥ कुकुन्दरे । नितम्बस्थकूपे ॥ अष्टधनुःसहस्रेभ्यो न्यूनगतो जलाशयविशेषे ॥ तदुक्तं परिशिष्टे । धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥ इति ॥ गिरति । गॄ० हसिमृग्रिणिति तन् ॥

गर्त्ता । स्त्री । अवटे । भूरन्ध्रे ॥ टाप् ॥

गर्त्तिका । स्त्री । तन्तुशालायाम् । तांतघर इति भाषा ॥

गर्द्दभः । पुं । गधा इति प्रसिद्धे जन्तुविशेषे । चक्रीवति । रासभे ॥ यथा । अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति । ससन्तोष स्तथा नित्यं त्रीणि शिक्षेत गर्द्दभादिति ॥ गन्धविशेषे ॥ न । श्वेतकुमुदे ॥ विडङ्गे ॥ गर्द्दति । गर्द्दशब्दे । हासशलिभक्षिगर्द्दिभ्योऽभच् ॥

गर्द्दभगदः । पुं । जालगर्द्दभरोगे ॥

गर्द्दभशाकः । पुं । ब्रह्मयष्ट्याम् । भार्ग्याम् ॥ गर्द्दभभक्ष्यशाकत्वात् गर्द्दभशाकः ॥

शेऽभ्यधिके दृष्टे. गर्भः परिस्रुतो भवति ॥ * ॥ अत्रैव विशेषफलमाह । गर्भः पुष्टः प्रसवे ग्रहोपघातादिभि र्यदि न दृष्टः । आत्मीयगर्भसमये करकामिश्रं ददात्यम्भः ॥ * ॥ अत्र दृष्टान्तमाह । काठिन्यं याति यथा चिरकालधृतं पय. पयस्विन्याः । कालातीतं तद्वत् सलिलं काठिन्यमुपयाति ॥ * ॥ अथ गर्भलक्षणं पुष्टिकरमाह । पवनसलिलविद्युद्गर्जिताभ्रान्वितो य स भवति बहुतोयः पञ्चरूपोऽभ्युपेतः । विसृजति यदि तोयं गर्भकालेऽतिभूरि प्रसवसमय मित्वा शीकराम्भः करोति ॥ ३१॥ इति वाराह्यामेकविंशोध्यायः ॥२१॥ अथ गर्भवायुधारणापि । तत्र तासां लक्षणम् । ज्येष्ठसिताऽष्टम्याद्याश्चत्वारो वायुधारणा दिवसाः । मृदुशुभपवना: शस्ता. स्निग्धघनस्थगितगगनाश्च । विशेषमाह । तत्रैव स्वात्याद्ये वृष्टे भचतुष्टये क्रमान्मासाः । श्रावणपूर्वा ज्ञेया. परिस्रुता धारणास्ताश्च ॥ यदि ता: सुरेकरूपा स्तः शुभाः सान्तरास्तु न शिवाय । तस्करभयदाः प्रोक्ताः श्लोकाश्चाप्यत्र यासिताः ॥ तानाह । सविद्युतः सपृषत. सपांशूत्करमारुता. । सार्कच



न्द्रपरिच्छिन्ना धारणाः शुभधारणाः ॥ यदास्तु विद्युत. श्रेष्ठाः शुभाशाप्रत्युपस्थिताः । तदापि सर्वसस्यानां वृद्धिं ब्रूयाद्विचक्षणः ॥ सपांशुवर्षाः सापश्च शुभा बालक्रिया अपि । पतत्रिणां सुस्वना वा क्रीडापांशुजलादिषु ॥ रविचन्द्रपरीवेषाः स्निग्धा नात्यन्तदूषिताः । वृष्टिं तथापि विज्ञेया सर्वशस्यार्थसाधिका ॥ मेघा. स्निग्धाः संहताश्च प्रदक्षिणगतिक्रियाः । तदा स्यान्महती वृष्टिः सर्वसस्याभिवृद्धये ॥ इति वाराह्यां गर्भवायुधारणाध्यायो द्वाविंशतितमः ॥२२॥

गर्भकः । पुं । केशमध्येस्थितमाल्ये ॥ गर्भइव । इवेप्रतिकृताविति कन् ॥ न । रजनीद्वन्द्वे । दोरात इति भाषा ॥

गर्भकर । पुं । पुत्रजीवद्रुमे ॥

गर्भगृहम् । न । गर्भागारे ॥ गर्भस्य गृहम् ॥

गर्भघातिनी । स्त्री । लाङ्गलिक्याम् ॥

गर्भाण्डः । पुं । नाभिगुडके । नाभिकी गांठ इति भाषा ॥ गर्भस्य अण्ड इव ॥ शकन्ध्वादिः

गर्भद । पुं । पुत्रजीवद्रुमे ॥

गर्भदात्री । स्त्री । क्षुपविशेषे । अपत्यदायाम् । मातृमातरि । तापसद्रुमसन्निभायाम् ॥

गर्भनाशः । पुं । गर्भध्वंसे ॥ अस्य लक्षणं यथा । अप्रविद्धशिरा या तु शीताङ्गी निरपत्रपा । नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥ मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः । गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः ॥ अन्तर्मृतगर्भस्य लक्षणं यथा । गर्भास्पन्दनमावीनां प्रणाशः श्याववर्णता । भवेदुच्छ्वासपूतित्वं शोथश्चान्तर्मृते शिशाविति ॥

गर्भनुत् । पुं । कलिकार्याम् । विषलाङ्गलिया इति गौडभाषाप्रसिद्धे वृक्षे ॥

गर्भपाकी । स्त्री । षष्टिकाख्यव्रीहौ । सट्ठी धान इति भाषा ॥

गर्भपातः । पुं । पञ्चमषष्ठमासीयस्य कठिनशरीरस्य गर्भस्य पतने ॥

गर्भपातकः । पुं । रक्तशोभाञ्जने ॥

गर्भपातनः । पुं । अरिष्टद्रुमे । फेनिले । रीठा इति भाषा ॥

गर्भपातनी । स्त्री । कलिकार्याम् ॥

गर्भपातिनी । स्त्री । विशल्यावृक्षे ॥

गर्भरूपः । पुं । तरुणे ॥

गर्भवती । स्त्री । अन्तर्वत्न्याम् । आपन्नसत्त्वायाम् । गुर्विण्याम् ॥ * ॥ सद्योगृहीतगर्भायाः लक्षणं यथा । शुक्रशोणितयोर्योने रस्रावोऽथ्यसोद्भवः । सावसादः पिपासा च ग्लानिः स्फूर्त्तिर्भगे भवेदिति ॥ * ॥ तस्या उत्तरोत्तरकालीनलक्षणं यथा । स्तनयोर्मुखकार्ष्ण्यं स्यात् रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः । छर्दयेत् पथ्यभुक्तापि गन्धादुद्विजते शुभात् । प्रसेकः सदनञ्चैव गर्भिण्या लिङ्गमुच्यते ॥ * ॥ पुत्रगर्भवत्या लक्षणं यथा । पुत्रगर्भयुतायास्तु नार्या मासि द्वितीयके । गर्भो गर्भाशये लक्ष्यः पिण्डाकारोऽपरं शृणु ॥ दक्षिणाक्षि महत्त्वं स्यात् प्राक् क्षीरं दक्षिणस्तने । दक्षिणोरुः सुपुष्टः स्यात् प्रसन्नमुखवर्णता ॥ पुन्नामधेयद्रव्येषु स्वप्नेऽपि मनोरथः । आम्रादिफलमाप्नोति स्वप्नेषु कमलादि च ॥ * ॥ कन्यागर्भवतीलक्षणं यथा । कन्यागर्भवती गर्भे पेशीं मासि द्वितीयके । पुत्रगर्भस्य लिङ्गानि विपरीतमवेक्ष्यते ॥ * ॥ नपुंसकगर्भवतीलक्षणं यथा । नपुंसकं यदा गर्भो भवेद्गर्भोऽपुंद्राकृतिः । उन्नते भवतः पार्श्वे पुरस्तादुदरं महदिति भावप्रकाशः ॥

गर्भशय्या । स्त्री । पित्ताशयपक्वाशययोर्मध्यवर्त्तिनि गर्भाशयस्वरूपे गर्भोत्पत्तिस्थाने ॥ तत्स्वरूपं यथा । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा

थ कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥ यथा रोहितमत्स्यस्य मुखं भवति रूपतः । तत्संस्थानां तथा रूपां गर्भशय्यां विदुर्बुधाः ॥ इति भावप्रकाशः ॥

गर्भस्रावः । पुं । चतुर्थमासपर्य्यन्तं शोणितरूपगर्भस्य स्रवणं ॥ तस्य निदानलक्षणे यथा । भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् । गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः । ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ गर्भोऽभिघातविषमाशनपीडनाद्यैः पक्वं द्रुमादिव फलं पतति क्षणेन । मूढः करोति पवनः खलु मूढगर्भं शूलञ्च योनिजठरादिषु मूत्रसङ्गम् ॥

गर्भस्रावी । पुं । हिन्तालवृक्षे ॥

गर्भागारम् । क्ली । वासगृहे । गृहमध्यभागे ॥ गर्भस्य आगारम् । गर्भाशये ॥

गर्भाधानम् । क्ली । दशसंस्कारान्तर्गतप्रथमसंस्कारे ॥ तद्यथा । ऋतुस्नानादूर्द्ध्वं निषेकदिवसे सायं सन्ध्यायां प्रतीतायां पतिः शुचिः सुगन्धिः सुवेशो मन्त्रेण सूर्य्यायार्घ्यं दत्त्वा पूर्व्वाभिमुखोपविष्टायाश्च पत्न्या दक्षिणहस्तेन पत्नीं स्पृशन् पठन् तां मन्त्रं सञ्जपेत् । ततः पुनरपि पत्नीं स्पृशन् मन्त्रं जपेत् । ततो भार्य्यामुपेयादिति भवदेवभट्टः ॥ विशेषो मन्त्राश्च तत्रैव द्रष्टव्याः ॥

गर्भाशयः । पुं । गर्भस्थानम् । जरायुः ॥ गर्भस्य आशयः ॥ गर्भकोषेऽप्यत्र । थीड्° । मुंसीति शिः ॥

गर्भाष्टमः । पुं । निषेकतोऽष्टमे मासे । देवमासे ॥ गर्भग्रहणमासः संवत्सरो वा अष्टमो यस्य ॥

गर्भिणी । स्त्री । अन्तर्वत्न्याम् । गुर्व्विण्याम् ॥ गर्भोऽस्त्यस्याम् । अत इनिः ॥ क्षीरादीष्टे । पोयाति इति गौडभाषा ॥

गर्भिण्यवेक्षणम् । क्ली । कुमारभृत्यायाम् । गर्भिणीपरिचर्य्यायाम् ॥ इति त्रिकाण्डशेषः ॥

गर्भोपघातिनी । स्त्री । वेहति गर्भपातकारिण्याम् ॥ गर्भमुपहन्ति । सुप्यजातौ णिनिः ॥

गर्म्मुत् । स्त्री । स्वर्णे ॥ लतायाम् ॥ मयना इति गौडभाषाप्रसिद्धे तृणधान्यविशेषे ॥ गिरति गीर्य्यते वा । गॄ° । ग्रोमुट्चेत्युतिः ॥

गर्म्मुटिका । स्त्री । मडुया इति प्रसिद्धे ब्रीहिभेदे । गर्म्मुत्ति ॥

गर्म्मोटिका । स्त्री । जरडीतृणे ॥

गर्व्वः । पुं । अभिमाने । अहङ्कारे ॥ अहङ्कारं स्वथाध्यत्वं सर्व्वसंसारकारणम् । अभिमानोऽभिभूतश्च रुद्र स्तस्याधिदैवतम् ॥ ऐश्वर्य्यरूपताकण्ठेक्षकविद्यावलैरपि । दृष्टेनाभादिना न्येषः सर्व्वागर्व्वईरितः ॥ गर्व्वमाने । घञ् ॥ यद्वा । गिरति ग्रसाति वा ॥ गॄ० । कृगॄशॄदॄभ्यो वः ॥

गर्व्वरः । त्रि । अहङ्कारिणि ॥ गिरति । गॄ० । कृगॄशॄदृभ्यश्चतिभ्यः ष्वरच् ॥ स्त्री । षिद्गौरादिभ्यश्च ङीषि गर्व्वरी ॥ पुं । गन्धर्व्वे ॥

गर्व्वाटः । पुं । दौवारिके । द्वारपाले ॥

गर्व्वितः । त्रि । गर्व्वसंयुक्ते । अहङ्कृते । दृप्ते ॥ गर्व्वः संजातोऽस्य । तारकादित्वादितच् ॥

गर्हणम् । न । कुत्सायाम् । निन्दायाम् ॥ गर्ह गल्ह कुत्सायाम् । ल्युट् ॥

गर्हा । स्त्री । निन्दायाम् ॥ गर्हणम् । गर्ह० । गुरोश्चहल इति स्त्रियाम् अप्रत्ययः । टाप् ॥

गर्हितः । त्रि । निन्दिते ॥ गर्हा सञ्जाताऽस्य । तारकादित्वादितच् ॥

गर्ह्यः । त्रि । अधमे । निन्द्ये । कुत्से ॥ गर्ह्यते । गर्ह० । ऋहलोर्ण्यत् ॥

गर्ह्यवादी । त्रि । अपवदे ॥ गर्ह्यं वदति । वदः । सुप्यजाताविति णिनिः ॥

गलः । पुं । गला इति प्रसिद्धे कण्ठे । ग्रीवाग्रभागे ॥ सर्ज्जरसे । राल इति भाषा ॥ गलका इति गौड प्रसिद्धे मत्स्यविशेषे । अस्य वि० ॥ गिरति । गॄ० । पचाद्यच् । अचि विभाषेति लत्वम् ॥ यद्वा । गीर्य्यतेऽनेन । पुंसीति घः ॥ गलति वा । गल अदने । अच् ॥

गलकः । पुं । मत्स्यभेदके । गडके ॥ डलयोरभेदः ॥

गलकम्बलः । पुं । सास्नायाम् । गवां गलस्थिते कम्बलाकारे मांसे ॥ गलस्य कम्बलः । गले कम्बल इव वा ॥

गलगण्डः । पुं । स्वनाम्ना ख्याते रोगविशेषे । गिलुड इति भाषा ॥ तस्य लक्षणं यथा । निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेदिति ॥

गलग्रहः । पुं । तिथिविशेषे ॥ यथा । कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहाः । इति नारदः ॥ अपिच । आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते । गर्गादिमुनयः सर्व्वे तमेवाहु

म्याचिते तप्ते हिङ्गुसैन्धवसंयुते । मांसं गवयसम्भूतं सुस्विन्नं भूरिवीर्यकृत् ॥ इति ॥ गवयो मधुरो वृष्यः स्निग्धो ग्याःकफपित्तलः । विदाही गुरुविष्टम्भी विपाके विरसः सदेत्यस्य मांसस्य गुणाः ॥ वैवस्वतपुत्रेवानरविशेषे । यथा । रामायणे । पुत्रावैवस्वतस्यात्र पञ्चकालान्तकोपमा । गयो गवाक्षो गवयः शरभो गन्धमादनः ॥ इति ॥ गवते । गुङ्शब्दे । धा० अयः ॥ यद्वा । गवनम् । ऋदोरप् । गवं गवेनवा याति । या० । मू० क. ॥

गवयी । स्त्री । गवययोषायाम् । वन धेनौ । भिल्लगव्याम् ॥ योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधइति जातिलक्षणोङीष् ॥

गवराजः । महोक्षे । वृषे ॥ इति शब्दचन्द्रिका ॥

गवलः । पुं । वनमहिषे ॥ न । महिषशृङ्गे ॥ अलति । अलभूषणादौ । अच् । गवामलम् ॥ यद्वा । गवनम् । गुङ्० । ऋदोरप् । गवंलाति । क ॥

गवाक्षः । पुं । जाली झरोखा इतिच भाषाप्रसिद्धे वातायने । वधूदृगयने । जालके ॥ वैवस्वतपुत्रे कपिविशेषे ॥ गवांकिरणानामक्षीव । अक्षिशब्दो परन्ध्रवाची । अक्ष्णोदर्शनादित्यच् ॥ गावोजलानि किरणानि वा । अश्नन्ति व्याप्नुवन्ति एत मनेन वा । अशूव्याप्तौ । अकर्त्तर्यर्थे घञ् ॥

गवाक्षी । स्त्री । इन्द्रवारुण्याम् ॥ गोडुम्बायाम् । गोमक् इति गौडभाषा ॥ शाखोटे । सेउढा इति भाषा ॥ अपराजितायाम् ॥ गां भूमिमश्नोति । अच्० । कर्मण्यण् । ङीष् ॥

गवांची । स्त्री । माँकालमाछ इति गौडभाषाप्रसिद्धे मत्स्ये ॥

गवादनम् । न । घासे ॥ गोभिरद्यते । अदि० । ल्युट् ॥

गवादनी । स्त्री । इन्द्रवारुण्याम् ॥ गवादनीद्वयं तिक्तं पाके कटुरसं लघु । वीर्योष्णं कामलापित्तकफघ्नी ह्रोदरापहम् ॥ श्वासकासापहं कुष्ठगुल्मग्रन्थिव्रणप्रणुत् । प्रमेहमूढगर्भामगण्डामयविषापहम् ॥ गवांघासादनाश्यें । नांदखडावनीइतिच भाषा ॥ नीलापराजितायाम् ॥ गौ० ङीष् ॥

गवाल्लुकः । पुं । गवये । गोसदृशेऽरण्यपशौ ॥

गवाशनः । पुं । गोभक्षके । मोची इति भाषा ॥ यथा ॥ माताप्येका पिताप्येको मम तस्य च पक्षिणः । अहं मुनिभि रानीतः सचनीतो गवाशनैरित्युद्भटः ॥

गवाषिका। स्त्री। लाक्षायाम्। जतुनि॥

गविनी। स्त्री। गवांसमूहे॥ खला दिभ्यइनिर्वक्तव्यः॥

गविष्ठः। त्रि। भूमिस्थे॥ स्वर्गस्थे॥

गविष्ठिरः। त्रि। गविस्थिरे॥ हलद न्तादित्यलुक्। गवियुधिभ्यांस्थिरः इतिषत्वम्॥

गवीश्वरः। पुं। गवांस्वामिनि। गोम ति। गोमिनि॥ गवामीश्वरः॥

गवेङ्गितम्। न। शुभाशुभाय गवामाका रे॥ यथा। गावो दीनाः पार्थिवस्या ऽशिवाय पादैः भूमिं कुट्टयन्त्यश्च रोगाम्। मृत्युं कुर्वन्त्यश्रुपूर्णाय ताक्षः मृत्यु भीता क्रन्दमानास्तव न्त्यः॥ अकाले क्रोशति चेदनर्थो भयाय रात्रौ वृषभः शिवाय। भृशं निरुद्धा यदि मक्षिकाभि स्तदाशु वृष्टिं सरमात्मजै र्वा॥ आगच्छन्त्यो वे श्म सम्भारवेस संसेवन्त्यो गोष्ठवद्धौ गवां गाः। आर्द्राङ्ग्यो वा हृष्टरो मूण्यो प्रहृष्टा धन्या गाव स्यु र्महि ष्योपिचैवम्॥ इतिवाराहसंहितोक्ता न वर्तते॥

गवेडुः। स्त्री। आरण्यगोधूमाख्ये मु न्यन्ने। गड्गड इतिगौडभाषा॥ गवे गवार्थं दीयते। दीङ्‌क्षये। मगव्यादित्वात् कु। नैकशोदकार स्य ङः। तत्पुरुषेकृतीत्यलुक्॥

गवेधुः। स्त्री। गवेडौ॥ गवेधुः कटुका स्वादी कार्श्यकृत् कफनाशिनी॥

गवेधुकम्। न। गैरिके॥ इतिराज निर्घण्टः॥

गवेधुका। स्त्री। तृणधान्यविशेषे। ग ड्गड्इति देधानइतिचगौडभाषा। गवेडौ॥ नागवलायाम्॥ गविभूमौ एधते। एध०। बाहुलकादुः। संज्ञा यांकन्॥

गवेरुकम्। न। गैरिके॥

गवेरुका। स्त्री। गोरक्षचाउलिया इ तिगौडप्रसिद्धे क्षुपविशेषे॥

गवेषणा। स्त्री। अन्वेषणायाम्। पर्यै षणायाम्। मार्गणे॥ धर्माद्यन्वेषणे॥ गवेषमार्गणे। चु०। ण्यन्तात्युच्॥

गवेषितम्। त्रि। अन्वेषिते। मार्गिते॥ गवेष्यतेस्म। गवेष०। क्तः॥

गव्यम्। न। ज्यायाम्॥ रागद्रव्ये॥ पि । गोदुग्धादौ। गोसम्बन्धिनि सर्व स्मिन्॥ गव्य त्रिषु गवां सर्वम्। स र्वम् भवविकारास्यवपदि गदां गव्य म्॥ गविभवम् गौर्देवतास्य वा। गोरजादिप्रसङ्गे यत्॥ गोपिते॥ गवेहितम्। उगवादिभ्यो यत्॥ गोनिमित्तं संयोग उत्पातो वा। गोद्यचो ऽसंख्यापरिमाणाश्वादेर्यत्

॥ गोरिदम् । गोपयसोर्यत् । वान्तो । यि प्रत्यये॥

गव्या । स्त्री । गोव्रायाम् । गोवन्दे ॥ गवांसमूहः । खलगोरथात् इतियः ॥ गव्यूतौ ॥ गोरोचनायाम् ॥

गव्यूतम् । न । क्रोशे ॥ गव्यूतौ ॥

गव्यूतिः । स्त्री । क्रोशयुगे । द्विसहस्र धनुषि । गोरुते ॥ धन्वन्तरसहस्र न्तु क्रोशः क्रोशद्वयं पुनः । गव्यूतं स्त्रीतु गव्यूति र्गोरुतं गोमतञ्च तत् ॥ गोर्यूतौ छन्दस्युपसंख्यानम् । अ ध्वपरिमाणेचेत्यवादेशः ॥

गहनम् । न । घना इति भाषा प्रसिद्धे कानने । वने ॥ गह्वरे ॥ दुःखे ॥ त्रि । कलिले । दुर्गमे । दुष्प्रवेशे ॥ पुं । परमात्मनि ॥ दुष्प्रवेशत्वात् अवस्थात्रयभावाभावसाक्षित्वात् वा गहनः परमात्मा । स्वस्वरूपं सा क्ष्यंचेष्टितं वाज्ञातुंनशक्यते ऽतो गहनः ॥ गाहृते गाहूविलोडने । बहुलमन्यत्रापीति युच् । पृषोदरा दित्वात् ह्रस्वः । कृत्स्नगडनयोरिति निर्देशाद्वा ह्रस्वः ॥

गहना । स्त्री । अलङ्कारे ॥ इति देवी पुराणम् ॥

गह्वरः । पुं । निकुञ्जे ॥ न । गुहा याम् ॥ दम्भे ॥ वने ॥ विषमस्था ने । अनेका ऽनर्थसङ्कटे ॥ गाह्यते ॥ गाहू० । छित्वर छत्वरेतिसाधुः ॥



गह्वरी । स्त्री । गुहायाम् ॥

गा । स्त्री । गाथायाम् ॥

गाङ्ग । पुं । भीष्मपितामहे ॥ कार्त्ति केये । गुहे ॥ गङ्गाया अपत्यम् । शि वादिभ्योऽण् ॥ त्रि । गङ्गासम्भूते ॥ न । गङ्गाजले ॥ धाराजले ॥ यदा स्या दाश्विने मासिसूर्यः स्वाति विशा खयोः । तदा स्तु जलदै र्मुक्तं गाङ्ग मुक्तं मनीषिभिः ॥ आकाशगङ्गास्र स्वन्धि जल मादाय दिग्गजाः । मे घै रन्तरिता वृष्टिं कुर्वन्तीतिवचः सताम् ॥ गाङ्ग मास्वयुजे मासि प्रा यो वर्षति वारिदः । सर्वथा तज्जलं देयं तथैवचरकेवचः ॥ स्थापिते हेमजेपात्रे राजते मृन्मये ऽपिवा । शाल्यन्नं येन संसिक्तं भवे दक्लेद वर्णवत् । तद् गाङ्गं सर्वदोषघ्नं ज्ञेयं सामुद्र मन्यथा ॥ सामुद्रं त्वाश्विने मासि गुणै र्गाङ्गवदादिशेत् । यतो ऽगस्त्यस्य दिव्यर्षे रुदयात् सकलं ज लम् । निर्मलं निर्विषं स्याद् गुणार्थ्यं स्या ऽदूदोषलम् ॥ यत आह । भू त्कारविषवातेन नागानां योगचा रिणाम् । वर्षासु सविषं तोयं दि व्य मगस्त्यो विनेति ॥

गाङ्गटः । पुं । }
गाङ्गटकः । पुं । } चिङ्गडिमाछ् इति गौडभाषाप्रसिद्धमत्स्ये ॥ इति शब्दरत्नावली ॥
गाङ्गटेयः । पुं । }

गाङ्गायनिः । पुं । भीष्मे । शान्तनवे ॥ गुहे ॥ गङ्गाया अपत्यम् । तिकादिभ्यः फिञ् ॥

गाङ्गेयः । पुं । भीष्मे ॥ स्कन्दे ॥ इल्लीशमीने ॥ भद्रमुस्तायाम् ॥ न । कशेरुणि ॥ मुस्ते ॥ स्वर्णे ॥ यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत ॥ गङ्गाया अपत्यम् । शुभ्रादिभ्यश्चेति ढक् ॥

गाङ्गेरुकी । स्त्री । गोरक्षतण्डुलायाम् । नागबलायाम् ॥ गाङ्गं जलमीरयति । ईर गतौ क्षेपणे च । मृगय्वादयश्चेति कु । स्वार्थे कन् । गौरादि ङीष् ॥

गाङ्गेष्ठी । स्त्री । कटशर्करालतायाम् । नटा इति गौडभाषा इति हारावली ॥

गाजरम् । न । गृञ्जने । नारङ्गवर्णके ॥ गाजरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु । सङ्ग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् ॥

गाण्डिकायः । पुं । वर्त्तिकपक्षिणि ॥

गाढम् । न । दृढे ॥ तीव्र ॥ त्रि । तद्वति ॥ अवगाढे ॥ सेविते ॥ तपस्विगाढांतमसां प्रापेति रघुः ॥ गाह्यते स्म । गाहू विलोडने । क्तः ॥

गाढमुष्टि । पुं । खड्गे ॥ त्रि । कृपणे ॥ गाढा मुष्टिर्यस्य ॥

गाढावटी । स्त्री । चतुरङ्गक्रीडामध्ये क्रीडाविशेषे ॥ यथा । नौकैका वटिका यस्य विद्यते खेलने यदि । गाढावटीति विख्याता पदं तस्य न दुष्यतीति ॥

गाणपतः । त्रि । गणपतिर्देवताके ॥ गणेशोपासके ॥ गणपतिर्देवताऽस्य । अश्वपत्यादिभ्यश्चेति ण्यापवादोऽण् । गाणपत्यो मन्त्र इति तु प्रामादिकमेव । गणपतिश्चेन्नपत्यादीनामश्वपत्यादिषु पाठात् ॥ गणपतिसम्बन्धिनि ॥

गाणपत्यम् । न । गणपतित्वे ॥ गणपतेः कर्मभावो वा । गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञ् । गणपत्यधिपतिशब्दयोर्ब्राह्मणादिषु पाठात् ॥

गाणिक्यम् । न । वेश्यावृन्दे ॥ गणिकानां समूहः । गणिकाया यञिति यञ् ॥

गाणेयः । त्रि । गणनीये । गणयितुं शक्ये ॥ गणपते । गणसङ्ख्याने । स

चोयत् । संज्ञापूर्वकत्वान्न विलोपः । चिक्लिपूर्वोत्यड्वि धानाद्गुणाभावार्थोवा ॥ अन्यथा अप्रत्ययादिष्वनन्तरं पठित्वा सकारमेव विदध्यात् ॥

गाण्डिवः । पुं । न । अर्जुनस्यधनुषि ॥ कार्मुकमात्रे ॥ गाण्डि ग्रन्थि रस्यास्ति । गाण्ड्यजगात्सञ्ज्ञायामितिवः ॥

गाण्डीवः । पुं । न । गाण्डिवे ॥ गाण्डी ग्रन्थिरस्यास्ति । कृदिकारादितिङी षन्तात् गाण्ड्यजगादितिव ॥

गाण्डीवभूषणः । पुं । अर्जुने ॥ धानुष्के । धनुष्मति ॥ गाण्डीवं भूषणमस्य ॥

गाण्डीवी । पुं । अर्जुने । कौन्तेये ॥ चापिनि । धानुष्के ॥ अर्जुनवृक्षे ॥ गाण्डीवोस्त्यस्य । इनिः ॥

गातुः । पुं । पुंस्कोकिले ॥ भृङ्गे ॥ गन्धर्वे ॥ त्रि । रोषणे ॥ गायति । गैशब्दे । गातेवा । गाङ्गतौ । कमिमनिजनिगाभ्न याधिभ्यश्चेतितु ॥ गायने ॥

गाता । पु । गायके ॥ गायति । गै० ॥ तृच् ॥

गात्रम् । न । गजाग्रजङ्घादौ । गजाग्रभागे ॥ अङ्गे ॥ कलेवरे । इन्द्रियायतने । शिरःपाण्याद्यवयवनां समुदाये । गात इति भाषा ॥ गातेऽने न वा । गाङ्गतौ । ष्ट्रन् ॥ इति वा । बहुलंतणीति प्रयोगा ॥ यद्वा । गच्छति । गम्लृ० गमेराचेति त्रन् । आचान्तादेशः ॥

गात्रभङ्गा । स्त्री । शूकशिम्ब्याम् ॥

गात्रभृत्यः । पुं । तापसविशेषे ॥ केवलं गात्रैरेव यः शेते सः ॥

गात्रसङ्कोची । पुं । जाहकजन्तौ ॥

गात्रसम्प्लवः । पुं । प्लवपक्षिणि ॥

गात्रानुलेपनी । स्त्री । अनुलेपनवर्त्याम् । वर्णके । विलेपने । गात्रानुलेपयोग्ये पिष्टपृष्टसुगन्धिद्रव्ये ॥ गात्रमनुलिप्यते ऽनया । करणेति ल्युट् । ङीप् ॥

गात्रिका । स्त्री । गाती इति लोकप्रसिद्धे ॥

गाथकः । पुं । गायके । गानोपजीविनि ॥ गायति । गैप्र गण्वकन् ॥

गाथा । स्त्री । श्लोके ॥ संस्कृतान्यभाषायाम् । प्राकृतभाषायाम् ॥ गेये ॥ वृत्ते । अपरसङ्ख्यातवृत्ते ॥ यथा । पादे द्वादश विषमे मात्राश्चाष्टादश द्वितीयेपि । पञ्चदशचैव तुरीये कथिता गाथा तथैवार्येति ॥ गीयतेऽसौ । गाङ्० । उषिकुषिगार्तिभ्यस्थन् ॥

गाधः । पुं । तलस्पर्शे । स्थाने ॥ सुप्रत

रे। गाहन इति पाँच्इतिचभाषा॥ लिप्सायाम्॥

गाधिः। पुं। कान्यकुब्जदेशाधिपचन्द्रवंशीयकुशिकराजस्यपुत्रे विश्वामित्रमुनेःपितरि॥

गाधिजः। पुं। विश्वामित्रमुनौ॥ गाधेर्जातः। जनी॰ ड॥

गाधिपुरम्। न। कान्यकुब्जे कनौज् इतिख्याते महोदयपुरे॥

गाधिभूः। पुं।<br>
गाधिसुतः। पुं।　} विश्वामित्रे॥<br>
गाधेयः। पुं।

गानम्। न। गीते। गेये॥ ध्वनौ॥ गैशब्दे। ल्युट्॥ मार्गो देशीच गानस्य प्रकारौ द्वावुदीरितौ॥

गानिनी। स्त्री। वचायाम्॥

गान्तु.। त्रि। गन्तरि॥ गच्छति। गम्लृ॰। क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च॥

गान्त्रम्। न। शकटे॥ गम्यतेऽनेन। गम्लृ॰। भ्रसुजिगमिनमिहनिविश्यशां वृद्धिश्चेतिष्ट्रन्॥

गान्दिनी। स्त्री। श्रीगङ्गायाम्। ला(?)ख्याम्॥ श्वफल्कस्य भार्यायाम्॥

गान्दिनीसुत.। पुं। भीष्मपित महे। अक्रूरादौ॥

गान्धर्वः। पुं। गन्धर्वे॥ विवाहविशेषे यथा। इच्छया ऽन्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः सतु विज्ञेयो मैथुन्यः कामसम्भवः इति॥ गान्धर्वः समयान्मिथ इतिच। यत्र कन्यावरयो रन्योन्यानुरागात् त्वं मे भार्या त्वं मे पति रितिनिश्चय.स इत्यर्थः॥ अष्टविधदैवसर्गान्तरे॥ भारतवर्षीयोपद्वीपविशेषे॥ न। गाने॥ सामवेदस्योपवेदे। पदावस्थिततानपरिच्छेदप्रयुक्तावधानेन पृथक्षड्जादिस्वरसमुदाये॥ तदाहदन्तिलः। पदस्थस्वरसङ्घातस्तालेन सम्मितस्तथा। प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते॥ इति॥ गन्धं सौरभम् अर्वति। अर्वगतौ। कर्मण्यण्। शकन्ध्वादिः। ततः प्रज्ञाद्यण्॥ त्रि। गन्धर्वसम्बन्धिनि॥

गान्धारः। पुं। सिन्दूरे॥ रागभेदे॥ तत्स्वरूपं यथा। जटां दधानः कृतभूतिभूषणः काषायवासास्तनुदेहयष्टिः। सयोगपट्टः कृतनेत्रमुद्रो गान्धाररागः कथितस्तपस्वीति॥ अयं भैरवरागस्य पुत्रः। प्रत्यूषोऽस्य गानसमय.॥ कन्धार इति भाषाप्रसिद्धे देशे॥ गन्धारदेशे भवः। कच्छादिभ्यश्चेत्यण्। गन्धारोऽभिजनोऽस्य वा सिन्ध्वादण्॥ रूपान्तरे॥ गान्धारिः स्वपदम्। सान्धेयगान्धारि-

भ्यारेव्यम्। तस्य राजन्यय्येवम् ॥ तन्त्रीकण्ठोत्थितः सप्तस्वरान्तर्गते तृतीयस्वरे ॥ अजाविकोच गान्धारं नदतः। तस्योत्पत्त्यादि यथा। वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः। नानागन्धवहः पुण्यो गान्धारस्तेन हेतुनेति ॥ अपिच। नाभेः समुद्गतो वायुर्गन्धयोर्वे च चालयन्। स शब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ॥ चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः। ऋषभे धैवते तिस्रो द्वे गान्धारनिषादकेइति ॥ न। गन्धरसे ॥

गान्धारराज। पुं। महाभारतप्रसिद्धे शकुनिनामाख्याते दुर्योधनस्य मातुले ॥

गान्धारी। स्त्री। धृतराष्ट्रस्य पत्न्याम् ॥ जिनानां शासनदेवताविशेषे ॥ यवासे ॥ दुरालभायाम् ॥ नाडीविशेषे ॥ यथा। इडापृष्ठे तु गान्धारी मयूरगलसन्निभा। सव्यपादादिनेत्रान्ता गान्धारीपरिकीर्त्तितेति ॥ गाँजा इतिप्रसिद्धे मादक द्रव्यविशेषे ॥ इति विष्णुसिद्धान्तसारावली वैद्यक ग्रन्थः ॥

गान्धारेय। पुं। दुर्योधनस्ये ॥ गान्धार्या अपत्यम्। स्त्रीभ्योढक् ॥

गान्धिकः। पुं। लेखके ॥ सुगन्धिद्रव्य कारिणि। गन्धवणिजि ॥ सतु अम्बष्ठात् राजपुत्र्यांजातः सङ्करजातिः। अस्यकर्म लिखनंगन्धदानञ्चेति पराशर. ॥ गाँधियोर्का इति गौडभाषाप्रसिद्धे कीटविशेषे ॥

गामुकः। त्रि। गमनशीले। गन्तरि ॥ गच्छति तच्छीलः। गम्लृ॰। लषपतपदस्थाभूवृषहनकमगमशृभ्युउकञ् इत्युकञ् ॥

गाम्भीर्य्यम्। न। अचोभ्यत्वे ॥ गम्भीरस्यभावम्। गम्भीरान्ष्यः। गम्भीरत्वे। अगाधत्वे ॥ पीत्वा गर्जन्त्यमी दिशि दिशि जलदाः सर्वं गरयश्रो गरीयां स्तवामातेसभाजा समरविटपिनां जन्मभूमि स्त्वमेव। गाम्भीर्यं किन्नु तादृक् त्वयि सलिलनिधे किन्नु विद्यापयामः सर्वोपायेन मैनाकनिकनिकपादपुतः काङ्गचणीयाः ॥

गायकः। त्रि। गातरि। गायने ॥ गन्धर्वे ॥ गायति। गै॰। ण्वुल् ॥

गायनम्। न। सामविशेषे ॥ त्रि। गायत्री सम्बन्धिनि ॥

गायत्री। पुं। खदिरवृक्षे ॥ खदिरगायत्रिणौ तिर्यतेयेति वैद्योक्तेः। त्री॰ इनिः ॥ गायत्रस्तोत्रस्युद्गातरि ॥

गायत्री। स्त्री। त्रिपदादिच्छन्दसाम्। वेद

मातरि ॥ गायन्तं त्रायते । त्रैङ् पालने । आतोऽनुपसर्गे कः इति कः । गौ० ङीष् ॥ यथा व्यासः । प्रतिग्रहादन्नदोषात् पातकादुपपातकात् । गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यत इति ॥ अपिच । न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । सोऽहमस्मीत्युपासीत विधिना येन केनचिदिति ॥ तस्याः स्थानं पुष्करे ॥ उपसन्ध्यं सावित्रीं नोपतिष्ठेत यो द्विजः । काले त्रिकालं सप्ताहात् स पतेन्नात्र संशयः ॥ गायत्रीमन्त्रतो यान्य-दस्त्येवाक्षिवत्मम् । कालेऽसाविष-केण स्यात् तेनेदं जगत्त्रयमि-ति पद्मपुराणम् ॥ दुर्गायां देव्याम् । भवान्याम् ॥ यथा । गायनात् त्रायसे यस्मा-न्नादसि गायत्रीति त्वमीरितेति देवी निरुक्ताध्यायः ॥ यद्वा । गानङ् गायः । भावे घञ् । युक् । गायेन गानेन त्रायते । त्रैङ्० । सुपीतियोगविभागात् कः ॥ खदिरद्रुमे ॥ षडक्षरे छन्दोऽपि । तस्यावृत्तिस्त्रिविधा । यथा । तनुमध्या १ शशिवदना २ सोमराजीति । उदाहरणन्तु तत्तत्स्थाने द्रष्टव्यम् ॥

गायनः । त्रि । गायके । गायके ॥ गायति । गै० । ल्युट् चेति शिल्पिनि कर्त्तरि ल्युट् । आतो युक् ॥ जल्पाके ॥

गायन्ती । स्त्री । गानकर्त्र्याम् ॥ टित्त्वान्ङीप् ॥

गायिका । स्त्री । गायन्त्याम् ॥ ण्वुलन्तात् गायकात् स्त्रियां टाप् । प्रत्ययस्थादितीत्त्वम् ॥

गारित्मम् । न । श्वोदले ॥ गीर्यते । गॄ० । भूसादिभ्योऽपि मन् इति त्विमन् प्रत्ययः ॥

गारुडम् । न । क्ष्वेडमन्त्रे ॥ मरकतमणौ ॥ विषमात्रे ॥ गरुडपुराणे ॥ अस्य श्लोकसंख्या देवीभागवते – यथा । एकोनविंशत्साहस्रं गारुडं हरिभाषितमिति ॥ स्वर्णे ॥

गारुडिकः । पुं । विषवैद्ये ॥

गारुडी । स्त्री । पातालगरुडीलतायाम् ॥ विद्याविशेषे ॥

गारुत्मतम् । न । मरकते । हरिन्मणौ । पन्ना इति भाषा ॥ गरुत्मतो जातम् । तस्येदमित्यण् ॥

गारुत्मतपत्रिका । स्त्री । पाचीलतायाम् ॥

गार्गी । स्त्री । बृहदारण्यकोपनिषत्प्रसिद्धायां ब्रह्मवादिन्यां वचक्नुतनयायाम् । वाचक्नव्याम् ॥ गर्गस्यापत्यं स्त्री । गर्गादियञ् । यञश्चेति ङीप् ।

हलस्तद्धितस्येतियलोपः ॥

गर्गीयम् । त्रि । गर्गप्रोक्ते ॥

गार्ग्यः । पुं । मुनिविशेषे ॥ गर्गस्यगो त्रापत्यम् । ग० यञ् । बहुत्वे गर्गाः ॥

गार्ध्यम् । न । लिप्सायाम् । आकाङ्क्षायाम् । तृष्णाभरे ॥ गर्द्ध एव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥

गार्भपदः । पुं । गर्भपदयुक्ते वाणे ॥

गार्भः । पुं । गर्भशुद्ध्यर्थं क्रियमाणे कर्मविशेषे ॥ त्रि । गर्भसम्बन्धिनि ॥ तस्येदमित्यण् ॥ गर्भाधानादौ ॥

गार्भिकम् । त्रि । गर्भसम्बन्धिनि ॥

गार्भिणम् । न । गर्भिणीनां समूहे ॥ तस्यसमूह इत्यधिकारे भिक्षादिभ्योण् इत्यणि भस्याढ इति पुंवद्भावेचकृते इनण्यनपत्य इति प्रकृतिभावः ॥

गार्ष्टेयः । पुं । गृष्टिवत्से ॥ गृष्ट्याअपत्यम् । गृष्ट्यादिभ्यश्चेतिढञ् ॥

गार्हपत्यः । पुं । यज्ञाग्निविशेषे ॥ गृहपति र्यजमान स्तेन संयुक्तः । गृहपतिना संयुक्तेञ्य । अवसंज्ञाया मित्यनुवृत्ते राहवनीयादीनामिति प्रसङ्गः ॥

गार्हस्थः । पुं । गृहस्थे यागपुत्रादिकारिणी द्वितीयाश्रमे ॥ स्वार्थिकेण् ॥

गार्हस्थ्यम् । न । गृहस्थत्वे ॥ गृहस्थस्य कर्म भावोवा । ष्यञ् ॥

गालनम् । न । क्षारणे । चुवावना पसावना इति गलावना इतिच भाषा ॥

गालवः । पुं । मुनिविशेषे ॥ लोध्रे तिन्दुके ॥ गालवस्यापत्यम् । कस्यन्येकोत्र्यण् ॥

गालिः । पुं । शापे ॥ इतित्रिकाण्डशेष । यथा । ददतु ददतु गालिं गालिमन्तो भवन्तो वय मिह तदभावा द्गालिदानेप्यशक्ताः । जगति विदित मेतद्दीयते विद्यमानं नहि शशकविषाणं दीयते य त्सदान्यैरित्युद्भटः ॥

गालितः । त्रि । कृतगालने । चुवायानिचोड़ा इतिच भाषा ॥ यथा । गालितं दधि सुस्निग्ध मित्यादिः ॥ द्रवीकृते ॥ यथा । गालितस्य सुवर्णस्य षोडशांशेन सीसकम् इति । गला या इति भाषा ॥

गालिनी । स्त्री । मुद्राविशेषे ॥

गालोड्यम् । न । पद्मबीजे । कमलगट्टा इति भाषा ॥

गावल्गणिः । पुं । सञ्जये ॥ गवल्गणस्यापत्यम् । अतइञ् ॥

गावेधुक । त्रि । गवेधुकायाअवयवे । तद्विकारेच ॥ बिल्वादयण् ॥

गाहनम् । न । प्रवेशने ॥ गाहमा इति

गिरिज्वरः । पुं । वज्रे ॥

गिरित्रः । पुं । शिवे ॥

गिरिदुर्गम् । न । पर्वतपृष्ठे ऽतिदुरारोहे सङ्कटैकमार्गोपेते ऽन्तर्नदीप्रस्रवणाद्युदकयुक्ते बहुसस्योत्पन्नवृक्षवृन्दान्विते राज्ञां निवासस्थाने ॥ सर्वेषां तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् । एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ एषां धन्वदुर्गादीनाम् । गिरिदुर्गं अतिदुरारोहत्वं मन्दप्रदेशादत्वे प्रयत्नप्रेरितशिलादिना बहुविपक्षसैन्यव्यापादनमित्यादयो बहवो गुणा विद्यन्ते तस्मात् प्रयत्नेनैतदाश्रयेत् ॥

गिरिधातुः । पुं । गैरिके ॥

गिरिनदी । स्त्री । शैलापगायाम् ॥ गिरेः प्रसृता नदी । गिरिनद्यादीनां वेति पाक्षिको णत्वाभावः । तेन पक्षे गिरिणदीत्यपि बोध्यम् ॥

गिरिनिम्बः । पुं । महानिम्बवृक्षे ॥

गिरिपीलुः । पुं । परूषकवृक्षे । फालसा इति भाषा ॥ इति राजनिर्घण्टः ॥

गिरिपुष्पकम् । न । शैलेये ॥

गिरिप्रिया । स्त्री । चमर्याम् ॥

गिरिभिद् । पुं । पाषाणभेदवृक्षे ॥

गिरिभूः । स्त्री । पार्वत्याम् ॥ क्षुद्रपाषाणभेदे ॥



गिरिमल्लिका । स्त्री । कुरैया इति भाषाप्रसिद्धे कुटजवृक्षे ॥ गिरिमल्लीव । स्वार्थे कन् ॥

गिरिमल्ली । स्त्री । गिरिमल्लिकायाम् ॥

गिरिमृद् । स्त्री । गैरिके ॥

गिरिमृद्भवम् । न । गैरिके ॥

गिरिमेदः । पुं । विट्खदिरे ॥ (गिरिमेदक इत्यपि पाठः ॥

गिरियकः । पुं । कन्दुके । गेण्डुके ॥ इति हेमचन्द्रः ॥

गिरिवासी । पुं । हस्तिकन्दे ॥

गिरिशः । पुं । सदाशिवे । शङ्करे ॥ गिरिः आश्रयत्वेनास्यास्तीति विग्रहे लोमादित्वात् शः ॥ गिरौ शेते गिरिं श्यति उपभोगेन तनूं करोति वा । गिरौडश्छन्दसि । लोके तु छान्दसानां क्वचिद्भाषायामपि प्रयोग इत्याशु शुषर्गाय दित्याह स्वामी ॥

गिरिशालिनी । स्त्री । अपराजितायाम् ॥

गिरिशृङ्गः । पुं । गणेशे । विनायके ॥ न । अद्रिशिखरे ॥

गिरिसारः । पुं । लौहे ॥ रङ्गे ॥ मलयाचले ॥

गिरिसुतः । पुं । मैनाकपर्वते ॥

गिरिसुता । स्त्री । पार्वत्याम् ॥ यथा, भवतु वो गिरिसुता शशिभृतः प्रि

यतमा । विशतु वो हृदि सदा भग
वत्पादयुगमिति ॥

गिरीशः । पुं । स्थाणौ । रुद्रे । शिवे ॥
अद्रिपतौ ॥ हिमाचले ॥ वृहस्पतौ
॥ गिरेः कैलासस्य ईशः ॥

गिलः । पुं । जम्बीरे ॥ गिलति । गृ
मू० कः । अचिविभाषेति लत्वम् ॥

गिलग्राहः । पुं । कुम्भीरे । नाका इति
भाषा ॥

गिलनम् । न । गिरणे । भक्षणे ॥

गिलिः । स्त्री । गिलने ॥ गरणम् ।
गृ० । इक् कृष्यादिभ्यः । अचिविभा
षेति लत्वम् ॥

गिलितः । त्रि । भक्षिते ॥ गिलितजीता
ऽस्य । तारकादित्वादितच् ॥

गिष्णुः । पुं । सामवेदविदि ॥ गायके ॥

गीतम् । न । गाने ॥ तल्लक्षणं यथा ।
धातुमातुसमायुक्तं गीतमित्युच्य
ते बुधैः । तत्र नादात्मको धातुर्मा
तु रक्षरसञ्चय इति ॥ तद्द्विविधं य
था । गीतञ्च द्विविधं प्रोक्तं यन्त्रगा
त्रविभागतः । यन्त्रं स्याद्वेणुवीणादि
गात्रन्तु मुखजं मतम् ॥ अपिच । नि
बद्धमनिबद्धञ्च गीतं द्विविधमुच्य
ते । अनिबद्धं भवेद्गीतं वर्णादिनि
यमं विना ॥ यदागमकधातुभ्यां रचि
तं विना कृतम् । निबद्धञ्च भवे

गीतम्

द्गीतं तालमानरसाश्रितम् ॥ छ
न्दोगमकधातुभ्यां वर्णादिनियमैः कृ
तम् ॥ * ॥ ऋग्भिः पाठ्यमभूद्गीतं
सामभ्यः समपद्यत । यजुर्भ्यो ऽभि
नया जाता रसाश्चाथर्वणः स्मृताः
॥ * ॥ अङ्गेनालम्बयेद्गीतं हस्तेना
र्थं प्रदर्शयेत् दृष्टिभ्यां भावयेद्भावं
पादाभ्यां तालनिर्णयः ॥ गीतं पी
नपयोधरा समदना नारी विचित्रा
कथा रम्यं हर्म्यतलं सुधांशुकिरण
प्रोद्दीपिता यामिनी । चित्तज्ञाः सु
हृदः सुताः सुमनसो भक्ताः पुनः
सेवकाः शुद्धं गीतफलं कवित्वमतु
लं संसारसारा मताः ॥ सङ्गीतकेन
रम्येण सुखं यस्य न चेतसि । मनु
ष्यश्चपशुर्लोके विधिनैव सवञ्चितः
॥ संसारदुःखदग्धानां सुखानां म
नुग्रहात् । प्रभुणा शङ्करेणात्र गीतं
वाद्यं प्रकाशितम् ॥ गीतज्ञो यदि
गीतेन नाप्नोति परमं पदम् । रुद्र
स्यानुचरो भूत्वा तेनैव सह मोदते
॥ गीतेन हरिणा मृत्युं प्राप्नुवन्त्यपि प
क्षिणः । वना दायान्ति फणिनः शि
शवो न रुदन्ति च ॥ कृतिपमतृप्त
ये किमतः परं फणियशोऽश्नतो
वत पञ्चमः । अपिमत्तो मदयाप म
दान्मसां मधुरगीतयशोकृतशङ्कः ॥

परमानन्दविवर्द्धन मभिमतफलं व शीकरणम् । सकल जनचित्तहरणं विमुक्तिबीजं परंगीतमिति प्रशंसा ॥ वि । शब्दिते ॥ गै । क्तः ॥

गीतमोदी । पुं । किन्नरे ॥ वि । गानानुरागिणि ॥

गीता । स्त्री । कृष्णार्जुनसंवादात्मकेग्रन्थविशेषे ॥ यथा । भारते सर्ववेदाऽर्थो भारतार्थश्च कृत्स्नशः । गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता ॥ इयमष्टादशाध्यायी क्रमात् षट्कत्रयेण हि । कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते इति नीलकण्ठचतुर्धरः ॥ गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः इत्यादिस्मी धरस्वामी ॥ एतदन्याः । आश्वमेधिकपर्वोक्ते ब्राह्मणगीतानुगीते । देवीभागवतोक्ता भगवतीगीता । अध्यात्मरामायणोक्ता रामगीता । श्रीविष्णुभागवतोक्ता गोपीगीता । शिवगीताद्याश्चवह्व्यो ऽध्यात्मविद्यानिरूपणपराःसन्ति ॥

गीतासार । पुं । श्रीकृष्णार्जुनसंवादात्मकेमुक्त्यर्थ ऽष्टाङ्गादियोगग्रन्थे गरुडपुराणोक्ते ॥

गीतिः । स्त्री । गाने ॥ आर्याछन्दोविशेषे ॥ यथा । आर्याप्रथमार्द्धसमं द्वि तीयमपि चार्द्ध मीरयते यस्याम् । सागीतिः फणिपतिना निर्मलमतिना निवेदिता नूनमिति ॥

गीतिका । स्त्री । कृतिसंज्ञकेविंशत्यक्षरावृत्तिविशेषे ॥ यथा । सजजा भरौसलगा यदा कथिता तदा खलु गीतिका ॥ वरपार्श्वशोभिसुवर्णकङ्कणरत्नरञ्जुविभूषिता सुपयोधरा पदसङ्गिनूपुररम्यकुण्डलमण्डिता । फणिराजपिङ्गलवर्णिता कविसार्थमानसचारिका वरकामिनीव मनोहिता नहि कस्य सा किल गीतिकेति ॥

गीरथः । न । जीवे । वृहस्पतौ ॥

गीर्णः । वि । वर्णिते । स्तुते ॥ गिलिते ॥ गीर्यतेस्म । गृनिगरणे शब्दे च । क्तः ॥

गीर्णिः । स्त्री । गिरौ । गिलने ॥ गिलनम् । गॄ० । क्तिन् । ऋल्वादिभ्यः क्तिन्निष्ठावत् । तेनसत्वम् ॥

गीर्देवी । स्त्री । सरस्वत्याम् ॥

गीर्लता । स्त्री । महाज्योतिष्मत्याम् ॥

गीर्वाणः । पुं । देवे । सुरे ॥ गीरेव निग्रहाऽनुग्रहसमर्था वाणो ऽस्त्रं यस्य सः ॥ दन्त्योष्ठ्यपाठे गिरंवनुते याचते स्तुतिप्रियत्वात् । वनुयाचने । कर्मण्यण् । पूर्वपदात् इति णत्वम् ॥

गीर्वाणकुसुमम् । न । लवङ्गे ॥

गीष्पतिः । पुं । धिषणे । गुरौ । वृह

स्तौ ॥ गिराम्पतिः ॥ अहरादीनामिति रेफाभावपक्षे इदुदुपधस्येति षः । अहरादीनामिति रेफपक्षे गीर्पतिः । रेफाभावपक्षे गीःपतिः गीःपतिः ॥ पण्डिते ॥

गीष्पतीष्टिः । स्त्री । वृहस्पतिसवनाम यागे ॥

गुग्गुलः । पुं । स्वनामप्रसिद्धे वृक्षविशेषस्य निर्यासे । गुग्गुलौ ॥ रक्तशिग्रौ ॥

गुग्गुलुः । पुं । कुम्भे । उलूखलके । पुरे ॥ अस्य गुणादयः । महिषाक्षो महानीलः कुमुदः पद्म इत्यपि । हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः ॥ भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः । महानीलस्तु विज्ञेयः स्वनामसमलक्षणः ॥ कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः । हिरण्याक्षस्तु हेमाभः पञ्चानां लिङ्गमीरितम् ॥ महिषाक्षमहानीलौ गजेन्द्राणां हितावुभौ । हयानां कुमुदः पद्मः स्यादारोग्यकरौ परौ ॥ विशेषेण मनुष्याणां कनकं परिकीर्त्तितम् । कदाचित् महिषाक्षस्तु मतः कैश्चिन्नृणामपि ॥ गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णः पित्तलः सरः । कषायः कटुकः पाके कटू-



रूक्षो लघुः परः ॥ भग्नसन्धानकृद्वृष्यः सूक्ष्मः स्वर्य्यो रसायनः । दीपनः पिच्छिलो बल्यः कफवातव्रणापचि । मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान् ॥ पिडकाग्रन्थिशोफार्शोगण्डमालाकृमीन् जयेत् ॥ माधुर्य्याच्छमयेद्वातं कषायत्वाच्च पित्तहा । तिक्तत्वात् कफजित्तेन गुग्गुलुः सर्व्वदोषहा ॥ स नवो वृंहणो वृष्यः पुराणस्त्वतिलेखनः । स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः ॥ नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः । शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः ॥ पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्य्यवर्जितः ॥ अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम् । मद्यं रोषं त्यजेत् सम्यग्गुणार्थी पुरसेवकः ॥ अस्य स्थानविशेषे जन्मादिकथनं यथा । जायन्ते पुरपादपा मरुभुवि ग्रीष्मेऽर्कसन्तापिताः शीतार्त्ताः शिशिरेऽपि गुग्गुलुरसं मुञ्चन्ति ते पञ्चधा । हेमाभं महिषाक्षतुल्यमपरं सत्पद्मरागोपमं भृङ्गाभं कुमुदद्युतिञ्च विधिना ग्राह्यं परीक्ष्य ततः ॥ यद्वै ज्वलन्ति तपने विशदं प्रयान्ति किञ्चिन्ति कोष्णसलिले पयसः समाना-

। ग्राह्याः शुभाः परिहरे च्चिरकालजातान् अङ्गारवर्णसमपूयविगन्धवर्णानिति प्रयोगामृतम् ॥ पक्वस्यास्य पूर्णवीर्यत्वं मासत्रयपर्य्यन्तं तिष्ठतीति वैद्यकपरिभाषा ॥ गोजति । गु अस्तेये । क्विप् । गुजो व्याधिः गुडति । गुडरक्षणे । बाहुलकात् कः । डलयोरैक्यम् ॥

गुच्छः । पुं । स्तवके । कलिकादिकदम्बे । बहुभिः पुष्पैः फलैर्वा सम्बन्धः पल्लवग्रन्थिर्गुच्छः । गुच्छा इति भाषा ॥ स्तम्बे । मूलत एव यत्र लतासमूहो भवति नच प्रकाण्डानि ते गुच्छा मल्लिकादयः । झुण्ड इति भाषा ॥ हारविशेषे । द्वात्रिंशद्यष्टिकेहारे ॥ कलापे । मोरपङ्ख इति भाषा ॥ गुध्यते । गुधपरिवेष्टने । सस्यादिभ्यश्छ इति श्रीभोजः ॥ गूयते । गुङ् शब्दे । बाहुलकात् छगृधा ॥ यद्वा । गवनम् । गुङ्० । सं० क्विप् । तुक् । गुतं छ्यति । छो छेदने । आतोऽनुपसर्गे कः ॥

गुच्छकः । पुं । स्तवके । पुष्पसङ्घाते ॥ स्तम्बे ॥ द्वात्रिंशद्यष्टिकेहारे ॥ कलापे ॥ रीठाकरञ्जे ॥ न । ग्रन्थिपर्णे ॥ गुच्छात्स्वार्थे कन् ॥

गुच्छकणिशः । पुं । रागीधान्ये । दुग्धान्यविशेषोयम् ॥

गुच्छकरञ्जः । पुं । सानन्दे । स्निग्धदले ॥

गुच्छदन्तिका । स्त्री । कदल्याम् ॥

गुच्छपत्रः । पुं । तालवृक्षे ॥

गुच्छपुष्पः । पुं । सप्तच्छदवृक्षे ॥

गुच्छपुष्पकः । पुं । गुच्छकरञ्जे ॥ रीठाकरञ्जे ॥

गुच्छपुष्पी । स्त्री । धातक्याम् ॥ शिम्बीवृक्षे ॥

गुच्छफलः । पुं । रीठाकरञ्जे ॥ रामादन्याम् ॥ कतके ॥

गुच्छफला । स्त्री । अग्निदमन्याम् ॥ काकमाच्याम् ॥ निष्पाव्याम् ॥ द्राक्षायाम् ॥ कदल्याम् ॥

गुच्छबभ्रा । स्त्री । गुण्डालावृक्षे ॥

गुच्छमूलिका । स्त्री । गुण्डासिनीवृक्षे ॥

गुच्छार्द्धः । पुं । चतुर्विंशतियष्टिके हारे ॥ न । अर्द्धगुच्छे ॥ गुच्छस्य अर्द्धं । ग्रामार्द्धवत् समासः ॥

गुच्छालः । पुं । भूतृणे । गन्धखेड ॥

गुच्छाह्वकान्दः । पुं । गुलञ्चकन्दे । निघण्टिकायाम् । कुल्थी इति गौड भाषा ॥

गुच्छी । स्त्री । गुच्छकरञ्जे ॥

गुज्जरी । स्त्री । रागिणी विशेषे ॥ अ

स्यारूपं यथा । श्यामा सुकेशी म लयद्रुमाणां मदूल्लसत्पल्लवतल्पशय्या । श्रुतेः स्वराणां दधती विभागं तन्त्रीमुखाद् दक्षिणगुर्जरीयम् ॥ अस्याः कालनियमो यथा । नाटो गौडो वराडीच गुर्जरी देशिरेव च । पूर्वाह्ने गानमेतेषां निषिद्धमिति तद्विदः ॥ मतभेदेन पूर्वाह्ने पिगीयते ॥

गुञ्जः । पुं । गुच्छे । पुष्पस्तवके ॥

गुञ्जकृत् । पुं । भ्रमरे ॥ गुञ्जं ध्वनिविशेषं करोति । कृञ् । क्विप् ॥

गुञ्जनम् । न । भ्रमरादीनां गुणगुणाध्वनौ । गुञ्जिते ॥

गुञ्जा । स्त्री । लताविशेषे । काकचिञ्चायाम् । रक्तिकायाम् । घुंघची चिरमुठी रत्ती इत्यादिभाषाप्रसिद्धायाम् भिल्लभूषणायाम् ॥ श्वेत रक्त प्रभेदेन ज्ञेयं गुञ्जाद्वयं बुधैः । गुञ्जाद्वयन्तु केश्यं स्यात् वातपित्तज्वरापहम् । मुखशोषभ्रमश्वासतृष्णामदविनाशनम् ॥ नेत्रामयहरं वृष्यं बल्यं कण्डूव्रणं हरेत् । कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवला पिच ॥ मान विशेषे ॥ गुञ्जा यथाम्यां कथिता गुञ्जेति लीलावती ॥ त्रियवपरिमाणे । इति वैद्याः ॥ चतुर्धान्यपरिमाणे ॥ गोधूमद्वयमाने ॥ पटहे ॥ मधुरध्वनौ ॥ मदिरागृहे ॥ चर्म्मायाम् ॥ गुञ्जति । गुजि अव्यक्तो शब्दे । पचाद्यच् ॥

गुञ्जिका । स्त्री । गुञ्जार्थे ॥ स्वार्थे कः ॥

गुञ्जितम् । न । गुञ्जने ॥ न गुञ्जितं तन्नजहार यन्मनः इतिभट्टिः ॥

गुटिः । स्त्री । ⎫ गोले । जपसङ्
गुटिका । स्त्री । ⎬ ख्यानसाधने । व
गुटी । स्त्री । ⎭ टिकायाम् । गोली वडी इतिभाषा ॥

गुडः । पुं । गोलके ॥ हस्तिसन्नाहे ॥ ग्रासे ॥ कार्पासाम् ॥ इक्षोर्विकारे । इक्षुसारे । शिशुप्रिये ॥ इक्षो रसो यः सम्पक्वो जायते लोष्टवद्दृढः । स गुडो गौडदेशेतु मत्स्यण्डीव गुडो मतः ॥ गुडो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः । नाऽतिपित्तहरो मेदः कफकृमिबलप्रदः ॥ गुडो जीर्णो लघुः पथ्यो ऽनभिष्यन्दाग्निपुष्टिकृत् । पित्तघ्नो मधुरो वृष्यो वातघ्नो ऽसृक् प्रसादनः ॥ गुडो नवः कफश्वासकासकृमिकरोग्निकृत् ॥ श्लेष्माणमाशु विनिहन्ति सदार्द्रकेण पित्तं निहन्ति च सएव हरीतकीभिः । शुण्ठ्या समं हरति वातमशेषमित्थं दोषत्रयक्षयकरा ।

धि नमो गुडाय ॥ गुडति । गुड वेष्टने । इगुपधेति कः ॥ यद्वा । गवते । गुङ् अव्यक्तेशब्दे । कादित्वात्किदिति डः ॥ सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः ॥

गुडकी । पुं । गुडद्वारापक्वौषधविशेषे ॥ अस्य पूर्वां तेजः षण्मासपर्यन्तमिति ख्यातीतिपरिभाषा ॥

गुडकरी । स्त्री । रागिणीविशेषे ॥

गुडतृणम् । न । इक्षौ ॥ गुडस्तृणमिव ॥

गुडत्वक् । न । त्वचे । चोचे ॥ दारुचीनी इतिभाषाप्रसिद्धे गन्धद्रव्ये ॥

गुडत्वचम् । न । त्वक्पत्रे । गुडस्त्वचि ॥

गुडदारु । म । इक्षौ । रसाले ॥

गुडधानाः । स्त्री । गुडमिश्रितधानासु ॥ गुडधानी इतिभाषा ॥ गुडेन धानाः गुडधानाः । भक्ष्येणमिश्रीकरणमिति समासः । मिश्रणक्रियाद्वारा सामर्थ्यम् । तांविना मिश्रीकरणस्य योगात् । बहुवचनान्तोयं धानाभृष्टयवेस्त्रियः इतिबहुवचननिर्देशात् ॥

गुडधेनुः । स्त्री । दानार्थंगुडादिनिर्मितायां धेनौ ॥

गुडपुष्प । पु । मधूकवृक्षे । महुवा इतिभाषा ॥ गुडवत्पुष्पमस्य ॥

गुडफलः । पुं । पीलुवृक्षे ॥

गुडभा । स्त्री । यावनालशर्करायाम् ॥

गुडमूलः । पुं । अल्पमारिषशाके ॥

गुडलम् । न । गौडीमदिरायाम् ॥ त्रि । गुडयुक्त । गुडला गुडली इति भाषा ॥

गुडबीजः । पुं । मसूरे ॥

गुडशर्करा । स्त्री । पिष्टकायाम् ॥ इति निकाण्डशेषः ॥

गुडशिग्रु । पुं । रक्तशोभाञ्जने ॥

गुडा । स्त्री । स्नुह्याम् ॥ गुडिकायाम् ॥ वटीयाम् । लघुकाये ॥ गुडात् टाप् ॥

गुडाकी । स्त्री । निद्रायाम् इतिश्रीधरस्वामिनः ॥

गुडाकेशः । पु । सदाशिवे ॥ गुडा स्नुहीतद्वत् केशा अस्य जटाधारित्वात् ॥ अर्जुने ॥ गुडाकायाईशः ॥ त्रि । जितनिद्रे ॥ सर्वत्र सावधाने ॥

गुडालक । पु । न । केशचक्र ॥ मुखं मुकुन्दस्य गुडालकावृतम् ॥

गुडाशय । पु । आखोटे ॥ त्रि । गुडेच्छौ ॥

गुडिका । स्त्री । वृत्तवटिकायाम् ॥ वटिका गुडिका चेति सञ्ज्ञान्तरभेदतः । इतिवैद्यकपरिभाषा ॥

गुडुची । स्त्री । गुडूच्याम् । अमृतायाम् ॥

गुडूची । स्त्री । गिलोय इति भाषाप्रसिद्धायां लतायाम् । वत्सादन्याम् । छिन्नरुहायाम् । अमृतायाम् ॥ अस्या उत्पत्त्यादिकं यथा । अथ लङ्केश्वरो मानी रावणो राक्षसाधिपः ॥ रामपत्नीं वनात् सीतां जहार मदनातुरः ॥ ततस्तं बलवान् रामो रिपुं जायापहारिणम् । हतो वानरसैन्येन जघान रणमूर्द्धनि ॥ हते तस्मिन् सुरारातौ रावणे बलगर्विते । देवराजः सहस्राक्षः परितुष्टोऽतिराघवे ॥ तत्र ये वानराः केचिद्राक्षसैर्निहता रणे । तानिन्द्रो जीवयामास संसिच्यामृतवृष्टिभिः ॥ ततो येषु प्रदेशेषु कपिगात्रात् परिच्युताः । पीयूषबिन्दवः पेतुस्तेभ्यो जाता गुडूचिका ॥ गुडूची कटुका तिक्ता स्वादुपाका रसायनी । सङ्ग्राहिणी कषायोष्णा लघ्वी बल्याग्निदीपनी ॥ दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम् । कामलाकुष्ठवातास्रज्वरकृमिवमीर्हरेत् ॥ गुडति । गुड रक्षणे । बाहुलकादूचट् । ङीप् ॥

गुडूचीकल्कः । पुं । कल्कविशेषे ॥ स यथा । अमृतायाः शतं चूर्णं वाससा परिशोधितम् । पृथक् षोडशभागाः



स्युर्गुडमाक्षिकसर्पिषाम् ॥ यथाग्नि भक्षयेदेतान्नरो नित्यमतन्द्रितः । नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च ॥ न ज्वरा विषमा नैव मेहा निःशर्करा कचम् । न च नेत्रगता रोगाः परमेतद्रसायनम् ॥ मेधाकरं त्रिदोषघ्नं प्रयोगादस्य बुद्धिमान् । जीवेद्वर्षशतं साग्रं यथैवादितिजस्तथेति ॥

गुडूचीपत्रम् । क्ली । अमृतापर्णं ॥ गुडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु । कषायं कटु तिक्तञ्च स्वादुपाकं रसायनम् ॥ बल्यमुष्णञ्च सङ्ग्राहि हन्याद्दोषत्रयं तृषाम् । दाहप्रमेहवातास्रकामलाकुष्ठपाण्डुताः ॥

गुडेरः । पुं । गुडके । ग्रासे ॥ गुडति गुड रक्षणे । मलिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥

गुडेरकः । पुं । ग्रासे ॥

गुडोद्भवा । स्त्री । शर्करायाम् ॥

गुणः । पुं ॥ मौर्व्याम् । ज्यायाम् । धनुराकर्षणरज्जौ । चिल्ला इति भाषा ॥ अप्रधाने । शौर्य्यादौ रसगन्धादौ च ॥ तल्लक्षणं यथा । सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ सत्त्वं द्रव्यम् । सत्त्वस्य

गुणः

निविशतेइतिसामान्यं व्याख्येयम्। एतेन सत्ताव्यावर्त्यते। सा हि नकेवलं द्रव्ये वर्त्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्यत्वं द्रव्य एव वर्त्तते इति तत्रातिव्याप्तिरत आह। अपैतीति। अपगच्छतीत्यर्थः। अर्थात् संख्यादेव। यथापीततायां जातायां फलादेर्नीलतापैति नैवं द्रव्यत्वं द्रव्यादपैति। एवमपि गोत्वं गोषु वर्त्तते, अश्वादेरपैति तत्रातिव्याप्तिरत आह। पृथग्जातिषु दृश्यत इति। गोत्वं हि द्रव्यत्वावान्तरजातिषु न दृश्यते गुणस्तु दृश्यते। यथा अश्वे दृष्टा नीलतादृशादिष्वपि दृश्यते। एतेन पूर्वार्द्धेन सकलमातेर्थ्यैवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्त्तते ततोऽपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह। आधेयश्चाक्रियाजश्चेति। उत्पाद्यानुत्पाद्य इत्यर्थः। उत्पाद्यो यथा। घटादेः पाकजो रूपादिः। अक्रियाजः अनुत्पाद्यः। स यथा। आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याभावाद् गुणत्वाभाव। एवमपि द्रव्यस्य गुणत्वं प्राप्नोति अवयविद्रव्यं हि अवयवद्रव्येषु निविशते। असमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोऽपैति भिन्नजाती

गुणः

येषु च घटत्वपटादिषु दृश्यते। द्विविधं च भवति नित्यानित्यभेदेन। निरवयवस्यात्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह। असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः॥ ॥ उपैत्यन्यज्जहात्यन्यद्दृष्टो द्रव्यान्तरेष्वपि। वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥ इति पारिभाषिको गुणो ऽप्रधान एवान्तर्भवति ॥ तेनाविशौर्यैश्वर्यवैराग्यशक्तयश्चपराश्रितत्वाद् एव गुणाः ॥ शुक्लादौ ॥ स च शुक्लादिशब्दानां पटादौ प्रवृत्तिनिमित्तं भवति ॥ विशेषाधानहेतौ सिद्धे वस्तुधर्मे। शुक्लादयो हि गवादिकं स्वजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति ॥ अपि च। द्रव्यत्वव्यापकतावच्छेदकसत्ताव्याप्यजातिमत्त्वं तदर्थः॥ यथा। रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणा इति॥ कर्मव्यतिरिक्तत्वे सति जातिमात्राश्रये ॥ विवेकवैराग्योपरतितितिक्षासमाधनेषु ॥ आकाशादौ। सांसिद्धिकवैनयिकप्राकृतिकभेदभिन्ने ॥ द्रव्याश्रिते। फलादेर

सगन्धादौ ॥ स्वादे ॥ इन्द्रिये ॥ त्यागे ॥ शौर्यादौ ॥ सत्त्वरजस्तमस्सु ॥ गुणानाम् परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकमिति भगवान् वार्षगण्यः । गुणानां सत्त्वादीनाम् परमं रूपम् अधिष्ठानमात्मेत्यर्थः ॥ राज्ञः सन्धिविग्रहादौ ॥ यथा । सन्धिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनामिति ॥ देशकालज्ञतादिचतुर्दशसु ॥ तेच । देशकालज्ञतादार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानता दाक्ष्यमूर्जः संवृतमन्त्रता ॥ अविसंवादिता शौर्य्यं भक्तिज्ञत्वं कृतज्ञता । शरणागतवात्सल्यममर्षित्वमचापलम् ॥ एतेचतुर्दश गुणाः प्रोक्ताः शास्त्रेषुसूरिभिः ॥ गौतमोक्तागुणा यथा । दयासर्वभूतेषु क्षान्तिरनसूया शौचम् अनायासः मङ्गलम् अकार्पण्यम् अस्पृहेति ॥ काव्यगुणश्च । यथा । ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्तेस्युरचलस्थितयो गुणा इति ॥ तद्भेदा यथा । श्लेषः प्रसाद समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्त्वमोज कान्तिसमाधयः ॥ इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः ॥ माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ॥ तस्य दशसङ्ख्याभावे हेतुर्यथा । केचिदन्तर्भवन्त्येषु दोषत्यागात्परेश्रिताः । अन्येभजन्ति दोषत्त्वं कुत्रचिन्न ततोदश ॥ आवृत्तौ ॥ रज्जौ ॥ तन्तौ ॥ भीमसेने ॥ उत्कर्षे । दोषान्यस्मिन् विशेषणे ॥ समानभागे ॥ यथा । सङ्ख्यायागुणस्यनिमानेमयड्वित्यच ॥ संज्ञाजातिक्रियाशब्दान् हित्वाऽन्येगुणवाचिन । चतुष्टयी शब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेर्निर्णयः ॥ गुण्यते । गुणआमन्त्रणे । घञ् ॥ गुणाः कुर्वन्ति दूतत्वं दूरेपि वसतां सताम् । केतकी गन्धमाघ्रायस्वयं गच्छन्तिषट्पद ॥

गुणकः । पुं । पूरकाङ्के ॥ यथा । गुणयात्तमङ्कंगुणकेनहन्यादिति ॥

गुणकारः । पुं । भीमसेने ॥ त्रि । गुणकारके ॥

गुणगृह्य । त्रि । गुणपक्षपातिनि ॥ गुणानांगृह्यः । पदास्वैरिबाह्यापक्ष्येषुचेति ग्रहे क्यप् ॥

गुणज्ञ. । त्रि । गुणवेत्तरि ॥ यथा । गुणिनि गुणज्ञो रमते नाऽगुणशीलस्य गुणिनि परितोष. । अलि रेति

वनात् कमलं नहि भेक स्तेकया सोपि॥

गुणत्रयविनिर्म्मितः। पुं। मायाकल्पिते संसारवृक्षे॥

गुणधर्मः। पुं। गुणाश्रितधर्मे॥ यथा। यो गुणेन प्रवर्त्तते गुणधर्मः सउच्यते। यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनमिति॥

गुणनिका। स्त्री। नृत्ये॥ शून्याङ्के॥ पाठनिश्चये॥ मालायाम्॥ आम्रेडिते॥ गुणआम्रेडने। घुण। गुणस इत्यन्योयुजितियुच्। कात्तूवैस्येकारः॥ शास्त्रादीनामीलने॥

गुणनी। स्त्री। पाठनिश्चये। शीलने॥

गुणनीयः। पुं। शास्त्राद्यभ्यासे॥ इति हारावली॥

गुणप्रवाहः। पुं। चेतनाचेतनात्मके प्रपञ्चे॥

गुणप्रवृद्धः। पुं। संसारवृक्षे॥ तच्छ्लाखायाम्॥ गुणैः सत्त्वरजस्तमोभिर्देहेन्द्रियविषयाकारपरिणतैर्जलसेचनैरिव स्थूलीभूतत्वात्॥ गुणैःप्रवृद्धः॥

गुणभोक्तृ। न। चेयेब्रह्मणि॥ सत्त्वरजस्तमसां शब्दादिद्वारा सुखदुःखमोहाकारेण परिणतानामुपलब्धृत्वात्॥

गुणभ्रंशः। पुं। गुणनाशे। वर्त्तिकायाम्॥

गुणलयनिका। स्त्री। वस्त्रनिर्मितगृहे केश्रिकायाम्॥ इति हेमचन्द्रः॥

गुणलयनी। स्त्री। गुणलयनिकायाम्। पटकुट्याम्॥ इति हलायुधः॥

गुणवान्। त्रि। गुणविशिष्टे। मदधीना एते गुणा इत्यभिमानवति॥ गुणवन्तं निगृह्णीत गुणहीनन्तु वर्जयेत्। पण्डितस्सगुणाः सर्वे मूर्खे दोषाः हि केवलमितिगारुडेनीतिसारः॥ गुणोस्त्यस्य। मतुप्॥ सम्बन्धिनि॥

गुणवादः। पुं। प्रमाणान्तरविरोधेसत्यर्थवादे॥ यथा। आदित्योयूपः इत्यादिषु यूपे आदित्याभेदस्यप्रत्यक्षबाधितत्वात् आदित्यवदुज्ज्वलरूपेगुणो ऽनेनलक्षणया प्रतिपाद्यते। इति॥

गुणवित्। त्रि। साङ्ख्यज्ञे॥ सत्त्वसत्त्वरजस्तमांसि त्रयोगुणाः साम्येनावस्थिताः जगतोमहदादिलक्षणस्य कारणमिति कल्पयति॥ गुणज्ञे॥

गुणवृक्षः। पुं। कूपके। नौकामध्यस्थे रज्जुबन्धनस्तम्भे। गुणधरा मस्तूला इति भाषा॥ गुणानां रज्जूनां वृक्षः॥

गुणवृक्षकः। पुं। कूपके॥ संचार्या-

कर्त्तृ ॥

गुणसङ्गः । पुं । शब्दादिषु सुखदुःखमोहात्मकेष्वभिलाषे ॥ गुणेषु सङ्गः ॥

गुणसङ्ख्यानम् । न । साङ्ख्ये कापिलशास्त्रे ॥ गुणाः सत्त्वरजस्तमांसि सम्यक् कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्ते ऽस्मिन्निति व्युत्पत्तेः ॥

गुणसम्मूढः । त्रि । गुणैः कार्यतयाधर्म्मैर्देहादिभिर्विकारैः सम्यङ् मूढे । स्वरूपास्फुरणेन तानेवात्मत्वेन मन्यमाने ॥

गुणसागरः । पुं । ब्रह्मणि । विधातरि ॥ बुद्धविशेषे ॥ त्रि । सकलगुणाधारे ॥ गुणानां सागरः ॥

गुणा । स्त्री । दूर्वायाम् ॥ मांसरोहिण्याम् ॥

गुणाकरः । पुं । बुद्धे ॥ त्रि । गुणान्विते ॥ गुणानामाकरः ॥

गुणातीतः । त्रि । परमेश्वरे ॥ गुणाः शीतोष्णसुखदुःखाद्यः सत्त्वादयो वा तान् अतीतो ऽतिक्रान्तः ॥ स्थितप्रज्ञे ॥

गुणान्वितः । त्रि । विवेकवैराग्योपरतितितिक्षासमाधानयुक्ते ॥ सुखदुःखमोहात्मकगुणैर्युक्ते ॥ गुणयुक्ते ॥

गुणितः । त्रि । आहते । पूरिते ॥ यथा । पञ्चधा गुणिता पञ्चसङ्ख्या पञ्चविंशतिर्भवतीत्यादिः ॥ मिलिते ॥ आवर्त्तिते । अभ्यस्ते ॥ गुण्यन्ते स्म । गुण आमन्त्रणे । क्तः ॥

गुणी । पुं । धनुषि । शरासने । चापे ॥ त्रि । गुणविशिष्टे ॥ गुणोऽस्यास्तीति ॥

गुणीभूतः । त्रि । अप्रधानीभूते ॥

गुणीभूतव्यङ्ग्यः । पुं । काव्यविशेषे ॥ यथा । अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्येतु मध्यमम् ॥

गुणेशः । त्रि । सत्त्वादिगुणानां नियामके । ईश्वरे ॥

गुणेश्वरः । पुं । चित्रकूटाचले ॥ त्रि । गुणाढ्ये ॥ गुणानाम् ईश्वरः ॥

गुणोत्कर्षः । पुं । अतिशये । गुणप्राधान्ये । परभागे ॥

गुणोत्कीर्त्तनम् । न । गुणकथने ॥ विरचकालिक मित्रादिविषयकप्रशंसाप्रतिपादने ॥

गुण्ठितः । त्रि । वेष्टिते ॥ गुण्डिते । रूषिते ॥ गुण्ठ्यते स्म । गुठि वेष्टने । क्तः ॥

गुण्ड्रः । पुं । असितपत्रे । नीलपत्रे । तृणविशेषे ॥ यस्य कन्दः कशेरुः ॥

गुण्डकः । पुं । मलिने ॥ धूलौ ॥ कलौ ॥ कक्षौ ॥ स्नेहपात्रे ॥

गुण्डकन्दः । पुं । कशेरुणि ॥

गुण्डारोचनिका । स्त्री । काम्पिल्ले । कंवीला इति भाषा ॥

गुण्डाला । स्त्री । क्षुद्रक्षुपविशेषे । जलोद्भूतायाम् । गुच्छवभायाम् ॥

गुण्डासिनी । स्त्री । तृणविशेषे । गुच्छमूलिकायाम् । चिपिटायाम् ॥

गुण्डिकः । पुं । स्त्री । गुण्डके । तण्डुलादिचूर्णे ॥ गुण्डिकैः सितपीतैश्च मण्डयन्तो गृहाङ्गनम् ॥

गुण्डिचा । स्त्री । श्रीपुरुषोत्तमदेवस्य रथारोहणानन्तरं वासार्थं मण्डपविशेषे । गुण्डीचावाडी इति भाषा ॥ सर्वतीर्थे ये प्रपश्यन्ति गुण्डिचामण्डपस्थितम् । माञ्च रामं सुभद्राञ्च मम सायुज्यं प्राप्नुयुस्ते चाक्षयकम् ॥

गुण्डितः । त्रि । रजसावीर्णे । क्षुपिते ॥ गुण्ड्यतेस्म । गुडि वेष्टने । क्तः ॥

गुण्यः । त्रि । गुणयति । प्रशस्तगुणयुक्ते ॥ अन्येभ्योपि दृश्यत इति यप् ॥

गुत्सः । पुं । गवेधुकायाम् ॥

गुत्सकम् । न । ग्रन्थिपर्णे ॥

गुत्सः । पुं । स्तवके । विकासोन्मुखकलिकायाम् ॥ कलिकादिकदम्बे ॥ गुध्यते गुधपरिवेष्टने । उन्दिगुधिकुषिभ्यश्चेति सः कित् ॥ हारे ॥ द्वात्रिंशद्यष्टिकेहारे ॥ ग्रन्थिपर्णे ॥

गुत्सकः । पुं । स्तबके । गुच्छा इति भाषा ॥ ग्रन्थपरिच्छेदे ॥

गुत्सकपुष्पः । पुं । सप्तपर्णे ॥

गुत्सार्द्धः । पुं । गुच्छार्द्धे । चतुर्विंशतियष्टिकाभिर्निर्मितेहारे ॥ गुत्सस्य अर्द्धः ॥

गुदम् । न । अपाने ॥ गुदस्य मानं । सर्वस्यसार्द्धं स्याच्चतुरङ्गुलम् । तस्य स्युर्वलय, स्तिस्रः शङ्खावर्त्तनिभाः समाः ॥ प्रवाहिनीभवेत् पूर्वा सार्द्धाङ्गुलमितापरा, उत्सर्जनीच स्यात्, सा सार्द्धाङ्गुलसम्मिता ॥ तस्या अधःसंवरणी स्या देकाङ्गुलसम्मिता । अर्द्धाङ्गुलप्रमाणन्तु बुधै गुदमुखं मतम् ॥ मलोत्सर्गस्य मार्गोयं पायु र्देहे विनिर्मितः ॥ गोदते । गुदक्रीडायाम् । इगुपधेतिकः ॥ यद्वा । गूयते ऽनेन । पुरीषोत्सर्गे । गवते वा । गुङ्शब्दे । अब्दादयश्चेति साधु ॥

गुदकीलः । पुं ।
गुदकीलकः । पुं । } अर्शोरोगे ॥

गुदग्रहः । पुं । उदावर्त्तरोगे ॥

गुदभ्रंश । पुं । रोगविशेषे ॥ तल्लक्षणं यथा । प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः । रूक्षदुर्बलदेहस्य गुदभ्रंशं तं मादिशेदिति ॥

गुदयोनिः । पुं । कुम्भीके ॥

ग्रन्थे । द्यन्तः । क्तः ॥

गुरणम् । न । उद्यमे । भाराद्युद्यमने ॥ गुरीँ उद्यमे । कुटादिः । ल्युट् ॥

गुरुः । पुं ॥ निषेकादिकृत् ॥ निषेकोगर्भाधानम् आदिना सीमन्तोन्नयनादेः मन्त्रविद्यादानादेश्च ग्रहणम् । तत्कर्त्ता पित्रादिर्गुरुः स्यात् । यथा । निषेकादीनि कर्माणि यः करोति यथाविधि । सम्भावयतिचान्नेन सविप्रोगुरुरुच्यते इति मनुः ॥ सगुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ॥ पितृमाचार्यादौ ॥ शास्त्रोपदेष्टरि ॥ साङ्गवेदबोधके ॥ उपदेष्टरि । सम्प्रदायप्रवर्त्तके ॥ शान्तोदान्तः कुलीनश्च विनीतः शुद्धवेशवान् । शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः । निग्रहानुग्रहेशक्तो गुरुरित्यभिधीयते ॥ उद्धर्त्तुञ्चैव संहर्त्तुं समर्थो ब्राह्मणोत्तमः । तपस्वी सत्यवादी च गृहस्थो गुरुरुच्यते ॥ तस्य देशभेदेन विशेषो यथा । मध्यदेशकुरुक्षेत्रलाटकोङ्कणसम्भवाः । अन्तर्वेदी प्रतिष्ठाना आवन्त्याश्च गुरूत्तमाः ॥ गौडाः शाल्वोद्भवाः सौरा मागधाः केरलास्तथा । कोसलाश्च दशार्णा



श्च गुरवः सप्तमध्यमाः ॥ कर्णाटनर्मदारेवाकच्छतीरोद्भवास्तथा । कालिङ्गाश्च कलम्बाश्च काम्बोजाश्चाधमा मताः ॥ मध्यदेशसमुद्भूतः शान्तः सर्वगुणैर्युतः । गुरुदारैश्च सम्यग्गुरुरागमसम्मतः ॥ मध्यदेशसमुद्भूत इति श्रेष्ठत्वदर्शनार्थम् ॥ शाक्ते शाक्तो गुरुः शस्तः शैवे शैवो गुरुर्मतः । वैष्णवे वैष्णवः सौरे सौरो गुरुरुदाहृतः ॥ गाणपे गाणपश्चैव कौलः सर्वत्र सद्गुरुः ॥ इति श्रीमन्त्रनिर्णयतन्त्रम् ॥ रोगघ्नो यथा वैद्यः पररोगचिकित्सकः । तथा गुरुर्मुमुक्षोर्मे भवरोगं विहन्तीति श्रीदेवीभागवतम् ॥ विशेषस्तन्त्रसाराद् ज्ञेयः ॥ शिष्येण सद्गुरोर्निन्दादिकं न श्रोतव्यं तत्प्रमाणमाह । गुरोर्यत्र परीवादो निन्दावापि प्रवर्त्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यत इति ॥ अथ निन्दापरीवादयोः सदसद्दोषविषयकत्वेन भेदोऽवबोध्यः ॥ द्विमात्रे । दीर्घे ॥ दीर्घस्वरो बिन्दुयुतो विसर्गी संयुक्तपूर्वश्च गुरुर्द्विमात्रः । पादान्तगामी तु गुरुर्लघुर्वा वर्णो विकल्पेन गुरुर्नियुक्तः ॥ बृहस्पतौ । सुराचार्ये ॥ द्रोणाचार्ये ॥ कपिकच्छ्वा

र्म् ॥ त्रि । गम्भीरार्थे ॥ बलवति ॥ पूज्ये ॥ महति ॥ दुर्ज्जरे ॥ अलघौ ॥ गृणाति उपदिशति धर्म्मादि । गॄ शब्दे । गिरत्यज्ञानं वा । गॄ निगरणे । कृग्रोरुच्चेतिकुः । उत्वात्सादेशः ॥

गुरुक्रमः । पुं । इतिह । पारम्पर्य्योपदेशे ॥ इतिहलायुधः ॥

गुरुगेहम् ॥ न । आचार्यवेश्मनि ॥ धनुर्म्मीनराश्योः ॥

गुरुघ्नः । पुं । गौरसर्षपे ॥ त्रि । गुरुहन्तरि ॥

गुरुघटकः । पुं । तिलमयूरे ॥ इतित्रिकाण्डशेषः ॥

गुरुतरः । त्रि । गरीयसि ॥ सारवत्तरे ॥

गुरुतल्पगः । पुं । विमातृगन्तरि ॥

गुरुता ॥ स्त्री । गुरुत्वे ॥ भावेतल् ॥

गुरुतालः । पुं । तालविशेषे ॥ यथा । एकएव गुरुर्यत्र गुरुतालः स कथ्यते । अपरं नियमं विनेति ॥

गुरुत्वम् । न । महत्त्वे ॥ पतनप्रतियोगिनि गुणे । आद्यपतनासमवायिकारणे । अलघुतायाम् ॥ यथा । अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वयेतु तत् । अनित्ये तदनित्यं स्यान्नित्येनित्यमुदाहृतम् ॥ तदेवासमवायि स्यात् पतनाख्येतु कर्म्मणि ॥ इतिभाषापरिच्छेदः ॥ गुरोर्भावः । तस्यभावस्त्वतलाविति त्वः । त्वान्तं क्लीबम् ॥ पिण्डपुष्टौ ॥

गुरुदैवतम् । न । पुष्यनक्षत्रे ॥ त्रि । गुरुभक्तितत्परे ॥ गुरुर्दैवतं यस्य सः ।

गुरुपत्रम् । न । रङ्गे ॥

गुरुपत्रा । स्त्री । अम्लिकायाम् । तिन्तिडीवृक्षे ॥

गुरुमारिकम् । न । लघुपाके ॥

गुरुमर्द्दलः । पुं । डिण्डिमवाद्ये ॥

गुरुरत्नम् । न । पुष्परागमणौ ॥

गुरुवर्च्चोघ्नः । पुं । खिम्पाके । कागदी नींबू इतिभाषा ॥

गुरुवर्त्ती । त्रि । गुरुशुश्रूषके ॥

गुरुवासी । पुं । नैष्ठिकब्रह्मचारिणि ॥ अष्टाशीतिसहस्राणां यतीनामूर्द्ध्वरेतसाम् । स्मृतं स्थानन्तु यत्तेषां तद्देवगुरुवासिनाम् ॥

गुरुशिंशपा । स्त्री । शिंशपाद्रुमे ॥

गुरुशुश्रूषा । पुं । विद्यादातुःसेवायाम् ॥ यथाह भगवान् । नाहं मिज्याप्रजातिभ्यां तपसोपशमेनवा । तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथेति ॥

गुरुसारा । पुं । शिंशपायाम् ॥

गुरुस्कन्धः । पुं । श्लेष्मातवृक्षे ॥

गुरुहा । पुं । गुरुघ्ने । नरकीलके ॥

गुरूपदिष्टः । त्रि । याज्ञीये ॥

गुर्ज्जरः । पुं । देशविशेषे ॥ तद्देशस्थे

गुम्फिता ॥

गुर्जरी । स्त्री ॥ रागिणीविशेषे ॥ रीतिभेदे ॥ गुर्जरदेशवनितायाम् ॥ वसति रतिपतिर्गुर्जरीणां कुचेषु ॥

गुर्वादित्यः । पुं । योगविशेषे । सूर्यजीवयोरेकराशिस्थितौ ॥

गुर्विणी । स्त्री । गर्भिण्याम् ॥ गुरुर्दुर्जरो लघुर्वा गर्भोऽस्त्यस्याः । ब्रीह्यादित्वात् इनिः । संज्ञापूर्वकत्वान्न णत्वम् ॥ यद्वा । गर्वति । गर्व गतौ । गर्वेरतउच्चेतीनन् । गौरादित्वान्ङीष् ॥

गुर्वी । स्त्री । गुर्विण्याम् । गर्भवत्याम् ॥ नहि वन्ध्या विजानाति गुर्वीप्रसववेदनाम् ॥ गुरुपत्न्याम् ॥ गुरुत्वयुक्तायाम् ॥

गुलः । पुं । ऐक्षवे । गुडे ॥

गुलञ्चकन्दः । पुं । गुलञ्चकन्दे । निघष्टिकायाम् । कुञ्ची इति गौडभाषा ॥

गुला । स्त्री । सुधीवृक्षे । थूहर इति भाषा ॥

गुलिका । स्त्री । गुटिकायाम् ॥ गोली इति भाषाप्रसिद्धे [illegible] वस्तुनि ॥ गुडयुक्तकुष्माण्डखण्ड-विशेषे ॥ एतेन गुडयुक्तेन गोलक-प्रायखण्डकान् । रञ्जितान् क्षीरमरिचै रिमान् सुगुलिका विदुः ॥

रोगविशेषे ॥

गुली । स्त्री । गुटिकायाम् ॥ सीतला इति भाषाप्रसिद्धे रोगे ॥

गुलुच्छः । पुं । गुच्छे । स्तबके ॥ मधुजङ्घायाम् । गुलच्छु इति पर्वतीयभाषा ॥ गुच्छशब्दार्थेषु । गुलच्छो गुच्छे गुलुच्छवदिति द्विरूपकोषात् ॥

गुलुञ्छः । पुं । गुच्छे ॥

गुल्फः । पुं । घुटिकायाम् । पादग्रन्थौ । टकुना इति भाषा ॥ गलति गच्छति वा । गल अदने । कलिगलिभ्यां फगस्योच्चेति फक् प्रत्ययः । अस्य उत्त्वञ्च ॥

गुल्मः । पुं । सत्त्वप्रधानपुरुषाधिष्ठिते चित्रपुरुषसमूहे ॥ विषुसेनामुखेषु ॥ तत्र इभाः ९ रथाः ९ अश्वाः २७ पदातयः ४५ । समुदायेन ९० । एतत्परिमाणविशिष्टसेना गुल्म इत्यर्थः ॥ सैन्यरक्षणे ॥ घट्टभेदे ॥ रक्षार्थं सैन्यस्थाने ॥ अप्रकाण्डस्तम्बे । स्तम्बे । लताप्रतानादौ । तृणसमूहे । एकमूलाः सङ्घातजाताः शरेक्षुप्रभृतयो गुल्माः ॥ प्लीहरोगे ॥ वायुगोला इति प्रसिद्धरोगे ॥ यथा । दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः । कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥

तस्य पञ्चविधं स्थान पार्श्वे हृन्नाभिवस्तयः ॥ हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वा चलः । वृत्त श्चयापचय वान् स गुल्मइतिकीर्त्तितः ॥ स च व्यस्तैर्जायते दोषैः समस्तैरपिचोच्छ्रितैः । पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरइति ॥ गुह्यते ऽस्मात् भीमादयोपादाने इतिसाधुः ॥ यद्वा । गुध्यते गुडतिवा । गुडवेष्टने रक्षणे वा । बाहुलकात मक् । डलयो रैकत्वं ॥

गुल्मकेतुः । पु । अम्लवेतसे ॥

गुल्ममूलम् । न । आर्द्रके ॥

गुल्मवल्ली । स्त्री । सोमलतायाम् ॥

गुल्मी । त्रि । गुल्मयति । गुल्मविशिष्टे ॥

गुल्मिनी । स्त्री । वपुषोऽशाखाताम्बूल्यादिरूपायां प्रतानिन्यां लतायाम् । सशाखलतायाम् । उलपे ॥ गुल्मः प्रतानो ऽस्त्यस्याः । अतइनिठनाविती निः । ङीप् ॥

गुल्मी । स्त्री । आमलकाम् ॥ लवल्याम् ॥ एलायाम् ॥ वस्त्रवेश्मे । पटीकसि ॥ वन्याम् ॥ गृध्नखीवृक्षे । गुडकां खोली इतिगौडभाषाप्रसिद्धे ॥

गुल्यः । पुं । मधुरे । स्वादौ ॥

गुवाकः । पु । सुपारी इतिप्रसिद्धे वृक्षे । घोण्टायाम् । पूगे । क्रमुके ॥ गुवन्त्यनेनें । गुपुरीषोत्सर्गे । पिनाकादयश्चेति साधुः ॥

गुहः । पुं । कार्त्तिकेये । स्कन्दे ॥ अश्वे । घोटके ॥ शृङ्गवेरपुरवासिनि निषादाधिपतौ श्रीरामसखे ॥ गूहति रक्षति सेनाम् । गुहूसंवरणे । इगुपधेतिकः ॥ विष्णौ ॥ गूहते संवृणोति स्वरूपादीनिमाययेतियोगात् ॥

गुहषष्ठी । स्त्री । मार्गशीर्षशुक्लषष्ठ्याम् ॥

गुहा । स्त्री । सिंहपुच्छीलतायाम् ॥ गर्त्ते ॥ अकृत्रिमे ऽद्रिविवरे । पर्वतान्तरावकाशे । देवखाते । बिले । गुफा द्वार इतिचभाषा ॥ क्वमस्त्ययाम्ना ऽऽप् ॥ भिदादिङ् वा ॥ गूढा अस्यां चानज्ञेयत्वात्पदार्थाः इतिव्याख्यानात् बिदुर्पाबुद्धौ ॥ हृदये हृदाकाशे ॥ अज्ञाने ॥

गुहाचरः । त्रि । गुहायुमन्तर्यमाने ॥ गुहायांचरति । चरेष्टः ॥

गुहाशयः । पुं । मूषिके ॥ सिंहादिमृ ॥ सिंहव्याघ्रवृकाः ऋक्षतरक्षुद्वीपिन स्तथा । बभ्रुजम्बुकमार्जाराः इत्या द्याः स्युः गुहाशयाः ॥ गुहाशया यातपाना गुरुया मधुराश्च ते । स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारि

त्मा ॥ विष्णौ । परमात्मनि ॥ प्रत्यु क्रममर्ग्यमाभिवादनं विधीयते सो धु मिथ सुमध्यमे । प्राचैः परस्मै पुरुषाय चेतसा गुहाशयायैव नटे ॥ इभागिने ॥ गुहायां शेते । शीङ् । अधिकरणे शेतेरित्यच् ॥

गुहाहितः । त्रि । बुद्धिस्थे । गुहायामाहितः ॥

गुहिलम् । न । धने ॥ वने ॥ गूहति गूहते वा । गुहू० । गुपादिभ्यः किदि इतिलच् ॥

गुह्येरः । पुं । गोप्तरि ॥ लौहकारे ॥ गूहति गूहते वा । गुहू० । मूलेराद यश्चेत्येरक् ॥

गुह्यः । पुं । कमठे ॥ दम्भे ॥ परमात्मनि । विष्णौ ॥ रहस्यो पनिषद्वेद्यत्वात् गुहायां बुद्धौ हृदयाकाशे वा निहितः इति वा गुह्यः । गुहामर्हति । दण्डादिभ्यइतियत् ॥ न । रहसि ॥ उपस्थे । भगलिङ्गयोः ॥ गुदे ॥ त्रि । रहस्ये । गोप्ये । यस्मै कस्मै चिदप्रकाशनार्हे ॥ निर्जने ॥ गुहानिवासिनि ॥ गूहनम् गुह्यते वा । गुहू० । शंसिदुहीति क्यप् ॥

गुह्यकः । पुं । देवयोनिविशेषे । कुबेरनिधिरक्षके मणिभद्रादौ ॥ गूहति निधिं रक्षति । गुहू० । ण्वुल् । गृहोदरादित्वाद्यगागमः ॥ निधिं रक्षन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञका इति व्याडिः ॥ यद्वा । गुह्यं कुत्सितं कायति । कैशब्दे । आतइतिकः ॥ गुह्यं गोपनीयं कं सुखं यस्य तिष्ठति वा । अनयोः पक्षयोः शंसिदुहि गुहिभ्यो वेति काशिकोक्तेः क्यप् ॥ गूंझा इति प्रसिद्धे पक्वान्ने । तत्प्रकारः । समितां सर्पिषा भृष्टां सितद्राक्षादिसम्भृताम् । एलालवङ्गकर्पूरमरीचपरिवासिताम् ॥ क्षिपेल्लाल्यसमिताक्षम्पुटे वेष्टयित्वेति पचेत् । ततः खण्डे न्यसेत् पक्वं गुह्यका इयं मुदाहृतः ॥ गुह्यको बृंहणो हृद्यो दृष्यः पित्तानिलापहः । मधुरो ऽतिगुरुः पाके किञ्चित् सन्धानकृत्परः ॥

गुह्यकलोकः । पुं । पिशाचलोकादुपरि गन्धर्वलोकादधो वर्त्तमाने भुवने ॥

गुह्यकाली । स्त्री । देवीविशेषे ॥ नेपालस्थेतत्स्थाने ॥

गुह्यकेश्वरः । पुं । मनुष्यधर्मणि । कुबेरे ॥ गुह्यकायन्तीति गुह्यकाः । तेषामीश्वरः ॥

गुह्यगुरुः । पुं । शिवे ॥

गुह्यदीपकः । पुं । खद्योते ॥

गुह्यनिष्यन्दः । पुं । मूत्रे ॥

गुह्यपुष्पः । पुं । अश्वत्थवृक्षे ॥

गुह्यभाषितम्। न। मन्त्रे॥ गुप्तवाक्ये॥ गुह्यञ्च तत् भाषितञ्च॥

गुह्यबीजः। पुं। भूतृणे॥

गुह्याष्टकम्। न। भस्मसूच्यादिषु॥ तेच यथा। भस्मसूच्यापादिडिण्डिमला कुल्यमरपुष्कराः। प्रभासनैमिषौ चेति गुह्याष्टकमिदं जले॥ इति स्कन्दसंहिता॥

गूः। स्त्री। मले। विष्ठायाम्॥ गच्छति। गम्लृ०। क्विप्। ऊङ्गमादी नामिति वार्त्तिकेन मलोपोऽकार स्य ऊत्वादेशः॥

गूढम्। न। रहसि॥ गुप्ते॥ त्रि। कपटे। गुप्ते। संवृते॥ गहने। दुर्विवेचने॥ गुह्यते स्म। गुहू०। क्तः। यस्यविभाषेतीड्भावः॥

गूढजः। पुं। गूढोत्पन्नपुत्रे॥

गूढनीडः। पुं। खञ्जनखगे॥

गूढपत्रः। पुं। करीरे॥ अङ्कोठे॥

गूढपथः। पुं। अन्तःकरणे॥ गुप्तवर्त्मनि॥

गूढपात्। पुं। सर्पे॥ गूढाः पादा यस्य। पृषोदरादिः॥ यद्वा। गूढं पादयति। पदगतौ। ण्यन्तात् क्विप्॥

गूढपादः। पुं। सर्पे॥ गूढाः संवृताः पादा अस्य। पादानामपि विच्छेदे दे यते दे च विंशतीत्यागमः॥

गूढपुरुषः। पुं। प्रणिधौ। राज्ञांचरे॥ गूढश्चासौ पुरुषश्च॥

गूढपुष्पकः। पुं। वकुलपादपे॥

गूढफलः। पुं। वदरे॥

गूढमार्गः। पुं। भूमध्यमार्गे। सुरङ्गायाम्। सुरङ्ग इति भाषा॥ गूढश्चासौ मार्गश्च॥

गूढमैथुनः। पुं। काके॥ गूढं मैथुनमस्य॥

गूढवर्चाः। पुं। दर्दुरे॥ गूढं वर्चोऽस्य॥

गूढवल्लिका। स्त्री। अङ्कोठवृक्षे॥

गूढसाक्षी। त्रि। योऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः सः॥ तथाच नारदः। अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते। इति॥

गूढाङ्गः। पुं। कच्छपे॥

गूढाङ्घ्रिः। पुं। सर्पे॥

गूढोत्पन्नः। पुं। पुत्रविशेषे॥ यथा। उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्तल्पजः॥

गूथ। पुं। न। मले। प्रकृति॥ गूयते। गुङ्शब्दे गुपुधीपोत्सर्गाद्या तिथपृष्ठगूथेति साधुः॥

गूयभक्षः। पुं। मलभक्षे। क्षुद्रचूडे। गुये सालिक इति गौड़भाषाप्रसि

...के खगे ॥

गूनः । त्रि । कृतपुरीषोत्सर्गे । इत्यमरः ॥ गूयते स्म । गु० । क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥

गूरणम् । न । उद्यमे ॥

गूवाकः । पुं । क्रमुके । गुवाके ॥ गुमनयनेन । गु० । पिना० साधुः ॥

गूषणा । स्त्री । मेचके । मयूरपिच्छचन्द्रके ॥

गृञ्जनः । पुं । लसुन इति प्रसिद्धे रक्तलशुने ॥ इति राजनिर्घण्टः ॥ न । विषदिग्धपशोर्मांसे ॥ शालगम इति प्रसिद्धे कन्दे । शिखिमूले । वर्त्तुले । यवनेष्टे ॥ गृञ्जनः पित्तलो ग्राही तीक्ष्णोष्णो रोचनो मतः । गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुना ॥ गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु । गृजि शब्दे । कर्मणि ल्युट् ॥

गृण्डीवः । पुं । लोपाके । पृथुशृगाले । बड़ा मोटा सियाल इतिभाषा ॥ इतिहेमचन्द्रः ॥

गृत्सः । पुं । कन्दर्पे ॥ गृध्यति । गृधुअभिकाङ्क्षायाम् । गृधिपण्योर्दकौ चेति सः । धातोर्दन्तादेशः ॥

गृत्समदः । पुं । ऋषिविशेषे ॥

गृधिः । स्त्री । सदभिलाषे ॥

गृधुः । पुं । कामदेवे ॥ गृध्यति । गृधु० । सृभिदिशृधिगृधिधृषिभ्यः कुः ॥

गृध्नुः । त्रि । लुब्धे ॥ गर्द्धनशीलः । गृधु० । त्रसिगृधिधृषिक्षिपेः क्नुः । नेड्वशि कृतीतीण्निषेधः ॥

गृध्नुता । स्त्री । लुब्धत्वे । रागे । सङ्गे ॥

गृध्रः । पुं । दाक्षाय्ये । वज्रतुण्डे । परमांसभक्षणाभिकाङ्क्षिणि खगे । गीध इति भाषा ॥ आसन्नमृत्यौ निपतन्ति गृध्रादयो मूर्ध्नि गृहोर्द्ध्वभागे ॥ त्रि । लुब्धके ॥ गृध्यति । गृधु० । सुसूधागृधिभ्यः क्रन् ॥

गृध्रकूटः । पुं । मगधदेशस्थसीमाशैले ॥

गृध्रनखी । स्त्री । कोलिवृक्षे । इत्यमरः ॥ कालियाकड़ा इति गौड़भाषाप्रसिद्धे कुटिलवृक्षे ॥ हिंस्रायाम् । घोंस इति भाषाप्रसिद्धे वृक्षे ॥

गृध्रपत्रा । स्त्री । धूम्रपत्रावृक्षे ॥

गृध्रराजः । पुं । जटायुःपक्षिणि ॥

गृध्रसी । स्त्री । कटसन्धौ वातरोगविशेषे ॥ स च यथा । स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात् । गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ वातात् वातकफात् तन्द्रा गौरवारोचकान्विता । इति । गृध्रमपि स्यति । दोलत्कर्मेति । वात इति भा. गौरा।

दित्वात् ङीष् ॥

गृष्टिः । स्त्री । सकृत्प्रसूतायां गवि ॥ वराहक्रान्तायाम् ॥ बदरायामोषधौ ॥ काश्मर्याम् ॥ गृह्णाति । ग्रह उपादाने क्तिच् । पृषोदरादिः ॥ सकृत्प्रसूतायाम् ॥ अतएव गृष्ट्यास्तु प्याच्चेपि गृष्ट्यादिभ्यश्चेत्यत्र मुनेर्व्याकृतम् ॥

गृहम् । न । इष्टकादिरचिते वासस्थाने । गेहे । उदवसिते । वेश्मनि । घर इति भाषा ॥ गृह्णाति धान्यादिकम् । ग्रह । गेहेकः ॥ यद्वा । गृह ग्रहणे । गर्हते । इगुपधेति कः ॥ कलत्रे । भार्यायाम् । दारपरिग्रहलक्षणे आश्रमे तस्मात्त्रयोरन्यतराश्रमनिषेविते सर्वकर्मसम्पादके त्रिवर्गकारणे ॥ न गृहं गृहमित्याहु र्गृहिणी गृहमुच्यते । तया हि सहितः सर्वान् पुरुषार्थान् समश्नुते ॥ नामनि ॥ भवने । राशौ ॥ चतुर्थभवने ॥ गृह्णाति पुरुषं यस्माद्गृहं तेन प्रकीर्त्तितम् ॥ अत्र व्यासः । न गृहं बन्धनागारं बन्धनेन च कारणम् । मनसा यो विनिर्मुक्तो गृहस्थोऽपि विमुच्यते इति ॥ नहि जडं गृहं पुरुषं बध्नाति तथान्यबन्धने कारणमस्ति किन्तु मनस आसक्तिभावं कारणं तां विहाय संसारं कुर्वाणे मुच्यत एवेत्यर्थः ॥

गृहाः । पुंभूम्नि । कलत्रे । दारेषु ॥ तात्स्थ्यात् । भवतीति तात्स्थ्यात् ताच्छब्द्यम् । अथवा कोशन्तीत्यादौ मञ्चशब्देन पुरुषा अभिधीयन्ते । एवञ्च गृहशब्दो वेश्मनि मुख्यो दारेषु त्वौपचारिकः । अवेदमवधेयम् । गृहशब्दो यमर्द्धर्चादित्वादुभयलिङ्गः । तत्र नपुंसकलिङ्गोऽभिधेयवचनः । पुंलिङ्गस्तु बहुवचनान्त एवेति ॥

गृहकच्छपः । पुं । मेषपिष्टशिलायाम् ॥

गृहकन्या । स्त्री । घृतकुमार्याम् ॥

गृहकपोतः । पुं । प्रासादकुक्कुटे । भित्तीकण्ठे । पारावते ॥

गृहकर्त्ता । पुं । धूसरेऽतिसूक्ष्मे चटके । धान्यभक्षके ॥

गृहकारकः । पुं । घरामी राज इति प्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । प्रतिमाघटकादेव कन्यायां नापितस्य च । सूत्रकारस्य सम्भूतिः सोपानगृहकारकः इति पराशरपद्धतिः ॥

गृहकारी । पुं । कुम्हारी इति भाषायां प्रसिद्धकीटे ॥

गृहकुक्कुटः । पुं । चिपिपटाख्ये भाके ॥

गृहगोधा । स्त्री । भित्तिकायाम् । प-

लिकायाम्। छिपकली विसुथ्यादूति भाषा॥

गृहगोधिका। स्त्री। मुषल्याम्। गृहगोधायाम्॥ अल्पागोधा। अल्पार्थे कन्। गृहस्थगोधिका॥

गृहगोलिका। स्त्री। पल्ल्याम्॥

गृहजातः। पुं। दास्यामुत्पन्ने दासविशेषे॥

गृहणी। स्त्री। काञ्जिके॥

गृहतटी। स्त्री। वीथ्याम्॥ इतिहारावली॥

गृहद्रुमः। पुं। मेषशृङ्गीवृक्षे॥

गृहधूपः। पुं। गेहधूपे॥

गृहनाशनः। पुं। वनकपोते। चित्रकण्ठे। घुघुती पिण्डुकिया इतिच भाषा॥

गृहनीडः। पुं। चटके॥

गृहपङ्क्तिः। स्त्री। रचकजनावासपङ्क्तौ। जिसे अवग्वारिक कहते॥

गृहपतिः। पुं। गृहस्थे॥ सत्रिणि। सदान्नदानकर्तरि गृहस्थे॥ मन्त्रिविशेषे॥ धर्मे॥ गृहस्थपतिः॥ स्त्री। गृहपतन्याम्॥ विभाषासपूर्वस्येतिमाचिकोनत्त्वाभावः॥

गृहपालः। पुं। शुनि॥ गृहं पालयति। पालैर्चत्रे। कर्मण्यण्॥

गृहपोतकः। पुं। वास्तौ। एवेली घर इति च भाषा॥ इतिशब्दरत्ना-वली॥

गृहप्रवेशः। पुं। गृहान्तर्गमने॥

गृहबभ्रुः। पुं। गेहनकुले॥

गृहबलिप्रियः। पुं। बकपक्षिणि॥

गृहबलिभुक्। पुं। चटके॥ काके॥ बके॥

गृहभूमिः। स्त्री। वास्तौ। वेश्मभुवि॥

गृहमणिः। पुं। दीपे॥

गृहमाचिका। स्त्री। चर्मचट्याम्। अजिनपत्रायाम्। चाम् चिरया इति भाषा॥

गृहमृगः। पुं। कुक्कुरे॥

गृहमेधी। पुं। कृतदारपरिग्रहे। गृहस्थे॥ गृहैर्दारैर्मेधते सङ्गच्छते। मेधृसङ्गमे च। सुप्यजातौणिनिस्ताच्छील्ये। णिनिः॥

गृहमेधिनी। स्त्री। सात्त्विकबुद्धौ॥ गृहस्थपत्न्याम्॥

गृहमेधीयम्। न। गृहमेध्ये॥ गृहमेधो देवताऽस्य। द्यावापृथिवीतिछः॥

गृहमेधीय। पु। गृहाश्रमविहितेकर्मादौ॥

गृहमेध्यम्। न। गृहमेधीये॥ गृहमेधो देवताऽस्य। द्यावापृथिवीतियत्॥

गृहयाय्यः। पुं। गृहस्यामिनि॥ गृह्यते। गृहयते। स्पृहिगृहिभ्य आय्यः॥

गृहयालुः । पुं । ग्रहीतरि । ग्रहणशीले ॥ गृहयते तच्छीलः । गृह०ण्यु० । स्पृहिगृहिपतीत्यालुच् । अयामन्तेतिणेरयादेशः ॥

गृहवाटिका । स्त्री । गृहान्तिककृतारामे ॥

गृहसंवेशकः । पुं । गृहसन्निवेशोपदेशके । वास्तुविद्योपजीविनि ॥

गृहस्थः । पुं । गृहिणि । गृहपतौ । ज्येष्ठाश्रमिणि । द्वितीयाश्रमिणि ॥ न्यायार्जितधन स्तत्त्व ज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत् सत्यवादी च गृहस्थोऽपिविमुच्यते ॥ गृहशब्दस्य दारवचनत्वात् कृतदारपरिग्रहोगृहस्थः । गृहेतिष्ठति । ष्ठा० । सुपिस्थइतिकः ॥

गृहस्थूणम् । न । गृहस्तम्भे ॥ गृहस्य स्थूणा ॥

गृहाच । पुं । वातायने ॥

गृहागतः । पुं । अतिथौ ॥ त्रि । गेहमायाते ॥

गृहाधिप. । पु । गृहस्थे ॥

गृहाम्लम् । न । काञ्जिके ॥

गृहायनिकः । पुं । गृहिणि ॥

गृहारामः । पु । निष्कुटे । गृहोपवने ॥ गृहस्यआरामः ॥

गृहालिका । स्त्री । शकुनवाद्याम् ॥



गृहगोधिकायाम् ॥

गृहावग्रहणी । स्त्री । देहल्याम् ॥ गृह मवगृह्यते ऽनया । ग्रहउपादाने । करणे ल्युट् ॥

गृहाशया । स्त्री । ताम्बूल्याम् । नागवल्ल्याम् । पानकी वेल इतिभाषा ॥

गृहाश्मा । पुं । पेषणशिलायाम् । सिल इतिभाषा ॥

गृहासक्तः । पुं । गृह्यके ॥ त्रि । गृहे आसक्तिविशिष्टे ॥

गृहिणी । स्त्री । भार्यायाम् ॥ इनिर्मत्वर्थीयः । ङीप् । गेहकर्मकुशलायाम् ॥

गृही । पुं । गृहस्थे ॥ गृहा. दाराः सन्त्यस्य । इनिः ॥

गृहीतः । त्रि । स्वीकृते ॥ ज्ञाते ॥ प्राप्ते ॥ धृते ॥ गृहीत इव केशेषु मृत्युना धर्म माचरेत् ॥

गृहीतदिक् । त्रि । पलायिते । तिरोहिते ॥

गृहीतिः । स्त्री । ग्रहणे ॥

गृहीती । स्त्री । गृहीतवति ॥ गृहीतमनेन । इष्टादिभ्यश्चेति कर्त्तरि इनिः ॥

गृहेनर्दी । पुं । गेहेशूरे ॥

गृहेशः । पुं । गृहपतौ ॥

गृहोलिका । स्त्री । पल्ल्याम् ॥

गृह्यः । पुं । गृहासक्तमृगपक्षिणोः ॥ गृह्यते । गृह० । पदास्वैरीतिक्यप् ॥ न । मलवर्त्मनि । गुदे ॥ ग्रन्थभेदे । गृह्यसूत्रे ॥ त्रि । अस्वैरिणि ॥ पक्ष्ये ॥ गृह० । ऋदुपधाच्चाक्लृपिचृतेरिति क्यप् ॥ गृहे भवो वा ॥ यत् ॥

गृह्यकः । पुं । छेके । गृहासक्तपक्षिमृगयोः ॥ त्रि । निघ्ने । आयत्ते ॥ क्यबन्तात् स्वार्थेऽनुकम्पायां वा कन् ॥

गृह्या । स्त्री । शाखापुरे ॥ इति मेदिनी ॥ टाप् ॥

गेन्दुः । पुं ।<br>
गेन्दुकः । पुं ।<br>
गेन्दूकः । पुं । } कन्दुके । गेंद इति भाषा ॥ गे गगने इन्दुरिव ॥ गे इन्दुरिव प्रतिकृतिर्वा । इवे प्रतिकृताविति कन् ॥ पृषोदरादित्वाद्दीर्घः ॥

गेयम् । न । गीते ॥ यथा । गेयं गीतानामसहस्रम् ॥ त्रि । गातव्ये ॥ गायने ॥ अर्हे कृत्यतृचश्चेति योग्यतायामचोयत् । ईद्यति । गुणः ॥ गायति । गैशब्दे । भव्यगेयेति कर्त्तरि वा यत् । गीयते इति वा ॥

गेष्णः । पुं । पर्वणि ॥

गेष्णुः । पुं । गायने ॥ नटे ॥ गायति । गै० । गास्थाभ्यामिष्णुच् ॥ सामगानकर्त्तरि ॥

गेहम् । न । उदवसिते । गृहे ॥ गेन गणेशेन ईह्यते काम्यते । ईह० । कर्मणि घञ् ॥ गे गणेशो गन्धर्वो वा ईहः ईप्सितो यस्मिन् वा ॥

गेहधूपः । पुं । अपराजितधूपे ॥ यथा । मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम् । मरिचं हिङ्गुमांसी च बीजं कार्पाससम्भवम् ॥ छागरोमाऽहिनिर्मोको विष्ठा वैडालिकी तथा । गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥ गेहेषु धूपनं दत्तं सर्वान् बालग्रहान् जयेत् । पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेदिति ॥

गेही । पुं । गृहिणि ॥

गेहेनर्द्दी । पुं । कापुरुषे । पिण्डीशूरे ॥

गेहेशूरः । पुं । गेहेनर्द्दिनि ॥ इति हेमचन्द्रः ॥

गैरिकम् । न । रक्तधातौ । गेरु इति भाषा ॥ गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा । सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत् ॥ गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥ स्वर्णे ॥ गिरौ भवम् ॥ अध्यात्मादित्वाट्ठञ् ॥

गैरिकाक्षः । पुं । जलमधूकवृक्षे ॥

गैरी । स्त्री । आङ्गिकीवृक्षे ॥

गैरेयम् । न । शिलाजतुनि ॥ गिरौ भ

त्रम् । नद्यादिभ्यश्चेतिढक् ॥

गौः । पुं । बलीवर्द्दे । अनडुहि ॥ स्वर्गे । रश्मौ ॥ कुलिशे । वज्रे ॥ चन्द्रे ॥ सूर्ये ॥ गोमेधयज्ञे ॥ ऋषभनामौषधे ॥ स्त्री । सौरभेय्याम् । अर्जुन्याम् । उस्रायाम् ॥ गोमांसं गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम् । बृंहणं बातहृद्बल्यमपथ्यं पीनसप्रणुत् ॥ चक्षुषि ॥ बाणे ॥ दिशि ॥ मातरि ॥ वाचि ॥ भूमौ ॥ वृषराशौ ॥ नयाङ्के ॥ गच्छति गम्यते वा ऽनेन वा । गम्लृ० । गमेर्डोः ॥

गावः । पुंभूम्नि । उदके । जले ॥

गोकण्टकः । पुं । गोक्षुरके ॥ स्थपुटे । विषमोन्नते ॥ गोखुरैः स्थपुटीकृते इति हेमचन्द्रः ॥ गवां खुरे ॥ विकण्टकवृक्षे ॥ गोर्धेनोःपृथिव्या वा कण्टकः ॥

गोकर्णः । पुं । अश्वतरे ॥ सर्पे ॥ गौः कर्णोयस्य । गोशब्दस्य चक्षुःपरत्वे स गोकर्णः सर्पः ॥ सारङ्गे । मृगविशेषे ॥ गोरिवकर्णोऽस्य । गणदेवताविशेषे ॥ अङ्गुष्ठानामिकोन्माने । अनामिकायुक्तविस्तृताङ्गुष्ठे ॥ गोः कर्णइव ॥ शैवे सिद्धक्षेत्रविशेषे ॥ यथा । महाबलस्यगोकर्णे शिवभक्तापवादकेष्यागमः । गोकर्णं भद्रकर्णीश्च दि तिदेवीगीता ॥

गोकर्णी । स्त्री । मूर्वालतायाम् ॥ गोः कर्णइव । गौः कर्णोयस्या वा । पाककर्णेतिङीष् ॥

गोकिराटिका । स्त्री । विट्सारिकायाम् ॥

गोकिराटी । स्त्री । सारिकाख्यखगे ॥

गोकिलः । पुं । मुसले ॥ हले ॥

गोकीलः । पुं । मुषले ॥ लाङ्गले ॥

गोकुलम् । न । गोसमूहे । गोधने ॥ गोस्थाने ॥ यथा । गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः । अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥ व्रजे प्रसिद्धे नन्दावासे ॥ गवां कुलम् ॥

गोकुटिकः । पुं । केकरे । वधिरे ॥ पङ्कस्थगव्युपेक्षके ॥

गोकृतम् । न । गोमये ॥ त्रि । गोभिरा चरिते ॥

गोक्षुरः । पुं । गोक्षुरके ॥ गोक्षुरः शीतलः स्वादुर्बलकृद्बस्तिशोधनः । मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः ॥ प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत् ॥ क्षुरति । क्षुर विलेखने । इगुपधज्ञाप्रीकिरः कः । गोर्गोर्वाक्षुरः ॥

गोक्षुरकः । पुं । गोक्षुर इतिभाषाप्र

गोचर

गोलाग

सिद्धार्थापलङ्कषायाम् । स्वादुकण्टके ॥ गोर्गोर्वा चुरः ॥ स्वार्थेकन् ॥

गोक्षुरः । पुं । गोक्षुरे ॥ न । गवांशफे ॥

गोगोयुगम् । न । गोद्वये ॥ द्वैगावौ । त्रिस्त्वेगोयुगम् ॥

गोगोष्ठम् । न । गवांस्थाने ॥ गोव्रजादयः स्थानादिषु पशूनामभ्यः ॥

गोग्रन्थिः । पुं । करीषे ॥ गोष्ठे ॥ गोजिह्विकौषधौ ॥

गोघृतम् । न । गव्येघृते ॥ वर्षणे ॥

गोघ्नः । पुं । अतिथौ ॥ त्रि । गोघातके ॥

गोचरः । पुं । इन्द्रियार्थे । रूपशब्दगन्धरसस्पर्शस्वरूपे ॥ प्रयुज्यतेहि । उपादानगोचरं ज्ञानमिति ॥ देशे । गर्वाजघिस्थाने । वने ॥ तथाचभारविः । उपारताः पश्चिमरात्रिगोचरादिति ॥ जन्मराश्यवधिग्रहचक्रान्तराराशिषु ॥ गावइन्द्रियाणि चरन्त्यस्मिन् । गोचरसञ्चरेतिनिपातितः ॥ त्रि । गोगामिनि ॥

गोचरफलम् । न । जन्मराशेः सकाशात् ग्रहाणां सञ्चारवशेन शुभाशुभफले ॥ गोचरशुद्धिर्यथा । केतुप्रभृतिमन्दगतयः षष्ठिसंस्थाः शुभा एवन्मार्कावपि तेषु तेषु दशमौ चन्द्रः पुनः सप्तमः । जीवः सप्तनवद्वि-

ष्वगतो युग्मेषु सोमात्मजः शुक्रः षड्दशसप्तवर्जितगृहे सर्वेषुपान्ते शुभा इति ॥

गोचर्म । न । गोस्त्वचि ॥ परिमाणविशेषे ॥ सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम् । दशतान्येव गोचर्म दत्त्वा स्वर्गे महीयत इति बृहस्पतिः ॥ यत् किञ्चित् कुरुते पापं ज्ञानतोऽज्ञानतोऽपिवा । अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यतीत्याचारे मिताक्षरा ॥

गोची । स्त्री । हिमालयपत्न्याम् ॥ गावः स्तुतिरूपाः श्रुतिस्मृतीतिहासपुराणादिस्तम्भिनी मेनादेव्यपि पवित्री यांचः अञ्चति पूजयति यदा गच्छति प्राप्नोति तात्पर्यरूपेण शृणोति । अञ्चु० । क्विप् । ङीप् ॥

गोच्छालः । पुं । मूकदृषे । कोकसिमा इति गौडभाषा ॥

गोजरः । पुं । वृद्धबलीवर्द्दे ॥

गोजलम् । न । गोमूत्रे ॥

गोजा । स्त्री । गोलोमिकायाम् ॥ पृथिव्यां गोधियमादिरूपेणोत्पादनया न ॥ गोषु जायते । जनो० । जनसनेति विट् । विड्वनोरित्यात्वम् ॥

गोजागरिकः । पुं । भक्ष्यकारके ॥ मङ्गले ॥

वर्णसङ्करोपाख्याने । क्षत्रियवैश्यशूद्राणां गोत्रञ्च प्रवरादिकम् । तथान्यवर्णसङ्कराणां येषां विप्राश्च याजकाइति ॥ गोत्राणि तु चतुर्विंशतिः । तथाचमनुः । शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा । भरद्वाजो गौतमश्च सौकालीनस्तथापरः ॥ कल्किषश्चाग्निवेश्यश्च कृष्णात्रेयवशिष्ठकौ । विश्वामित्रः कुशिकश्च कौशिकश्चतथापरः ॥ घृतकौशिकमौद्गल्यौ आलम्यानः पराशरः । सौपायनस्तथाऽत्रिश्च वासुकी रोहितस्तथा ॥ वैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः । चतुर्विंशतिगोत्राणां कथितापूर्वपण्डितैः ॥ अपिचमनुः । जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः । वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते । एतदुपलक्षणमन्येषामपि दर्शनात् । तथाच । सौकालीनकमौद्गल्यौ पराशरवृहस्पती । कात्यनो विष्णुकौशिक्यौ कात्यायनात्रेयकाश्यकाः ॥ कृष्णात्रेयः साङ्कृतिश्च कौण्डिन्यो गर्गसंज्ञकः । आङ्गिरसइति ख्यातः अनाष्टकाख्यसंज्ञितः ॥ अथ जैमिनिरुद्दाख्याः शाण्डिल्यो वात्स



एवच । सावर्णशालम्यानवैयाघ्रपद्याश्च घृतकौशिकः ॥ शक्तिः कात्यायनश्चैव वासुकी गौतमस्तथा । शुनकः सौपायनश्च मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते । सर्वे द्विचत्वारिंशद्गोत्राः ॥ इतिधनञ्जयकृतधर्मप्रदीपः ॥ गूयते शब्द्यते स्वसन्तानप्रभवोऽनेन । गुङ् शब्दे । गुन् भिधुर्बीपर्षीत्यादिना त्रो वा ॥ गां त्रायते वा । त्रैङ्पालने । आतोनुपसर्गे इति कः ॥

गोत्रजः । त्रि । गोत्रोत्पन्ने ॥ सतुजन्मनामस्मृतिपर्यन्तसमानोदकभावात् पश्चाद्भवति ॥

गोत्रभिद् । पुं । इन्द्रे । शक्रे ॥ गोत्रान् गिरीन् भिनत्ति । भिदिर् । सत्सूद्विषेति भिदेः क्विप् ॥

गोत्रवृक्षः । पुं । धन्वनवृक्षे ॥

गोत्रसंभवः । पुं । पक्षिविशेषे ॥

गोत्रस्खलनम् । न । अन्यस्त्रीनामग्रहणे ॥ यथा । गोत्रस्खलने शान्तिं शान्तिनिजानीषि केवलां मेऽघ । व्याख्यानतो विशेषप्रतिपत्तिः पाणिनीयस्येवेति ॥

गोत्रा । स्त्री । कौ । पृथिव्याम् ॥ गोत्राः शैलाः सन्त्यस्याम् । अर्शआद्यच् ॥ गाः जलानि त्रायते वा । त्रैङ् । कः ॥

गोदुहः । पुं । गोदुहि । गोपे ॥ गां दोग्धि । दुह० । मू० कः ॥

गोदोहनम् । न । गवां दोहनस्थाने ॥ गावो दुह्यन्ते ऽस्मिन् । ल्युट् ॥ कालविशेषे । मुहूर्त्ताऽष्टमभागे ॥ यथा आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम् । मुहूर्त्तस्याष्टमं भागमुदीक्ष्योऽप्यतिथिर्भवेत् इति ॥

गोदोहनी । स्त्री । गोदोहनपात्रे । पात्र्याम् ॥ गौर्दुह्यते यस्याम् । दुहेः करणाधिकरणयोश्चेति ल्युट् । ङीप् ॥

गोद्भवः । पुं । गोमूत्रे ॥

गोधनः । पुं । स्थूलाग्रवाणे । तुक्का इति भाषा ॥ इति हरिवंशः ॥ न । गोसमूहे । गोकुले ॥ गवां धनं समूहः ॥

गोधा । स्त्री । तलायाम् । ज्याघातवारणे । धनुर्गुणाघातवारणाय प्रकोष्ठतलाबद्धायां चर्मपट्याम् ॥ निहाकायाम् । गोधिकायाम् । गोघ इति भाषा ॥ अस्या मांसपाकविधिः । गोधा चोष्णजले भूयः क्वाथितां खण्डशः कृताम् । भिन्नाम्ब तक्रतोयाभ्यां क्वाथितां सूक्ष्मखण्डिताम् ॥ तत्रापे दृवेसवाराद्यैः प्रलेपो वा विधानतः ॥ विपाके मधुरा गोधा वातपित्तप्रणाशिनी । कषाया कटुका प्रोक्ता सकफी बलवर्द्धिनी ॥ सा सु स्वापस्य जलनभेदाद्द्विधेति व्याख्यातारः ॥ गुध्यते वाहुर्यया । गुधपरिवेष्टने । हलश्चेति घञ् ॥

गोधापदिका । स्त्री । गोधापदीलतायाम् । गोयालिया इति गौड भाषा ॥

गोधापदी । स्त्री । सुवहायाम् । गोधापदिकायाम् ॥ गोधा इव पादो मूलमस्याः । कुम्भपदीषु चेति साधुः ॥

गोधास्कन्धः । पुं । विट्खदिरे ॥

गोधिः । पुं । ललाटे ॥ गोधिकायम् ॥ गुध्यते । गुध० । इन् ॥ गावो नेत्राणि धीयते यस्मिन् । कर्मण्यधिकरणे चेति किर्वा ॥

गोधिका । स्त्री । गोधायाम् । निहाकायाम् ॥ गोहीति प्रसिद्धे जलचरे ॥ गुध्यति । गुध० । ण्वुल् ॥

गोधिकात्मजः । पुं । गोधाशावके । गोधेये । सर्पाद्गोधायामुत्पन्ने चन्दनगोव इति प्रसिद्धे जन्तुविशेषे ॥ गुध्यति । गुध० । ण्वुल् । गोधिकायाः पुत्रः ॥

गोधिनी । स्त्री । वृहतीभेदे । पविकायाम् ॥

गोधुमः । पुं । गोधूमे ॥ इति शब्दचन्द्रिका ॥

गोधूमः । पुं । नागरङ्गे ॥ श्रोषधोविशेषे ॥ गोम् इति प्रसिद्धे व्रीहिविशेषे

घे। रसाले। सुमने॥ गोधूमः सुमनोऽभिधानात् त्रिविधः स च कीर्त्तितः। महागोधूम इत्याख्यः पश्चाद्देशात् समागतः॥ मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा। निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः॥ गोधूमो मधुरः शीतो वातपित्तहरो गुरुः। कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः॥ जीवनो बृंहणो वर्ण्यो रुच्यो वीर्यस्थिरत्वकृत्। कफप्रदो नवीनो न च पुराणः। पुराणयवगोधूमचौद्रजाङ्गलशूल्यभुगिति वाग्भटेनवसन्ते गृहीतत्वात्॥ मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः। शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखा स्मृता॥ गुध्यति गुध्यते वा। गुध०। गुधेरूम.॥

गोधूमसम्भवम्। न। काञ्जिकप्रभेदे। सौवीरे॥

गोधूमसारः। पुं। सुमनस्य सारांशे। सोरा इति ख्यातिख्याते॥ तद्विधिर्यथा। निस्तुषान् गोधूमान् उदूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मग्नं कारयित्वा परदिने प्रभातसमये उपरिस्थजलं क्रमेण दूरीकृत्वाऽधस्सारमातपे शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति पाक

राजेश्वरः॥



गोधूमी। स्त्री। गोलोमिकायाम्। गोधूमा इति पाथरी इति च गौडभाषा प्रसिद्धे क्षुद्रक्षुपविशेषे॥

गोधूलिः। पुं स्त्री। समयविशेषे॥ यथा। सन्ध्यातपाक्रान्तपश्चिमदिग्विभागे व्योम्नि स्फुरद्भिरल्पतारकसन्निवेशे। यद्वे गवां खुरपुटोच्छलितै रजोभिर्गोधूलि रेष कथितो मृगुजेन योगः॥ अपिच॥ यावत्तस्तिन्दूरवर्णं गगनतलगतं भानुबिम्बं घनास्तं याव न्नो दिक्षु शान्तिं व्रजति खुरपुटैरुद्धतो रेणुसङ्घः। तावद्वैवास्ति दोषः प्रभवति नच वाग्दूरदृष्टि र्होराणां याचार्या वाधिवाहे सकलशुभकरी सर्वकार्यस्य सिद्धिः॥ साविविधेति दीपिका। यथा। गोधूलिं त्रिविधां वदन्ति मुनयो नारी विवाहादिके हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे। ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौगते दृश्यतां सूर्ये चास्त मुपागते च नियतं वर्षाशरत्कालयोः॥ हेमन्तशिशिरयो र्मृदुता मासपिण्डीकृतरश्मिकालः। ग्रीष्मेऽर्द्धास्त रविकालः। वर्षाशरदृतौ ऽस्तगतरविकाल इत्यर्थः॥

गोनन्दी । स्त्री । सारसखगस्त्रियाम् ॥

गोनर्द्दः । पुं । सारसखगे ॥ पर्व्वतविशेषे ॥ न । कैवर्त्तीमुस्तके ॥ गां जलं नर्द्दयति । नर्द्दशब्दे । कर्म्मण्यण् ॥

गोनर्द्दीयः । पुं । पतञ्जलिमुनौ । गोनर्द्दे । गोनर्द्दभवः । वृद्धाच्छः ॥

गोनसः । पुं । सर्पविशेषे । तिलित्से । मण्डलीवोडे ॥ गौरिव नासिका अस्य । अञ्नासिकाया इत्यच् नसादेशश्च ॥ वैक्रान्तमणौ ॥

गोनाथः । पुं । अनडुहि ॥

गोनाथः । पुं । गोपाले ॥ गां नयति । गोभिः प्रापणे । कर्म्मण्यण् ॥

गोनासः । पुं । गोनसे ॥ गोरिव नासा अस्य ॥ न । वैक्रान्तमणौ ॥

गोनिष्यन्दः । पुं । गोमूत्रे ॥

गोपः । पुं । गुवाल इति भाषाप्रसिद्धे सङ्करजातिविशेषे । आभीरे । वल्लवे ॥ मणिबन्ध्यां तन्त्रवायात् गोपजातेः प्रसम्भवः इति पराशरपद्धतिः ॥ गोष्ठाध्यक्षे ॥ भूपतौ ॥ ग्रामौघाधिकृते ॥ बोले ॥ त्रि । रक्षके । उपकारके ॥ गोपायति । गुपूरक्षणे । आयादय आर्द्धधातुके वा । अच् ॥ गां पालितवान् । पा रक्षणे । आतोऽनुपसर्गे कः ॥ गोभ्यः पातिवा । पा० । सुपीतिकः ॥

गोपकः । पुं । गोपशब्दार्थे ॥ स्वार्थे का ॥

गोपकन्या । स्त्री । आभीरसुतायाम् ॥ शारिवौषधौ ॥

गोपघोण्टा । स्त्री । हस्तिकोलौ । बदरीभेदायाम् ॥ बदरीसदृशाकारो वृक्षः स्वल्पफलो भवेत् । अटव्यामेवसा घोण्टा गोपघोण्टेति चोच्यते ॥ विकङ्कतवृक्षे ॥

गोपतिः । पुं । शिवे । शम्भौ ॥ षण्डे । साँड इति भाषाप्रसिद्धे वृषे ॥ वत्सरे ॥ भास्करे ॥ त्रिदशाधिपे ॥ ऋषभनामौषधौ ॥ गवांपतिः ॥ श्रीकृष्णे ॥ गवांपालनात् । गौर्भूमौ तस्याः पतिर्वा ॥

गोपदलः । पुं । गुवाके ॥

गोपनम् । न । अपह्नवे ॥ गोपनाद्धीयते सत्वं गुप्तिरन्वर्थविना ॥ रक्षायाम् ॥ तेजपात इति भाषाप्रसिद्धे तमालपत्रे ॥

गोपनीयः । त्रि । गोपितव्ये । गोप्ये ॥

गोपभद्रम् । न । शालूके ॥

गोपभद्रा । स्त्री । काश्मर्याम् ॥

गोपभद्रिका । स्त्री । गम्भार्याम् ॥

गोपवधूः । स्त्री । शारिवायाम् ॥ गोपाङ्गनायाम् ॥ गोपीएववधूः । स्त्रियाः पुंवदित्यादिना पुंवद्भावः ॥

गोपरसः । पुं । बोले । गन्धरसे ॥ गो

पे उत्पत्तौ रसोत्र ॥

गोपवल्ली । स्त्री । मूर्वायाम् ॥ शारिवा याम् ॥ श्यामालतिकायाम् ॥

गोपा । स्त्री । गोपालिकायाम् ॥ श्यामालतायाम् ॥ गोपायति । गुपू० । पचाद्यजन्तात् अजादित्वाट्टाप् इति केचित् ॥ गाः पाति । पारक्षणे । आतोनुपसर्गे इति केमाते । मास रूपन्यायेन आतोमनिन् क्वनिब्वनि पश्चेति चेन् विचि अदन्तत्वाभावा दाव्विधेरभावे गोपाः विश्वपावदिति बोध्यम् ॥

गोपानसी । स्त्री । छादनान्वकुदाकबि । वलभ्याम् । कुड्येषु छादनार्थं दत्ते वक्रकाष्ठे ॥ छादनाधारे । पटलाधारवंशपञ्जरे ॥ गोपायति । गुपू० । बाहुलकात् नसट् प्रत्यय. । अल्लोपय लोपौ ॥ गवां गोभिर्वा पानम् किरणानां ग्रहणम् किरणैर्वा शोषणम् । तत् स्याति निवर्त्तयति । पोन्तकर्मणि । आतोनुपेतिक. । गौ० ङी ॥ पृ

गोपायितः । त्रि । रक्षिते ॥ गोपाय्यते स्म । गुपू० । क्तः । आयादयआर्द्धधातुकेवा ॥

गोपालः । पु । नृपे । भूपे ॥ गोपे । गवां पालके ॥ हंसे ॥ श्रीकृष्णे ॥ तद्धा मं यथा । अथादृष्टाकोपनीमाम्बुजरुचि रक्षाम्भोजनेत्रोऽम्बुजस्थो बालो जङ्घाकटीरस्थलकलितरणत् किङ्किणीको मुकुन्दः । दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूष श्चिरंव प्रतितन्वसारः ॥ सर्वस्य जगतः पालनात् । विष्णौ ॥ गां भूमिं वेदं तन्मूलं यज्ञादिकं वा । पालयति । गाःपालयति वा । पालरक्षणे । कर्मण्यण् ॥ छगणे । मध्यगुरौ । ऽ । ॥

गोपालकः । पुं । शिवे ॥ श्रीकृष्णे ॥ गवां पालके ॥ गोपालएव । स्वार्थे कन् ॥

गोपालकर्कटी । स्त्री । ग्वालकाकडी इति प्रसिद्धे कर्कटी प्रभेदे । क्षुद्रैर्वारौ । क्षुद्रचिर्भिटायाम् ॥

गोपालिका । स्त्री । गोपालकस्य स्त्रियाम् ॥ अथपुंयोगलक्षणोङीप्प्राप्तः पालकान्तान्नेति निषिध्यते ॥ कीट विशेषे । मत्स्याभीरौ ॥ शारिवायामोषधौ ॥

गोपाली । स्त्री । गोपालकर्कट्याम् ॥ गोरक्ष्याम् ॥ गोप्याम् ॥ गोपाली करतालीनर्त्तनशाली पुनातुवनमाली ॥

गोपाष्टमी । स्त्री । गोष्ठाष्टम्याम् ॥ यथा । शुक्लाष्टमीकार्त्तिके तु स्मृता गोपाष्ट

मी वुधैः । तद्दिने वासुदेवोऽभूद्गोपः पूर्वं तु वत्सपः ॥ तत्र कुर्याद्गवां पूजां गोग्रासं गोप्रदक्षिणम् । गवानुगमनं कार्यं सर्वान् कामानभीप्सता ॥

गोपिका । स्त्री । गोपव्याम् ॥ गोपायति । गुपू० ण्वुल् ॥ गोप्याम् ॥

गोपित्तम् । न । गोरोचनायाम् ॥

गोपिनी । स्त्री । श्यामालतायाम् ॥

गोपी । स्त्री । गोपस्त्रियाम् ॥ गोपस्य स्त्रीत्यर्थे पुंयोगादाख्यायामिति ङीष् ॥ शारिवायाम् ॥ रक्षिकार्याम् ॥ रक्षिकायाम् । मूलप्रकृतौ ॥ गोपायति । गुपू० आयाभावे । पचाद्यच् । गौरादिङीष्० ॥

गोपीथः । पुं । न । रक्षणे ॥ न । तीर्थे ॥ जलद्रोण्याम् ॥ गावः पिबन्त्यस्मिन् । पा० निशीथगोपीथावगथा इति थक् ॥ गोपीथः सोमपानमिति वेदभाष्यम् ॥

गोपुच्छः । पुं । हारविशेषे ॥ गोलाङ्गूले ॥ गोलाङ्गूलवानरे ॥

गोपुटा । स्त्री । स्थूलैलायाम् ॥

गोपुटिकम् । न । शिववृषस्य मण्डपे ॥

गोपुरम् । न । पुरद्वारे ॥ द्वारमात्रे ॥ कैवर्त्तीमुस्तके ॥ गो जलं पिपर्त्ति । पृपालनपूरणयोः । मू० कः ॥ गोभ्यः पुरमस्येति वा ॥ यद्वा । पुरति । पुर अग्रगमने । इगुपधेति कः । गवां पुरम् ॥ गोपायति वा । गुपू० वाहुलकादुरच् ॥ यद्वा । पोलति । पुल महत्त्वे । इगुपधत्वात् क. । रलयोरभेदः गोभिः पुरम् ॥ गाः पुरति वा । पुर० । मू० कोवा ॥

गोपुरकः । पुं । कुन्दुरुके । वहुगन्धे ॥

गोपुरीषम् । न । गोमये ॥

गोपेन्द्रः । पुं । विष्णौ ॥ गोपराजे ॥

गोपेशः । पुं । शाक्यमुनौ ॥ गोपराजे ॥ नन्दघोषे ॥

गोप्ता । त्रि । रक्षके ॥ गोपायति । गुपू० तृच् ॥ श्रीकृष्णे ॥ सद्धिम्बर्मायया स्वात्मानं संवृणोति ॥

गोप्त्री । स्त्री । गोपिकायाम् ॥ रक्षिकायाम् ॥

गोप्यः । पुं । दासीपुत्रे ॥ त्रि । रक्षणीये ॥ गुह्ये ॥ सङ्गोपनीये ॥ यथा । आयु र्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् । अपमानं तपो दानं नव गोप्यानि यत्नत इति ॥ गुप्यते । गुपू० । ऋदुपधेत्यत् ॥

गोप्यकः । पुं । दासे ॥ गोप्यात् स्वार्थे कः ॥ गोप्यं कायति वा । कै० आतश्चेतिकः ॥

गोप्याधिः । पुं । वन्धकविशेषे ॥ तथा च नारदः । अधिक्रियत इत्याधिः

स विज्ञेयो द्विलक्षणः । कृतकालोऽपनेयश्च यावद्देयोद्यत स्तथा । स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैवच । गोप्योरक्षणीयः ॥

गोपाली । स्त्री । ओषधिविशेषे ॥ पाककर्णेतिङीष् ॥

गोभक्षीरः । पुं । जलकुक्कुभखगे ॥

गोमक्षिका । स्त्री । मक्षिकाविशेषे । दंशे । डाँस इतिभाषा ॥

गोमान् । त्रि । गवीश्वरे । गोमिनि ॥ बहवोगावोऽस्य । भूम्नि तदस्यास्तीतिमतुप् ॥

गोमतम् । न । गव्यूतौ ॥

गोमतल्लिका । स्त्री । प्रशस्तायांगवि ॥ प्रशंसावचनैश्चेति नित्यसमासः ॥

गोमती । स्त्री । स्वनामख्यातायां नद्याम् । धाविष्ट्याम् ॥ वैदिकमन्त्रविशेषे ॥ उगितश्चेतिङीप् ॥

गोमन्तः । पुं । विन्ध्यप्रत्यन्तपर्वते ॥

गोमयः । पुं । न । गोविषि ॥ गोःपुरीषम् । गोश्चपुरीषे इतिमयट् ॥ अपत्यमभीप्सितया वन्ध्यायाश्च विशेषतः । रोगार्त्तायाः प्रसूताया न गोर्गोमयमाहरेत् ॥

गोमयच्छत्रम् । न । शिलीन्ध्रके ॥

गोमयच्छत्रिका । स्त्री । उच्छिलीन्ध्रे । शिलीन्ध्रे । टिलीरे ॥

गोमयप्रियम् । न । भूतृणे ॥

गोमयोत्था । स्त्री । गोमयजातकीटविशेषे । गर्द्दभ्याम् । गोवरीला इति भाषा ॥

गोमायुः । पुं । शृगाले ॥ गन्धर्वविशेषे ॥ गां विकृतां वाचं मिनोति । डुमिञ् । कृवापेत्युण् ॥

गोमी । पुं । शृगाले ॥ बुद्धभिक्षुशिष्ये । श्रामणेरे ॥ त्रि । गोमति ॥ उपासके ॥

गोमीनः । पुं । मत्स्यविशेषे ॥

गोमुखः । पुं । मातलिपुत्रे ॥ महादेवगणान्तरे ॥ नक्रे ॥ वाद्यविशेषे ॥ न । कुटिलागारे ॥ वाद्यभाण्डे ॥ लेपने ॥ चौरक्रियमाणे सुरङ्गाया प्रभेदे ॥ जपमालागोपनाय पट्टवस्त्रादिनिर्मिते गोमुखी इति प्रसिद्धे यन्त्रविशेषे ॥ यथा । चतुर्विंशाङ्गुलमितं पट्टवस्त्रादिसम्भवम् । निर्माय ऽष्टाङ्गुलिमुखं ग्रीवां तत्षडङ्गुलम् ॥ सेयं गोमुखयन्त्रञ्च सर्वतन्त्रेषुगोपितम् । तन्मुखे स्थापयेन्मालां ग्रीवामध्यगतः करः ॥ प्रजपेद्विधिनागुप्तं वर्णमालाधिकप्रिये । इति मुण्डमालातन्त्रम् ॥ गोमुखादेस्ततोमालां गोपयेन्मातृजारवत् । इति मयातन्त्रम् ॥

गोमुखी । स्त्री । मन्त्रजपार्थं कर्पटादिनिर्मितगुप्तिकायाम् । गोमुखे ॥ राढदेशस्थनदीविशेषे ॥

गोमूत्रम् । न । गोजले ॥ अस्य गुणाः । गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तं कषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक् कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् ॥ *॥ कण्डूकिलासगदशूलमुखाक्षिरोगान् गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरकृमिपाण्डुरोगान् गोमूत्रमेकमपि पीतमपाकरोति ॥ सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् । अतो विशेषाकथने मूत्रं गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुगानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलहृत् ॥

गोमूत्रिका । स्त्री । तृणविशेषे । घोषजायाम् । रक्ततृणायाम् ॥ चित्रकाव्यविशेषे । यथा । गतिस्थ्यावचा यत्र मार्गे मूत्रस्य गोरिव । गोमूत्रिकेति तत् प्राहुः दुष्कराचित्रवेदिनः ॥ अपि च । वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुः दुष्करं तद्विदो विदुरिति ॥ षोडशकोष्ठद्वये पङ्क्तिद्वये ऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिर्भवतीत्युद्धारः ॥

उदाहरणं यथा ॥

| प्र | वृ | त्ते | वि | क | स | द्धा | नं | सा | ध | ने | प्य | ति | पा | दि | भिः । |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व | वृ | धे | वि | क | स | द्धा | नं | यु | ध | मा | प्य | वि | पा | दि | भिः ॥ |

इति माघे १९ सर्गे ४६ श्लोकः ॥ अस्याश्चत्वारो भेदाः । पादगोमूत्रिका अर्द्धगोमूत्रिका श्लोकगोमूत्रिका विपरीतगोमूत्रिकेति भेदा इति सरस्वतीकण्ठाभरणम् ॥

गोमेदः । पुं । गोमेदकमणौ ॥ द्वीपविशेषे ॥ यथा । गोमेदे गोपतिर्नाम राजा भूत्तीत्सवोद्यतः । याज्यो ऽभूद्वर्यक्षिकन्याना मैतथ्यानां मनोः कुले ॥ स तेष हरियज्ञाय प्रवृत्तेषु भगून् गुरून् । वव्रे तं गौतमः कोपादशपत् सोऽगमत् क्षयम् ॥ यज्ञवाटेऽस्य ताः गावो दग्धाः कोपाग्निना मुनेः । तन्मेदसा मणीभूता

गोमेदः सततोऽभवदिति ॥

गोमेदकः । पुं । स्वनाम्ना प्रसिद्धे मणिविशेषे ॥ न । पीतमणौ ॥ राहुरत्ने । तमोमणौ ॥ अस्य परीक्षा यथा । हिमाद्रयेवा सिन्धौवा गोमेदमणिसम्भवः । स्वच्छकान्तिर्गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥ वद्धः पिञ्जरो धन्यो गोमेदइतिकीर्त्तितः ॥ चतुर्द्धा जातिभेदस्तु गोमेदेऽपि प्रकाश्यते ॥ ब्राह्मणः शुक्लवर्णःस्यात् क्षत्रियोरक्तउच्यते । आपीतोवैश्यजातिस्तु शूद्रस्त्वानीलउच्यते ॥ छाया चतुर्विधा श्वेता रक्ता पीताऽसिता तथा ॥ गुरुप्रभाढ्यः सितवर्णरूपः स्निग्धो मृदुर्वीतिमलश्च पुराणः ॥ स्वच्छस्तु गोमेदमणिर्धृतोयं करोति लक्ष्मीं धनधान्य वृद्धिम् । लघु विरूपोऽतिखरोऽन्यमानः सेोहोपलिप्तो मलिनः खरोपि ॥ करोति गोमेदमणिर्विनाशं सम्पत्तिभोगाबलवीर्यराशेः ॥ ये दोषा हीरके चोक्ता स्ते गोमेदमणावपि । परीक्षा वज्रित कार्या शाणोशा रत्नकोविदैः ॥ स्फटिकेनैवकुर्वन्ति गोमेदप्रतिरूपिकम् । शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतोद्वैगुणमाहुरार्ये । मन्येतथा विद्रुमतुल्यमूल्यं तथा परेचामरतुल्यमाहुः ॥ चतुर्विधानामेषांतु धारणं परिसम्मतमिति ॥ काकोले ॥ पत्रके ॥



गोमेदसन्निभः । पुं । दुग्धपाषाणे ॥

गोमेधः । पुं । यज्ञविशेषे ॥ तस्य कलौनिषेधो यथा । अश्वालम्भं गवालम्भं सन्यासंपलपैतृकम् । देवराच्चसुतोत्पत्तिः कलौपञ्चविवर्जयेत् ॥

गोयुगम् । न । गोद्वये ॥ गवांयुगम् ॥

गोरक्षः । पुं । नागरङ्गे । नारङ्गे ॥ क्षुपभनासौषधौ ॥ त्रि । गोरक्षके । गोपे ॥ रक्षतीतिरक्षः । गोःरक्षः ॥

गोरक्षकर्कटी । स्त्री । चिर्भिटायाम् ॥

गोरक्षजम्बूः । स्त्री । गोधूमे ॥ गोरक्षतण्डुलायाम् ॥ घोण्टाफले ॥

गोरक्षतण्डुला । स्त्री । गोरक्षचाउलिया इति गौडभाषाप्रसिद्धे क्षुद्रलताविशेषे । गाङ्गेरुक्याम् । नागबलायाम् ॥

गोरक्षतुम्बी । स्त्री । कुम्भतुम्ब्याम् ॥

गोरक्षदुग्धा । स्त्री । क्षुद्रक्षुपविशेषे । ताम्रदुग्धायाम् । बहुपत्रायाम् । अमृतसञ्जीवन्याम् ॥

गोरक्षी । स्त्री । क्षुद्रक्षुपविशेषे । गन्धपलाशायाम् । पञ्चपर्णिकायाम् ॥ गोरक्षदुग्धायाम् ॥ कुम्भतुम्ब्याम् ॥

गोरक्ष्यम् । न । पाशुपाल्ये ॥ गोरक्षती

ति गोरचः । तस्मभावः । घञ् ॥

गोरङ्कुः । पुं । पक्षिविशेषे ॥ नग्नके ॥ वन्दिनि ॥

गोरटः । पुं । दुर्गखदिरे ॥

गोरणम् । न । गुरणे । उद्यमे । भारावृद्धमने ॥ गूर उद्यमे । चु० । ल्युट् ॥

गोरसः । पुं । दुग्धे ॥ दध्नि ॥ दुग्धाहृते । घोले । तक्र ॥ गोरसस्य दुग्धस्य विकारत्वात् उपचारात् ॥

गोरसजम् । न । तक्रे ॥

गोराटी । स्त्री ।
गोराटिका । स्त्री । } शारिकाविहगे ॥
गोरिका । स्त्री ।

गोरुतम् । न । क्रोशयुग्मे ॥ गोःशब्दे ॥

गोरोचम् । न । हरिताले ॥

गोरोचना । स्त्री । स्वनामख्यातपीतवर्णद्रव्ये । शोभनायाम् । मङ्गलायाम् । मेध्यायाम् ॥ गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिद् । विषाऽलक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्त्रहृत् ॥

गोर्दम् । न । मस्तिष्के । मस्तकभवस्नेहे ॥ गुर्यते गुरतेवा । गुरी उद्यमने । शब्दादय इतिसाधु ॥

गोलः । पुं । सर्ववर्तुले ॥ मदनवृक्षे ॥ जारात् विधवासुते ॥ भूगोले ॥ खगोले ॥ यथा । गोलं श्रोतुं यदि तव



मति र्भास्करीयं शृणु स्वमितिशिरोमणिः ॥ एकराशौपड्ग्रहयोगे ॥ यथा । ग्रहाणा मेकस्मिन् यदि भवति पशौ निवसति सदा गोलोयोगः प्रलयपद मिन्द्रोपि लभते । भवे स्त्रीको रङ्कः परिहरति पुत्रस्वजननी स्वपापां न यः स्नाति स्वल ति वसुधा शुष्यतिनदीति ॥ एकराशौसप्तग्रहयोगे ॥ यथा । सप्तग्रहा यदैकस्था गोलयोग स्तदाभवेत् । दुर्भिक्षं राष्ट्रपीडाच तस्मिन् काले न्त्रपक्षय इति ॥ न । मण्डले ॥ गुडेचैव । डलयोरभेदः ॥

गोलकः । पुं । जारतोविधवासुते ॥ मणिके । अलिञ्जरे । गोल इतिभाट इतिचभाषा ॥ गुडे ॥ पिण्डे ॥ यथा । तेजसां गोलकः सूर्यग्रहर्क्षाण्यम्बुगोलकाः । प्रभावन्तो हि दृश्यन्ते सूर्यरश्मिविदीपिताः ॥ इतिसूर्यसिद्धान्तः ॥ गन्धरसे । वोले ॥ न । गोलोके ॥ गुड्यते । गुडरक्षायाम् । घञ् । स्वार्थेकन् । डलयोरैक्यम् ॥

गोलक्षणम् । न । गवां प्रशस्ताप्रशस्तस्वरूपे ॥ यथा । पराशरः प्राह वृषद्याय गोलक्षणं तत् क्रियते तथाऽयम् । सया समासः शुभलक्षणाः स्तः सर्वा स्तथा यागसतोऽभिधा

स्ये ॥ अशुभलक्षणा गावश्चाह । सा
स्राविलरूक्षाक्ष्यो मूषिकनयनाश्च
न शुभा गावः । प्रचलास्फिपिटवि-
षाणाः करटाः खरसदृशवर्णाश्च ॥
दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना
विनतपृष्ठाः । ह्रस्वस्थूलग्रीवा यवम-
ध्या दारितखुराश्च ॥ श्यावातिदी
र्घजिह्वाः गुल्फैरतितनुभिरति
बृहद्भिर्वा । अतिककुदाः कृशदेहा
नेष्टा हीनाधिकाङ्ग्यश्च ॥ ४ ॥ अथ
वृषलक्षणम् । वृषभोऽप्येवं स्थूलातिल
म्बवृषणः सिराततक्रोडः । स्थूलसि
राचितगण्डस्त्रिस्थानं मेहते यश्च ॥
मार्जाराक्षः कपिलः करटो वा न
शुभदो द्विजस्यैव । कृष्णोष्ठतालुजि
ह्वः श्वसनो यूथस्य घातकरः ॥ ६ ॥
स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्ण
सारवर्णश्च । गृहजातोऽपि त्याज्यो
यूथविनाशावहो वृषभः ॥ ७ ॥ श्या
मकपुष्पचिताङ्गो भस्मारुणसन्निभो
विडालाक्षः । विप्राणामपि न शु
भं करोति वृषभः परिगृहीतः ॥ ये
चोद्धरन्ति पादान् पङ्कादिव योजि
ताः कृशग्रीवाः । कातरनयना ही
नाश्च पृष्ठतस्ते न भारसहाः ॥ ८ ॥ अ
शुभफलचयसहितानाञ्च । मृदुसंह
तताम्रौष्ठा तनुस्फिज्ज ताम्रतालुजि

गोलक्ष

ह्वाश्च । ह्रस्वतनूच्चश्रवणाः सुकुक्षयः
पृष्ठजङ्घाश्च ॥ आताम्रसंहतखुरा व्यू
ढोरस्का बृहत्ककुद्युक्ताः । स्निग्धश्ल
क्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः ॥
तनुभूस्पृग्वालधयो रक्तान्तविलोच
ना महोच्छ्वासाः । सिंहस्कन्धास्त
न्वल्पकम्बलाः पूजिताः सुगताः ॥
११ ॥ वामावर्त्तैर्वामे दक्षिणपार्श्वे
च दक्षिणावर्त्तैः । शुभदा भवन्त्यन
डुहो जङ्घाभिश्चैडकनिभाभिः ॥ वै
दूर्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रव
र्त्मानः । पार्ष्णिभिरस्फुटिताभिः श
स्ताः सर्वे च भारसहाः ॥ घ्राणोद्दे
शे सवलि मार्जारमुखः सितश्च द
क्षिणतः । कमलोत्पललाक्षाभः सु
वालधिर्वाजितुल्यजवः ॥ लम्बैर्वृष
णैर्मेषोदरैश्च सङ्क्षिप्तवङ्क्षणक्रोडः
। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्य
श्च शस्तफलः ॥ १५ ॥ सितवर्णः पिङ्गा
क्षस्ताम्रविषाणेक्षणो महावक्त्रः । हं
सो नाम शुभफलो यूथस्य विवर्द्धनः
प्रोक्तः ॥ १६ ॥ भूस्पृग्वालधिराता
म्रविषाणो रक्तदृक् ककुद्मीश्च । क
ल्माषश्च स्वामिनमचिरात् कुरु
ते पतिं लक्ष्म्याः ॥ १७ ॥ यो वा सि
तैश्च चरणैर्यथेष्टवर्णश्च सोऽपि शु
भफलकृत् । मिश्रफलोऽपि ग्राह्यो

यद्दिनैकान्तप्रशस्तोऽपि ॥ १८ ॥ इतिवाराहीसंहितायां गोलचणं नामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

गोला । स्त्री । गोदावर्य्याम् ॥ सख्याम् ॥ कुनट्याम् ॥ दुर्गायाम् ॥ पत्राञ्जने ॥ मण्डले ॥ अलिञ्जरे ॥ बालखेलने । बालक्रीडनकाष्ठे ॥ गां दीप्तिं लाति । ला० । आतइति कः ॥ गुड्यते वा । गुडवेष्टने । घञ् । डलयोरैक्यम् ॥

गोलाङ्गूल. । पुं । असितमुखे कपिविशेषे । कपित्थाख्ये । इधिशोथे ॥ कृष्णवानरे ॥

गोलासः । पुं । शिलीन्ध्रे ॥

गोलिघः । पुं । घण्टापाटलौ ॥

गोलीढः । पुं । लोध्रविशेषे । घण्टापाटलौ ॥ गोभिर्लिह्यतेस्म । लिह० । क्तः ॥

गोलोक. । पुं । न । श्रीकृष्णस्य नित्ये धामनि ॥ श्रीकृष्णस्थाने ॥ यथा । वैकुण्ठस्य दक्षभागे गोलोकं सर्वमोहनम् । तत्रैव राधिका देवी द्विभुजो मुरलीधरः ॥ यद्रूपं गोलकं धाम तद्रूपं नास्ति मामके । ध्याने वा चक्षुषो किं वा ध्यानयोगे न विद्यते ॥ गुह्यतत्त्वमयं देवि नानादेवेन गोपितम् । मध्यदेशे गोलकाख्यं श्रीविष्णोर्लोभमन्दिरम् ॥ श्रीविष्णोः सत्स्वरूपस्य यत्स्थलं चित्तमोहनम् । तत्स्थानस्य माहात्म्यं किं मया कथ्यतेऽधुनेत्यादि माहात्म्यादिकं तन्त्रशास्त्रे ब्रह्मवैवर्त्तपुराणे च द्रष्टव्यम् ॥

गोलोमिका । स्त्री । गोधुमा इति पार्वती इति च गौडभाषा प्रसिद्धे क्षुद्रक्षुपविशेषे । क्रोष्टुकपुच्छिकायाम् । पृश्निपर्ण्याम् ॥

गोलोमी । स्त्री । श्वेतदूर्वायाम् ॥ गोलोमस्य जाता । तत्रजातइत्यण् ॥ वचायाम् ॥ भूतकेशे ॥ गोलोम्नामियम् । तस्येदमित्यण् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ वेश्यायाम् ॥ गोलोमाख्या । गोशब्दो गोलोमसदृशवाचकः । अनउपधालोपिन इति ङीप् ॥ गोलोमिकायाम् ॥

गोवत्सादी । पुं । वृके ॥

गोवन्दनी । स्त्री । प्रियङ्गौ । फलिन्याम् ॥ गविभूमौ वन्द्यते । वदि० । कर्मणि ल्युट् ॥ पीतदण्डोत्पले ॥

गोवरम् । न । गोमयविशेषे ॥ गोष्ठामध्ये गोभिः क्षुण्णं शुष्कचूर्णितगोमयम् । गोवरं तत् समाख्यातं वरिष्ठं रससाधने ॥

गोवर्द्धनः । पुं । व्रजनाम्ना प्रसिद्धे पर्वतविशेषे । गिरिराजे ॥ वृन्दि दी॰ ...

दासोऽयं भूधरो न त्र संशयः । शुक्ल प्रतिपदि प्रातः कार्त्तिके ऽर्च्यो ऽत्र वैष्णवैः ॥ पूजामन्त्रस्तु । गोवर्द्धनधराधार गोकुलत्राणकारक । विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भवेति ॥ त्रि । गोवर्द्धके ॥ गवां वर्द्धनः ॥

गोवर्द्धनधरः । पुं । श्रीकृष्णे । नन्दनन्दने ॥ गोवर्द्धनस्य गिरेः धरो धारकः ॥

गोवर्द्धनधारी । पुं । श्रीकृष्णे । यशोदानन्दने ॥

गोवशा । स्त्री । वन्ध्यायाङ्गवि ॥

गोविन्दः । पुं । वासुदेवे ॥ तद्ध्यानं यथा । फुल्लेन्दीवरकान्तमिन्दुवदनं वर्हावतंसप्रियं श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् । गोपीनां नयनोत्पलार्च्चिततनुं गोगोपसङ्घावृतं गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजेदिति ॥ गोशब्दवाच्यानि इन्द्रियाणि नियम्यं प्राप्ते ॥ गां वेदलक्षणां वाणीं विन्दति इति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञे ॥ गां भुवं धेनुं स्वर्गं वेदं वा अविदत् विन्दति वा । विद॰ विद्लृ॰ । गवादिषु विन्देः संज्ञायामिति शः । वाराहरूपेणोद्धरणात् कामधेनोरैश्वर्यप्राप्तेः । इन्द्रेणास्वर्गस्य निवेदनात् मत्स्यादिरूपेण वेदोद्धरणाद्वा ॥ गोभिर्वाणी भिर्वेदान्तवाक्यैर्विन्दते वा । गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः इति विष्णुतिलकम् ॥ वह्निपुराणे यमानुशासनेतन्माहात्म्यं यथा । ये तिष्ठन्तः स्वपन्तश्च गच्छन्तः स्खलिते चुते । सङ्कीर्त्तयन्ति गोविन्दं ते वस्याद्याः सुदूरतः इति ॥ गवाध्यक्षे ॥ वृहस्पतौ ॥

गोविन्दद्वादशी । स्त्री । फाल्गुनशुक्लद्वादश्याम् ॥

गोविट् । पुं । गोमये ॥ गोविट् ॥

गोविष्ठा । स्त्री । गोमये ॥ वनोपले ॥ गोविष्ठा ॥

गोवीथी । स्त्री । मध्यममार्गे नक्षत्रविशेषाणां संज्ञाविशेषे ॥ यथा । हस्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दितेति ॥

गोवृन्दम् । न । गोसमूहे ॥

गोशकृत् । न । गोमये ॥

गोशरण्यः । पुं । व्याघ्रादितो दुर्गाच्च गोः परित्राणकारके ॥ गो गवां वा शरण्यः ॥

गोशालम् । न । गोगृहे ॥ गवां शाला । विभाषा सेनेति पाक्षिकं क्लीवत्वम् ॥ त्रि । गोशाले जाते ॥ स्थानान्तगोशालेति जातार्थप्रत्ययस्य लुक् ॥

गोशाला । स्त्री । गोशाले । गोसाला ॥

-इतिभाषा ॥ गवां शाला ॥

गोशीर्षम् । न । चन्दने ॥ चन्दनविशेषे । हरिचन्दने ॥ गोशीर्षाकारेण लयै कदेशेजाते कालताम्रव्यामिश्रवर्णे उत्पलगन्धिनि अतिसुरभिणी तस्ततया सदैव सर्पैर्वेष्टिते इति व्याख्यातारः ॥ गोः शीर्षमिव गोशीर्षं गिरिस्तत्राकर इति स्वामी ॥ गर्भामलके ॥

गोशीर्षकः । पुं । द्रोणपुष्पीवृक्षे ॥ वृषभादिसमुद्भवे गोरोचनासदृशवर्णे चन्दनजातिविशेषे ॥ गोमलके ॥

गोशृङ्गः । पुं । बर्बुरवृक्षे ॥ न । गोर्विषाणे ॥

गोश्रुतिः । पुं । वैयाघ्रपदो ऋषिविशेषे ॥

गोष्ठम् । न । गवांस्थाने ॥ गावस्तिष्ठन्त्यत्र । स्था० । घञर्थे इति सुपिस्थ इति वा कः । अम्बाम्बेतिषत्वम् ॥ चिद्धिष्ठिताहङ्कारे ॥ गावः स्वोपादीनीन्द्रियाणि तिष्ठन्त्यत्रेति पूर्ववत् प्रक्रिया ॥ गोष्ठीश्राद्धे ॥

गोष्ठपतिः । पुं । गवांस्थानाध्यक्षे ॥

गोष्ठश्वः । पुं । परहिंसके । यः स्वगृहादन्यत्र गोष्ठे स्थितः परान् द्वेष्टि तस्मिन् ॥ गोष्ठे श्वा इव इति सप्तमीतत्पुरुषे अचतुरेत्यादिना ऽच् । नखद्दितद्वितिटिलोपः ॥ षष्ठीतत्पुरुषेतु गोष्ठश्वा इत्येव ॥

गोष्ठाष्टमी । स्त्री । गोपाष्टम्याम् ॥

गोष्ठी । स्त्री । सभायाम् । परिषदि ॥ संलापे ॥ योग्यवर्गे ॥ विषं गोष्ठी दरिद्रस्य ॥ गावोऽनेकार्थाः तिष्ठन्त्यस्याम् । घञर्थे कः । अम्बाम्बगोभूमीतिषत्वम् । गौरादित्वात् ङीष् ॥

गोष्ठीपतिः । पुं । योग्यवर्गाभिपालके ॥ सभापतौ ॥

गोष्ठीभेदः । पुं । क्रीडाविशेषे ॥

गोष्पदम् । न । गोखुरश्वभ्रे ॥ त्रि । गवां गतिगोचरे ॥ गोपदप्रमाणे ॥ गोःपदम् । गावः पद्यन्ते यस्मिन् देशे स गोभिः सेवितो गोष्पदः । गोष्पदंसेवितासेवितप्रमाणेष्विति सुट् सस्य षत्वञ्च निपात्यते । असेविते अगोष्पदान्यरण्यानि । प्रमाणे गोष्पदमात्रं क्षेत्रम् ॥

गोसः । पुं । बोले ॥ उषःकाले । विभाते ॥ गां जलं स्यति । घो ऽन्तकर्मणि । आत इतिकः ॥

गोसङ्ख्यः । पुं । गोपे ॥ गावः सङ्ख्यायन्ते । चक्षिङ् । चक्षिङः ख्याञ् । समि ख्य इतिकः ॥

गोसद्दक्षः । पुं । गवये ॥

गोसन्दायः । पुं । गोदानकारि ॥

गोसम्भवा । स्त्री । श्वेतदूर्वायाम् । त्रि ।

गोजाते ॥

गोसर्गः । पुं । प्रभाते ॥

गोसवः । पुं । गोमेधयज्ञे ॥

गोस्तनः । पुं । चतुर्यष्टिकहारे ॥ गोः स्तन इव ॥

गोस्तनी । स्त्री । कपिलद्राक्षायाम् । द्राक्षायाम् । मनक्कादाख इति भाषा ॥ गोः स्तनोऽस्याः ॥ गोस्तनसदृशे गोशब्दो गौणः । स्वाङ्गाच्चोपसर्जनादिति ङीष् ॥

गोस्थानम् । न । गोष्ठे ॥ गवां स्थानम् ॥

गोस्थानकम् । न । गोष्ठे ॥ स्वार्थे कः ॥

गोस्वामी । त्रि । गोपतौ ॥

गोहनम् । न । गोमये ॥

गोहरीतकी । स्त्री । विल्वे ॥

गोहालिया । स्त्री । गोवालिया इति ख्याते लताविशेषे ॥

गोहितः । पुं । घोषलतायाम् ॥ विल्वे ॥ श्रीकृष्णे ॥ गवां हितार्थं गोवर्द्धनगिरिं धृतवान् इति गोभ्यो हितः । चतुर्थीसदर्थेत्यादिना चतुर्थी तत्पुरुषः । गोभूमे भीरावतस्योर्द्ध्वया शरीरं ब्रह्मांकुरैर्न् या हितः ॥ त्रि । गवां हितकारके । गोग्रासोद्यतरि ॥

गोहिरम् । न । पादमूले ॥

गौद्यः । पुं । मैनासुते । मैनाके ॥ गौर्याः हिमालयपत्न्याः अपत्यम् । स्त्रीभ्यो ढगिति ढकि प्राप्ते छन्दसि व्यत्ययो बहुलमिति व्यत्ययेन गर्गादिभ्यो यञिति यञ् ॥

गौञ्जिकः । पुं । स्वर्णकारे ॥ गुञ्जा व्यवहर्त्तरि ॥

गौडः । पुं । देशविशेषे ॥ तद्देशसीमा यथा । वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे । गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥ तद्देशस्थे पुंभूम्नि गौडाः ॥ ते च पञ्चोक्ताः स्कन्दपुराणे । सारस्वताः कान्यकुब्जाः गौडमैथिलकोत्कलाः । पञ्चगौडा इति ख्याता विन्ध्यस्योत्तरवासिनः इति ॥

गौडवास्तूकः । पुं । न । वास्तूकप्रभेदे ॥ तदेव तु वृहत् पत्रं रक्तं स्यात् गौडवास्तुकम् ॥

गौडिकः । पुं । इक्षुकुट्टके ॥ इक्षौ ॥ गुडे साधुः । गुडादिभ्यष्ठञ् ॥ न । मद्यविशेषे ॥

गौडी । स्त्री । सुराप्रभेदे ॥ शर्कल्याम् ॥ रागिणीविशेषे ॥ मेघरागस्य वेयमिति ॥ काव्यरीतिप्रभेदे ॥ यथा । ओज प्रसाद माधुर्य गुणाश्रितयमेदतः । गौडवैदर्भपाञ्चालरीतयः परिकीर्त्तिता इति ॥

गौणः । त्रि । गुणयोगात्प्रशस्ते ॥ अमु

गौरतित्तिरः । पुं । कपिञ्जले ॥

गौरत्वक् । पुं । इङ्गुदीवृक्षे ॥

गौरवम् । न । अभ्युत्थाने ॥ गुरुत्वे । लाघवाभावे ॥ गुरोर्भावः । इगन्तात् लघुपूर्वादित्यण् ॥

गौरवितः । त्रि । आर्यमिश्रे ॥ गौरवः सञ्जातोऽस्य । तारकादित्वादितच् ॥

गौरशाकः । पुं । गिरजमधूके । अल्पपत्रे ॥

गौरसर्षपः । पुं । श्वेतसर्षपे । सिद्धार्थे ॥ गौरश्चासौ सर्षपश्च ॥ त्रिभी राजसर्षपैः परिमिते ॥

गौरसुवर्णम् । न । चित्रकूटप्रसिद्धे पत्रशाकभेदे । आरिजे । गन्धशाके ॥

गौरा । स्त्री । गौर्याम् । शिवायाम् ॥ हरितादिरूपः ॥

गौरार्द्रकः । पुं । स्थावरविषविशेषे ॥

गौरास्यः । पुं । कृष्णवानरे ॥

गौरिका । स्त्री । अष्टवर्षीयकन्यायाम् ॥ गौर्येव । कः ॥

गौरिलः । पुं । सिद्धार्थे ॥ लौहचूर्णे ॥

गौरी । स्त्री । पार्वत्याम् ॥ योगाग्निदग्धदेहा या पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीति सा स्मृता ॥ असञ्जातरजःकन्यायाम् ॥ हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गुवृक्षे ॥ वसुधायाम् ॥ नदीविशेषे ॥ वरुणभार्यायाम् ॥ बुद्धशक्तिविशेषे । मायादेव्याम् ॥ मञ्जिष्ठायाम् ॥ श्वेतदूर्वायाम् ॥ मल्लिकायाम् ॥ तुलस्याम् ॥ सुवर्णकदल्याम् ॥ आकाशमांस्याम् ॥ रागिणी विशेषे । मालवरागभार्यायाम् ॥ गौरवर्णान्वितायाम् ॥ गूयते । गुङ् शब्दे । ऋज्रेन्द्रेति रन्प्रत्ययो गौरो निपातितः । गौरोवर्णोऽस्त्यस्याः । गौरादित्वान् ङीष् ॥

गौरीगुरुः । पुं । हिमवति ॥ गौर्याः गुरुः ॥

गौरीजम् । न । अभ्रके ॥

गौरीतकम् । न । तक्रविशेषे ॥ यथा । लवणं मरिचं शिग्रुं जीरं मारकुजन्मकम् । एलाचूर्णान्वितं तक्रं धूपयेद् घृतहिङ्गुना ॥ पार्वत्या विहितं तक्रं सर्वदोषनिबर्हणम् । सुरुच्यं पावनं दिव्यं महेशस्य सदा प्रियमिति ॥

गौरीपुत्रः । पुं । कार्त्तिकेये ॥ गणेशे ॥

गौरीपुष्पः । पुं । प्रियङ्गुवृक्षे ॥

गौरीललितम् । न । हरिताले ॥

गौरीशिखरम् । न । तीर्थविशेषे ॥

गौरीसुतः । त्रि । दशवर्षोढात्मजे ॥

गौरुतल्पिकः । पुं । गुरुस्त्रीगामिनि ॥ गुरुतल्पं गच्छति । गच्छतौ परदा

गादिभ्यः इति ठक् ॥

गौल्मिकः । पुं । मुष्ककरत्वे ॥

गौल्यम् । न । मधुरे ॥

गौशतिकः । त्रि । गोशतस्वामिनि ॥

गौष्ठीनम् । न । भूतपूर्वगोष्ठे ॥ पूर्वं भूतं गोष्ठम् । गोष्ठात् खञ् भूतपूर्वे इति खञ् ॥ तीर्थविशेषे ॥

ग्रथितः । त्रि । गुम्फिते । दृब्धे । कृतग्रन्थने । गाँथा इति गुँथा इति च भाषा ॥ आक्रान्ते ॥ हते । हिंसिते ॥ ग्रथ्यते स्म । ग्रन्थसन्दर्भे । क्तः

ग्रथितमालः । पुं । वद्धपक्षौ ॥

ग्रन्थः । पुं । गुम्फे । ग्रन्थनायाम् ॥ धने ॥ शास्त्रे ॥ अक्षरसङ्ख्यायाम् । द्वात्रिंशदक्षरनिर्मितौ । अनुष्टुप्श्लोके ॥ प्रबन्धे । विवक्षितार्थप्रतिपत्त्यनुकूलत्वे सति नियतसमानवाक्यसमुदाये । सन्दर्भे ॥ ग्रन्थनम् । ग्रन्थ० घञ् ॥

ग्रन्थकः । पुं । द्वात्रिंशदक्षरान्विते अनुष्टुप्छन्दःश्लोके ॥ संज्ञायां कन् ॥

ग्रन्थकर्त्ता । पुं । ग्रन्थकारे ॥

ग्रन्थकुटी । स्त्री । लेखभूमौ । लेख्यस्थाने । दफतरखाना इति ख्यातिस् इतिच म्पर्गात्तजनभाषा ॥

ग्रन्थनम् । न । गुम्फने । ग्रन्थने । सन्दर्भे ॥

ग्रन्थना । स्त्री । ग्रन्थने ॥

ग्रन्थसन्धिः । पुं । काण्डे ॥ पटले ॥ स्थाने ॥ प्रकरणे ॥ पर्वणि ॥ अध्याये ॥ आह्निके ॥ उल्लासे ॥

ग्रन्थिः । पुं । ग्रन्थिपर्णे ॥ गाँठ इति भाषा प्रसिद्धे वस्त्रादिबन्धे ॥ वंशादिसन्धौ । पर्वणि । पोरी इति भाषा ॥ भद्रमुस्तायाम् ॥ शितावल्याम् ॥ पिण्डालौ ॥ कौटिल्ये ॥ अन्योन्याध्यासे ॥ मायाख्यपाशे ॥ रुग्भेदे ॥ ॥ तस्य निदानसम्प्राप्ती यथा । वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च तथा शिराश्च वृत्तोन्नतं विग्रथितन्तु शोथं कुर्वन्त्यतो ग्रन्थिरितिप्रदिष्ट इति ॥ ग्रन्थ्यते । ग्रथि० । सर्वधातुभ्य इन् ॥ खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिचरिभ्यश्चेति इञ् । स्वरभेदः ॥

ग्रन्थिकः । पुं । करीरे ॥ दैवज्ञे ॥ सहदेवपाण्डवे ॥ न । पिप्पलीमूले ॥ ग्रन्थिपर्णे ॥ पुं । न । गुग्गुलौ ॥ ग्रन्थिप्रतिकृतिः । इवे प्रतिकृतौ इति कन् ॥

ग्रन्थिका । स्त्री । पिप्पलीमूले ॥

ग्रन्थितः । त्रि । ग्रथिते । गुम्फिते ॥ ॥ ग्रन्थ्यते स्म । ग्रथि० । क्तः ॥

ग्रन्थिदला । स्त्री । मालाकन्दे ॥

ग्रन्थिदूर्वा । स्त्री । भालादूर्वायाम् ॥
ग्रन्थिपर्णः । पुं । चोरनामगन्धद्रव्ये ॥ न । बर्हिपुष्पे । कुक्कुरे । कुकुरौंदा इति ख्याते ॥ ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनं लघु । कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम् ॥ अस्यान्ये गुणाः । रूक्षता ऽलक्ष्मीराक्षसज्वरनाशित्वमिति ॥ ग्रन्थीयपर्णान्यस्य । ग्रन्थयइवपर्णान्यस्येतिवा ॥
ग्रन्थिपर्णा । स्त्री । जतुकालतायाम् ॥
ग्रन्थिपर्णी । स्त्री । गण्डदूर्वायाम् ॥
ग्रन्थिपाशः । पुं । ग्रन्थ्यात्मकनिमायास्यपाशे ॥
ग्रन्थिफलः । पुं । शाकुरुण्डवृक्षे ॥ मदनवृक्षे ॥ कपित्थवृक्षे ॥
ग्रन्थिभेदः । पुं । गँठकटा इति भाषाप्रसिद्धे तस्करविशेषे । यःपटप्रान्तस्थितं सुवर्णादिकं ग्रन्थिमोचनेन चोरयतिसइत्यर्थः ॥
ग्रन्थिमान् । पुं । अस्थिसंहारिणि । हडजोडा इति भाषा ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्त्यस्मिन्वा । मतुप् ॥
ग्रन्थिमत्फलः । पुं । लकुचे ॥
ग्रन्थिमूलम् । न । गृञ्जने । शिखिमूले ॥
ग्रन्थिमूला । स्त्री । मालादूर्वायाम् ॥
ग्रन्थिलः । पुं । करीरद्रुमे ॥ विकङ्कततरौ ॥ तण्डुलीयशाके ॥ चिताम्लयाम् ॥ पिण्डालौ ॥ चोरकनामगन्धद्रव्ये ॥ न । पिप्पलीमूले ॥ आर्द्रके ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्यास्ति सिध्मादित्वाल्लच् ॥ ग्रन्थिं लाति वा । ला० । कः ॥
ग्रन्थिला । स्त्री । भद्रमुस्तायाम् ॥ गण्डदूर्वायाम् ॥ मालादूर्वायाम् ॥
ग्रन्थिवर्ही । पुं । ग्रन्थिपर्णे ॥
ग्रन्थिहरः । पुं । अमात्ये । मन्त्रिणि ॥
ग्रन्थीकम् । न । पिप्पलीमूले ॥
ग्रसनम् । न । ग्रासे ॥ ग्रसु अदने । ल्युट् ॥
ग्रसितः । त्रि । कृतग्रासे । कवलिते ॥
ग्रसिष्णुः । त्रि । ग्रसनशीले ॥ न । प्रलयकाले ॥
ग्रस्तः । त्रि । लुप्तवर्णपदे ॥ असम्पूर्णोच्चारिते । अपूर्णवचसि ॥ लुप्तो वर्णः पदं वा यत्रवाक्ये पदेवा ॥ ग्रसते । ग्रसु० । क्तः । यस्यविभाषेति नाचिक इडभावः ॥ भक्षिते । भुक्ते ॥
ग्रहः । पुं । अनुग्रहे ॥ निर्बन्धे । आग्रहे । अभिनिवेशे ॥ ग्रहणे ॥ रणोद्यमे ॥ पूतनादियातग्रहे ॥ सैंहिकेये ॥ उपरागे । राहुकर्तृकचन्द्रादिकर्मकग्रहणरूपक्रियायाम् ॥ सोमादिपात्रे ॥ यथा । सौपामण्यां सुराग्रहान् गृह्णाति ॥ सूर्यादिनवसु

॥ तेषयथा । सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः ॥ एषामष्टधा गति र्यथा । वक्रा ऽतिवक्रा कुटिला मन्दा मन्दतरा समा । शीघ्रा शीघ्रतरा चैवं ग्रहाणां गतिरष्टधा ॥ ग्रहणम् गृह्णातिवा । ग्रह उपादाने । ग्रहवृद्दनिश्चिगमश्चेत्यप् । विभाषाग्रहइत्यन्ता ॥ बन्धने ॥ गृह्यते वध्यते चौरो येन ग्रहसञ्चकेन बन्धनेनेतिभाष्यम् ॥

ग्रहकल्लोलः । पुं । राहौ ॥

ग्रहणम् । न । स्वीकारे ॥ हस्तयोर्व्यापारे । आदाने ॥ आदरे ॥ करे । हस्ते ॥ उपलब्धौ ॥ बन्दाम् ॥ धीगुणे ॥ प्रत्याये ॥ इन्द्रिये ॥ बन्धने ॥ उपरागे । पर्वप्रतिपत्सन्धौ राहुणा सूर्यचन्द्रमसोर्ग्रसने ॥ अथ सूर्यचन्द्रयो ग्रहणकारणम् । यथा । भनिपादान्तरे राहो. केतो र्वा संस्थितो रविः । चतुष्पादन्तरे चन्द्रस्तदासम्भाव्यतेग्रहः ॥ यस्मिन्नृचे रविस्तस्मा च्चतुर्दशगतः शशी । पूर्णिमाप्रतिपत्सन्धौ राहुणाग्रस्यते शशी ॥ कृष्णपक्षे तृतीयायां मासचैं यदि जायते । तत्र स्वयोदये सूर्यो राहुणा ग्रस्यते रवि. ॥ ग्रहणकालिकरवि



चन्द्रयो मेंघेनाच्छादनानाच्छादनकारणं यथा । रविर्भौमनवांशेतु निरभ्रं ग्रास मादिशेत् । बुधसौरिनवांशेतु मलिनं चूर्णवर्णग्रहणम् ॥ गुरोरंशक मासाद्य दृश्यते सवलाङ्कः । शशिशुक्रनवांशेतु प्रोरट्काले सहज्जलम् ॥ अन्यत्राव्यक्तभूतौ तौ दृश्येते छादिताम्बरा विति ॥ चन्द्रग्रहश्चन्द्रवारे सूर्ये सूर्यग्रहस्तथा । चूडामणिरयंयोगस्तत्रानन्तफलं स्मृतम् ॥ अन्यस्माद्ग्रहणात् कोटिगुणमत्रफलं लभेत् ॥ इतिविशेषः ॥ गृह्यते ऽनेन । ग्रह० । करणेल्युट् । सामान्येनपुंसकम् ॥

ग्रहणिः । स्त्री । ग्रहणीरोगे ॥ गृह्णाति । ग्रह० । ग्रहेरनिः ॥

ग्रहणी । स्त्री । पुरीषपूर्णायामग्न्यधिष्ठाननाड्याम् ॥ रोगविशेषे । प्रवाहिकायाम् । सङ्ग्रहण्याम् ॥ तस्य निदानसम्प्राप्ती यथा । अतीसारे निवृत्ते ऽपि मन्दाग्ने रहिताशिन. । भूयः सन्दूषितो वह्नि र्ग्रहणीमपि दूषयेत् ॥ एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः । सा दुष्टा बहुशो भुक्त माम मेव विमुञ्चति ॥ पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् । ग्रहणीरोगमाहुस्तमायुर्वेदविदोज

ना इति । अतीसारेद्रवधातुप्रवृत्तिः ग्रहण्यान्तुवद्धस्यापिमलस्य प्रवृत्तिरितितयोर्भेदः ॥ गृह्णाति, नाठराग्निम् गृह्यते वा । ग्रह० । कृत्यल्युटोवहुलमितिल्युट् । ङीप् ॥ यद्वा । ग्रहेर्नि । कृदिकारादितिङीष् ॥

ग्रहणीरुक् । स्त्री । ग्रहण्याम् । प्रवाहिकायाम् ॥

ग्रहणीहरम् । न । लवङ्गे ॥ त्रि । ग्रहणीहारिणि ॥

ग्रहदेवता । स्त्री । ग्रहाणांदेवते ॥ यथा । शिवाधिदैवतं सूर्यं वह्निप्रत्यधिदैवतम् । १ । उमाधिदैवतंसोमं जलप्रत्यधिदैवतम् । २ । स्कन्दाधिदैवतंभौमं क्षितिप्रत्यधिदैवतम् ३ ॥ नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतम् । बुधम् । ४ । ब्रह्माधिदैवं सूर्यास्य मिन्द्रप्रत्यधिदैवतम् । ५ । शक्राधिदैवतं शुक्रं शचीप्रत्यधिदैवतम् ६ ॥ यमाधिदैवतं प्रजापतिप्रत्यधिदैवतम् ७ ॥ कालाधिदैवं सूर्यास्यं सर्पप्रत्यधिदैवतम् । ८ ॥ चित्रगुप्ताधिदैवञ्च यज्ञप्रत्यधिदैवतम् ९ ॥ वह्न्यादिपु च । अग्निरापोधरा विष्णुरिन्द्रेन्द्राण्यौ प्रजापतिः । सार्पराज्ञौ तथाब्रह्मा ग्रहाणां देवताः स्मृताः । इतिलघुशौनकीमतम् । वृद्धशौनकोक्तान्तु शिवादीनामेव ग्रहदेवतात्वमुक्तम् ॥

ग्रहद्रुमः । पुं । शाकवृक्षे ॥

ग्रहनायकः । पुं । सूर्ये ॥ शनैश्चरे ॥

ग्रहनाशः । पुं । छातियान इतिगौडभाषाप्रसिद्धे वृक्षे ॥

ग्रहनाशनः । पुं । ग्रहनाशे ॥

ग्रहनेमिः । पुं । चन्द्रे ॥

ग्रहपतिः । पुं । सूर्ये ॥ ग्रहाणांपतिः ॥ अर्कद्रुमे ॥

ग्रहपुषः । पुं । भानौ । सूर्ये ॥

ग्रहभक्तिः । स्त्री । केषां जनपदानां को ग्रहोऽधिपतिरित्येतत् यत्र निरूप्यते तत्र ग्रन्थे ॥ ग्रहाणांभक्तिर्विभागः ॥ विशेषपथ्यशरीराया १६ अध्याये ॥

ग्रहभिन्नम् । न । भौमादिग्रहैर्भिन्ने ॥ ग्रहेण ग्रहैर्वाभिन्नम् ॥

ग्रहभिन्नभम् । न । भौमादिग्रहैर्भिन्ने नक्षत्रे ॥ ग्रहभिन्नञ्चतत् भञ्च ॥

ग्रहभीतिजित् । पुं । गन्धद्रव्यविशेषे । चीडायाम् । दारुगन्धायाम् ॥

ग्रहमैत्रम् । न । ग्रहाणांमित्रामित्रादिविचारे ॥ यथा । सूर्यस्य मित्राणि कुजेन्दुजीवाः समो बुधोऽरी च निभार्गवौ च । चन्द्रस्य मित्रेतु दिवाकरज्ञौ समाः स्मृतामन्दसितेज्य

भौमाः ॥ कुजस्य मित्राणि रवीन्दुजीवाः समौ तथा मन्दभृगू बुधोऽरिः । बुधस्य मित्रे सितभास्करौ समाः कुजेज्यमन्दा रिपुरिन्दुरेव ॥ मित्राणि जीवस्य कुजेन्दुसूर्याः शनिः समः शुक्रबुधौ तु शत्रू । शुक्रस्य मित्रे शनिसौम्यौ समौ कुजेज्यौ तु रिपू रवीन्दू ॥ शनेस्तु मित्रे भृगुचन्द्रपुत्रौ जीवः समोऽन्येऽप्यरयस्तु शेषाः ॥

ग्रहयागः । पुं । ग्रहाणां यज्ञे ॥ अस्य प्रयोजनन्तु । शान्तौ पुष्टौ महेशानि तथा क्रूरेऽपि कर्मणि । ग्रहयागं प्रकुर्वाणो वाञ्छितार्थं मवाप्नुयादिति महानिर्वाणतन्त्रम् । तस्य शान्तिकक्षेमत्वमासादावपि कर्त्तव्यत्वम् । पौष्टिकस्त्वेतु भृशुकाले ॥ अपिच । गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः । पूजयेत् तान् प्रयत्नेन पूजिताः स्युः शुभावहाः ॥ श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् । दृष्टायुःपुष्टिकामो वा तथैवाऽभिचरन्नपीति ग्रहयागतत्त्वम् ॥ अस्य प्रयोगो महानिर्वाणे द्रष्टव्यः ॥

ग्रहयुद्धम् । न । ग्रहयोरायोधने ॥ वियति चरतां ग्रहाणां मुपर्य्युपर्य्यात्ममार्गसंस्थानाम् । अतिदूराद्दृष्टविषये समतामिव सम्प्रयातानाम् ॥ आसन्नक्रमयोगाद्भेदोल्लेखांऽशुमर्द्दनासव्यैः । युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥ भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानाञ्च । उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्नत्वम् ॥ अंशुविरोधे युद्धानि भूभृतां शस्त्रकृदवमर्द्दाः । युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम् ॥ विशेषो वाराह्यां १७ अध्याये ॥

ग्रहयुद्धभम् । न । ग्रहयुद्धर्क्षे । यस्मिन्नृक्षे ग्रहयोर्युद्धं जातं तस्मिन् ॥

ग्रहराजः । पुं । रवौ ॥ चन्द्रे ॥ ग्रहाणां राजा । टच् ॥ गुरौ ॥

ग्रहवर्षफलाध्यायः । पुं । कस्य ग्रहस्य कस्मिन्वर्षे कीदृशानि शुभफलानि भवन्ति तन्निरूपणपरो ग्रन्थसन्दर्भः ॥ यत्नोऽवराहमिहिरेण पूर्वमेव प्रतिज्ञातमासीत् । वर्षे यद्यस्य फलं मासेषु विनिगदितमालोक्य । तद्वृत्तैर्वक्ष्येऽहं होरातन्त्रोक्तविधानमिति ॥ विशेषं पश्य वाराह्यां १९ अध्याये ॥

ग्रहवह्निः । पुं । ग्रहाणां होमाधिकरणे ॥ ते च नव सङ्ख्यकाः । यथा । कपिलः पिङ्गलो धूम्रः केतुश्च जठराग्निकः । शिखी च हाटकश्चैव महातेजा हुताशनः । हुताशनस्य विज्ञेया नवैते ग्रहवह्नयइति ॥

ग्रहशृङ्गाटकः । पुं । वाराह्याः २० अध्याये ॥

ग्रहसमागमः । पुं । वाराह्याः१८ अध्याये निरूपितः ॥

ग्रहाधारः । पुं । ध्रुवर्त्ते ॥

ग्रहामयः । पुं । भूतादिनिजाते रोगे । आवेशे ॥

ग्रहाशी । पुं । ग्रहनाशवृत्ते ॥

ग्रहाह्वयः । पुं । भूताङ्कुशद्रुमे ॥

ग्रहीता । त्रि । ग्रहयालौ । ग्रहणकर्त्तरि ॥ गृह्णाति । ग्रह० । तृन् ॥

ग्रामः । पुं । संवसथे । विप्रादिवर्णप्राये प्राकारपरिखादिरहिते हट्टादिशून्ये बहुजनवासस्थाने ॥ विप्राश्च विप्रभृत्याश्च यत्रचैव वसन्तिहि । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा ॥ तथा शूद्रजनप्राया सुसमृद्धकृषीवला । क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका ॥ शब्दादिपूर्वकोग्रामः समूहार्थे । यथा । शब्दग्रामः भूतग्रामः इत्यादि. ॥ संघः संयुगेस्मृतः ॥ स्वरविशेषे ॥ सप्त स्वरास्त्रयो ग्रामाः मूर्च्छनाः एकविंशतिः ॥ तेच षड्जग्रामो मध्यमग्रामः पञ्चमग्रामश्चेति त्रयः । ग्रामलक्षणं । यथा कुटुम्बिनः सर्वेष्येकी भूताभवन्तिहि । तथा स्वराणां सन्दोहो ग्रामइत्यभिधीयते ॥ षड्जग्रामो भवेदादौ मध्यमग्राम एवच । गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम् ॥ तथा । नन्द्यावर्त्तो थजीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणांजन्महेतवः ॥ ग्रसते ग्रस्यते वा । ग्रसुअदने । ग्रसेरात्वेतिमन् प्रत्ययः ॥

ग्रामकूटः । पुं । शूद्रविशेषे । मत्सरे । महत इतिभाषा ॥

ग्रामगह्या । स्त्री । ग्रामबहिर्भूतसेनायाम् ॥ पदास्वैरिबाह्यापक्ष्येषु चेति क्यप् ॥

ग्रामजनिष्पावी । स्त्री । नखनिष्पाव्याम् ॥

ग्रामणीः । पुं । नापिते ॥ पत्यौ ॥ त्रि । प्रधाने ॥ ग्रामाधिपतौ ॥ भोगिके ॥ स्त्री । वेश्यायाम् ॥ ग्रामेयायाम् ॥ नीलिकायाम् ॥ ग्रामंनयति । णी प्र० । सत्सूद्विषइत्यादिना क्विप् । अग्रग्रामाभ्यामिति णत्वम् ॥

ग्रामतक्षः । पुं । बहूनां साधारणे काष्ठतक्षणि ग्रामाधीने वर्द्धकौ ॥ ग्रामस्यतक्षा । ग्रामकौटाभ्यांतक्ष्णइति टच् ॥

ग्रामता । स्त्री । ग्रामसमूहे ॥ ग्रामाणां समूहः । ग्रामजनबन्धुभ्यस्तल् ॥

ग्रामधर्म्मः । पुं । व्यवाये ॥ ग्रामेभवः । युगादित्वादण् । सचासौ धर्मश्च ॥

ग्रामभृतः । पुं । ग्रामप्रेष्ये ॥ विप्रस्वेत् सपर्व्वमाचाम्य ॥

ग्राममद्गुरिका । स्त्री । ग्रामयुद्धे ॥ शृ ङ्गीभषे ॥

ग्राममुख । पुं । हट्टे ॥

ग्राममृग । पुं । कुक्कुरे ॥

ग्रामयाजकः । पुं । अब्राह्मणविशेषे । ग्रामस्थनानावर्णानां पुरोहिते ॥ ग्रा मार्थे यज्वनि ॥ इतिश्रीधरस्वामी ॥

ग्रामयाजी । पुं । बहुर्नायाजके ॥

ग्रामेवासकः । पु । भगिनीपतौ ॥

ग्रामाधानम् । न । मृगयायाम् ॥

ग्रामाधीन ॥ त्रि । ग्रामवशवर्त्तिनि ना पितवर्द्धक्यादौ ॥ ग्रामेऽधि । सप्त मीतिसमासः ॥ अद्रपत्ते तिख्यः ॥

ग्रामान्तम् । न । उपशल्ये । ग्रामस्यनि कटे ॥ ग्रामस्यान्तम् समीपम् ॥

ग्रामिणी । स्त्री । नीलीवृक्षे ॥

ग्रामी । त्रि । ग्रामविशिष्टे । ग्रासन इति भाषा ॥ यथा । अवीचवाल चरीत वाल इत्यादि ॥

ग्रामीण । पु । ग्राम्यशूकरे ॥ कुक्कुरे ॥ काके ॥ त्रि । ग्रामोद्भूते ॥ ग्रामे भवः । ख ॥

ग्रामीणा । स्त्री । नीलिकौषधौ ॥ पा लङ्क्याशाके ॥ ग्रामेभवा । ग्रामाद्यख ञावितिखञ् । टाप् ॥

ग्रामेयकः । पुं । ग्राम्ये ॥ ग्रामेभव । कव्यादित्वात्ढकञ् ॥

ग्रामेया । स्त्री । ग्राम्यनार्याम् ॥

ग्रामेशः । पुं । ग्रामस्याधीशे । ग्रामेश्वरे॥

ग्राम्यम् । न । स्त्रीकरणे । रतबन्धे ॥ त्रि । प्राकृते । मूढे । ग्रामभवे । ग्रामीणे ॥ दन्द्वालिकन्याघटतैलिकापा ग्रा म्या निशायां द्वषमेषकौच ॥ अश्ली ले । भण्डादिवचने ॥ छागादिषु ॥ छागमेषदषाश्वाद्या ग्राम्याः प्रोक्ता महर्षिभिः । ग्राम्या वातहरा. सर्वे दीपनाः कफपित्तलाः ॥ मधुरा र सपाकाभ्यां दंहणा बलवर्द्धना. ॥ ग्रा मेभवः । ग्रामाद्यखञा वितियेपि कोय ॥

ग्राम्यकन्द. । पुं । खल्लकन्दे । वनथो ल इति भाषा ॥ ग्राम्यकन्दस्तुद्रो पत्त ॥

ग्राम्यकर्कटी । स्त्री । कुष्माण्डे ॥

ग्राम्यकुङ्कुमम् । न । कुसुम्भे ॥

ग्राम्यधर्म्मः । पुं । ग्रामधर्मे । मैथुने ॥ ग्रामेभवाः ग्राम्याः चालिकशाकटि कप्रभृतयः । तेषांधर्मः ॥

ग्राम्यपशु । पु । ग्रामजातजन्तौ ॥ सप्त सप्तविधो यथा । गौः मेषो ऽश्वो

मनुष्यश्च अश्वाश्वतरगर्द्दभाः। इति॥

ग्राम्यमद्गुरिका । स्त्री । शृङ्गीमत्स्ये॥

ग्राम्यमृगः । पुं । कुक्कुरे॥

ग्राम्यराशिः । पुं । मिथुनकन्यातुलावृश्चिक धनुष्कुम्भेषु ॥ राशौ मेषवृषयोः॥

ग्राम्यवल्लभा । स्त्री । पालङ्क्यशाके॥

ग्राम्यशूकरः । पुं । ग्रामोत्पन्नवराहे। विड्वराहे॥

ग्राम्या । स्त्री । नुलस्याम्॥ नखनिष्पाविकायाम्॥ नील्याम्॥ वृत्त्यनुप्रासघटकवृत्तिभेदेषु कोमलापर्याये॥

ग्राम्याश्व । पुं गर्द्दभे॥

ग्रावा । पुं । प्रस्तरे॥ पृथ्वीधरे। पर्व्वते॥ ग्रसते। ग्रसुअदने । अन्येभ्योपीति ड. । आवनति । वनसम्भक्तौ शब्दे वा । विच् । ग्रश्चासावावाच॥ ग्रसते । अन्ये० वनिप् । पृ० वा॥ यद्वा । गिरति गृणाति वा । गॄनिगरणेशब्दे वा । अन्येभ्योपीति वनिप् । पृ०॥ यद्वा । गरति । गसेके । मू० कः । अपति । अवरक्षणादौ । बाहुलकात् कनिः ग्रश्चासावावाच॥ मेघ॥ इतित्रिम्न.॥ त्रि । दृढे॥ इति शब्दरत्नावली॥

ग्रावस्तुत् । पुं । ऋत्विग्विशेषे॥ ग्राव भासेति क्विप्॥

ग्रासः । पुं । कवले । पिण्डे । मुखपूरणान्नादौ॥ यथा । कुक्कटाण्डप्रमाणश्चयावान्वा प्रविशे न्मुखम् । एतं ग्रासं विजानीयात् शुद्ध्यर्थं कायशोधनम्॥ इति प्रायश्चित्तेपराशरः॥ ग्रस्यते । ग्रसु० । अकर्त्तरीतिघञ्॥

ग्राहः । पुं । गाह इति भाषा प्रसिद्धे जलजन्तुविशेषे । अवहारे॥ ग्रहणे॥ गृह्णाति । ग्रह० । विभाषाग्रहइति व्यवस्थितविभाषया जलचरे नित्यमेव ण प्रत्ययः । स्वार्थेण्यन्तादच् वा॥ शिशुके॥

ग्राहकः । पुं । व्याधानांघातिपक्षिणि । श्येने॥ सितावरशाके॥ विषवैद्ये॥ त्रि । गाहक इति भाष प्रसिद्धे ग्रहीतरि॥ धान्यानांग्रहीतरि॥ गृह्णाति । ग्रहउपादाने । ण्वुल्॥

ग्राहयिता । त्रि । ग्रहणकारयितरि॥

ग्राहिणी । स्त्री । क्षुद्रदुरालभायाम्॥ च्छिरइति इतिगौडभाषाप्रसिद्धे ताम्रमूलावृक्षे॥

ग्राहितः । त्रि । ग्रहणं प्रापिते । ग्रहणकराया इतिभाषा॥

ग्राही । पुं । कपित्थे॥ त्रि । ग्रहणकर्त्तरि । ग्राहके॥ मलबद्धके । धारके॥ गृह्णाति । ग्रह० । ग्रह्यादिभ्यो-णिनिः॥

ग्राह्मिफलः । पुं । कपित्थागमे ॥ ग्राह्यः । त्रि । उपादेये । ग्रहीतुं उचितः ।

ग्रीवा । स्त्री । कन्धरायाम् । शिरोधरायाम् । तच्छिरायाम् ॥ शिरस्त्वया गीर्यते ऽनयावा । ग्रेवयस्त्वजि स्त्वाद्यीवेतिसाधुः ॥

ग्रीवी । पुं । स्त्री । उष्ट्रे ॥ त्रि । प्रशस्तग्रीवायुक्ते ॥ अतिशयिता प्रशस्तावा ग्रीवा अस्त्यस्य । ग्रीवाद्यादिस्त्वादिनि. ॥

ग्रीष्मः । पुं । निदाघर्त्तौ । ज्येष्ठाषाढयोः । उष्णागमे ॥ अर्थजातस्य फलं यथा । ग्रीष्मोद्भवो भोगभवानुरक्तो वक्ता सुशीलो जलकेलिशीलः । विदग्ध नैश्वर्ययशोमनोज्ञो धनी सुवेश परदारचित्तइति ॥ त्रि । तद्वति ॥ ग्रसतेरसान् । ग्रसु० । ग्रीष्मदृत्युणादिसूत्रेणनिपातितः ॥

ग्रीष्मजा । स्त्री । नवल्याम् । लोणा इति गौडप्रसिद्धे फलवृक्षे ॥ ग्रीष्मे जायते । जनी० ड. ॥ नवमाल्याम् ॥

ग्रीष्मपुष्पी । स्त्री । करुणीपुष्पवृक्षे ॥

ग्रीष्मभवा । स्त्री । नवमल्लिकायाम् ॥ ग्रीष्मेभवोऽस्याः ॥

ग्रीष्मसुन्दरः । पुं ।
ग्रीष्मसुन्दरक. । पुं । } ग्रीष्मा इति गौडप्रसिद्धे शाकविशेषे ॥

ग्रीष्महासम् । न । इन्द्रतूले । वृद्धसूत्रके ॥ बुढियाकासूत इति भाषा ॥

ग्रीष्मी । स्त्री । नवमल्लिकायाम् ॥

ग्रीष्मोद्भवा । स्त्री । नवमल्लिकायाम् ॥

ग्रैवम् । न । ग्रीवाभरणे । ग्रीवायांभव । त्रि । तत्रत्ये ॥

ग्रैवेयम् । न । कण्ठभूषणे ॥ ग्रीवायां भवम् । ग्रीवाभ्योणवेतिढञ् ॥

ग्रैवेयकम् । न । कण्ठभूषायाम् ॥ ग्रीवायांभवम् । कुलकुक्षिग्रीवाभ्य श्वास्यलङ्कारेष्वितिढकञ् ॥

ग्रैष्मिक । पुं । ग्रीष्मसदृशे धर्मे नोष्मनयो ॥ ग्रीष्मं तमधीते वेदवा । वसन्तादिभ्यष्ठक् ॥

ग्रैष्मी । स्त्री । नवमल्लिकायाम् ॥ ग्रीष्मजायाम् । ग्रीष्मे जातादि । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । ङीप् ॥

ग्लपित. । त्रि । कार्श्ये ॥

ग्लस्तः । त्रि । भक्षिते ॥ ग्लसुतेस्म । ग्लसुअदने । क्त ॥

ग्लह । पुं । पणे । द्यूते जाभस्थाने । द्यूतादौजयस्थेनस्थापिते ॥ ग्लह्यते ऽनेन वा । ग्लहआदाने । पुंसी तिघ. । हलश्चेतिघञ्वा । संज्ञापूर्वकत्वान्नवृद्धि. ॥ ग्रह्यते इतिवा-ग्लह. । अक्षेषुग्लहइति देवनविषये-पणग्रहेयजामत्वस्तु निपातनं वा ॥

ग्लाता । त्रि । ग्लानियुक्ते ॥

ग्लानः । त्रि । रोगात्क्षीणकाये । ग्लाक्षौ ॥ रोगिणि ॥ ग्लायतिस्म । ग्लैहर्षक्षये । गत्यर्थेति क्तः । संयोगादेरितिनत्वम् ॥

ग्लानिः । स्त्री । अस्वाच्छन्द्ये । बलहीनतायाम् ॥ रोगे ॥ हानौ ॥ अनुत्साहे ॥ ग्लानम् । ग्लै० । ग्लाज्याहाभ्योनिः ॥

ग्लानिच्छेदी । त्रि । खेदहारिणि ॥

ग्लावः । पुं । मैत्रेये । वक्रास्थधौ । चैकितायने ॥

ग्लास्नुः । त्रि । ग्लाने । रोगक्षीणदेहे ॥ ग्लानशीलः । ग्लाजिस्थश्चग्स्नुः ॥

ग्लेपनम् । न । दैन्ये ॥ ग्लेपृदैन्ये । ल्युट् ॥

ग्लौः । पुं । मृगाङ्के । चन्द्रमसि ॥ कर्पूरे ॥ ग्लायति । ग्लै० । ग्लानुदिभ्यांडौः ॥

---

घः

---

घः । पुं । घकारे ॥ घण्टायाम् ॥ घर्घरशब्दे ॥ इतिमेदिनिकरः ॥

घटः । पुं । समाधिभेदे । कुम्भके ॥ इभशिरः कूटे ॥ कुटे । पृथुबुध्नोदराकारे । कम्बुग्रीवादिमदाकारादिरूमे । कलसे ॥ कुम्भराशौ ॥ द्रोणपरिमाणे ॥ घटते । घटचेष्टायाम् । पचाद्यच् ॥

घटकः । पुं । वनस्पतौ ॥ योजके । व्यवहारे ॥ तल्लक्षणं यथा । यावको भावक एवैव योजकश्चांशकस्तथा । दूषक स्साधक एवैव षडेते घटकाः स्मृताः ॥ अन्यच्च । के नो विदन्ति पुरुषाः पुरुषानुपूर्वीमुर्वीतले कुलभूतांपरिवर्तनं वा । अत्यन्तसूक्ष्ममपि ये कुलतारतम्यं जानन्तितेहि घटका नतु योजकाद्याः ॥ इत्याधुनिकैर्गौडदेशोद्भवैः कल्पिता कुलदीपिका ॥ ह्रस्वघटे ॥ घटयति । ण्यन्तात् घटेर्ण्वुल् ॥

घटजन्मा । पुं । अगस्त्यमुनौ ॥

घटदासी । स्त्री । कुट्टन्याम् । दूतायाम् ॥

घटनम् । न । निर्माणे । घडना इति भाषा ॥ घटेर्ल्युट् ॥

घटना । स्त्री । हस्तिसङ्घे ॥ करिघटना घटा ॥ मेलने । योजनायाम् ॥ यथा । अघटनघटनापटीयसी मायेति ॥ घटनम् । घटसङ्घाते । चु० । ण्यासश्रन्थोयुच् । टाप् ॥

घटयोनिः । पुं । अगस्त्यमुनौ ॥

घटराज । पुं । कुम्भे ॥

घटा । स्त्री । घटने ॥ गजसंहतौ । घटनायाम् ॥ गोष्ठ्याम् ॥ समूहे ॥ घटनम् । घट० । घटादयः षितश्चेति षित्त्वादङ् ॥

घटालाबु । स्त्री । कुम्भतुम्ब्याम् ॥

घटिकः । पुं । चक्रिके । घटिकावादके ॥ घटीकायति । कै० । आतश्चेति कः । ड्यापोरिति ह्रस्वः ॥ न । नितम्बे ॥ त्रि । घटेनतरणशीले ॥ घटेनतरति । नौद्व्यचष्ठन् ॥

घटिका । स्त्री । घडी इति भाषाप्रसिद्धे दण्डे । नाडिकायाम् ॥ घटिकाज्ञानोपायो यथा । निमेषो मानुषो योयं मात्रामात्रप्रमाणकः । तैः पञ्चदशभिः काष्ठा त्रिंशत्काष्ठास्तथाकला ॥ नाडिकातु प्रमाणेनकलादशचपञ्चच । उन्मानेनाम्भसःसा तु पलान्यर्द्धत्रयोदश ॥ हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः । मागधेन प्रमाणेन जलप्रस्थस्तुसंस्मृत ॥ इतिविष्णुपुराणम् ॥ नैमित्तिकलयं प्रपञ्चयिष्यन् निमेषादिक्रमेण प्रथमांशोक्तमेवकल्पप्रमाण मनुस्मारयति निमेषइति सप्तभिः । माषैव माषं प्रमाणं यस्य । एकमात्रालघ्वक्षरोच्चारणकालसम्मितोपि निमेषः । निमेषकालतुल्याहि मात्रा लघ्वक्षरञ्च यत इतिग्रन्थान्तरोक्तेः ॥ नाडिकाज्ञानोपायमाह । उन्मानेनेति सार्द्धेन । अम्भस उन्मानेन उन्मीयते ऽनेनेत्युन्मानं पात्रम् । अर्द्धेनयोगो त्रयोदश सार्द्धद्वादशेत्यर्थः ॥ उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सानाडिका । सार्द्धद्वादशपलताम्रनिर्मितपात्रेण सानाडिकाज्ञातव्येत्यर्थः । किंप्रमाणंतत्पात्रं कार्यं तदाह । मागधेन प्रमाणेन जलप्रस्थस्तुसंस्मृत इति । सार्द्धद्वादशपलजलेनहि मागधदेशप्रस्थः पूर्यते । तत् प्रमाणं पात्रं कार्यमित्यर्थात् सिद्धम् । ननु तथापि पात्रेणकथं नाडिकाज्ञानं क्रियापरिच्छेद्यत्वात् कालस्येत्याशङ्क्य क्रियासिद्धये प्रस्थादि विशिनष्टि । हेमेति । माषः पञ्चगुञ्ज । हेम्नो माषैश्चतुर्भिश्चतुरङ्गुलेन शलाकारूपेण रचितैः कृतच्छिद्रा । एतदुक्तं भवति । सार्द्धद्वादशपलताम्रमयं मागधप्रस्थसंमितमूर्द्धायतं पात्रं चतुर्माषचतुरङ्गुलहेमशलाकया कृताधश्छिद्रं जलेस्थापितं तेन छिद्रेण यावता कालेन पूर्यते तावान् कालोनाडिकेति । तथाचशुक । द्वादशार्द्धप

लोन्मानं चतुर्भिः सतुरङ्गुलैः। स्व र्णमाषैः कृतच्छिद्रं यावत् प्रस्थजल सुतमिति। इति तट्टीकायां श्रीधर स्वामिना॥ गुर्वक्षराणां सुदितं च षष्ठ्या पलं पलानां घटिका किलै केति कालिदासः॥ मुहूर्त्ते॥ अल्पे घटे॥ घटव स्वार्थे का॥

घटितः। त्रि। निर्मिते॥

घटी। स्त्री। घटिकायाम्। दण्डे। घड़ी इतिभाषा॥ यथा। अलभ्यं यदायुःपलं स्वर्णभारे गृहीं तस्य द ण्डो वृथा याति यामः। इदानीम पि श्रीश्वरे मत्त चेतो वितन्विच्य कं घोषयन्ती घटीयमिति॥ स्वल्पे कुम्भे। घड़िया इतिभाषा॥ घट त्वे। घट०। कच्। जातित्वात् ङीप्॥

घटीकारः। पुं। कुलाले॥ घटीकरो ति। कृत्सःकर्मण्यण्॥

घटीयन्त्रम्। न। अरघट्टे। कूपादे र्जलोद्धारणयन्त्रे। उद्घाटने। घटी नाडीयन्त्रम्॥ ग्रहणीरोगभेदे॥ यथा। प्रसुप्तिः पार्श्वयोः शूलं तथा जल घटीध्वनिः। तमदन्ति घटीयन्त्र मसाध्यं ग्रहणीगदमिति॥

घटोत्कचः। पुं। हिडम्बायां भीमसे नाज्जाते राक्षसविशेषे॥



घटोत्कचान्तकः। पुं। कर्णे। राधेये। युधिष्ठिराग्रजे॥

घटोद्भवः। पुं। अगस्त्यमुनौ॥

घट्टः। पुं। नद्यादेः स्नानार्थमवत रणस्थाने। घाट इति भाषा॥ ती र्थवर्त्मनि॥ शुल्कग्रहस्थाने॥ जगात इति भाषा॥ घट्यते इति घट्टचल ने। हलश्चेतिघञ्॥

घट्टगा। स्त्री। नदीविशेषे॥ यथा। निर्मलामला भीमरथी च घट्टगा यथा च कृष्णा जलसाम्यता गुणैः। निर्मला महाघट्टपयस्तथापि पथ्यं लघु स्वा दुतरं सुकान्तिदम्॥ इति राजनि घण्टुः॥

घट्टजीवी। पुं। पाटुनि इतिगौडभाषा प्रसिद्धे वैश्यायां रजका ज्जाते वर्ण सङ्करजातिविशेषे॥

घट्टनम्। न। अभिघाते॥

घट्टना। स्त्री। चलनायाम्॥ वृत्तौ॥

घट्टितः। त्रि। निर्मिते। घड़ाया इति भाषा॥ चिक्कणार्थं शङ्खनाद्यैर्येन घर्षिते वस्त्रादौ॥

घण्टः। पुं। व्यञ्जनविशेषे॥

घण्टकः। पुं। } घेंटकोल इति

घण्टकर्णः। पुं। } गौडभाषाप्र सिद्धे क्षुपविशेषे॥

घण्टा। स्त्री। कांस्यनिर्मिते वाद्यवि-

शेषे । यथा । सर्वबाद्यमयी घण्टा वाद्याभावे नियोजयेदिति ॥ अतिबलायाम् ॥ नागबलायाम् ॥ घण्टापाटलौ ॥ अच्चानि । वाहुलकादुक्तेष्टो घञ्च । टाप् ॥

घण्टाकर्णः । पुं । शिवस्यातिवल्लभे गणविशेषे ॥

घण्टाताडः । पुं । घडियावली घण्टा पाँडे इतिचभाषाप्रसिद्धे घण्टावादिनि ॥

घण्टानादः । पुं । कुवेरमन्त्रिणि ॥

घण्टापथः । पुं । पुरप्रधानमार्गे । सच तिराजमार्गे । संसरणे ॥ यथा । दश धन्वन्तरो राजमार्गो घण्टापथः स्मृतः ॥ घण्टोपलक्षितः पन्थाः । शाकपार्थिवादिः ॥ यद्वा । घण्टानांपन्थाः । घण्टाशब्दं वादित्राणां तद्वतां हस्त्यादीनां वोपलक्षणम् । ऋक्पूरित्यः ॥

घण्टापाटलिः । पुं । गोलीढे । मुष्ककद्रुमे ॥ घण्टानि इति घण्टा । घटनम् । पटगतौ । घञ् । पाटं लाति । ला० । वाहुलकाट्डिः । घण्टाचासौ पाटलिश्च ॥

घण्टारवा । स्त्री । शणविशेषे । शणपुष्पिकायाम् । वनसण इति भाषाभ नियाइतिच भाषा ॥ घण्टेवरवो

ति । कशब्दे । अच् ॥

घण्टाली । स्त्री । कोशातक्याम् ॥

घण्टाबीजम् । न । जयपाले ॥

घण्टाशब्दम् । न । कांस्ये ॥ इतिहेमचन्द्रः ॥

घण्टिकः । पुं । घरियाराख्ये यादोविशेषे ॥

घण्टिका । स्त्री । तालूर्ध्वसूक्ष्मजिह्वायाम् । लम्बिकायाम् ॥

घण्टिनीबीजम् । न । जयपाले ॥

घण्टुः । पुं । गजघण्टायाम् ॥ प्रतापे ॥

घण्टेश्वरः । पुं । मङ्गलपुत्रे प्रधानतरिदेवताविशेषे ॥

घतन । पुं । मारके ॥ हन्ति । हन० । हन्तेर्युम्नायत्नयोर्घश्चतत्त्वे ॥

घनः । पुं । मुस्तायाम् ॥ अब्दे । मेघे ॥ ओघे ॥ दार्ढ्ये । काठिन्ये ॥ मूर्त्तिगुणः काठिन्यम् । असर्वगतद्रव्यपरिमाणं मूर्त्तिः । सैवगुणः ॥ विस्तारे ॥ लोहमुद्गरे ॥ हन्यते ऽनेनवा ॥ शरीरे ॥ कफे ॥ अभ्रके ॥ समानतीयाङ्कत्रयस्यपूरणे ॥ समत्रिघातश्च घनः प्रदिष्टइति भास्कराचार्योक्तेः ॥ न । कांस्यतालादिवाद्ये ॥ मध्यमनृत्ये ॥ चान्त्यद्रुत्युपलक्षणंगीतवाद्ययोः ॥ त्वचे ॥ लोहे ॥ त्रि । निबिडे । सान्द्रे ॥ निरन्तरे । पूर्णे ॥ दृढे ॥ हननम् । हन्य

तैघायुनाधा । इन० ॥ मूर्त्तौ घन इति हन्तेरप्घनादेशश्च ॥

घनकफः । पुं । वर्षोपले । करकायाम् ॥ घनस्य कफइव ॥

घनकालः । पुं । वर्षाकाले ॥ घनस्य मेघस्य कालः ॥

घनगोलकः । पुं । संश्लिष्टरजतसुवर्णे । सोनारूपामिश्रा इतिभाषा । इति हेमचन्द्रः ॥

घनच्छदः । पुं । शिग्रौ ॥

घनजम्बालः । पुं । चुलुके ॥

घनज्वाला । स्त्री । मेघदीप्तौ । चञ्चलायाम् ॥

घनतालः । पुं । सारङ्गविहगे ॥

घनतोलः । पुं । चातकपक्षिणि ॥

घनत्वम् । न । सान्द्रतायाम् ॥

घनत्वक् । पुं । लोध्रे ॥

घनद्रुमः । पुं । विकण्टकवृक्षे ॥

घननाभिः । पुं । धूमे ॥

घनपत्रः । पुं । पुनर्नवायाम् ॥

घनपदवी । स्त्री । आकाशे ॥

घनपल्लवः । पुं । शोभाञ्जने ॥

घनपाषण्डः । पुं । मयूरे ॥

घनप्रच्चः । पुं । प्राप्ते । विशेष विज्ञान स्थिरस्थिति ॥ घनीभूताप्रज्ञायस्य ॥

घनफलः । पुं । विकण्टकवृक्षे ॥

घनमूलः । पुं । मोरटे ॥ न । पूरित सजाती याङ्कत्रयस्याद्यङ्के ॥

घनरसः । पुं । न । मेघपुष्पे । जले ॥ पुं । सान्द्रे ॥ निर्यासे ॥ मोरटे ॥ कर्पूरे ॥ पीलुपर्ण्याम् ॥ सम्यक्सिद्धरसे ॥

घनवर्त्म । न । आकाशे ॥

घनवल्लिका । स्त्री । विद्युति ॥

घनवल्ली । स्त्री । अमृतस्रवालतायाम् ॥

घनवातः । पुं । नरकविशेषे ॥

घनवासः । पुं । कूष्माण्डे ॥

घनवाहनः । पुं । शिवे ॥ मेघवाहिने ॥ इन्द्रे ॥ घनो वाहनमस्य ॥

घनवीथिः । स्त्री । अन्तरीक्षे ॥

घनश्यामः । पुं । श्रीरामे ॥ श्रीकृष्णे ॥ त्रि । निविडकृष्णवर्णे ॥

घनसारः । पुं । कर्पूरे ॥ दक्षिणावर्त्तपारदे ॥ वृक्षविशेषे ॥ जले ॥ वरवारिदे ॥ घनो दृढः सारोऽस्य ॥ घनस्य सारइव वा शीतलत्वात् ॥

घनसूची । स्त्री । सूच्याकारमेघे ॥

घनस्कन्धः । पुं । कोशाम्रवृक्षे ॥

घनस्वनः । पुं । तण्डुलीयशाके ॥ मेघध्वनौ ॥

घना । स्त्री । माषपर्ण्याम् ॥ रुद्रजटायाम् ॥ इतिराजनिर्घण्टः ॥

घनाकरः । पुं । वर्षाकाले ॥ घनानामाकर इव ॥

घनाघनः । पुं । वर्षुकाब्दे ॥ मत्तगा

तुकक्कुञ्जरे ॥ चक्रे ॥ वासवे । इन्द्रे ॥ अन्योन्यघट्टने ॥ त्रि । निरन्तरे ॥ घातुके ॥ हन्ति । हन० । हन्तेर्घत्त्व ञ्चेति पचाद्यचिद्धित्वम् आकृचा भ्यासस्य ॥

घनाघना । स्त्री । काकमाच्याम् ॥

घनात्ययः । पुं । शरत्काले ॥

घनामयः । पुं । खर्जूरागमे ॥

घनामलः । पुं । शाकवीरे ॥ पुनर्नवा याम् ॥

घनाश्रयः । पुं । आकाशे ॥

घनोदधिः । पुं । नरकविशेषे ॥

घनोपलः । पुं । करकायाम् ॥

घरः । पुं । गृहे । गेहे ॥ हन्ति हन्यते गम्यते ऽतिथिभिर्वा । हन० । हन्ते रनुघचेतिरन् घादेशो नलोपश्चेति दशपादीवृत्तिकृत् ॥

घरट्टः । पुं । घराट इतिपर्वतीयजन प्रसिद्धायां पेषण्याम् । जाँता चक्की इतिचदेशभाषा ॥

घर्घटः । पुं । चिकटमत्स्ये । च्याङरा इतिगौड भाषाप्रसिद्धे ॥

घर्घरः । पुं । चलद्वारिध्वनौ ॥ घाघ रा इतिप्रसिद्धे नदविशेषे ॥ घूके ॥ द्वारे ॥ स्वरविशेषे ॥

घर्घरकः । पुं । घर्घरेनदे ॥ यथा । ग्रो ग घर्घरके जन्तुः रुचिदं सन्तापघ्नं पथ्यं वह्निकरं तथा स्वल्पदं । चीणाङ्गवृद्धिमदमिति राजनिर्घण्टः ॥

घर्घरा । स्त्री । क्षुद्रघण्टिकायाम् ॥ वीणाप्रभेदे ॥ स्वरविशेषे ॥

घर्घरिका । स्त्री । क्षुद्रघण्टायाम् ॥ वा दित्रदण्डे ॥ भृष्टधान्ये ॥ नदीविशेषे ॥ वाद्यप्रभेदे ॥

घर्घरी । स्त्री । क्षुद्रघण्टिकायाम् ॥

घर्घुर्घा । स्त्री । घुर्घुरे । घुरघुरिया इ तिगौड प्रसिद्धे कीटे ॥

घर्म्मः । पुं । निदाघे । स्वेदे । श्रमवा रिणि । पसीना इति भाषा ॥ आ तपे ॥ ग्रीष्मे ॥ उष्णे ॥ जिघर्त्ति क्षमनेन । घक्षरणदीप्त्योः । घरत्य ङ्ग मनेनवा । एवमेके । घर्मइति घ धातोर्मग्गुणश्चनिपात्यते ॥

घर्म्मवारणम् । न । छत्रे ॥

घर्म्मविचर्चिका । स्त्री । घर्मविचर्चाम् । घमाची अम्हौरी घमौरी अम्हाई इत्यादि भाषा ॥ स्वेदवाहीनिदुष्य न्ति कोधशोकभयै स्तथा । तत. स्वे द. प्रवर्त्तेत दौर्गन्ध्यं घर्मचर्चिका ॥ राजिकाकृति स्फोटा यतो घर्मवि चर्चिका ॥

घर्म्मान्तः । पुं । वर्षाकाले ॥

घर्म्मान्तकामुकी । स्त्री । बलाकायाम् ॥

घर्म्मितः । त्रि । सञ्जातघर्म्मे ॥ तारका

ट्यादित्वात् ॥

घर्षः । पुं । विमर्दे । घसुना इतिभाषा ॥

घर्षणम् । न । घर्षे । निघर्षे । घसुना इतिभाषा ॥ घृषुसङ्घर्षे । ल्युट् ॥

घर्षणालः । पुं । मेषणाश्मनि । शिलापुत्रे । लोढा बट्टा रगणा इत्यादि भाषा ॥

घर्षणी । स्त्री । हरिद्रायाम् ॥

घसिः । पुं । आहारे ॥

घस्मरः । पुं । अस्मरे । भक्षके ॥ घसति तच्छीलः । घस्लृअदने । सृघस्यदःक्मरच् ॥

घस्रः । पुं । अहनि । दिवसे ॥ घसत्यन्धकारम् । घस्लृ० । स्फायितञ्चीति रक् ॥ न । कुङ्कुमे ॥ त्रि । हिंस्रे ॥

घा । स्त्री । कान्त्याम् ॥ घाते ॥

घाटः । पुं । अवटौ । ग्रीवापश्चाद्भागे । घाटायाम् ॥ घाटेरच् घञ्वा ॥ घाटाऽस्त्यस्य वा । अर्शआद्यच् ॥

घाटा । स्त्री । घाटे । कृकाटिकायाम् । शिरसः पश्चात् सन्धौ ॥ घाटयति । घात्यते वा । घटसङ्घाते । चु० । अच् घञ् वा ॥

घाटिका । स्त्री । घाटायाम् ॥ घाटेव ॥

घाण्टिकः । पुं । चाक्रिके । भिक्षिवानां राजस्तावकानां संज्ञेयम् । घण्टाभिर्मिलित्वास्तुतिपाठके ॥ घण्टया चरति । चरतीतिठक् ॥ अन्यत्रतु राज्ञः प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः ॥ धुस्तूरवृक्षे ॥ त्रि । घण्टावादिनि ॥

घातः । पुं । काण्डे । वाणे ॥ प्रहारे ॥ मारणे ॥ अङ्कपूरणे ॥ यथा । समनिघातस्वघनः प्रदिष्टः ॥ हननम् । हन० । घञ् । हनस्तोचिण्णलोः । होहन्तेरितिकुत्वम् ॥

घातकः । त्रि । वधकृति । हननकर्त्तरि ॥ बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्र सर्वेते घातकाः स्मृताः ॥ हन्ति । हन० । ण्वुल् । हनस्तोचिण्णलोः । होहन्तेरितिकुत्वम् ॥

घातनम् । न । हनने । वधे ॥ यज्ञार्थपशुवधे ॥ त्रि । वधकर्त्तरि ॥

घातवारः । पुं । राशिविशेषे विशेषवारे ॥ यथा । नक्रे भौमो गोऽहरिस्त्री शुमन्द ऋच्छ्रोदन्दे ऽर्कोऽजभे च स्त्वकर्के । शुक्रः कोदण्डालिमीने पुकुम्भयूकेजीवो घातवारानशस्ता इति ॥

घातिः । स्त्री । पक्षिबन्धने ॥

घाती । त्रि । हननशीले ॥ घातयति हन्ति तच्छीलः । णिनिः ॥

घातिपक्षी । पुं । श्येने ॥

घातुकः । त्रि । क्रूरे ॥ हिंस्रे ॥ हन्ति । हन० । लषपतपदेत्युकञ् ॥

घात्यः । त्रि । हननयोग्ये ॥ यथा । सत्यं भावं न वेत्ति व्यपनुदति यतः कर्मनाश्यो घटादि र्मिथ्याभूतश्च कर्म क्षपयति न तथा वित्तिघात्यं यतः स्यात् । इत्थं सिद्धे विभागे श्रुतिशिखरगिरा वित्तिघात्यप्रतीतौ बन्धो मिथ्येति सिद्धे न तदपहतये कर्म जातं समर्थमिति ॥

घारः । पुं । सेचने ॥ इति हेमचन्द्रः ॥

घारि । न । छन्दोविशेषे ॥ रं त्रिधाय लं निधाय । घारिनाम वृत्तमेहि ॥ यथा । रामराम रामराम । सारमेतदेव नाम ॥

घार्त्तिकः । पुं । घृतपूरे ॥

घासः । पुं । यवसे । स्वनामख्याते तृणे ॥ अद्यते गवादिभिः । अद० । घञ् । घञपोश्चेति अदेर्घस्लृ ॥

घासिः । पुं । अग्नौ ॥ भक्ष्ये ॥ घसति । घस्लृ अदने । जनिघसिभ्यामिण् ॥

घुः । पुं । ध्वनौ ॥ इति जटाधरः ॥

घुटः । पुं ।<br>
घुटिः । स्त्री ।<br>
घुटिकः । पुं । } पादग्रन्थौ । गुल्फे । टकुना इति भाषा ॥

घुटिका । स्त्री । गुल्फे । पादग्रन्थौ ॥ घोटतेऽनया । घुट परिवर्त्तने । कुन् । टाप् । इत्वम् ॥

घुटी । स्त्री । गुल्फे ॥ इति द्विरूपः ॥

घुणः । पुं । काष्ठकृमौ । काष्ठवेधके ॥ घोणते । घुण भ्रमणे । इगुपधेति कः ॥

घुणप्रिया । स्त्री । दन्त्याम् । उदुम्बरपर्ण्याम् ॥

घुणवल्लभा । स्त्री । अतिविषायाम् ॥ इति भावप्रकाशः ॥

घुण्टः । पुं ।<br>
घुण्टकः । पुं । } गुल्फे । पादग्रन्थौ ॥

घुडः । पुं । भृङ्गे ॥ घोणते । घुण० । कादिभ्यः किदिति डः ॥

घुर्घुरः । पुं । यमकीटे । घुर्घुरिया इति गौडभाषा ॥ शूकरशब्दे ॥

घुर्घुरी । स्त्री । जलजन्तुविशेषे । झिल्लिकायाम् ॥

घुलञ्चः । पुं । गवेधुकायाम् ॥

घुलघुलारवः । पुं । पारावतभेदे ॥

घुषितः । त्रि । शब्दिते ॥ शब्देन प्रकटीकृताभिप्राये वाक्ये ॥ घुषिर् विशब्दने । क्तः ॥

घुष्टः । त्रि । शब्दिते ॥ घुष्यते स्म । घुषिर् । क्तः ॥

घुष्टान्नम् । न । को भोक्तेत्युद्घुष्य दानादौ दीयमानेऽन्ने ॥

घुसृणम् । न । कुङ्कुमे ॥

घूकः । पुं । कौशिके । उलूके ।

घूकारिः । पुं । वायसे । काके ॥

घूकावासः । पुं । शाखोटद्रुमे ॥

घूर्णः । पुं । ग्रीष्मसुन्दरके । गुमा इति प्रसिद्धे ॥

घूर्णनम् । न । चक्रावर्त्ते । भ्रमणे ॥

घूर्णायमानः । त्रि । भ्राम्यमाणे ॥ घूर्णायमानेत्त्वणेतियथा ॥

घूर्णिः । स्त्री । घूर्णने ॥

घूर्णितः । त्रि । प्रचलायिते । भ्रमिते । यउपविष्टो निद्रयाघूर्णते तस्मिन् ॥ घूर्णतेस्म । घूर्णभ्रमणे । गत्यर्थेति क्तः ॥ घूर्णासञ्जातास्यवा । तारकादित्वादितच् ॥ कम्पिते ॥

घूर्णमानः । त्रि । भ्राम्यमाणे ॥ वायुनाघूर्णमानोवृत्तः ॥

घृणा । स्त्री । ऋतीयायाम् । जुगुप्सायाम् ॥ करुणायाम् ॥ कृपायाम् ॥ घ्रियन्तेऽनया । घृसेचने । वाहुलकान् नक् । टाप् ॥ घर्णनम् । घृणुदीप्तौ । भिदादित्वाद्वा ॥

घृणावासः । पुं । कुष्माण्डे ॥ त्रि । घृणायुते ॥

घृणिः । पुं । किरणे । अंशौ ॥ ज्वालायाम् ॥ तरङ्गे ॥ सूर्ये ॥ घरति । घृ० । जिघर्त्तिवा । घृक्षरणदीप्त्योः । घृणिपृश्नीतिनिप्रत्ययोगुणाभावश्चनिपातितः ॥

घृतम् । त्रि । प्रदीप्ते ॥ न । जले ॥ आज्ये । पक्वनवनीते । सर्पिषि ॥ अस्यगुणाः ॥ घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम् । शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम् ॥ अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यवृद्धिकृत् । स्वरस्मृतिकरं मेध्यमायुष्यं वलकृद्गुरु ॥ उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत् । स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत् ॥ * ॥ गव्यं घृतं विशेषेण चक्षुष्यं वृष्य मग्निकृत् । स्वादुपाकरसं शीतं वातपित्तकफापहम् ॥ मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम् । अलक्ष्मीपापरक्षोघ्नं वयसःस्थापकं गुरु ॥ वल्यं पवित्र मायुष्यं सुमङ्गल्यं रसायनम् । सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकम् ॥ * ॥ माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम् । शीतलं श्लेष्मलं वृष्यं गुरु स्वादुविपच्यते ॥ * ॥ आज माज्यं करोत्यग्निं चक्षुष्यं वलवर्द्धनम् । कासे श्वासे क्षये चापि हितं पाके भवेत् कटु ॥ * ॥ घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगहृत् । निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान् ॥ * ॥ हविर्हैयङ्गवीनदुग्धोत्थं तत् स्वादुयङ्गवी

नकम् । हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत् परम् । बलकृद्बृंहणं वृष्यं विशेषाज्ज्वरनाशनम् ॥ * ॥ वर्षादूर्द्धं भवेदाज्यं पुराणं तत् त्रिदोषनुत् । मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् ॥ यथायथाऽखिलं सर्पिः पुराणमधिकं भवेत् । तथा तथागुणैः स्वैः स्वैरधिकं तदुदाहृतम् ॥ * ॥ योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे । बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः ॥ * ॥ राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते मदे । रोगे सामे विषूच्याञ्च विबन्धे च मदात्यये ॥ ज्वरे च दहने मन्दे नसर्पिर्बहुमन्यते ॥ * ॥ घृतमब्दात् परं पक्वं हीनवीर्यत्वमाप्नुयात् । तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकमिति ॥ * ॥ औषधघटितपक्वघृतस्य पूर्णवीर्यत्वं षण्मासपर्यन्तं तिष्ठति ॥ घियते जिघर्त्ति वा । घृ० । अञ्जिघृसिभ्यः क्तः ॥

घृतकरञ्ज । पुं । करञ्जभेदे । प्रकीर्य्ये । घृतपर्णके । घियाकरञ्ज इति भाषा ॥

घृतकुमारिका । स्त्री । घृतकुमार्य्याम् ॥

घृतकुमारी । स्त्री । कुमार्य्याम् । सहायाम् । तरुण्याम् ॥



घृतदीधिति । पुं । अग्नौ ॥

घृतपर्णक । पुं । घृतकरञ्जे ॥

घृतपूरः । पुं । घेवर इति प्रसिद्धे पक्वान्नविशेषे । घृतवरे । पिष्टपूरे ॥ यथा । मर्द्दितां समितां क्षीरनारिकेरघृतादिभिः । अवगाह्य घृते पक्त्वा घृतपूरोऽयमुच्यते ॥ घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसदः । रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽनिलः ॥ अपि च । क्षीरेण मर्द्दितं चूर्णं गोधूमानां सुगालितम् । विस्तार्य सर्पिषा पाच्यं कटाहेऽथ सितान्वितम् ॥ घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः ॥ नारिकेरकस्तु । समिता मर्द्दिता क्षीरे नारिकेरसितार्द्रकैः । अवगाह्य घृते पाच्या घृतपूरोऽपरः स्मृतः ॥ दुग्धजोऽपि । पाकपिण्डीकृतं क्षीरं शर्कराचूर्णमिश्रितम् । घृतपूरविनिर्माणं कारयेत् स्वल्पसर्पिषि ॥ शालिभवोऽपि । सुशालिपिष्टं दुग्धन्तु क्वाथितं वस्त्रगालितम् । खण्डयुक्तं घृते पक्वं घृतपूरो भवेदयम् ॥ कशेरुजोऽपि । कशेरुचूर्णं निक्षिप्य पाकपिण्डीकृतं पयः । निर्माणं घृतपूराणां शर्करासहितं भवेत् ॥ आम्ररसभवोऽपि । पक्वाम्रघृते लसेद्रसस्तनकपिण्डितः । भूरिशर्करया

योज्यो घृतपूरो यदृच्छया ॥ क्षीर मार्द स्वरूपंहि खण्डं चूर्णं,ततः स्मृतम्। योजिते योविशेषो ऽत्र तदाख्यास्वर्णसंचितः ॥ घृतपूरो गुरुर्हृष्यो हृद्यः पित्तानिलापहः । सद्यः प्राणप्रदो वल्यः सुरुच्यो ग्निप्रदीपनः ॥ शृङ्गाटकमुखाना मप्येवंस्याद् घृतपूरकः । विचार्य वस्तुसंयोगं तद्गुणानपिचाहरेदिति ॥

घृतपूरः । पुं । } करञ्जवृक्षे ॥
घृतपूर्णकः । पुं । }

घृतमण्डलिका । स्त्री । हंसपदीवृक्षे ॥

घृतमण्डा । स्त्री । वायसुरयी इतिख्याते वायसोलीवृक्षे ॥

घृतवरः । पुं । घृतपूरे । घेबर इति-भाषा ॥

घृता । स्त्री । घृतमण्डायाम् ॥

घृताची । स्त्री । अप्सरोविशेषे ॥

घृताचीगर्भसम्भवा । स्त्री । स्थूलैलायाम् ॥

घृताह्वः । पुं । } सरलद्रवे ॥
घृताह्वयः । पुं । }

घृतेली । स्त्री । पिङ्गकपिशायाम् ॥

घृतोदः । पुं । घृताब्धौ ॥ घृतमुदकंयस्य । उत्तरपदस्यचेत्युदकस्योदः ॥

घृष्टः । त्रि । घर्षिते । निघृष्टे । घसा इति भाषा । पुं । गन्धविशेषे ॥ यथा । घृष्टोमलयजो गन्धः सरलश्च नमेरुथा । अगुरुप्रभृतिश्चापि यस्यपङ्कः प्रदीयते । घृष्टासघृष्टो गन्धोऽयं द्वितीयः परिकीर्त्तितइति ॥

घृष्टिः । पुं । किरौ । वराहे ॥ स्त्री । घर्षणे ॥ स्पृक्वायाम् ॥ विष्णुक्रान्तायाम् । अपराजितायाम् ॥ वाराह्याम् । चामर आलु इति गौड भाषा ॥ घर्षति । घृषुसङ्घर्षे । क्तिन् ॥

घृष्टिका । स्त्री । चित्रपर्णिकायाम् । पृश्निपर्ण्याम् ॥

घृष्विः । पुं । वराहे । शूकरे ॥ घर्षति । घृषु० । कृविघृष्विच्छविस्थविकिकीदिविरिति क्विन्नन्तो निपातसिद्धः ॥

घेञ्चुलिका । स्त्री । कोषाद्ने । घेचु इतिगौडभाषा ॥

घोङ्कः । पुं । खगान्तरे ॥

घोटः । पुं । अश्वे । घोटके ॥ घोटते । घुटपरिवर्त्तने । पचाद्यच् ॥

घोटकः । पुं । घोडा इतिभाषाप्रसिद्धे पशुविशेषे । अश्वे । तुरगे । पीतौ । तुरङ्गमे ॥ अथाऽश्वलक्षणम् । दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः । जङ्घाजानूरुवृत्तः समसितदशनश्चा

सुसंस्थानरूपो वाजी सर्वाङ्गशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम् ॥ * ॥ अशुभानां रोमावर्त्तानां लक्षणमाह । अश्रुपातहनुगण्डहृत्गलप्रोथशङ्खकटिवस्तिजानुमुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणे तथाऽशुभाः ॥ ० ॥ शुभावर्त्तानाह । ये प्रपानगलकर्णसंस्थिताः पृष्ठमध्यनयनोपरिस्थिताः । ओष्ठसक्थिभुजकुक्षिपार्श्वगा स्ते ललाटसहिताः सुशोभनाः ॥ * ॥ ध्रुवावर्त्तानाह । तेषां प्रपान एको ललाटकेशेषु च ध्रुवावर्त्ताः । रन्ध्रोपरन्ध्रमूर्द्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ ॥ ॥ अश्वानां वयोज्ञानमाह । षड्भिर्दन्तैः सिताभैर्भवति हयशिशुस्तैः कषायैर्द्विवर्षः सन्देशैर्मध्यमान्त्यैः पतितसमुचितैस्त्र्यब्दपञ्चाब्दकाश्वाः । सन्देशानुक्रमेण त्रिकपरिगुणिताः कालिकापीतशुक्लाः काचामक्षीकशङ्खावटचलनमतो दन्तपातश्च विद्धि ॥ इति वाराहीचतुःषष्टितमोऽध्यायः ॥ ६४ ॥

घोटकारिः । पुं । महिषे ॥

घोटकेङ्गितम् । न । अश्वचेष्टायाम् ॥ सा यथा । उत्सर्गो न शुभदः आसनापरस्य वामे च ज्वलनमतोऽपरं प्रशस्तम् । सर्वाङ्गज्वलनमवृद्धिदं हयानां द्वे वर्षे दहनकणाश्च धूपनं वा ॥ अन्तः पुरं नाशमुपैति मेढ्रे कोशः क्षयं यात्युदरे प्रदीप्ते । पायौ च पुच्छे च पराजयः स्याद्वक्त्रोत्तमाङ्गज्वलने जयश्च ॥ स्कन्धासनांसज्वलनं जयाय बन्धाय पादज्वलनं प्रदिष्टम् । ललाटवक्षोक्षिभुजेषु धूमः पराभवाय ज्वलनं जयाय ॥ नासापुटप्रोथशिरोऽश्रुपातनेत्रे च रात्रौ ज्वलनं जयाय । पलाशताम्रासितकर्बुराणां नित्यं शुकाभस्य सितस्य चेष्टम् ॥ प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्तं विना कम्पो वा वदनाच्च रक्तपतनं धूमस्य वा सम्भवः । अस्वप्नश्च विरोधिनो निशि दिवा निद्रालसं ध्यानता सादोऽधोमुखता विचेष्टितमिदं नेष्टं स्मृतं वाजिनाम् ॥ आरोहणमन्यवाजिनां पर्याणादियुतस्य वाजिनः । उपवाह्यतुरङ्गमस्य वा कल्यस्यैव विपत्करो मता ॥ * ॥ हेषितलक्षणमाह । क्रौञ्चवद्रिपुवधाय हेषितं ग्रीवया त्वचलया च सोन्मुखम् । स्निग्धमुच्चमनुनादि हृष्टवद्ग्रासरुद्धवदनैश्च वाजिभिः ॥ पूर्णपात्रदधिविप्रदेवतागन्धपुष्पफलकाञ्चनादिकम् । द्रव्यमिष्टमथवाऽपरं भ

वे द्वेपतां यदि समीपतो जयः ॥ भव्यदानखलिनाभिनन्दिनः पश्चुरैःपयिकनन्दिनोऽथवा । सव्यपार्श्वगतदृष्टयोऽथवा वाञ्छितार्थफलदास्तुरङ्गमाः ॥ वामैश्च पादै रभितावुद्यन्तो मर्त्तौ प्रवासाय भवन्ति भर्त्तुः । सन्ध्यासु दीप्ता मवलोकयन्तो हेषन्ति चेद्दन्धपराजयाय ॥ अतीव हेषन्ति किरन्ति वालान् निद्रारताश्च प्रवदन्ति यात्राम् । रोमत्यजो दीनखरस्वनाश्च पांशून् ग्रसन्तश्च भयावहाः ॥ * ॥ समुन्नवद्दक्षिणपार्श्वशायिनः पादसमुत्क्षिप्यचे दक्षिणस्थिताः । जयाय शेषेष्वपि वाहनेष्विदं फलं यथासम्भवमादिशेद्बुधः ॥ आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगोऽन्यतुरगं प्रतिहेषितश्च । वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं योऽश्वः स भर्त्तु रचिरात् प्रचिनोति लक्ष्मीम् ॥ मुहुर्मुहुर्मूत्रशकृत् करोति न ताड्यमानोऽप्यनुलोमयायी । अकार्यभीतोऽस्तुविलोचनश्च शिवं न भर्त्तुस्तुरगोऽभिधत्ते ॥ इति वाराह्यां ९१ अध्यायः ॥

घोटिका । स्त्री । हयस्त्रीयाम् । लोनी इतिभाषा ॥ घोटिकाऽम्लरसा शीम्या वातहृत् कफपित्तकृत् । व्र-णदोषत्रणगुल्मघ्नी श्वासकासप्रमेहनुत् ॥ शोथे लोचनरोगे च हिता तज्ज्ञै रुदाहृता ॥ वृक्षविशेषे । तुरङ्ग्याम् । चतुरङ्गायाम् ॥

घोणा । स्त्री । नासायाम् ॥ प्रोथे । अश्वनासिकायाम् ॥ घोणति अनया वा । घुण भ्रमणे । अच् हलश्चेति घञ्वा ॥

घोणी । पुं । वराहे । स्तब्धरोमणि ॥ घोणा नासाऽस्त्यस्य । व्री० इनिः ॥

घोण्टा । स्त्री । वदर्थाम् । गोपघोण्टायाम् । झडवेरी इति भाषा ॥ पूगवृक्षे ॥ घोणते । घुण० । बाहुलकात् ट ॥ वदरीफलवृक्षयोः ॥

घोत्कारः । पुं । नासिकायाःशब्दे । घुर्राटा इति भाषा ॥

घोनसः । पुं । गोनसे । तिलित्सेसर्पे ॥

घोर । पु । त्रिपुरान्तके ॥ आङ्गिरसगोत्रोत्पन्ने ऋषिविशेषे ॥ आकाशादिषु स्थूलेषु दुःखप्रकाशकाः अनवस्थिताः रजःप्रधानतया केचिद्विशेषाश्च घोरसंज्ञकाः ॥ न । विषे ॥ त्रि । दारुणे । भयानके ॥ हिंसाद्यनेकायासबहुलेक्रूरे ॥ परस्यात्मनश्चपीडाकरे ॥ दुर्गमे ॥ घोरयति । घुरभीमार्थशब्दयोः । अन्तादच् ॥ यद्वा । हन्यते । हन० । हन्तेर्घुरजि

क्यच् धातोर्घुरादेशः ॥

घोरदर्शनः । पुं । उलूके ॥ त्रि । भयानकरूपे ॥

घोरपुष्पम् । न । कांस्ये ॥

घोरवासन. । पुं । } शृगाले । भूरिमाये ॥
घोरवासी । पु । }

घोरवासितम् । न । भयानकशब्दे ॥

घोरा । स्त्री । रात्रौ ॥ देवदालीलतायाम् ॥ भयानकायाम् ॥ सङ्क्रान्तिविशेषे ॥ रवावुग्रभे सङ्क्रमे भास्करस्य भवेद्घोरनाम्नी सुखी शूद्रवर्गः ॥ राजस्यां मनसोद्दत्तौ ॥

घोलम् । न । मथितेदधनि । दण्डाहते ॥ ससरं निर्जलं घोलं वातपित्तहरं स्मृतम् ॥*॥ मस्तुना रहितं गाल्यं दधिशुभ्रतरे पटे । क्षीरसैन्धवसम्मिश्रं घोलं घनतरं स्मृतम् ॥ क्षीरसैन्धवसंयुक्त घोल वातप्रनाशनम् । श्वतीसारेच मन्देग्नौ हित रुच्यं बलप्रदम् ॥

घोलिः । स्त्री । } पत्रशाकविशेषे । क्षुद्रकालुकायाम् ॥
घोलिका । स्त्री । }
घोली । स्त्री । }

घोष । पुं । आभीरपल्ल्याम् ॥ घोषन्तिगावो ऽत्र । घुषिर् विशब्दने । हलश्चेतिघञ् ॥ गोपाले ॥ ध्वनौ ॥ अम्बुदनादे ॥ अपामार्गे ॥ घोषके ॥ वाह्यप्रयत्नविशेषे ॥ पुं । कांस्ये ॥ घोषणम् । घुषघुष्टौ । घञ् ॥

घोषकः । पुं । महाकोशातक्याम् । श्वेतघोषके ॥ घोषति । घुषिर्० । पचाद्यच् । स्वार्थेकन् ॥

घोषकाकृतिः । पुं । घोषके ॥

घोषणा । स्त्री । उच्चैर्घुष्टे । लोकविज्ञापनायोच्चैः शब्दिते ॥ यथा । न कर्मणा कनीयस्ता रक्षिर्वा नान्तरात्मनः । इति वाक्षु मिवोद्धृत्य वेदान्ते घोषणा कृतेति ॥ घुषिर्० । ण्यासश्रन्थो युच् ॥

घोषयित्नुः । पुं । विप्रे ॥ कोकिले ॥ घोषयति । घुषिर्० । याहृस्तकान् इत्नुच् ॥ वन्दिनि ॥

घोषवती । स्त्री । वीणायाम् ॥

घोषा । स्त्री । मधुरिकायाम् ॥ शतपुष्पायाम् ॥ कर्कटशृङ्ग्याम् ॥ कोशातक्याम् । तुरयी तोरणी इति च प्रसिद्धे फलशाके ॥

घ्नन् । त्रि । नुदति ॥

घ्राणम् । न । नासिकायाम् । घन्धग्राहकलिङ्गेन्द्रिये ॥ न्यायमते घ्राणेन्द्रियग्राह्योगन्धस्वादौ ॥ त्रि । घ्राते ॥ घ्रायते ऽनेन । घ्राणन्योपादाने । करणेल्युट् ॥ घायतेस्म या । घ्रा० । ग । नुदविदेति वा नत्वम् ॥

घ्रातः

घ्राणतर्पणः । पुं ॥ सुगन्धे ॥

घ्राणदुःखदा । स्त्री । छिक्कन्याम् ॥

घ्रातः । त्रि । घ्राणविषयीकृतपुष्पादौ । आघ्रातगन्धे । आघ्राते । घ्राणे ॥ घ्रायते स्म । घ्रा० । क्त । नुदविदेति पाक्षिकोनत्वाभावः ॥

घ्रः

घ्रातिः । स्त्री । घ्राणे । नासिकायाम् ॥ घ्राते ॥ घ्राणम् । घ्रा० । क्तिन् ॥

ङः

ङः । पुं । विषये ॥ विषयस्पृहायाम् ॥ भैरवे ॥ ङ कारे ॥ * ॥ * ॥

---

इत्यादिगौडकुलोत्पन्नाडोम्बवालप्रधानोपनामतुलाराममिश्रात्मज श्रीधनपतिमिश्रापरनाम्ना तथा श्रीसद्गुरुकुलावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण ब्रह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ कवर्गः समाप्तिङ्गत. ॥ * ॥ * ॥

---

सर्वार्थसिद्धौ सर्वेषां सुखानन्देन निर्मितः ॥

श्रीघासीराममिश्रैस्तु मुद्राक्षिप्या प्रकाशितः ॥

वैक्रमे १९२१ शरदि । शालिवाहनीये १७८६ शके मार्गशीर्षासितैका
दश्यां सुराचार्यवारे सुमपुरे श्रीघासीरामकनक्रियालये:
स्वकीयसंस्कृतयन्त्रे वर्णयोजकाध्यक्षकायस्थवंशोद्भव
श्रीरामप्रसाददासदृष्ट्या
मुद्राङ्कितः ॥